॥ श्रीः ॥

# श्रीमद्भागवतम्

श्रीविजयध्वजीयटीकासहितम्

## तृतीयस्कन्धः

परमपूज्यपेजावरमठाधीशश्रीविश्वेशतीर्थश्रीपादानां
मार्गदर्शने सम्पादितम्

सम्पुटः – २

प्रकाशनम्

श्रीराघवेन्द्रस्वामिबृन्दावनसमितिः
बागलिङ्गम्पल्ली
हैदराबाद् – ५०० ०२७

॥ श्रीः ॥

# श्रीमद्भागवतम्

श्रीविजयध्वजीयटीकासहितम्

## तृतीयस्कन्धः

परमपूज्यपेजावरमठाधीशश्रीविश्वेशतीर्थश्रीपादानां
मार्गदर्शने सम्पादितम्

सम्पुटः – २


प्रकाशनम्

श्री राघवेन्द्र स्वामि बृन्दावन समितिः
बागलिङ्गम्पल्ली
हैदराबाद् – ५०० ०२७

SRIMADBHAGAVATAM
with the commentary of Sri Vijayadhwajateertha

*Edited dy*

Scholars of Poorna Pragna Vidyapeeta
under the guidance of
H H Vishweshateertha Swamiji
of Pejavar Mutt, Udupi

*Published by*

Sri Raghavendra Swami Brindavan Samiti
Baghlingampalli, Hyderabad-500 027

*Printed by*

S. Chandrashekar
Chaaritra Printers, Ramanuja Road, 8th Cross
Mysore-570 004

## प्रास्ताविकम्

महदिदं प्रमोदस्थानमस्माकं यद् श्रीमद्भागवततृतीयस्कन्धः श्रीविजयध्वजीयटीकासहितः भगवद्भक्तानामध्येतॄणां पुरत उपस्थाप्यत इति। व्याख्यातॄणामस्मन्मठीयपूर्वपीठाधीशानां श्रीविजयध्वजतीर्थानां विषये यद् वक्तव्यं तत् प्रथमसम्पुटस्य प्रास्ताविक एवावोचाम। अस्मिन्नपि तृतीयस्कन्धव्याख्याने यथापूर्वमनेके अपूर्वा विषया निरूपिताः, अपूर्वधातवश्चाविष्कृताः, अपूर्वकोशाश्चोदाहृताः। हरिमाहात्म्यनिरूपणेन सर्वत्र व्याख्याने भक्तिरस एव प्रवाहितः। इमे चान्ये च विषया अध्येतॄणां मोदमावहन्तीत्यत्र नास्ति कापि संशीतिः।

अस्य स्कन्धस्य संशोधने, सम्पादने, मुद्रणे च प्रयत्तानां समेषां विदुषां तथा ग्रन्थस्यास्य प्रकाशन अपेक्षितं धनं साकल्येन वितीर्य महतीं समुचितां शास्त्ररक्षणसेवां वितन्वन्त्याः हैदराबाद्नगरे बागलिङ्गम्पल्लीस्थायाः श्रीराघवेन्द्रस्वामिवृन्दावनसमित्याश्च भगवतोः श्रीरामविठलयोः भगवतः श्रीकृष्णस्य च अनुग्रहमाशास्महे।

श्रीविश्वेशतीर्थश्रीपादाः
श्रीपेजावरमठाधीशाः

अनन्तचतुर्दशी, विभवसंवत्सरः
२४-९-१९८८

# निवेदनम्

विद्वद्वरेण्यानां रजतपीठपुरीयपेजावरमठाधीशानां श्रीश्रीविश्वेशतीर्थश्रीमच्चरणानां प्रेरणया मार्ग-दर्शनेन च हैदराबाद्नगरे बागलिङ्गम्पल्ल्यां विलसन्ती श्रीराघवेन्द्रस्वामिवृन्दावनसमितिः श्रीमद्भागवतस्य श्रीविजयध्वजीयटीकासहितस्य प्रकाशनकर्मणि सोत्साहं निरता । प्रथमद्वितीयस्कन्धगर्भः प्रथमसम्पुटः प्रकाशतां नीतपूर्वः । इदानीं तृतीयस्कन्धात्मकं द्वितीयसम्पुटं सहर्षं समर्पयति समितिरध्येतृभ्यः । इदञ्च प्रकाशनकार्यं यावत् पवित्रं तावद् दुष्करञ्च । परन्तु समितेरस्या उदये सर्वतोमुख्यामभिवृद्धौ च बीजभूतानां श्रीश्रीफलिमारुभण्डारकेरेमठाधीशानां तपस्वितल्लजानां श्रीविद्यामान्यतीर्थश्रीपादानामनुग्रह एवास्मांस्तारयिष्यतीति विश्वसिमः । पूर्णप्रज्ञविद्यापीठस्य विद्वद्भिः कृते संशोधनसम्पादनकर्मणि श्रीपेजावरमठाधीशाः श्रीविश्वेशतीर्थश्रीपादा एव पादभूताः । उभयेषां मठाधीशानां चरणनलिनयोः साष्टाङ्गप्रणामान् समर्पयामः ।

तत्रभवद्भिः बन्नञ्जे गोविन्दाचार्यैः सम्पादिते भागवततात्पर्यनिर्णये तैरेव तत्र तत्राधस्तनटिप्पणे निरूपिताः केचन विषयाः क्वचिदत्र सम्पुट अधस्तनटिप्पणे उदाहृताः । स्वीयहस्तलिखितग्रन्थदानेन श्रीमद्भिः व्यासनकेरे प्रभञ्जनाचार्यैरुपकृतम् । अस्य पुस्तकस्य पाठः 'प्र' सङ्केतेन तत्र तत्रधस्तनटिप्पणे निर्दिष्टः ।

पूर्णप्रज्ञविद्यापीठस्य विद्वांसः श्रीमन्तः कापुहयवदनपुराणिकप्रभृतयः महता परिश्रमेण संशोधन-मकार्षुः । मैसूरुनगरवासिनः तत्रभवन्तः पि. एस्. शेषगिरिराव्, डा. सि. एच्. श्रीनिवासमूर्तिः, सि. बदरीनाथः—एते विद्वांसः पूर्णप्रज्ञविद्यापीठीयाः सम्पादनमुद्रणकर्मणः समग्रं भारमूढ्वा अल्प एव काले समग्रं कर्म सुव्यवस्थं समापयन् ।

एतेषां सर्वेषां विदुषां सर्वदाधमर्णा श्रीराघवेन्द्रस्वामिवृन्दावनसमितिः ।

मुद्रणकार्यं समीचीनं विहितवान् कर्नाटकराज्ये मैसूरुनगरस्थः चारित्रमुद्रणालयस्य यजमानः तत्रभवान् चन्द्रशेखरमहोदयोऽपि वन्दनार्हः ।

अन्ते, सम्पुटस्यास्य प्रकाशनेऽनिवार्यं विलम्बं क्षाम्यन्तु सुहृद इति प्रार्थयामहे ।

सज्जनविधेयः,

**सुब्बराय अडिगः**

अध्यक्षः, श्रीराघवेन्द्रस्वामिवृन्दावनसमितिः

बागलिङ्गम्पल्ली, हैदराबाद्

अञ्जनासूनुसान्निध्यात् विजयेन विराजितम् ।
अजितप्रीतिजनकं भजेऽहं विजयध्वजम् ॥

## विषयानुक्रमः

—o—

भगवद्बादरायणप्रणीतम्

# श्रीमद्भागवतम्

## तृतीयस्कन्धः

### अथ प्रथमोऽध्यायः

श्रीशुक उवाच—

एवमेतत् पुरा पृष्टो मैत्रेयो भगवान् किल ।
क्षत्त्रा वनं प्रविष्टेन त्यक्त्वा स्वगृहमृद्धिमत् ॥ १ ॥

यदा त्वयं मन्त्रकृद् वो भगवानखिलेश्वरः ।
पौरवेन्द्रपुरं हित्वा प्रविवेशात्मसात्कृतम् ॥ २ ॥

---

## श्रीमद्विजयध्वजतीर्थविरचिता पदरत्नावली

यल्लीलाजलराशिलोललहरीस्नानक्षमाणां नृणां[1] संसारोदधिराशु शुष्यतितरामग्न्युत्थशुष्कैधवत् ।
यस्माद्विश्वमशेषमुद्भवति यस्तत्त्वं परं योगिनां श्रीमन्तं तमुपास्महे सुमनसामिष्टप्रदं विट्ठलम् ॥१॥
अगाधश्रीमद्भागवतजलराशौ मणिगणं तृतीयस्कन्धोदभ्रममनवगाहं मृगयति ।
निमज्योन्मज्यार्थेऽनुपदमनुरक्तेऽमलधियः कृपालेशं सन्तः खलु विदधतां मय्यनुपदम् ॥२॥

अत्र मुमुक्षूणां स्वस्वयोग्यभगवदपरोक्षज्ञानोत्पत्तौ प्रधानसाधनं भक्तिरेव, तत्साधनमितरत् सर्वमिति प्रपञ्चयते । तत्र सूतः शौनकप्रश्नपरिहाराय शुकपरीक्षित्संवादं कथयति— **एवमिति** । यथाहं च त्वया एतत्प्रमेयं प्रति पृष्टः एवं तथा क्षत्त्राऽपि विदुरेणापि भगवांस्त्रिकालज्ञो मैत्रेयः पृष्टः इत्यन्वयः । ऋद्धिमत् स्वगृहं त्यक्त्वेत्यनेन वैराग्यं प्रथमसाधनमिति सूचितम् ॥ १ ॥

विदुरमैत्रेयसंवादं घटयितुं तीर्थयात्राकालापदेशेन प्रश्नबीजमुत्थापयति—**यदा त्विति** । वः पितामहानामर्थे मन्त्रकृत् सन्धिकृत् सन्धिकार्येऽनुत्पन्ने पौरवेन्द्रपुरं हस्तिनापुरं त्यक्त्वा आत्मसात्कृतमुपप्लाव्याख्यपुरं यदा प्रविवेश तदा विदुरस्तीर्थयात्रार्थं[2] गत इति शेष इत्यन्वयः । अत्र तुशब्देन 'युद्धकाले तु विदुरस्तीर्थयात्रां गतोऽपि सन् । प्राय आस्ते गजपुरे पाण्डवानां हितेच्छया' इति वाक्यं विशिनष्टि । अनेन विदुरेण तीर्थसेवा कदाचित् कृता, न युद्धकालमारभ्य तत्समाप्तिपर्यन्तमित्युक्तं भवति ॥ २ ॥

---

[1] सतां-छ [2] सेवार्थं-घ,ङ,छ,च

① क्षत्ता "क्षदस स्थैर्ये" इति धातु: असन्दिग्धज्ञानवान् इत्यर्थ:
क्षत्ता दासीपुत्र: इति तु प्रसिद्ध:



परीक्षिदुवाच—

कुत्र क्षत्तुर्भगवता मैत्रेयेणास सङ्गमः ।
कदा वा सह संवाद एतद् वर्णय नः प्रभो ॥ ३ ॥

न ह्यल्पार्थोदयस्तस्य विदुरस्यामलात्मनः ।
तस्मिन् वरीयसि प्रश्नः साधुवादोपबृंहितः ॥ ४ ॥

सूत उवाच—

स एवमृषिवर्योऽयं पृष्टो राज्ञा परीक्षिता ।
प्रत्याह तं सुबहुवित् प्रीतात्मा श्रूयतामिति ॥ ५ ॥

श्रीशुक उवाच—

यदा तु राजा स्वसुतानसाधून् पुष्णन्नधर्मेण विनष्टदृष्टिः ।
भ्रातुर्यविष्ठस्य सुतान् विबन्धून् प्रवेश्य लाक्षाभवने ददाह ॥ ६ ॥

---

तीर्थनिषेविणो विदुरस्य सामान्यतो ज्ञातमैत्रेयसङ्गकालघटनोऽपि राजा देशविशेषबुभुत्सया पृच्छति—**कुत्रेति** । कुत्र कस्मिंस्तीर्थविशेषे । पुरान्निर्याणहेतुरपि वक्तव्य इत्यतो वर्णयेत्युक्तम् ॥ ३ ॥

विविदिषालौल्यकारणमाह—**न हीति** । हिशब्दो हेत्वर्थः । यस्मादल्पार्थोदयो न तस्माद् वर्णयेत्यर्थः । अत्रापि हेतुमाह—**साध्विति** । 'साधुस्त्रिषूचिते सौम्ये सज्जने वार्द्धुषौ पुमान्' इति यादवः ॥ ४ ॥

सूतः शौनकप्रश्नपरिहाराय तत्संवादं कथयति—**स एवमिति** । बहु पूर्णतायामिति धातोर्देवादिसज्जननिषेवितं पूर्णं भगवन्तं वेत्तीति सुबहुविदिति । तज्ज्ञानफलमाह—**प्रीतात्मेति** । 'प्रियो हि ज्ञानिनोऽत्यर्थम्' इति स्मृतेः । प्रसन्नमना वा । श्रूयतामित्यनेन वक्तव्यार्थे आदरं जनयति । उच्यमानं सहेतुकं चेत् श्रद्धां जनयति, अस्य कथं तदित्यत उक्तम्—**इतीति**। 'इति हेतुप्रकरणप्रकारादिषु' इति[1] यादवः ॥ ५ ॥

विदुरस्य तीर्थयात्रायां निमित्तमाह—**यदा त्विति** । अत्र यदाशब्दो हेत्वर्थः । 'यदा तदेति हेत्वर्थे कालार्थेऽपि च भण्यत' इति वचनात् । अधर्मेणेत्यस्यावधारणार्थे तुशब्दः । विनष्टा भगवद्विषया दृष्टिर्यस्य स तथा । असाधून् अन्यायवर्तिनः । अधर्मेण धर्मविरुद्धकर्मणा । यविष्ठस्य

---

[1] प्रकरणप्रकारादिसमाप्तिष्विति—ङ प्रकरणमिति—घ,च

यदा सभायां कुरुदेवदेव्याः केशाभिमर्शं सुतकर्म गर्ह्यम् ।
न वारयामास नृपः स्नुषाया अस्रै[1] र्हरन्त्याः कुचकुङ्कुमानि ॥ ७ ॥

द्यूते त्वधर्मेण जितस्य साधोः सत्यावलम्बस्य वनागतस्य ।
न याचतोऽदात् समयेन दायं तमो जुषाणो यदजातशत्रोः ॥ ८ ॥

यदा तु पार्थप्रहितः सभायां जगद्गुरुर्यानि जगाद कृष्णः ।
न तानि पुंसाममृतायनानि राजाऽनुमेने हतपुण्यलेशः ॥ ९ ॥

---

कनिष्ठस्य । विबन्धून् लौकिकबन्धुरहितान् । लाक्षाभवने लाक्षोपगूढगृहे ददाह । यदा यस्मात् तदा तस्मादित्येको हेतुः ॥ ६ ॥

अयमेको हेतुरित्याह— **यदेति** । नृपो धृतराष्ट्रः कुचकुङ्कुमान्यस्रै[2] र्नेत्रजलैर्हरन्त्याः क्षालयन्त्याः स्वस्य स्नुषायाः कुरुदेवस्य युधिष्ठिरस्य देव्याः पट्टाभिषिक्तायाः द्रौपद्याः सभायां गर्ह्यं निन्द्यं सुतस्य दुःशासनस्य कर्म केशाभिमर्शं कबरीभारपरामर्शलक्षणं न निवारयामास । यदा यस्मात् तस्मात् ॥ ७ ॥

अयं तृतीयो हेतुरित्याह— **द्यूते त्विति** । तुशब्दोऽवधारणार्थः अधर्मेणेत्यनेन सम्बध्यते । साधुत्वादीनि पितृधनदानयोग्यत्वहेतव इति प्रकाशनायोक्तानीति । अवलम्ब आधारयष्टिः । दायं स्वस्य[3] प्राप्तियोग्यं पितृधनं वनवासावसानसमये नादादिति यत् तस्मादिति शेषः । तत्र हेतुः—**तम इति** । तमो यथार्थज्ञानग्लानिकारणं पुत्रवचनं जुषाणः सेवमानोऽङ्गीकुर्वाण इत्यर्थः ॥ ८ ॥

चतुर्थं हेतुमाह—**यदा त्विति** । पार्थेन युधिष्ठिरेण प्रहितः प्रेषितः । पुंसाममृतायनानि मोक्षादिसकलपुरुषार्थसाधनानि । हतः पुण्यलेशो यस्य स तथा । लिश अल्पीभाव इति धातुः । अनेन पापं बहुलं पुण्यमल्पं तदपि नष्टमित्युक्तं भवति । इदमेव सुखलेशविनाशकारणमित्यस्मिन्नर्थे तुशब्दः । गुरुमात्रस्यापि वाक्यं ग्राह्यं किमु जगद्गुरोरित्यभिप्रायेण तथोक्तम् ॥ ९ ॥

---

[1-2] आस्रैः-घ,छ,च [3] स्वस्व-घ,च स्व-ङ,छ

यदोपहूतो भवनं प्रविष्टो मन्त्राय पृष्टः किल पूर्वजेन ।
अथाह तं मन्त्रदृशां वरीयान् यन्मन्त्रिणो वैदुरिकं वदन्ति ॥ १० ॥

अजातशत्रोः प्रतियच्छ दायं तितिक्षतो दुर्विषहं तवागः ।
सहानुजो यत्र वृकोदरो हि स्वशत्रुहा यं त्वमलं बिभेषि ॥ ११ ॥

यदा तु पार्थान् भगवान् मुकुन्दो गृहीतवान् स क्षितिदेवदेवः ।
आस्ते स्वपुर्यां यदुदेवदेवो विनिर्जिताशेषनृदेवदेवः ॥ १२ ॥

---

ततः किं विदुरस्य तीर्थयात्रायामित्यतो विशेष[1] हेतुमाह—**यदेति** । पूर्वजेन ज्येष्ठेन यदोपहूतो भवनं प्रविष्टो विदुरो मन्त्राय स्वकर्तव्यतालोचनाय[2] पृष्टः 'किं कार्यं तद् ब्रवीहि इति' अथ तदा मन्त्रदृशां मन्त्रज्ञानां वरीयान् तं धृतराष्ट्रमाह । मन्त्रदृग्वरीयस्त्वं कुत इति तत्राह—**यदिति** । वैदुरिकं विदुरेणोक्तम् यद् यस्मात्तस्मादिति शेषः । कृष्णे सन्धिकार्यमनुत्पाद्योपप्लाव्यं गते सत्युपहूत इत्यस्मिन्नर्थे किल शब्दः ॥ १० ॥

किमाहेति तत्राह—**अजातशत्रोरिति** । प्रतियच्छ प्रदेहि । प्रदाने हेतुमाह—**सहानुज इति** । हिशब्दो हेत्वर्थः । यत्र यस्य युधिष्ठिरस्य अभिप्रेतसाधक इति शेषः । किमसौ यम[3] इति तत्राह—**यमिति** । यं भीमं प्रति । अत्रापि हेतुमाह—**स्वशत्रुहेति** । स्वस्य राज्यलक्षण-द्रव्यस्य शत्रवो दुर्योधनादयः तान् हतवानिति । निश्चितत्वात् तथा प्रयोगः ॥ ११ ॥

राज्यप्रदाने बलवद्धेत्वन्तरं चाह—**यदा त्विति** । क्षितिदेवाः ब्राह्मणाः तेषां देवः पूज्यः मुक्तिमपि ददाति किमु राज्यमित्यतो—**मुकुन्द इति** । एवंविधसामर्थ्यवान् पार्थान् गृहीतवानिति यदा[4] तस्माच्च । सोऽपि न दूरस्थ इत्याह—**आस्त इति** । स्वेषां पाण्डवानां पुर्यामुपप्ला-व्याख्यायामास्त इति यस्मात् तस्माच्च । साम्प्रतं सावसर इत्याह—**विनिर्जितेति** ॥ १२ ॥

पुत्रसंवादाभावाद् युधिष्ठिराय राज्यं न दत्तमिति धृतराष्ट्राभिप्रायं विद्वान् विदुरो विष्णुवैष्णव-द्वेषिणः पुत्रस्यापि परित्यागः श्रेयानिति वक्ति—**स एष इति** । हे ज्येष्ठ त्वं यमपत्यमत्या न पतति

---

[1] विशेषतो-च [2] स्वकर्तव्यालोचनाय-च,ङ,छ,घ [3] यमस्यापि वृकोदरनामवत्त्वादियं शङ्का ।

[4] यदा यस्मात्-छ

स एष दोषः पुरुषद्विडास्ते गृहं प्रविष्टो यमपत्यमत्या ।
पुष्णासि कृष्णाद् विमुखो गतश्रीस्त्यजाश्वशैवं कुलकौशलाय ॥ १३ ॥

इत्यूचिवांस्तत्र सुयोधनेन प्रवृद्धकोपस्फुरिताधरेण ।
असत्कृतः सत्स्पृहणीयशीलः क्षत्ता सकर्णानुजसौबलेन ॥ १४ ॥

क एनमत्रोपजुहाव जिह्मं दास्याः सुतं यद्बलिनैव पुष्टः ।
तस्मिन् प्रतीपः परकृत्य आस्ते निर्वास्यतामाशु पुराच्छ्वसानः ॥ १५ ॥

स इत्थमत्युल्बणकर्णबाणैर्भ्रातुः पुरो मर्मसु ताडितोऽपि ।
स्मयन् धनुर्द्वारि निधाय मायां गतव्यथोऽयादुरु मानयानः ॥ १६ ॥

---

कुलं यस्मात्तदपत्यमिति बुद्ध्या पुष्णासि स एष गृहं प्रविष्टः आस्त इत्यन्वयः । कीदृशः ? दोषः पापात्मा । पुरुषं पूर्णषड्गुणं विष्णुं द्वेष्टीति पुरुषद्विड् । कुतः ? कृष्णाद् विमुखः । उपलक्षणमेतत् । तद्भक्तविमुखश्च । अत एव गतश्रीः श्रीप्रसादरहितः । यत एवंविधोऽथ तस्मात् कुलकौशलायाशु कालक्षेपमन्तरेणैनं दुर्योधनं त्यजेत्यन्वयः ॥ १३ ॥

स्ववचनादिकं धृतराष्ट्रेण नाङ्गीकृतमित्येतावता विदुरस्य तीर्थयात्राकरणविरागहेतुः कः प्राप्त इति तत्राह—**इतीति** । इतिशब्द आदिवचनः । एवमादिवाक्यमुक्तवान् । प्रकारवचनो वा । स्फुरणं संचलनम् । तत्र ज्येष्ठस्य पुरतः असत्कृतो धिक्कृतः ॥ १४ ॥

धिक्कारप्रकारमाह—**क एनमिति** । दास्याः सुतमित्याक्रोशे षष्ठी । उपजुहाव आहूतवान् । जिह्मं वक्रहृदयम् । यस्य पुंसो बलिना अपवर्जितान्नेन । तस्मिन् पुंसि प्रतीपः विरोधी । परेषां मम विरोधिनां पाण्डवानां कृत्ये कार्ये आस्ते यस्मात् तस्मादिति शेषः । निर्वास्यतां निष्कास्यताम् । श्वसानः श्वासमात्रावशेषी । स्वकृतो दोषः स्वस्यैवेति सूचनाय शानच्प्रयोगः ॥ १५ ॥

सम्भावितस्य ताडनात् प्रागेव निर्गमनं श्रेय इति भावं श्लोकद्वयेन सूचयन्नाह—**स इति** । भ्रातुः धृतराष्ट्रस्य स्मयन् मन्दस्मितं कुर्वन् मायां पुत्र इत्यादिस्नेहलक्षणां हरेर्बन्धकशक्तिमुरु मानयानः बहुमन्वानः सोऽयाद् ययौ । तीर्थमिति शेषः ॥ १६ ॥

स निर्गतः कौरवपुण्यलब्धगजाह्वयात् तीर्थपदः पदानि ।।
अन्वाक्रमत् पुण्यचिकीर्षयोर्व्यामधिष्ठितो यानि सहस्रमूर्तिः ।। १७ ।।

वनेषु पुण्योपवनाद्रिकुञ्जेष्वपङ्कतोयेषु सरित्सरस्सु ।
अनन्तलिङ्गैः समलङ्कृतेषु चचार तीर्थायतनेष्वनन्यः ।। १८ ।।

गां पर्यटन् मेध्यविविक्तवृत्तिः सदाऽऽप्लुतोऽधःशयनावधूतः ।
अलक्षितः स्वैरवधूतकेशो[1] व्रतानि चेरे हरितोषणानि ।। १९ ।।

इत्थं व्रजन् भारतमेव वर्षं कालेन यावद् गतवान् प्रभासम् ।
तावच्छशास क्षितिमेकचक्रामेकातपत्रामजितेन पार्थः ।। २० ।।

---

पुण्यलब्धे इत्यनेन हस्तिनपुरमपि पुण्यक्षेत्रमिति सूचयति । तीर्थपदः हरेः । पदानि स्थानानि । सहस्रमूर्तिः अनन्तमूर्तिः । 'तदेतत् सहस्रं तत् सर्वम्' इति श्रुतिः ।। १७ ।।

एतदेव विशिनष्टि—**वनेष्विति** । तीर्थानां शुद्धजलानामायतनेषु स्थानेषु नित्यशुद्धस्य हरेः सन्निधानस्थानेषु वा । पुण्यशब्दः प्रत्येकमभिसम्बध्यते । उपवनेषु पुरोपकण्ठवनेषु, अद्रिषु श्रीपर्वतादिषु, कुञ्जेषु सिंहगिरिव्रजाद्यणुतरपर्वतेषु, वनेषु वृन्दावनेषु । सेव्यत्वे हेतुमाह—**अपङ्केति** । सरित्सु गोदावर्यादिनदीषु, सरस्सु पुष्करादिषु, अनन्तस्य हरेर्लिङ्गैः प्रतिमाभिः सम्यगलङ्कृतेषु ।। १८ ।।

चरणं विशिनष्टि—**गामिति** । गां भूमिम् । मेध्यैः शुद्धैः विविक्तैः पृथग्भूतैः वृक्षात् पतितैः । पत्रादिभिः वृत्तिः आजीविका जीवनं यस्य स तथोक्तः । यद्वा शुद्ध एकान्तस्थले वृत्तिरवस्थानं यस्य स तथा, अधःशयनेन स्थण्डिले शयनेन अवधूतः रजोरुषितदेहः स्वैः स्वकीयैरलक्षितोऽविज्ञातः । अवधूताः वायुनोद्धूताः केशा यस्य स तथा । यद्वा अवधूतवेषवद्वेषो यस्य स तथा । कीदृशानि व्रतानि ? हरितोषणानि, यानि यानि व्रतानि चेरे तानि तानि सर्वाण्यपि हरिप्रसादजनकानीत्यर्थः । अनेनोद्देश्य-देवतावशीकरणसमर्थानीति व्रतशब्दनिर्वचनं सूचितम् । वृञ् वरण इति धातोः व्रियतेऽनेनैतदि-त्यस्मिन्नर्थे व्रतमिति रूपं सिध्यति ।। १९ ।।

कर्मभूमित्वाद् भारतवर्षमेवाटितवान् नान्यदित्यस्मिन्नर्थे एव शब्दः । केनचित् कालेन । यावद्यदा । तावत्तदा । पार्थोऽजितेन कृष्णेनोक्तविधिना एकचक्रामेकाज्ञां एकमेवातपत्रं श्वेतच्छत्रं यत्र सा तथा ताम् । क्षि निवासगत्योरिति धातोः सर्वत्र सन्निवासः, सुगमनम् । चोराद्युपद्रवो नास्तीत्येतत्सूचनाय क्षितिमिति

---

[1] वेषो-ङ, घ

तत्राथ शुश्राव सुहृद्विनष्टिं वनं यथा वेणुजवह्निनाश्रयम् ।
संस्पर्धया दग्धमथानुशोचन् सरस्वतीं प्रत्यगियाय तूष्णीम् ॥ २१ ॥

तस्यां त्रितस्योशनसो मनोश्च पृथोरथाग्नेरसितस्य वायोः ।
तीर्थं सुदासस्य गवां गुहस्य यच्छ्राद्धदेवस्य स आसिषेवे ॥ २२ ॥

अन्यानि चेह द्विजदेवदेवैः कृतानि नानायतनानि विष्णोः ।
प्रत्यङ्गमुख्याङ्कितमन्दिराणि यद्दर्शनात् कृष्णमनुस्मरन्ति ॥ २३ ॥

---

प्रायोजि । इत्थमित्यनेन नियमभङ्गो नास्तीति सूच्यते ॥ २० ॥

प्रभासतीर्थागमनेन कश्चिदर्थविशेषः सूचितः । कोऽसाविति तत्राह—**तत्रेति** । अथ प्रभास क्षेत्रगमनानन्तरं तत्र प्रभासे तिष्ठन् विदुरः सुहृदां यदूनां विनष्टिं विप्रशापनिमित्तविनाशं शुश्रावेत्यन्वयः । 'विदुरस्तु प्रभासस्थः शापं संक्षेपतोऽश्रृणोत् । यदूनां विस्तरात् पश्चादुद्धवाद् यमुनामनु' इति वचनात् विप्रशापेन भविष्यन्तं यदुविनाशं श्रुतवान् इत्यर्थः । अन्यथा महाभारतविरोधः स्यात् । तज्जिज्ञासुस्तत्रागमत् किम् ? नेत्याह—**यथेति** । वायुनोद्धूतवेणुसङ्घर्षणलक्षणसंस्पर्शोत्थितवह्निना तदाश्रयं वनं यथा दग्धं भविष्यति तथा विप्रशापहेतुसंस्पर्धयाऽन्योन्यमर्मस्पर्शनवचनोत्थितकलहवह्निना दहिष्यत् स्वकुलं अनुशोचन् अथ प्रत्यक् सरस्वतीं पश्चिमवाहिनीं नाम्ना सरस्वतीं नदीमियायेत्यन्वयः । तूष्णीमित्यनेन दुःखेन क्षेत्रवासिनो नापृच्छदिति सूचयति ॥ २१ ॥

दुःखाग्निसन्तप्तः तत्र सरस्वत्यां मर्तुं किं गत इति तत्राह—**तस्यामिति** । अनेन विदुरस्य शास्त्रज्ञानाधिक्यं सूचयति । यतः संसारः क्षणभङ्गुरोऽतः तीर्थस्नानादिना शुद्धान्तःकरणस्य भगवदपरोक्षज्ञानेन पुरुषार्थः स्यादित्यनेन तीर्थस्नानमकारि नान्यो व्यापार इति ॥ २२ ॥

न केवलं नदीतीर्थान्येव निषेवितानि किन्तु तद्देशभवानि क्षेत्राणीत्याह—**अन्यानि चेति** । इह नद्यां सुराष्ट्रे च । कीदृशान्यायतनानि ? प्रत्यङ्गाः सम्यक् लक्षणवन्तो ब्रह्मादयस्तेषां मुख्यो विष्णुस्तस्य प्रतिमाभिरङ्कितानि चिह्नितानि मन्दिराणि येषु तानि तथा । 'ब्रह्मा प्रत्यङ्गवान् सम्यग् विष्णुर्लक्षणवत्तम' इति । प्रत्यङ्गमुख्यं आयुधश्रेष्ठं चक्रं तदङ्कितानीति व्याख्यानं चिन्त्यम् । निघण्टुकारैस्तथानभिहितत्वादिति । येषां क्षेत्राणां दर्शनात् ॥ २३ ॥

ततस्त्वतिव्रज्य सुराष्ट्रमृद्धं सौवीरमत्स्यान् कुरुजाङ्गलांश्च ।
कालेन तावद् यमुनामुपेत्य तत्रोद्धवं भागवतं ददर्श ॥ २४ ॥

स वासुदेवानुचरं प्रशान्तं बृहस्पतेः प्राक्तनयं प्रतीतम् ।
आलिङ्ग्य गाढं प्रणयेन भद्रं स्वानामपृच्छद् भगवत्प्रजानाम् ॥ २५ ॥

कच्चित् पुराणौ पुरुषौ स्वनाभ्यपद्मानुवृत्त्येह कलावतीर्णौ ।
आसात उर्व्याः कुशलं विधाय कृतक्षणौ कुशलं शूरगेहे ॥ २६ ॥

कच्चित् कुरूणां परमः सुहृन्नो भामः स आस्ते सुखमङ्ग शौरिः ।
यो वै स्वसॄणां पितृवद् ददाति वरान् वदान्यो वरतर्पणेन ॥ २७ ॥

कच्चिद् वरूथाधिपतिर्यदूनां प्रद्युम्न आस्ते सुखमङ्ग वीरः ।
यं रुक्मिणी भगवतोऽभिलेभे आराध्य विप्रान् स्मरमादिसर्गे ॥ २८ ॥

---

विदुरस्य तीर्थसेवायां तात्पर्याधिक्यं सूचित[1] मृद्धमित्यनेन । अन्यथा समृद्धदेशत्यागे कारणाभावात् । कालेन केनचिदिति शेषः ॥ २४ ॥

तत्र तीर्थस्नानमन्तरेणोद्धवं दृष्ट्वाऽनेन किमकारि तन्मह्यं ब्रूहीति परीक्षितो हार्दं चोद्यं परिहरति—स इति । प्रशान्तमित्यादिविशेषणत्रयेणोद्धवस्य भगवन्निष्ठाया वैराग्यस्य शास्त्रज्ञानस्य प्रख्यातेश्चाधिक्यं सूचयति । भगवान् कृष्णः प्रजा पुत्रो येषां ते तथोक्तास्तेषाम् अपृच्छदिति । द्विकर्मको धातुः । तेनोद्धवमित्यन्वेतव्यम् ॥ २५ ॥

स्वो विष्णुस्तस्य नाभ्यो नाभिजातः पद्मो ब्रह्मा तस्यानुवृत्त्या—प्रार्थनालक्षणसेवया[2] कृतक्षणौ कृतावसरौ । 'कच्चित् कामप्रवेदन' इति वचनात् प्रश्नार्थे वर्तते कच्चिच्छब्दः । 'पद्मो ब्रह्मा समुद्दिष्टः पद्मा श्रीरपि चोच्यत' इति च । 'लोकानां सुखकर्तृत्वमपेक्ष्य कुशलं विभोः । पृच्छ्यते सततानन्दात् कथं तस्यैव पृच्छ्यत' इति वचनात् हरेः कुशलप्रश्नो लोकानां सुखकर्तृत्वमपेक्ष्येति ज्ञातव्यम् ॥ २६ ॥

भामः पूज्यः । वदान्यो दानशीलः । वरतर्पणेन भर्तृतर्पणेन ॥ २७ ॥

यदूनां वरूथाधिपतिः सेनाधिपतिः । आदिसर्गे पूर्वजन्मनि । स्मरं कामम् । विप्रानाराध्येति कथनं लोकवनितानां ब्राह्मणप्रसादेन स्वाभीष्टावाप्तिरिति प्रदर्शनपरं, न तु स्वार्थपरमित्यभिप्रायः ॥२८ ॥

---

[1] सूचयति-च [2] निषेवया-च,छ,घ,ङ

कच्चित् सुखं सात्वतवृष्णिभोजदाशार्हकाणामधिपः स आस्ते ।
यमभ्यषिञ्चच्छतपत्रनेत्रो नृपासनाधिं परिहृत्य दूरात् ॥ २९ ॥

कच्चिद्धरेः सौम्यसुतः सदृक्ष आस्तेऽग्रणी रथिनां साधु साम्बः ।
असूत यं जाम्बवती व्रताढ्या[5] देवं गुहं योऽम्बिकया धृतोऽग्रे ॥ ३० ॥

क्षेमं स कच्चिद् युयुधान आस्ते यः फल्गुनाल्लब्धधनूरहस्यः ।
लेभेऽञ्जसाधोक्षजसेवयैव गतिं तदीयां यतिभिर्दुरापाम् ॥ ३१ ॥

कच्चिद् बुधः स्वस्त्यनमीव आस्ते श्वफल्कपुत्रो भगवत्प्रपन्नः ।
यः कृष्णपादाङ्कितमार्गपांसुष्वचेष्टत प्रेमविभिन्नधैर्यः ॥ ३२ ॥

कच्चिच्छिवं देवकभोजपुत्र्या विष्णुप्रजाया इव देवमातुः ।
या वै स्वगर्भेण बभार देवं त्रयी यथा यज्ञवितानमर्थम् ॥ ३३ ॥

---

सात्वतामधिपः उग्रसेनः । शतपत्रनेत्रः पुण्डरीकाक्षः नृपासनाधिं सिंहासनं मम नाभूदिति य आधिः मनः तं[1] परिहृत्य । 'आधिर्मनोवरूथं च आत्मा स्व[2]मिति चोच्यते' इति[3] । 'पुंस्याधिर्मानसीव्यथा' इत्यमरः[4] ॥ २९ ॥

सदृक्षः पुत्रत्वयोग्यः । दक्ष इति पाठे कर्तव्यत्वेन युगपदनेकेषु कार्येषु प्राप्तेष्वव्यामोहेन क्रमेण कर्ता दक्ष इत्यर्थः । अग्रे पूर्वजन्मनि अम्बिकया पार्वत्या धृतः, गर्भ इति शेषः ॥ ३० ॥

युयुधानः सात्यकिः, फल्गुनाद् अर्जुनात् । अनेन धनुर्वेदज्ञानाधिक्यं भगवत्प्रियतमत्वं च प्रष्टव्यत्वे हेतुरिति सूचयति । एवमुत्तरत्राप्यूह्यम् ॥ ३१ ॥

अनमीवो निष्पापः । श्वफल्कपुत्रोऽक्रूरः । प्रेम्णा भक्त्या विभिन्नं नष्टं धैर्यं रजोवेष्टनाहंकार-रूपं मनो यस्य स तथा ॥ ३२ ॥

विष्णुः प्रजा पुत्रो यस्याः सा विष्णुप्रजा तस्याः । देवकश्चासौ भोजश्च देवकभोजः, नाम्ना देवकः कुलेन भोजः, तस्य पुत्र्याः देवक्या देवमातुरदितेरिव विष्णुप्रजाया इति योजना । यज्ञो विष्णुर्वितानो विभूतिः । विष्णुविभूतिरूपमर्थं प्रतिपाद्यं यागविस्तारलक्षणमर्थं वा । कादाचित्कं

---

[1] आधिः मनोगतं दुःखं तं-क [2] स्वमिति-च,ङ,छ [3] अभिधानादिति शेषः । [4] इदममरकोशोदाहरणं 'क'कोशे नास्ति । तदपि 'आधिस्तु मानसी पीडा' इति-ङ,च,छ,ध कोशेषु पठ्यते । [5] व्रतस्था-ङ

अपिस्विदास्ते भगवान् सुखं वा यः सात्वतां कामदुघोऽनिरुद्धः ।
यमामनन्ति स्म हि शब्दयोनिं मनोमयं सत्वतुरीयमर्थम् ॥ ३४ ॥
अपिस्विदन्ये च निजात्मदैवमनन्यवृत्त्या समनुव्रता ये ।
हार्दिक्यसत्यात्मजचारुदेष्णगदादयः स्वस्ति चरन्ति सौम्य ॥ ३५ ॥

---

देवक्या गर्भधारणं, त्रय्या अर्थधारणं सनातनं अतस्तन्निदर्शनं कथं स्यादित्यत उक्तम्—**वा इति** । दृष्टान्तदार्ष्टान्तिकयोरेकदेशसाम्येनालं तत्प्रसिद्धेरिति ॥ ३३ ॥

अनिरुद्धो भगवान् वा सुखमास्तेऽपिस्वित् किमित्यन्वयः । अनिरुद्धशब्दार्थं लक्षयति—**यः सात्वतामिति** । न केवलं कामं न निरुणद्धि किन्तु तत्तदिष्टदायक[1] आश्रितानामतोऽनिरुद्धः । भगवान्[2] पूज्यः । कामदुघ इति छान्दसपदप्रयोगेण सूचितं वैदिकत्वं स्पष्टमाह—**यमिति** । शब्दो वेदो योनिः ज्ञप्तिकारणं यस्य स तथोक्तस्तम् । 'भद्रं नो अभिवातय मनोदक्षमुतक्रतुं' इत्येवंरूपः शब्दः । ननु 'हे मनस्त्वं क्रतुं दक्षं दर्शनमुत भद्रं मङ्गलं विष्णुं प्रति वातय गमय' इति मनोविषयत्व प्रतीतेः कथमस्य अनिरुद्धविषयत्वम् ? अत्राह—**मनोमयमिति** । सर्वकार्येषु मनः प्रथयतीति मनोभिमानित्वादनिरुद्धस्य, मनःशब्देन स एवोच्यते । 'मनसा वा अग्रे सङ्कल्पयति', 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इत्यादेः । 'नो मनो भद्रं वातय' इति मनसः कर्मत्वप्रतीतेः कथमनेन स उच्यत इति चेत् सत्यम् । कर्ता एव[3] तर्ह्यनिरुद्धः स्यात् । ननु हन्त तर्हि मनःशब्दाभिधेयत्वं गतम् ? अत्राह—**सत्वेति** । सत्वाच्चित्तात् तुरीयं चतुर्थं मनःशब्दार्थमनिरुद्धमामनन्ति, 'मनो बुद्धिरहङ्कारश्चित्तमित्यन्तरात्मनः । यद् विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम् । शारदेन्दीवरश्यामं संराध्यं योगिभिः शनैः' इत्यादिना । 'हे मनोनाथानिरुद्ध नोऽस्माकं क्रतुं सङ्कल्पं दर्शनं ज्ञानं च त्वद्विषयं[4] कुरु । हे भगवन् नो मनो दक्षं समर्थं क्रतुमध्वरं च भद्रं त्वां वातय प्रापय' इत्युभयथापि हि तद्विषयत्वं सङ्गच्छते । 'दक्षौ दर्शनपण्डितौ' इति यादवः । कामदुघत्वादिमाहात्म्यं हरेरितरत्रासम्भावितं कथमस्मिन् योज्यत इत्यतो वाह—**यमिति** । यं कामपुत्रं सत्वस्य बलविज्ञानपूर्णस्य चतुर्मूर्तेर्हरेस्तुरीयमर्थमनिरुद्धनामानं हरिमामनन्तीत्यतो युक्तं तदावेशित्वात् तादृशमाहात्म्यकथनम् । पृथ्व्यादौ दर्शनात् ॥ ३४ ॥

उक्तं कुशलप्रश्नं प्रसिद्धाप्रसिद्धेष्वप्यतिदिशति—**अपि स्विदिति** ॥ ३५ ॥

---

[1] तत्तदिष्टं दोग्धा-ङ [2] अयं पाठः-छ,घ कोशस्थः । अत्र भगवानिति प्रतीकं धृत्वा पूज्य इति व्याख्यातम् । कोशान्तरेषु अनिरुद्धः पूज्यश्चेति पाठः । [3] अयं 'च' कोषपाठः । अन्यत्र स इति । [4] अयं घ,ङ,च पाठः अन्यत्र ज्ञानं तत्वविषयमिति ।

अपि स्वदोर्भ्यां विजयाच्युताभ्यां धर्मेण धर्मः परिपाति सेतुम् ।
दुर्योधनोऽतप्यत यत्सभायां साम्राज्यलक्ष्म्या विजयानुवृत्त्या ॥ ३६ ॥

किं वा कृताघेष्वघमत्यमर्षी भीमोऽहिवद् दीर्घतमं व्यमुञ्चत् ।
यस्यांघ्रिपातं रणभूर्न सेहे मार्गं गदायाश्चरतो विचित्रम् ॥ ३७ ॥

कच्चिद् यशोधा रथयूथपानां गाण्डीवधन्वोपरतारिरास्ते ।
अलक्षितो यच्छरकूटगूढो मायाकिरातो गिरिशस्तुतोष ॥ ३८ ॥

यमावुतस्वित् तनयौ च माद्र्याः पार्थैर्वृतौ पक्ष्मभिरक्षिणीव ।
रेमात उद्धृत्य मृधे स्वरिक्थं सुधां सुपर्णाविव वज्रिवक्त्रात् ॥ ३९ ॥

अहो पृथापि ध्रियतेऽर्भकार्थे राजर्षिवर्येण विनापि तेन ।
यस्त्वेक वीरोऽतिरथो विजिग्ये धनुर्द्वितीयः ककुभश्चतस्रः ॥ ४० ॥

---

धर्मः धर्मपुत्रः विजयाच्युताभ्यां स्वदोर्भ्यां धर्मेण धर्मशास्त्रमनतिक्रम्य धर्मसेतुं परिपाति किमित्यन्वयः । यस्य युधिष्ठिरस्य सभायां दिग्विजयेनानुवृत्तिरनुगमनं यस्याः सा तथा, विजयादर्जुनादनुवृत्तिरुत्पत्तिर्यस्याः सा तथा, विजयस्य हरेरनुवृत्तिर्यस्याः सा तथा वा । श्रीमदादितरेषां धर्मसेतुलङ्घनं सम्भाव्यते नास्य तदस्तीति प्रश्नः । तत एव धर्म इति प्रायोजि ॥ ३६ ॥

भीमः कृताघेषु दुर्योधनादिषु अघं व्यमुञ्चत् किं वा ? पुनरपराधबुद्धिं मुक्त्वास्ते किम् ? प्रश्ननिमित्तमाह — **अत्यमर्षीति** । तस्य पराक्रममाह—**यस्येति** । अङ्घ्रिपाते निमित्तमाह —**मार्गमिति** ॥ ३७ ॥

रथयूथपानां यशो दधातीति यशोधाः । यच्छरकूटेन यस्य शरपञ्जरेण गूढो निलीनः । मायया इच्छया किरातः गृहीतशबरवेषः ॥ ३८ ॥

पक्ष्मभिरावृते अक्षिणी इव पार्थैरावृतौ रक्षितौ माद्र्यास्तनयौ यमौ वज्रिणः इन्द्रस्य वक्त्रात् सुपर्णौ गरुडौ सुधामिव मृधे युद्धे स्ववैरिमुखात् स्वरिक्थं निजराज्याख्यं धनमुद्धृत्य रेमात उत स्वित् किमित्यन्वयः । सुपर्णाविति दार्ष्टान्तिकापेक्षया द्विवचनम् ॥ ३९ ॥

तेन राजर्षिवर्येण पाण्डुचक्रवर्तिना विना रहितापि ध्रियते । पुत्रैरिति[1] शेषः । राजर्षिवर्यत्वं दर्शयति—**यस्त्वेति** । चतस्रः चतसृः[2] ॥ ४० ॥

---

[1] इयं शेषोक्तिश्चिन्त्या । [2] चतुः संख्याकाः-ङ

सौम्यानुशोचे तमधः पतन्तं भ्रात्रे परेताय विदुद्रुहे यः ।
निर्यापितो येन सुहृत् स्वपुर्या अहं स्वपुत्रान् समनुव्रतेन ॥ ४१ ॥

सोऽहं हरेर्मर्त्यविडम्बनेन दृशो नृणां भावयतो विधातुः ।
नान्योपलक्ष्यः पदवीं प्रसादाच्चरामि पश्यन् गतविस्मयोऽत्र ॥ ४२ ॥

नूनं नृपाणां त्रिमदोत्पथानां महीं मुहुश्चालयतां चमूभिः ।
वधात् प्रपन्नार्तिजिहीर्षयेशो ह्यपेक्षाताघं भगवान् कुरूणाम् ॥ ४३ ॥

अजस्य जन्मोत्पथनाशनाय कर्माण्यकर्तुर्ग्रहणाय पुंसाम् ।
न त्वन्यथा कोऽर्हति देहयोगं परो गुणानामुत कर्मतन्त्रम् ॥ ४४ ॥

---

परेताय मृताय भ्रात्रे पाण्डवे । 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति चतुर्थी । सुहृत् प्रत्युपकारमनपेक्ष्योपकारकर्ता ॥ ४१ ॥

विधातुः कृष्णस्य पदवीं निवृत्तिमार्गं चरामि । पश्यन्, संसारिणां क्लेशमिति शेषः ॥ ४२ ॥

ननु कंसादिवधवत्[1] कुरूणां हननं झटिति किमिति न कृतं न कारितं चेत्याशङ्क्य प्रयोजनान्तरसद्भावादुपेक्षितमित्याशयेनाह—**नूनमिति** । भगवान् कुरूणाम् अघं अपराधमुपैक्षत नूनमुपेक्षितवान् इति तर्कयामि । 'तर्कनिश्चययोर्नूनमिति' यादवः । तद्धननासामर्थ्यान्नेत्यत उक्तम्—**ईशो हीति** । तर्हि किंनिमित्तमिति तत्राह—**नृपाणामिति** । त्रिमदाद् विद्याधनाभिजननिमित्तान्मदाद्, उत्पथानां सन्तं पन्थानमपहाय वर्तमानानां, चमूभिः अनेकाक्षौहिणीगणिताभिर्मुहुः महीं चालयतां नृपाणां कंसादीनां वधाद्धेतोः । तद्वधप्राथम्येऽपीदं निमित्तमित्याह—**प्रपन्नेति** । प्रपन्नानां देवावताराणां वसुदेवादीनाम् आर्तिजिहीर्षया असह्यदुःखहरणेच्छया कारणेन । अनेन हरेः प्रवृत्तिर्भक्ताभीष्टानुसारिणीति दर्शितं भवति ॥ ४३ ॥

भक्ताभीष्टं च भूभारायितदुष्टजननिधनं यत् तदेवावतारप्रयोजनमिति भावेनाह—**अजस्येति** । अजस्य विष्णोः जन्म अवतारः । उत्पथनाशनाय कंसादिनिधनाय । प्रयोजनान्तरं चास्तीत्यह—**कर्माणीति** । फलमनुसन्धायाकर्तुः स्वत एव सृष्ट्यादेः कर्तुर्हरेः कर्माणि जगत्सर्जनादिलक्षणानि पुंसां शरणागतानां ग्रहणाय श्रवणमननादिरूपजिज्ञासायै । 'हरिः कर्ताप्यकर्तेति फलाभावेन भण्यते'

---

[1] कंसादिवत्-घ

**तस्य प्रपन्नाखिललोकपानामवस्थितानामनुशासने स्वे ।**
**अर्थाय जातस्य यदुष्वजस्य वार्तां सखे कीर्तय तीर्थकीर्तेः ॥ ४५ ॥**

इति श्रीमद्भागवते तृतीयस्कन्धे प्रथमोऽध्यायः ।

॥ अथ द्वितीयोऽध्यायः ॥

**शुक उवाच—**

**इति भागवतः पृष्टः क्षत्त्रा वार्तां प्रियाश्रयाम् ।**
**प्रतिवक्तुं न चोत्सेहे औत्कण्ठ्यात् स्मारितेश्वरः ॥ १ ॥**

---

इति । बालवल्लीलार्थं देहं गृह्णातीति किं न स्यादितीमं पक्षमाक्षिपति—**न त्विति** । अन्यथा भक्तजनग्रहणादिकमन्तरेण स्वप्रयोजनमपेक्ष्य नैव । कुतः ? असम्भवात् । तथाहि—कः पुरुषः शुक्लशोणितसम्पृक्तदेहयोगं प्रत्यर्हति ? न कोप्यर्हति । हरिरर्हति ? नेत्याह—**पर इति** । गुणानां सकाशात् परस्तदतीतत्वेनोत्तमः, गुणसंसर्गोऽपि नास्तीति गुणानामिति षष्ठी । सदेह इति हरेर्देहित्वप्रतीतेः कोऽर्हतीति कथमाक्षिप्यत इत्यत उक्तम्—**कर्मेति** । मनुष्यादिदेहयोगाद्यसंभवेऽपि देवादिशरीरयोगः स्याद्वित्यत उक्तम्—**उतेति** । 'उताप्यर्थविकल्पयोः'[1] इति । विकल्पोऽपि न घटत इत्यर्थः । 'न देहयोगादि[2]जनिर्विष्णोर्व्यक्तिर्जनिः स्मृता' इति विशेषवचनाच्च देहयोगाङ्गीकारपक्षो गर्हित इति भावः ॥ ४४ ॥

किं बहुनोक्तेनेति विदुरः स्वाभीष्टं वक्ति—**तस्येति** ॥ ४५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे प्रथमोऽध्यायः ।

॥ अथ द्वितीयोऽध्यायः ॥

अत्राध्यायत्रये उद्धवेन विदुरप्रश्नप्रतिवचनाय हरेः श्रीकृष्णावतारसंक्षेपकथा निरूप्यते । तत्र प्रथमत उद्धवस्य भगवति भक्त्युद्रेकलक्षणं शुकः परीक्षितं कथयतीत्याह सूतः शौनकाय—**इतीति** । आत्मादेरपि प्रियः प्रेष्ठो हरिः आश्रयो यस्याः सा तथा तां वार्तां कथाम् । औत्कण्ठ्यं चित्तविद्रवणहेतुभूतौत्सुक्यम् , तस्मात् गद्गदकण्ठत्वादिति शेषः । स्मारितेश्वरः । प्रसङ्गविशेषादिति शेषः ॥ १ ॥

---

[1] अभिधानमिति शेषः । [2] न देहयोगोहीति भा. तात्पर्यपाठः ।

यः पञ्चहायनो मात्रा प्रातराशाय याचितः ।
नैच्छत् तद् रचयन् यस्य[1] सपर्यां बाललीलया ॥ २ ॥

स कथं सेवया तस्य कालेन जरसं गतः ।
पृष्टो वार्तां प्रतिब्रूयाद् भर्तुः पादावनुस्मरन् ॥ ३ ॥

स मुहूर्तमभूत् तूष्णीं कृष्णांघ्रिसुधया भृशम् ।
तीव्रेण भक्तियोगेन निमग्नः साधु निर्वृतः ॥ ४ ॥

पुलकोद्भिन्नसर्वाङ्गो मुञ्चन् मीलद्दृशाश्रु सः
पूर्णार्थो लक्षितस्तेन स्नेहप्रसरसंप्लुतः ॥ ५ ॥

शनकैर्भगवल्लोकान्नृलोकं पुनरागतः ।
विमृज्य नेत्रे विदुरं प्रत्याहोद्धव उत्स्मयन् ॥ ६ ॥

---

एकान्तभक्तानामेतद् युक्तमिति भावेनाह—**य इति** । पञ्च हायनाः वत्सरा यस्य स तथा । प्रातराशाय प्रातर्भोजनाय । तत् प्रातर्भोजनम् । सपर्यां पूजाम् । रचयन् प्रपञ्चयन् ॥ २ ॥

तस्य हरेः । जरसं जरां वार्धकं वयः ॥ ३ ॥

कृष्णांङ्घ्रिस्मरणसुधया । तृतीया सप्तम्यर्थे । तस्यां निमग्नः । निर्वृतः परमानन्दं प्राप्तः ॥ ४ ॥

उद्धवस्यैवंविधामवस्थां पश्यतो विदुरस्य मनसि किं प्रत्यभादत्राह—**पुलकेति** । तेन विदुरेण पुलको रोमाञ्चः तेनोद्भिन्नं अङ्कुरितं सर्वाङ्गं यस्य सः । मीलद्दृशा अर्धोन्मीलितनेत्रेणाश्रुबाष्पकलां मुञ्चन् स्नेहप्रसरसंप्लुतः भक्तिनदीप्रवाहमग्नः स उद्धवः पूर्णार्थः कृतकृत्यो लक्षितो लक्षणतो ज्ञात इत्यन्वयः ॥ ५ ॥

ततः परं विदुरस्य काऽभीष्टसिद्धिरभूदित्याशङ्क्य स्वप्रश्नप्रतिवचनो[2]पक्रमसिद्धिरित्याह — **शनकैरिति** । भगवल्लोकाद् असंप्रज्ञातावस्थालक्षणात् नृलोकं मनुष्यदेहाभिमानमागतः उत्स्मयन् उत्कृष्टं मन्दस्मितं कुर्वन् ॥ ६ ॥

---

[1] तन्नच्छद्रचयन् यस्य-घ,च,छ [2] अयं घ पाठः । अन्यत्र प्रवचनेति पाठः ।

उद्धव उवाच --

कृष्णद्युमणिनिम्लोचे गीर्णेष्वजगरेण ह ।
किं नु नः कुशलं ब्रूयां गतश्रीषु यदुष्वहम् ॥ ७ ॥

दुर्भगो बत लोकोऽयं यदवो नितरामपि ।
ये संवसन्तो न विदुर्हरिं मीना इवोडुपम् ॥ ८ ॥

इङ्गितज्ञाः पुरप्रौढा एकारामाश्च सात्वताः ।
सात्वतामृषभं सर्वे भूतावासममंसत ॥ ९ ॥

---

कीदृशी सेत्यत्राह—**कृष्णेति** । कृष्ण एव द्युमणिः सूर्यस्तस्य निम्लोचे अस्तमये[1] सति अत एव गतश्रीषु नष्टालोकेषु अतएव कालाजगरेण गीर्णेषु ग्रस्तेषु अस्तङ्गतेषु विनाशं यातेषु नः सम्बन्धिषु यदुषु किं नु कुशलं ब्रूयाम् । हेत्यनेन कुशलप्रश्नप्रवचन[2]प्रत्यारम्भो न कर्तव्यः । विप्रशापेन सन्निकृष्टनाशस्य प्रसिद्धत्वादिति दर्शयति । 'प्रत्यारम्भे प्रसिद्धे ह' इति यादवः ॥ ७ ॥

दुष्टनिधनव्याजेन ज्ञानोपदेशार्थमवतीर्णस्य कृष्णस्य ज्ञानेन नाशं यास्यतामपि यदूनां त्रिलोक्याश्च श्रेयःसिद्धिः स्यादित्याशङ्क्य ज्ञाने सति श्रेयः, तदेव नास्तीत्यनुतपन् उद्धव इत्याह—**दुर्भग इति** । लोको जनः । बतशब्दः खेदवचनः । हरिं न विदुः । दुस्तरसंसारसंहारकत्वेनेति शेषः ॥ ८ ॥

न केवलमज्ञाः, मिथ्याज्ञानिनोऽपि जाता इत्याह—**इङ्गितज्ञा इति** । अत्रेङ्गितशब्दो द्विरावृत्य व्याख्यातव्यः । इगि चेष्टायामिति धातुः । लोकस्येङ्गितेन चेष्टितेनेङ्गितं हृद्गतभावं जानन्तीति इङ्गितज्ञाः । 'इङ्गितं हृद्गतो भाव इङ्गितं चाङ्गचेष्टितम्' इत्यभिधानम् । पुरप्रौढाः शरीराभिमानिनः गृहस्वामिनो वा । एकारामाः केवलक्रीडालोलाः । 'एके मुख्यान्यकेवलाः' इति च । एवंविधाः सर्वे सात्वताः यादवाः सात्वतां ब्रह्मादिभागवतानां ऋषभं स्वामिनं प्राकृतप्रधानपुरुषवत् भूतावासं कतिपयजनावासहेतुभूतममंसत अमन्यतेत्यन्वयः । 'एको देवः' इति श्रुतिप्रतिपाद्यत्वेन प्रसिद्धं भूतावासं अविशेषेण सकलजगन्निवासं भगवन्तं सात्वतां यादवानामेव ऋषभममंसतेति वा ॥ ९ ॥

---

[1] अयं क ङ पाठः । अन्यत्र अस्तङ्गत इति पाठः ।

[2] प्रश्नप्रतिवचनेति पाठेन भाव्यमिति भाति । प्रश्नवचनेति-ङ,च,घ,छ

देवस्य मायया स्पृष्टा ये चान्ये असदाश्रयाः ।
भ्राम्यते धीर्नतद्वाक्यैरात्मन्युप्तामलात्मनाम्[1] ॥ १० ॥

प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् ।
आदायान्तरधाद् यस्तु स्वबिम्बं लोकलोचनम् ॥ ११ ॥

यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम् ।
विस्मापनं स्वस्य च सौभगर्द्धेः परं पदं भूषणभूषणाङ्गम् ॥ १२ ॥

---

प्रसङ्गात् ज्ञानिलक्षणमाह—**देवस्येति** । देवस्य हरेः मायया बन्धकशक्त्या स्पृष्टा उपतप्त[2]-ज्ञानत्वादन्यथा ज्ञानिनो, ये चान्ये असतां जनानाममङ्गलानां विषयाणां वाश्रयाः तद्वाक्यैः, तेषां नृणां वाक्यैः, आत्मनि परमात्मनि, उप्तामलात्मनां सन्ततन्यस्तनिर्दोषमनसां ज्ञानिनां धीर्न भ्राम्यते। नान्यथा भवतीत्यनेन सम्यक् ज्ञानित्वमेवंविधमित्युक्तं भवति । आत्मन्युप्तात्मनां हराविति पाठे[3] हरावित्यक्षरद्वयेन ओहाङ् गताविति हेति ज्ञानं, रमुक्रीडायामिति रीत्यतिशयितसुखमिति सच्चिदानन्द-लक्षणो विष्णुरुच्यत इति ज्ञातव्यम् ॥ १० ॥

यो ज्ञानिबुद्धिविषयो हरिः स एवायं कृष्ण इत्याह—**प्रदर्श्येति** । अतप्ततपसां अस्मिन् जन्मनीति शेषः । अनेन पूर्वतप्ततपस्त्वं[4] सूच्यते । स्वबिम्बमिति सच्चिदानन्दलक्षणं स्वरूपं तत्प्रतिमा च गृह्यते । तेन ज्ञानिनां साक्षादितरेषां इतरद् रूपं[5] इति ज्ञायते । लोकस्य जनस्य लोचनं नेत्रं यस्मिंस्तल्लोकलोचनं जनरञ्जनं वा । अधादिति लुङ् लङर्थे । अन्तर्धास्यतीत्यर्थः । 'बिम्बोऽस्त्री मण्डलसमप्रतिमामुखलक्ष्मसु' इति[6] । तुना 'द्वे वाव ब्रह्मणो रूपे' इत्यादि श्रुतिं सूचयति ॥ ११ ॥

पुनरपि यद् वपुः स्वयोगमायाबलं स्वरूपेच्छासामर्थ्यं दर्शयता हरिणा गृहीतम् । यच्च मर्त्य-लीलौपयिकं मानुषलीलां बालकौमारादिविषयामुपयातीति । अनेन स्वत एकप्रकारलक्षणमुक्तं भवति । स्वस्य कृष्णस्य च विस्मापनं विस्मयकरम् । यच्च सौभगर्द्धेः सौन्दर्यसमृद्धेः परं पदं स्थानम् । यच्च भूषणानामपि भूषणान्यङ्गानि यस्मिन् तत् ॥ १२ ॥

---

[1] उप्तात्मनां हरौ-क,च,छ । [2] उपरत-घ [3] अयं ग पाठः । अन्यत्र नास्ति ।
[4] अयं ङ,छ,च पाठः । अन्यत्र पूर्वतनतप्ततपस्त्वम् । [5] इतररूपम्-घ,छ,च
[6] अभिधानादिति शेषः ।

यद्धर्मसूनोर्बत राजसूये निरीक्ष्य दृक्स्वस्त्ययनं त्रिलोकः ।
कार्त्स्न्येन चात्रोपगतं विधातुरर्वाक् सृतौ कौशलमित्यमन्यत ॥ १३ ॥

यस्यानुरागप्लुतहासरासलीलावलोकप्रतिलब्धमानाः ।
व्रजस्त्रियो दृग्भिरनुप्रवृत्तधियोऽवतस्थुः किल कृत्यशेषाः ॥ १४ ॥

स्वशान्तरूपेष्वितरैश्च रूपैरभ्यर्द्यमानेष्वनुकम्पितात्मा ।
परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान् यथाग्निः ॥ १५ ॥

पुनरपि कीदृशम् ? धर्मसूनो राजसूये यज्ञे पश्यतो जनस्य दृशां स्वस्त्ययनम् आनन्दाश्रयं यद्वपुर्निरीक्ष्य त्रिलोक इत्यमन्यत । कथम् ? विधातुर्विरिञ्चस्यार्वाक्सृतावर्वत्यसृष्टौ कार्त्स्न्येन कौशलमत्र कृष्णवपुषि उपगतं पर्याप्तमिति । नैतत्सत्यमित्याह—बतेति । अनेन त्रिलोकस्याज्ञानमाश्चर्यमिति विस्मयं करोति । 'आनन्दरूपं दृष्ट्वापि लोको भौतिकमेव तु । मन्यते विष्णुरूपं च अहो भ्रान्तिर्बहुस्थिता' इति वचनात् । ज्ञान्यज्ञानिनां समुच्चये चकारः । तथा चैवं योजना—अत्र जीवराशौ त्रिषु वेदा[1]दिषु लोकः प्रकाशो ज्ञानं यस्य स तथा वेदैकप्रमाणो जनो धर्मसूनो राजसूये उपगतं सर्वाधिकत्वेन स्थितं यद्वपुर्निरीक्ष्य सृतौ मनुष्यसृष्टिमार्गे प्रवर्तमानस्य विधातुर्यत्कार्त्स्न्येन कौशलं मङ्गलविषयं निर्माणपाटवं तदर्वाक् नीचमित्यमन्यत । श्रीकृष्णसौन्दर्यस्याकृत्रिमत्वात् अत एवानन्तत्वाच्च न[2] तज्ज्ञान्यज्ञानिनां ज्ञाने वाऽज्ञाने वा वैचित्र्यम् ।[3] अहो इत्यास्वादयति ॥ १३ ॥

यस्य श्रीकृष्णस्यानुरागेण स्नेहेन प्लुतहासरासौ अनुस्मितहासरासक्रीडे ताभ्यां सहितेन लीलावलोकेन प्रतिलब्धः मानो यासां तास्तथोक्ताः । हासरासशब्दो रसपरः[4] तेन वा । 'रसः सारो वर' इति वचनात् । रस एव रासः । 'वार्तासम्भावयोः किल' इति वचनात् सम्भावितोऽयमर्थः । व्रजे गोष्ठे ॥ १४ ॥

अवतारप्रयोजनमाह—स्वशान्तेति । स्वस्य शान्तरूपेषु सात्त्विकप्रकृतिषु सुरादिषु इतरैः अशान्तरूपैरसुरैः अभ्यर्द्यमानेषु सत्सु, अनुकम्पितात्मा अनुद्वृत्तचित्तो[5], महदंशयुक्तः महांश्चासावंशः महदंशः मुख्यप्रतिबिम्बभूतो ब्रह्मा, तेन प्रार्थितत्वेन युक्तो विनियुक्तो, परावरेशोऽजो विष्णुर्जातो भवतीत्यन्वयः । यथाग्निर्दारुण इति शेषः । अनेन जनी प्रादुर्भाव इति धात्वर्थो विवृतः ॥ १५ ॥

[1] देवादिषु-घ [2] नेति क,ङ पाठयोर्नास्ति [3] इदं भाष्योदाहृतप्रमाणव्याख्यानम् ।
[4] हासरसः । रसशब्दो-घ,च [5] अशुष्कचित्तः, आर्द्रचित्त इति यावत् ।

मां खेदयत्येतदजस्य जन्मविडम्बनं यद्वसुदेवगेहे ।
व्रजे च वासोऽरिभयादिव स्वयं पुराद् व्यवात्सीद् यदनन्तवीर्यः ॥१६॥

दुनोति चेतः स्मरतो ममैतद् यदाह पादावभिवन्द्य पित्रोः ।
ताताम्ब कंसादुरुकम्पितानां प्रसीदतं नोऽकृतनिष्कृतीनाम् ॥ १७ ॥

को वा अमुष्याङ्घ्रिसरोजरेणुं विस्मर्तुमीशेत पुमान् विजिघ्रन् ।
यो विस्फुरद्भ्रूविटपेन भूमेर्भारं कृतान्तेन तिरश्चकार ॥ १८ ॥

दृष्टा भवद्भिर्ननु राजसूये चैद्यस्य कृष्णं द्विषतोऽपि[2] सिद्धिः ।
यां योगिनः संस्पृहयन्ति सम्यग्योगेन कस्तद्विरहं सहेत ॥ १९ ॥

---

ब्रह्मादीनामपि भगवद्विषयज्ञानं मध्याह्नार्कवत् संचलति किमुतास्मदीयमिति भावेनाह—**मां खेदयतीति** । वसुदेवस्य गेहे भार्यायां जन्मविडम्बनं जातवदनुकरणम् । अरिः कंसो जरासन्धश्च । पुराद् मथुरापुरात् गोमन्तद्वारकयोर्विवासः प्रवासः । अनन्तवीर्य इत्ययं लोकानुकरणं स्मारयति ॥ १६ ॥

एतत् कंसवधानन्तरं क्रियमाणं कर्म । पित्रोर्देवकीवसुदेवयोः । अकृतनिष्कृतीनां अननुष्ठित-कंसकृतप्रतिक्रियाणाम् ॥ १७ ॥

विस्फुरद्भ्रूविटपेन विस्फुरन्त्योः भ्रमन्त्योर्भ्रुवोर्विटपेन लेशेन । कृतान्तेन कालोपमेन[1] ॥ १८ ॥

रमज्ञेन पुरुषेण हरेर्विरहो न सोढुं युक्त इति भावेनाह—**दृष्टेति** । योगिनो युक्त्युपक्रमादि लक्षणेन वेदतात्पर्यवेदिनो यां सिद्धिं स्पृहयन्ति वाञ्छन्ति राजसूये भवद्भिश्चासुरप्रवेशात् कृष्णं द्विषतोऽपि चैद्यस्य कृष्णप्रवेशलक्षणा सिद्धिर्दृष्टा । अपिना निन्दितात् द्वेषात् भक्त्यैकलभ्या तत्प्रवेश-लक्षणा सिद्धिः कथं संभवतीति चोद्यं नन्वित्यनेन परिहृतम् । तथाहि 'प्रश्नावधारणैतिह्यसमीहानुमते ननु' इति वचनात् । यथा प्रमाणेनानुमतं तथाङ्गीकर्तव्यम् । प्रमाणं तु 'असुरा अपि ये विष्णुं शङ्खचक्रगदाधरम्[3] । भक्तिपूर्वमवेक्षन्ते ज्ञेया भागवता इति । विद्विषन्ति तु ये विष्णुमृषिपुत्रा अपि स्फुटम् । असुरास्तेऽपि विज्ञेया गच्छन्ति च सदा तम' इति वचनम् । अतएव सम्यग्योगेनेत्युक्तम् । 'सर्वथा भक्तितो मुक्तिर्द्वेषात्तम उदीरितम्' इत्यादेः । ततः किम्? तत्राह

---

[1] कालोपमानेन-छ । कालायमानेन-च,घ,ङ । [2] अपिशब्देन निन्दा सूचितेति भावः ।
[3] शङ्खचक्रधरं रणे-घ,च,छ ।

तथैव चान्ये नरलोकवीरा य आहवे कृष्णमुखारविन्दम् ।
नेत्रैः पिबन्तो नयनाभिरामं पार्थास्त्रपूताः पदमापुरस्य ॥ २० ॥

स्वयं त्वसाम्यातिशयस्त्र्यधीशः स्वराज्यलक्ष्म्याप्तसमस्तकामः ।
बलिं हरद्भिः सुरलोकपालैः किरीटकोट्येडित[1]पादपीठः ॥ २१ ॥

तत्तस्य कैङ्कर्यमलं भृतान्नो विग्लापयत्यङ्ग यदुग्रसेनम् । भृपाग्रतान्नो
तिष्ठन् निषण्णं परमेष्ठिधिष्ण्ये न्यबोधयद् देव निधारयेति ॥ २२ ॥ (पुरा)

---

—क इति । यस्मात् जीवद्वयसमायोगेन जातान् जयादीन् भक्त्या दुष्टावेशाद्विमोच्य दुष्टांस्तमसि प्रापय्य प्रवर्तते तस्मात् कृपालोस्तस्य विरहं विस्मरणलक्षणं कः पुमान् सहेत भक्तिमानिति शेषः । 'जीवद्वयसमायोगाद् हिरण्यकमुखाः परे' इत्यादेः एकस्मिन् जीवद्वयसमायोगोऽस्तीति ज्ञायते ॥ १९ ॥

चैद्यवदन्येऽपि स्वयोग्यां सिद्धिमापुरित्याह—**तथैवेति** । ये भारतयुद्धे दुर्योधनपक्षपातिनोऽन्ये नरलोकवीराः कर्णादयो नयनाभिरामं नेत्रोत्सवजनकं कृष्णमुखारविन्दं नेत्रैः पिबन्तः पार्थास्त्रपूताः पार्थस्य पाशुपताद्यस्त्रेण पूताः छिन्नशिरस्का मृतास्तेऽपि तथैव चैद्यवदेवास्य कृष्णस्य प्रसादात् तदधीनं स्वयोग्यं पदमापुरित्यन्वयः । स्वपदप्राप्त्यनन्तरं मुक्तिं च प्रापुरित्यस्मिन्नर्थे चशब्दः । पुं छेदन इति धातुः । पूञ् पवन इति धातुपाठे द्वेषं मुक्त्वा भक्त्या शुद्धा इत्यर्थः ॥ २० ॥

एवंविधस्य हरेर्भक्तानुकम्पामन्तरेण नान्यत् प्रयोजनं मत्स्यावतारादिनेत्याशयेनाह—**स्वयं त्विति** । न साम्यातिशयो यस्य स तथोक्तः । 'एकमेवाद्वितीयम्' इति श्रुतेः । स्वराज्य-लक्ष्म्या स्वरूपानुभवलक्ष्म्या, 'स्वे महिम्नि' इति श्रुतेः । बलिं पूजाम् ॥ २१ ॥

इदमपि तन्माहात्म्यातिशयसूचकं यस्मादेवंविधज्ञानवतोऽस्मान् विग्लापयति तत्कर्मेति भावेनाह —**तत्तस्येति** । तद्वचः कैंकर्यं दासत्वं विग्लापयति माहात्म्यविषयेऽज्ञानलक्षणां ग्लानिमुत्पादयति । तदिति किम् ? तत्राह—**यदिति** । परमेष्ठिधिष्ण्ये सिंहासने निषण्णमुग्रसेनं स्वयमुत्तिष्ठन् यद्वचो न्यबोधयत् विज्ञापयामास । हे देव अस्मद्विज्ञापनं निधारय चित्ते कुर्वेति ॥ २२ ॥

---

[1] कोट्याहत-ङ,छ,घ

अहो बकीयं स्तनकालकूटं जिघांसया पाययदप्यसाध्वी ।
लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम ॥ २३ ॥

मन्येऽसुरान् भागवतांस्त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तान् ।
ये संयुगेऽचक्षत तार्क्ष[1]पुत्रस्यांसे सुनाभायुधमापतन्तम् ॥ २४ ॥

वसुदेवस्य देवक्यां जातो भोजेन्द्रबन्धने ।
चिकीर्षुर्भगवाच्छर्म शमजेनाभियाचितः ॥ २५ ॥

ततो नन्दव्रजमितः पित्रा कंसाद् विबिभ्यता ।
एकादशसमास्तत्र गूढार्चिः सबलोऽवसत् ॥ २६ ॥

---

पूर्वमर्थत उक्तं दयालुत्वमधुना वाक्यतः कथयति—**अहो इति** । बक भक्षण इति धातोर्भक्षणशीलत्वात् बकी पूतना । अपिना ताटकां गर्हयति । धात्रीणां शुभानां योग्यताभेदेनोचिताम् । 'कंसपूतनिकाद्याश्च बान्धवादि युता यतः । जीवद्वयसमायोगाद्गतिद्वयजिगीषवः' इति वचनात् दयालुत्वं उर्वशीं प्रति ॥ २३ ॥

असुरयोनित्वमप्रयोजकं भागवतत्वे, किन्तु निर्दोषा भक्तिरेवेत्याशयेनाह— **मन्य इति** । संरम्भमार्गाभिनिविष्टचित्तानिति । यथा कीटः पेशस्कारिणा कुडये निरुद्धस्तस्मिन् भृङ्गे प्रथमं द्वेषयुक्तः पश्चादन्नदानात् तं द्वेषं विहाय स्नेहेन तं भृङ्गं स्मरन् तत्स्वरूपतां याति तथा तेऽप्यसुराः संरम्भमार्गेण स्मरंतस्तस्मिन् संरम्भं विहाय भक्त्यैव तस्मिन्नभिनिविष्टचित्ताः निरन्तरं तन्मनस्का इत्यर्थः । इदं तत्र हेतुगर्भविशेषणम् । सुनाभायुधं चक्रायुधम् । अचक्षत अपश्यन् । अत एव 'असुरा अपि ये विष्णुं शङ्खचक्रगदाधरम्[2]' इत्युक्तम् । तार्क्ष[3]पुत्रस्य गरुडस्यांसे स्थितम् ॥ २४ ॥

नातिचिरेण कृष्णस्य यादवानां च स्वलोकप्रयाणं भविष्यतीति निवेद्य भक्त्यतिशयात् तस्यावतारलीला अनुक्रमिष्यन्नादौ तदवतारमाह — **वसुदेवस्येत्यादिना** । वसुदेवस्य सकाशाद् देवक्यां जातः । प्रयोजनमाह—**भोजेन्द्रेति** । भोजेन्द्रेण तयोः कारागृहे बन्धने सति तं कंसं हत्वा बन्धनादुन्मुच्य तयोः शर्म चिकीर्षुरिति । हेतुगर्भनिमित्तान्तरं चाह—**शमजेनेति**[4] ॥ २५ ॥

ततो मधुरापुरात् । गूढार्चिः अप्रकाशितस्वमाहात्म्यः ॥ २६ ॥

---

[1],[3] तार्क्ष्यपुत्रेति क,छ,ङ पाठः । तार्क्षपुत्रेति घ,च पाठः । तृक्षः कश्यपः । स्वार्थे अजि तार्क्षः स एव तत्पुत्रो गरुडः । [2] शङ्खचक्रधरं रणे-क,घ,छ,च [4] अब्जजेन-क,घ,छ

परीतो वत्सपैर्वत्सांश्चारयन् व्यचरद्[1] विभुः।
यमुनोपवने कूजद्द्विजसंकुलिताङ्घ्रिपे ॥ २७ ॥

कौमारा दर्शयंश्चेष्टाः प्रेक्षणीया व्रजौकसाम्।
रुदन्निव हसन् मुग्ध[2]बालसिंहावलोकनः ॥ २८ ॥

स एव गोकुलं[3] लक्ष्म्या निकेतं सितगोवृषम्।
चारयन्ननुगान् गोपान् रणद्वेणुररीरमत् ॥ २९ ॥

प्रयुक्तान् भोजराजेन मायिनः कामरूपिणः।
लीलया व्यनुदत् तांस्तान् बालः क्रीडनकानिव ॥ ३० ॥

विपन्नान् विषपानेन निगृह्य भुजगाधिपम्।
उत्थाप्यापाययद् गावस्तत्तोयं प्रकृतिस्थितम् ॥ ३१ ॥

अयाजयद् गोसवेन गोपराजं द्विजोत्तमैः।
वित्तस्य चोरुभारस्य चिकीर्षन् सद्व्ययं विभुः ॥ ३२ ॥

---

कूजन्तोऽव्यक्तशब्दं कुर्वन्तो द्विजाः पक्षिणस्तैः संकुलिता अङ्घ्रिपा वृक्षा यस्मिन् तत् तथोक्तं, तस्मिन् ॥ २७ ॥

कौमारा इत्यत्र ङीबभावः चेष्टानां वैलक्षण्यप्रदर्शनार्थः। बालसिंहस्यावलोकनमिवावलोकनं यस्य स तथोक्तः ॥ २८ ॥

लक्ष्म्या निकेतं मन्दिरम्। सिताः तन्तूनां रज्ज्वा नासिकायां स्यूताः प्रोता गोवृषाः ककुद्मन्तो यस्मिन् तत् तथोक्तम्। चारयंस्तृणानीति शेषः ॥ २९ ॥

प्रयुक्तान् प्रहितान्। मायिनः मायया वेषान्तरधारिणः तांस्तानिति जातिभेदायोक्तम्। क्रीडनकान् लीलासाधनानि ॥ ३० ॥

विपन्नान् मृतप्रायान्। यमुनाया उत्थाप्य। गावो गाः। तस्या यमुनायास्तोयम्। प्रकृतिस्थितं विषमिश्रणात् प्राग् यथा शुद्धं तथा स्थितम् ॥ ३१ ॥

गोसवेन गोयज्ञेन। उरुभारस्य बहुसंख्याविशेषविशिष्टस्य। सन् प्रशस्तो व्ययः त्यागविशेषः तम् ॥ ३२ ॥

---

[1] व्यहरत्-घ,ङ,छ,च [2] मुग्धो-च,छ,घ [3] गोधनं-ङ,घ,च

वर्षतीन्द्रे व्रजः कोपाद् भग्नमानेऽतिविह्वले ।
गोत्रलीलातपत्रेण त्रातो भद्रानुगृह्णता ॥ ३३ ॥

शरच्छशिकरैर्मृष्टं मानयन् रजनीमुखम् ।
गायन् कलपदं रेमे स्त्रीणां मण्डलमण्डनः ॥ ३४ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे द्वितीयोऽध्यायः ।

॥ अथ तृतीयोऽध्यायः ॥

उद्धव उवाच —

ततः स आगत्य पुरं स्वपित्रोश्चिकीर्षयाशां बलदेवसंयुतः ।
निपात्य तुङ्गाद् रिपुयूथनाथं हतं व्यकर्षद् व्यसुमोजसोर्व्याम् ॥ १ ॥

सान्दीपिनेः सकृत् प्रोक्तं ब्रह्माधीत्य सविस्तरम् ।
तस्मै प्रादाद् वरं पुत्रं मृतं पञ्चजनोदरात् ॥ २ ॥

---

भग्नमाने नष्टाभिमाने अत एवातिविह्वले कर्तव्यमूढे । गोत्रलीलातपत्रेण पर्वताख्यक्रीडाधृत-च्छत्रेण । भो भद्र कल्याणात्मन् ॥ ३३ ॥

शरदृतावुदितः शशी शरच्छशी तस्य करैर्मृष्टम् अलङ्कृतं रजनीमुखं प्रदोषम् । कलपदं यथा भवति तथा । मण्डलं मण्डयतीति मण्डलमण्डनः ॥ ३४ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे द्वितीयोऽध्यायः ।

॥ अथ तृतीयोऽध्यायः ॥

ततो वृन्दावनात् । 'आशा दिगतितृष्णयोः' इति[1] । स्वपित्रोराकाङ्क्षितं चिकीर्षया कर्तु-मिच्छया ॥ व्यसुं गतप्राणम् ॥ १ ॥

ब्रह्म वेदम् । पञ्चजनोदरात् पञ्चजनाख्यदैत्योदरात् । सान्दीपिनेरधीत्य । सकृत् प्रोक्तं, तेनेति शेषः ॥ २ ॥

---

[1] अभिधानात् इति शेषः ।

समाहुता भीष्मककन्यया ये श्रियः सवर्णेन जिहीर्षयैषाम् ।
गान्धर्ववृत्त्या मिषतां स्वभाग जह्रे पदं मूर्ध्नि दधत् सुपर्णः ॥ ३ ॥

ककुद्मतोऽविद्धनसो दमित्वा स्वयंवरे नाग्नजितीमुवाह ।
तान् भग्नमानानभिगृध्यतोऽज्ञान् जघ्नेऽक्षतः शस्त्रभृतश्च शस्त्रैः ॥ ४ ॥

प्रियं प्रभुर्ग्राम्य इव प्रियाया विधित्सुरार्छद् द्युतरुं यदर्थे ।
वज्र्याद्रवत् तं सगणो रुषान्धः स्वार्थे पुरा तैर्यमयाचतानतः ॥ ५ ॥

---

भीष्मककन्ययेति तृतीया तादर्थ्ये । भीष्मककन्याया रुक्मिण्या अर्थे । सवर्णेन क्षत्रियत्वमात्र-योग्यतया समाहूताः । एषां क्षत्रियाणां श्रियो जिहीर्षया । तेषां मूर्ध्नि पदं दधदित्यनेन श्रीहरणप्रकारः[1] । मिषतां पश्यताम् ।[2] 'सुपर्णः सुपरानन्दात् काकुत्स्थो वाचि संस्थितेः' इति वचनात् सुष्ठु परमानन्द-रूपः । सुपर्ण इत्यनेन सोऽप्यक्लेशेनेति दर्शितम् । गान्धर्ववृत्त्या कन्यासंवादलक्षणया इत्यनेन बहवो विवाहविधयो दर्शिता भवन्ति । स्वभागमित्यनेन स्वयोग्यमिति दर्शयति ॥ ३ ॥

अविद्धनसः अच्छिद्रनासिकान् । ककुद्मतः वृषभान् । वृषभाणामाटोपसमयसूचनाय स्वयंवर इत्युक्तम् । किञ्च स्वयमक्षतः सन् ये स्वयंवरार्थमागतास्तान् क्षत्रियान् जघ्न इत्यन्वयः । कन्यायाः स्वालाभेन भग्नमानान् अभिगृध्यतः कन्यामाकाङ्क्षमाणान् अज्ञान् कृष्णप्राप्तियोग्यामजानतः । शस्त्रभृत इत्यनेन[3] क्षत्रिया एव न वृषा इति ज्ञायते । चशब्दः समुच्चये ॥ ४ ॥

ग्राम्यः विषयभोगासक्त इव प्रियायाः सत्यभामायाः प्रियमभीष्टं विधित्सुः कर्तुकामः प्रभुः द्युतरुं स्वर्गवृक्षं पारिजातमार्च्छत अहार्षीत् । रुषान्धः सगणः मरुद्गणेन सहितः वज्री इन्द्रः यदर्थे यस्य द्युतरोरर्थे तं कृष्णमाद्रवत् । शच्या वचनादिति शेषः । स्वार्थे स्वप्रयोजनाय यं कृष्णं तैः सहानतः प्रणतिविशिष्टो भूत्वा ॥ ५ ॥

---

[1] दर्शित इति शेषः । [2] इतः पूर्वं सुपर्ण इति पदेन भाव्यम् । [3] एतदनन्तरं 'गृह्यन्ते' इत्यधिकः पाठः । कोशान्तरेषु कृष्णः स्वयमक्षतः सन् यान् जघ्ने ते क्षत्रिया एव न वृषा इति आपततो ज्ञायते शस्त्रभृत इति शब्दद्रष्टृभिः । वस्तुतस्तु चशब्दबलात् वृषा अपि ग्राह्याः । तानपि कृष्णः स्वयमक्षतः सन्नेव जघ्न इत्याशयः ।

सुतं मृधे स्वं वपुषा ग्रसन्तं दृष्ट्वा सुनाभोन्मथितं धरित्र्याः ।
आमन्त्रितस्तत्तनयाय शेषं दत्वा तदन्तःपुरमाविवेश ॥ ६ ॥

तत्राहृतास्ता नरदेवकन्याः कुजेन दृष्ट्वा हरिमार्तबन्धुम् ।
उत्थाय सद्यो जगृहुः प्रहर्षव्रीडानुरागप्रहितावलोकैः ॥ ७ ॥

आसां मुहूर्त एकस्मिन् नानागारेषु योषिताम् ।
सविधिं जगृहे पाणीन् पुरुरूपः स्वमायया ॥ ८ ॥

तास्वपत्यान्यजनयदात्मतुल्यानि सर्वतः ।
एकैकस्यां दश दश प्रकृतेर्विबुभूषया ॥ ९ ॥

कालमागधशाल्वादीननीकैरुन्धतः पुरम्
अजीघनत् स्वयं दिव्यं[2] स्वपुंसां तेज आदिशन् ॥ १० ॥

---

धरित्र्याः सुतं नरकम् । आमन्त्रितः, तयेति शेषः ॥ ६ ॥

तत्रान्तःपुरे । कथं जगृहुरिति तत्राह—**व्रीडेति** । प्रहर्षेण सहिताभ्यां व्रीडानुरागाभ्यां लज्जास्नेहाभ्यां प्रहितैः प्रेरितैः अवलोकैर्गृहीतवत्य इत्यर्थः । ग्रहणं[1] च पतित्वेनेति शेषः ॥ ७ ॥

भगवता पुनः किं कृतमत्राह—**आसामिति** । विधिना शास्त्रोक्तकर्मणा सह वर्तत इति । एकस्य नानाविधगृहेषु स्त्रीणां करग्रहण कथं घटत इत्यत उक्तम्—**पुरुरूप इति** । योगिवत् स्वसामर्थ्येन गृहीतबहुरूपेण घटत इत्यर्थः ॥ ८ ॥

'उत्तमैः सर्वतः साम्यं किञ्चित्साम्यमुदीरितम्' इति वचनात् सर्वत आत्मतुल्यत्वं किञ्चित्सादृश्यविवक्षयेति ज्ञातव्यम् । एकैकपुत्रवत्वेन पुत्रवत्याशापूर्तिसम्भवाद् दशत्वसंख्या किमभिप्रायेणेत्यत उक्तम्—**प्रकृतेरिति** । जडप्रकृतेर्विबुभूषया विविधभावेच्छया बहुत्वसंख्याविशिष्टत्वेच्छया ॥ ९ ॥

यदर्थमवतीर्णं तत् प्रयोजनमाह—**कालेति** । कालो गर्गनिर्मितः । तेजः प्रभावम् । अनेन मुचुकुन्दादिकृतं वधमप्यात्मनैव कृतमिति ज्ञापयति । अतोऽजीघनादित्ययं लौकिकः ॥ १० ॥

---

[1] ग्रहणं च इत्यधिकमिति भाति । [2] कांश्चित्-छ

शंबरं विविदं बाणं मुरं बल्वलमेव च ।
अन्यांश्च दन्तवक्त्रादीनवधीत् कांश्च घातयन् ॥ ११ ॥

अथ ते भ्रातृपुत्राणां पक्षयोः पतितान् नृपान् ।
चचाल भूः कुरुक्षेत्रं येषामापततां बलैः ॥ १२ ॥

सकर्णदुःशासनसौबलानां कुमन्त्रपाकेन हतश्रियायुषम् ।
सुयोधनं सानुचरं शयानं भग्नोरुमुर्व्यां न ननन्द पश्यन् ॥ १३ ॥

कियान् भुवोऽयं क्षपितोरुभारो यद् द्रोणभीष्मार्जुनभीमशल्यैः ।
अष्टादशाक्षौहिणिको मदंशैरास्ते बलं दुर्विषहं यदूनाम् ॥ १४ ॥

मिथो यदैषां भविता विवादो माध्व्या मदात् ताम्रविलोचनानाम् ।
नैषां वधोपाय इयानतोऽन्यो मय्युद्यतेन्तर्दधते स्वयं स्म ॥ १५ ॥

---

एतदेव किञ्चिद् विवेचयति—**शंबरमिति** । शम्बरविविदौ प्रद्युम्नबलभद्राभ्यामघातयत् । मुरादीन् स्वयमेवावधीदिति विवेकः ॥ ११ ॥

अथ दन्तवक्त्र[1]वधानन्तरं ते तव भ्रातृपुत्राणां कुरूणां पाण्डवानाञ्च कुरुक्षेत्रं प्रत्यापततां येषां नृपाणाम् ॥ १२ ॥

श्रीकृष्णस्य दुर्योधनपातेन भीमे प्रसादातिशयमाह—**सकर्णेति** । स कृष्णः सुयोधनं भग्नोरुमुर्व्यां शयानं पश्यन् ननन्द इत्यन्वयः, भीमायेति शेषः । अनुचरैः दुःशासनादिभिः श्रृगालादिभिर्वा सह वर्तत इति सानुचरः तम् । हते नष्टे श्रीश्चायुश्च यस्य स तथा तम् ॥ १३ ॥

कलियुगे सज्जनप्राचुर्यावस्थानस्य दुष्टभारस्येवानभीष्टत्वात् सोऽपि संहार्य इति यादवबलसंहरणोपायसंचिन्तनप्रकारमाह— **कियानिति** । मत्सन्निधानविशेषयुक्तत्वान्मदंशैर्द्रोणभीष्मार्जुनभीमशल्यैः क्षपितोऽष्टादशाक्षौहिणिको भुवो यद् योऽयं भारः स कियानल्प एव । कुतः ? सुरासुरैर्दुर्विषहं यदूनां बलमास्त इति । यस्मात् तस्मादित्यन्वयः ॥ १४ ॥

तत्रैषां यदूनां वधोपाय इयानेतावानेव । यदा माध्व्याः वारुण्याः पानादुत्पन्नान्मदाद् भ्रष्टबुद्धीनां ताम्रलोचनानां रक्तनेत्राणां रजोगुणोपरक्तज्ञानानां वा यदूनां मिथो विवादो भविता तदा स एव वधोपायो भविष्यत्यतोऽन्यो नास्ति । तदर्थं किं कर्तव्यमिति न चिन्तनीयमित्याह—**मयीति** । मय्युद्यते सति स्वयं सर्वेऽन्तर्दधते तिरोधानलक्षणं मरणं प्राप्नुवन्ति । स स्मृतमित्यर्थः ॥ १५ ॥

---

[1] दन्तवक्त्रादिवधानन्तरम्-छ,ङ,घ

एवं सञ्चिन्त्य भगवान् स्वाराज्ये स्थाप्य धर्मजम् ।
नन्दयामास सुहृदः साधूनां वर्त्म दर्शयन् ॥ १६ ॥

उत्तरायां धृतः पूरोर्वंशः साध्वभिमन्युना ।
स वै द्रौण्यस्त्रसंछिन्नः पुनर्भगवता धृतः ॥ १७ ॥

अयाजयद् धर्मसुतमश्वमेधैस्त्रिभिर्विभुः ।
सोऽपि क्ष्मामनुजैरक्षन् रेमे कृष्णमनुव्रतः ॥ १८ ॥

भगवानपि विश्वात्मा लोकवेदपथानुगः ।
कामान् सिषेवे द्वार्वत्यामसक्तः सांख्यमास्थितः ॥ १९ ॥

स्निग्धस्मितावलोकेन वाचा पीयूषकल्पया । तुल्यया
चरित्रेणानवद्येन श्रीनिकेतेन चात्मना ॥ २० ॥

इमं लोकममुं चैव[1] रमयन् सुतरां यदून् ।
रेमे क्षणदया दत्तक्षणः स्त्रीक्षणसौहृदः ॥ २१ ॥

---

स्वाराज्ये स्वर्गसमराज्ये ॥ १६ ॥

यः पूरोर्वंशः अभिमन्युना साधु उत्तरायां धृतः सन् द्रौण्यस्त्रेण संच्छिन्नः संच्छादितः पुनर्भगवता धृतो रक्षितोऽभूदित्यन्वयः ॥ १७ ॥

अपीत्यनेन लोकसंग्रहणार्थं गृहस्थधर्मानुचरणं न तु स्वार्थं सत्यसंकल्पत्वा[2]दितीममर्थं सूचयति । विषयसेवयापि तल्लेपो नास्तीत्यसक्त इति । तत्र हेतुगर्भविशेषणमाह—**सांख्यमिति** । 'केवलं भगवज्ज्ञानं सांख्यमित्यभिधीयते' इति वचनात् न सांख्यशास्त्रोक्तविधिः किन्तु स्वरूपज्ञानमेव गृह्यते । 'तद्ब्रह्मावेदहं ब्रह्मास्मि' इति श्रुतेः ॥ १९ ॥

श्रियो निकेतेनावासेन । आत्मना देहेन ॥ २० ॥

क्षणदया रात्र्या दत्तक्षणः दत्तावसरः । अनेन क्षणदाशब्दार्थो दर्शितः । स्त्रीषु क्षणकालं सौहृदं यस्य सः स्त्रीक्षणसौहृदः । स्त्रीक्षणो रुद्रः तस्य सौहृदं यस्मिन् स तथा वा । अनेन रुद्रगणचरणयोग्यसमये स्त्रीभिः सह रमणं कथमिति चोद्यं परिहृतम् ॥ २१ ॥

---

[1] लोकममुंचैव-घ ग च    [2] आप्तकामत्वादित्यर्थः

तस्येत्थं रममाणस्य संवत्सरगणान् बहून् ।
गृहमेधेषु योगेषु विरागः समजायत ॥ २२ ॥

दैवाधीनेषु कामेषु दैवाधीनः स्वयं पुमान् ।
को विश्रंभेत योगेन योगेश्वरमनुव्रतः ॥ २३ ॥

पुर्यां कदाचित् क्रीडद्भिर्यदुभोजकुमारकैः ।
कोपिता मुनयः शेपुर्भगवन्मतकोविदाः ॥ २४ ॥

ततः कतिपयैर्मासैर्वृष्णिभोजान्धकादयः ।
ययुः प्रभासं संहृष्टा रथैर्देवविमोहिताः ॥ २५ ॥

तत्र स्नात्वा पितॄन् देवान् ऋषींश्चैव तदंभसा ।
तर्पयित्वाऽथ विप्रेभ्यो गावो बहुगुणा ददुः ॥ २६ ॥

---

गृहस्थधर्ममनुवर्तमानस्य हरेर्लोकशिक्षार्थं बाह्यविषयेषु वैराग्यप्रदर्शनमित्यभिप्रेत्याह—**तस्येति** । 'सर्वदाऽपि विरक्तःसन् भासयीत विरागवत् । कादाचित्कः कुतस्तस्य लोकशिक्षार्थमिष्यते ' इति स्मृतेः । योगेषु विषयसाधनेषु विरागः समजायत वैराग्यमभूदिति दर्शयामास ॥ २२ ॥

नित्यविरक्तस्य कादाचित्कविरक्त्यनुपपत्तेः लोकशिक्षार्थमेव दर्शितमित्येतत् स्पष्टयति—**दैवेति** । नित्यविरक्तेनापि भगवता विरागः प्रदर्शित इति यस्मात् तस्मात् स्वयं दैवाधीनो योगेन ध्यानलक्षणोपास्त्या योगेश्वरं कृष्णमनुव्रतः कः पुमान् दैवाधीनेषु कामेषु विषयेषु विश्रम्भेत नित्या इति विश्वासं कुर्यात्, न कोऽपीत्यर्थः । अत्र दैवाधीनत्वं[1] विषयाणामागमापायित्वेन नश्वरत्वे हेतुः ॥ २३ ॥

इत्थं भगवच्चरितमुक्त्वा यदुकुलनाशनिमित्तमाह—**पुर्यामिति** । भगवन्मतकोविदा इत्यनेन मुनिशब्दार्थो दर्शितः ॥ २४ ॥

भविष्यद्यदुकुलनाशं वक्ष्यंस्तेषां प्रभासयात्रामाह—**तत इति** । एष्यं तु निश्चितं यत् तदतीतत्वेन भण्यते । चक्रवत् परिवृत्तेर्वा दुष्टानां मोहनाय च ' इति वचनाद् ययुरित्यादिप्रयोगो युज्यते । सुखहेतुत्वान्मासैरिव संवत्सरैः ॥ २५ ॥

बहुगुणाः सौशील्यादिसर्वगुणोपेता गावो गाः ॥ २६ ॥

---

[1] दैवाधीनत्वमित्यनन्तरं हरेर्नैत्यविरक्तत्वेनेत्यधिकः पाठः-क, ग, घ, ङ, च, छ

हिरण्यं रजतं शय्यां वासांस्यजिनकम्बलान् ।
हयान् रथानिभान् कन्यां धरां वृत्तिकरीमपि ॥ २७ ॥
अन्नं चोरुरसं तेभ्यो दत्वा भगवदर्पणम् ।
गोविप्रार्थासवः शूराः प्रणेमुर्भुवि मूर्धभिः ॥ २८ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे तृतीयोऽध्यायः ।

॥ अथ चतुर्थोऽध्यायः ॥

उद्धव उवाच --
अथ ते तदनुज्ञाता भुक्त्वा पीत्वा च वारुणीम् ।
तया विभ्रंशितज्ञाना दुरुक्तैर्मर्म पस्पृशुः ॥ १ ॥

---

न केवलं गा एव ददुः किन्तु परलोके यद्यत् स्वात्मनः पुण्यफलत्वेन प्राप्यं तत्तत् द्रव्यजातं ददुरित्याह—**हिरण्यमित्यादिना** । हिनोति दुःखं राति सुखमिति हिरण्यम् । रञ्जनं[1] रागं चा[2]तनोति[3] इति रजतम् । अजितं नयतीत्यजिनम् । कं सुखं बलयतीति कम्बलः । हयत्यनेन गन्तव्यमिति हयः । 'पुंसि संज्ञायां घः प्रायेण' इति घः । हयगताविति धातुः । हनिकुषिनी रमिकाशिभ्यः क्थन्[4] रथ गताविति रथति चरति, रतिं स्थापयतीति वा । इष्टं भापयन्तीति इभाः । भा दीप्ताविति धातुः । कनं दीप्तिं यापयतीति कन्या । ध्रियतेऽनयेति धरा ॥ २७ ॥

उरुरसं षड्रसोपेतम् । भगवदर्पणं ब्रह्मार्पणम् । गवार्थे विप्रार्थे असवो जीवनं येषां ते तथोक्ताः ॥२८॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे तृतीयोऽध्यायः ॥

॥ अथ चतुर्थोऽध्यायः ॥

अथ तदनुज्ञाताः तैर्विप्रैर्भोजनायानुज्ञाताः । तया वारुण्या विभ्रंशितं स्वः पर इति ज्ञानं येषां ते तथोक्ताः । पस्पृशुः ताडितवन्तः । स्पृश उपतापे ॥ १ ॥

---

[1] रजनं–ङ [2] रागं वा–ङ,ग [3] रञ्जयति जनं रागं चातनोति–घ [4] अयंसूत्रपाठः घ-कोशस्थ

तेषां मैरेयदोषेण विषमीकृतचेतसाम् ।
निम्लोचति रवावासीद् वेणूनामिव मर्दनम् ॥ २ ॥

भगवानात्ममायाया गतिं तामवलोक्य सः ।
सरस्वतीमुपस्पृश्य वृक्षमूल[1]मुपाविशत् ॥ ३ ॥

अहं चोक्तो भगवता प्रपन्नार्तिहरेण ह ।
बदरीं त्वं प्रयाहीति स्वकुलं सञ्जिहीर्षुणा ॥ ४ ॥

अथापि तदभिप्रेतं जानन्नहमरिंदम ।
पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षमः ॥ ५ ॥

---

मैरेयदोषेण मैरेयाख्यमद्यपानदोषेण । रवावादित्ये निम्लोचति अस्तं गच्छति सति । आसीत् भविष्यति । विमर्दनं विनाशलक्षणः कलहः अन्योन्यसङ्घर्षलक्षणः ॥ २ ॥

तदा भगवता किमकारीति तत्राह— **भगवानिति** । आत्ममायाया आत्मसामर्थ्यस्य गतिं अवलोक्य । पूर्वमेवेति[2] शेषः । या तत्तद्योग्यतया तत्तद्वस्तुषु प्राकट्येन[3] वर्तते ताम् । 'ज्ञात्वा कतिपयैर्वर्षैः पूर्वमेव जनार्दनः । मौसलं ज्ञानसन्तत्या उद्धवं बदरीं नयत्' इति[4] । नयदनैषीत् ॥३॥

संक्षिप्योक्तं विवेचयति— **अहं चेति** । सञ्जिहीर्षुणा संहर्तुकामेन । हेत्यनेन तज्ज्ञानं तत्र विस्तार्य पुनर्द्वारवतीमगादिति वचनात् स्वर्गारोहणात् पूर्वमपि भगवदाज्ञया बदरीगमनं स्पष्टयति ॥ ४ ॥

हे अरिंदम विदुर अथापि पूर्वदिष्टोऽहं पुनः स्वर्गारोहणकाले भर्तुः पृष्ठतोऽन्वगममनुगमिष्य इत्यन्वयः । चर्वितचर्वणवत् अनुगमनं निष्प्रयोजनं नेत्याह — **तदभिप्रेतमिति** । तस्य कृष्णस्याभिप्रेतं ज्ञानोपदेशलक्षणहार्दं जानन् । प्रयोजनान्तरं चास्तीति ध्वनयति— **पादेति** । तदुक्तम् 'पूर्वमेवोपदिष्टोऽपि हरिणा ज्ञानमुद्धवः । स्वर्गारोहणकालेतु पुनः पप्रच्छ केशवम्' इत्यादि ॥ ५ ॥

---

[1] 'वृक्षमूल उपाविशत्' इति पाठान्तरम् [2] स्वर्गारोहणापेक्षयाषड्विंशतिवत्सरेभ्यः पूर्वमित्यर्थः
[3] तत्तद्वस्तुप्रकटनेन–ङ,घ [4] वचनादितिशेषः

अद्राक्षमेकमासीनं विचिन्वन् दयितं पतिम् ।
श्रीनिकेतं सरस्वत्यां कृतकेतमकेतनम् ॥ ६ ॥

श्यामावदातं विरजं प्रशान्तारुणलोचनम् ।
दोर्भिश्चतुर्भिर्विदितं पीतकौशाम्बरेण च ॥ ७ ॥

वाम ऊरावधिश्रित्य दक्षिणाङ्घ्रिसरोरुहम् ।
अपाश्रितार्भकावस्थमकृशं त्यक्तपिप्पलम् ॥ ८ ॥

तस्मिन् महाभागवतो द्वैपायनसुहृत् सखा ।
लोकाननुचरन् सिद्ध आससाद यदृच्छया ॥ ९ ॥

तस्यानुरक्तस्य मुनेर्मुकुन्दः प्रमोदभारानतकन्धरस्य ।
आशृण्वतो मामनुरागहाससमीक्षया विश्रमयन्नुवाच ॥ १० ॥

---

ननु अनुगमनवचनेन मौसलावस्थायामनवस्थानं प्रतीयते तथा च तद्दर्शनाभावेन तज्ज्ञानोपदेशासम्भवः स्यादित्युक्तमयुक्तमिति तत्राह— **अद्राक्षमिति** । विचिन्वन् मार्गमाणः दयितं प्रेष्ठं पतिम् आत्मज्ञानदानेन पातारं सरस्वत्यां तत्तीरे कृतकेतं कृतनिवासं अकेतनम् अनन्याधारम् ॥ ६ ॥

श्यामश्चायमवदातश्च निर्मलश्चेति श्यामावदातः तम् । श्यामायां रात्र्यामप्यवदातम् अरुणं सूर्यवत् प्रकाशमानमित्यर्थः । 'अवदातः सितेऽरुणे' इत्यभिधानाद् योग्यताभेदात् सितोऽरुणश्चाधिकारिणां प्रतीयते[1] इति द्योतनाय तथोक्तमिति वा । प्रशान्ते स्तिमिते अरुणे लोचने यस्य स तथा तम् । कृमिकोशेन रचितं कौशेयं, तेनाम्बरेण च विदितं विशेषितम् । 'कौशेयं कृमिकोशोत्थम्' इत्यभिधानं छन्दोभङ्गभयात् भ्रंशितम् । अण् प्रत्ययाद् वा ॥ ७ ॥

अपाश्रितार्भकावस्थं अवतारदशायां याऽवस्था तामाश्रितम् । अकृशं पूर्णम् । त्यक्तपिप्पलं त्यक्तकर्मफलं योगाद्वोत्सृष्टाश्वत्थमूलम् ॥ ८ ॥

तस्मिन्नवसरे द्वैपायनस्य वेदव्यासस्य सुहृत् सखा च भूम्यादिलोकाननुचरन् पर्यटन् सिद्धो ज्ञानी मैत्रेयः यदृच्छया भगवदिच्छया आससाद । हरिमिति शेषः ॥ ९ ॥

हरेरनुग्रहातिशयसूचनाय मुनेराशृण्वतः सत इत्युक्तम् । सम्यगनुरागहासाभ्यां स्नेहमन्दस्मिताभ्यां सहितया समीचीनया कटाक्षेक्षया विश्रमयन् संसारक्लेशं परिहृत्यानन्दं जनयन् । 'सम् अभेदे

---

[1] भेदात् प्रतीयते–क ।

भगवानुवाच --

वेदाहमन्तर्मनसीप्सितं ते ददामि यत् तद् दुरवापमन्यैः ।
सत्रे पुरा विश्वसृजां मनूनां[1] मत्सिद्धिकामेन वसो त्वयेष्टः ॥ ११ ॥

स एष साधो चरमो भवानामासादितस्ते मदनुग्रहोऽयम् ।
यन्मां नृलोकं[3] रह उत्सृजन्तं दिष्ट्या ददृश्वान् विशदानुवृत्त्या ॥ १२ ॥

पुरा मया प्रोक्तमजाय नाभ्ये पद्मे निषण्णाय ममादिसर्गे ।
ज्ञानं परं मन्महिमावभासं यत् सूरयो भागवतं वदन्ति ॥ १३ ॥

---

समीचीने ' इति यादवः ॥ १० ॥

किमित्याह हरिरिति तत्राह—**वेदेति** । हे वसो मद्भक्तशिखामणे ते तव मनस्यन्तः हृदि यदीप्सितं तदहं वेद । ततः किम् ? तत्राह—**ददामीति** । ते तुभ्यं त्वदभीष्टं ददामि दास्यामीतीच्छामि । अन्यैः प्राप्यं चेत् किमनेनेत्यत उक्तम्—**दुरवापमिति** । अन्यैः मद्भक्तिरहितैः । त्वन्मुखारविन्दान्निःसृतं श्रोतुं महता पुण्येन भाव्यम् । अननुष्ठितपुण्यकर्मणामेतत् कथं स्यादिति तत्राह—**सत्र इति** । पुरा पूर्वजन्मनि नित्यं भगवदुपासनाशीलत्वान्मनु[2]शब्दवाच्यानां देवानां सत्रे यज्ञविशेषे मत्सिद्धिकामेन मत्तो ज्ञानादिसिद्धिकामेन त्वयेष्टः पूजितः ॥ ११ ॥

फलान्तरं चाह —**स एष इति** । हे साधो उद्धव ते त्वयासादितो यो भवः शरीरसंयोगलक्षणः स एष भवानां जन्मनां चरमो भवः । अयं मदनुग्रहः ईदृशो मम चित्तद्रवीकरणलक्षणः प्रसादविशेषः । कुतोऽवगतमेतदिति तत्राह—**यन्मामिति** । भवान् रहः एकान्ते नृलोक[4]मृत्सृजन्तं मां विशदानुवृत्त्या निर्मलसेवया ददृश्वानिति यदत इत्यन्वयः । दिष्ट्येत्यव्ययं भद्रमित्येतस्मिन्नर्थे वर्तते ॥ १२ ॥

वक्तव्यार्थे श्रद्धातिशयजननार्थं ज्ञानं स्तौति—**पुरेति** । मया पुरा आदिसृष्टौ मम नाभ्ये नाभेरुत्पन्ने पद्मे निषण्णाय अजाय प्रोक्तं, यज्ज्ञानं यत्परम्[5] उत्तमं मन्महिम्नोऽवभासः प्रकाशो यस्मात् तत् सूरयो यच्च भागवतं भगवदेकविषयत्वाद् वदन्ति । तज्ज्ञानं तुभ्यमुपदेक्ष्यामि इत्यध्याहृत्यान्वयः कर्तव्यः ॥ १३ ॥

---

[1] मुनीनां—य [2] मुनि-क [3]-[4] नृलोकानित्यन्यत्र सर्वत्र पाठः । [5] यदित्यधिकमिति भाति ।

इत्यादरोक्तः परमस्य पुंसः प्रतीक्षणा[1]नुग्रहभाजनोऽहम् ।
स्नेहोत्थरोमा स्खलिताक्षरस्तं मुञ्चन् शुचः प्राञ्जलिराबभाषे ॥ १४ ॥

को न्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह ।
तथापि नाहं प्रवृणोमि भूमन् भवत्पदाम्भोजनिषेवणोत्सुकः ॥ १५ ॥

कर्माण्यनीहस्य भवोऽभवस्य ते
दुर्गाश्रयो[1]ऽथारिभयात् पलायनम् ।
कालात्मनो यत् प्रमदायुताश्रयः
स्वात्मन्रतेः खिद्यति धीर्विदामपि ॥ १६ ॥

---

इति शब्देन ज्ञानस्य विशेषणान्तरविशिष्टत्वं सूचयति । 'अमत्रं भाजनं पात्रम्' इत्यभिधानम् । स्नेहोत्थरोमा भक्त्या समुत्पन्नरोमाञ्चः । आबभाष इति परोक्षव्यपदेशः सर्वेन्द्रियाणां भगवदेकविषयत्वेन बाह्यप्रवृत्तिशून्यतामपेक्ष्येति ज्ञायते । 'सुप्तोऽहं किल विललाप' इत्यादौ दृष्टत्वात् ॥ १४ ॥

भगवदपरोक्षज्ञानसाधनपादारविन्दभक्तिमन्तरेण नान्यदाकाङ्क्षे[2] इत्याह—**को न्विति** । भवत्पदाम्भोजनिषेवणोत्सुक इत्यनेन एतावन्तं कालं प्रवृणोमि[3] उत्तरत्र कथमिति न जाने इत्यपव्याख्यानं प्रत्युक्तम् । अध्याहारस्याप्रामाणिकत्वात् । उत्सुकत्वस्य सदातनत्वप्रतीतेश्च ॥ १५ ॥

ज्ञानान्तरङ्गगुणोपसंहारलक्षणोपासनामन्तरेण भक्तेराकाङ्क्षितत्वे किं कारणमित्याशङ्क्य हरेर्देवदत्तकर्मवत् कर्मप्रतीतेर्गुणानां दुरवबोधत्वं निमित्तमित्याह—**कर्माणीति** । अनीहत्वादिमतस्तव कर्मादिदर्शनं लोकविरुद्धमतो जन्माद्यभावविदामस्माकमपि बुद्धिः खिद्यत इति । अभवस्य जन्मरहितस्य भवो जन्म नित्यमुक्तस्य बन्धो वा । अदुर्गस्य नित्यनिकटवर्तिनो द्वारकादिदुर्गाश्रयः, अत एव जरासन्धाद्यरिभयात् पलायनं, गोमन्तमिति शेषः । कल कामधेनाविति धातोः कालात्मनः सर्वसंहर्तुर्वा । स्वात्मन् रतेः स्वात्मनि रतिः रमणं यस्य स तथा तस्य प्रमदानाम् अयुताश्रय इति यत् तत् सर्वं विरुद्धमत इति । अपिना लोकविडम्बनमिदं न तु तत्त्वमिति सूचयति ॥ १६ ॥

---

[1] प्रतिक्षणा—अन्यत्र सर्वत्र पाठः । [2] आकाङ्क्ष्यत-छ,च,ङ [3] न प्रवृणोमि-च,छ,क

मन्त्रेषु मां वा उपहूय यत् त्वमकुण्ठिताखण्डसदात्मबोधः ।
पृच्छेः प्रभो मुग्ध इवाप्रमत्तस्तन्नो मनो मोहयतीव देव ॥ १७ ॥

ज्ञानं परं स्वात्मरहःप्रकाशं प्रोवाच कस्मै भगवान् समग्रम् ।
अपि क्षमं नो ग्रहणाय भर्तर्वेदाञ्जसा यद् वृजिनं तरेम ॥ १८ ॥

इत्यावेदितहार्दाय मह्यं स भगवान् परः ।
आदिदेशारविन्दाक्ष आत्मनः परमां स्थितिम् ॥ १९ ॥

स एवमाराधितपादतीर्थादधीततत्त्वात्मविबोधमार्गः ।
प्रणम्य पादौ परिवृत्य देवमिहागतोऽहं विरहातुरात्मा ॥ २० ॥

---

इदमपि ज्ञानदुर्बलानां बुद्धिव्यामोहकरमित्याह—**मन्त्रेष्विति** । वैशब्दादक्रूरादिकं ग्राहयति । अकुण्ठितः अविमिश्रितः अखण्डः पूर्णः सन् निर्दोषः आत्मबोधः स्वरूपज्ञानं यस्य स तथा ॥ १७ ॥

ज्ञानाख्याव्याकृताकाशस्तत्तद्योग्यताभेदं जानन्नात्मयोग्यमेवोपदिशति भगवान्, तथापि स्वचापल्याद् विज्ञापयामीत्याह—**ज्ञानमिति** । स्वात्मरहः प्रकाशो यस्मात् तत् तथा तत् । कस्मै ब्रह्मणे । नोऽस्माकम् । तत् समग्रमपि ग्रहणाय क्षमम् अपि किम् ? नो क्षमम् । योग्यताभेदात् । तर्हि कीदृशमुपदिशामीति तत्राह—**वेदेति** । भगवान् यदस्याधिकारिणो योग्यं वेद वयं च यद् येन ज्ञानेनाञ्जसा वृजिनं संसारदुःखं तरेम तदुपदिशेत्यन्वयः । अनेन ब्रह्माद्युत्तमाधिकार्युपदिष्टज्ञानैकदेशं संसारदुःखनिर्मूलनमस्मद्योग्यमुपदिशेत्युक्तं भवति ॥ १८ ॥

एतदेवोपदिष्टं हरिणा नान्यदिति वक्ति—**इतीति** । हार्दं हृद्गतम् । परमां स्थितिं ब्रह्मादिजीवराशेरुत्कृष्टतामन्येषामपकृष्टतामन्योन्यं तारतम्यं च ॥ १९ ॥

एवमित्येतदधीतेत्यनेनान्वेतव्यम् । आराधितं पादतीर्थं पादोदकं यस्य स तथा तस्मात् श्रीकृष्णाद् एवमुक्तप्रकारेण अधीतोऽधिगतः तत्त्वात्मनः अनारोपिताद्वितीयज्ञानानन्दात्मनो हरेः विबोधमार्गो विशिष्टज्ञानमार्गो येन स तथा । परिवृत्य प्रदक्षिणीकृत्य । विरहेणातुरः क्लिष्ट आत्मा यस्य स तथा ॥ २० ॥

सोऽहं त्वद्दर्शनाह्लादवियोगार्तियुतः प्रभो ।
गमिष्ये दयितं तस्य बदर्याश्रममण्डलम् ॥ २१ ॥

यत्र नारायणो देवो नरश्च भगवान् ऋषिः ।
मृदु तीव्रं तपो दीर्घं तेपाते लोकभावनौ ॥ २२ ॥

शुक उवाच —

इत्युद्धवादुपाकर्ण्य सुहृदां दुःसहं वधम् ।
ज्ञानेनाशमयत् क्षत्ता शोकमुत्पतितं बुधः ॥ २३ ॥

स तं महाभागवतं व्रजन्तं कौरवर्षभः ।
विश्रम्भादभ्यधत्तेदं मुख्यं कृष्णपरिग्रहे ॥ २४ ॥

ज्ञानं परं स्वात्मरहःप्रकाशं यदाह योगेश्वर ईश्वरस्ते ।
वक्तुं भवान् नोऽर्हति यद्धि विष्णोर्भृत्याः स्वभृत्यार्थकृतश्चरन्ति॥ २५॥

---

इतः कुत्र यास्यसीति तत्राह—**सोऽहमिति** । त्वद्दर्शनजाताह्लादेन कृष्णवियोगोत्पन्नार्त्या च युतः बदर्याश्रममण्डलं बदरिकाश्रमपरिसरवर्तिकलापग्रामम् ॥ २१ ॥

कृष्णप्रियत्वे निमित्तमाह—**यत्रेति** । धर्मस्य भगवतः पुत्रत्वेनावतीर्णः साक्षान्नारायणांशो नारायणनामा शेषांशो नरो भगवांश्च मृदु लोकसुखकरं तीव्रं दुष्करं लोकभावनौ लोकसंग्राहकौ[1] । अनेन फलानपेक्षितावित्युक्तं भवति । तप[2] आलोचने करणे च ॥ २२ ॥

परमात्मनो जीवात्मनश्च स्वातन्त्र्यपारतन्त्र्यादिविशेषज्ञानेन । वधं भविष्यन्तम् ॥ २३ ॥

नन्वत्र विदुरेण यदूनामेष्यद्वधश्रवणेनोत्पन्नशोकशमनप्रयत्न एव कृत उतान्योऽपि प्रसङ्ग इत्यत्राह—**स तमिति** । कृष्णपरिग्रहे कृष्णपरिवारजने । विश्रम्भादयमुद्धवो मदभीष्टं वक्ष्यतीति विश्वासात् ॥ २४ ॥

इदमित्युक्तं विशिनष्टि—**ज्ञानमिति** । अत्र हेतुमाह—**यदिति** । हिशब्दोऽवधारणार्थः 'हिर्हेतावधारणे' इति यादवः । स्वभृत्याः स्वदासाः तेषामर्थं प्रयोजनं कुर्वन्तः स्वभृत्यार्थकृतश्चरन्ति ॥ २५ ॥

---

[1] लोकशिक्षकौ इति पाठान्तरम् । [2] श्लोकस्थस्य तेपात इति क्रियापदस्य धातुरयम् ।

उद्धव उवाच —

**ननु ते तत्त्वसंराद्ध ऋषिः कौषारवोऽन्ति मे ।**
**साक्षाद् भगवतादिष्टो मर्त्यलोकं जिहासता ॥ २६ ॥**

सूत उवाच —

**इति सह विदुरेण विश्वमूर्तेर्गुणकथया सुधया प्लुतोरुतापः ।**
**क्षणमिव पुलिने यमस्वसुस्तां समुषित औपगविर्निशां ततोऽगात्॥२७॥**

राजोवाच —

**निधनमुपगतेषु वृष्णिभोजेष्वधिरथयूथपयूथपेषु मुख्यः ।**
**स तु कथमवशिष्ट उद्धवो यद्धरिरपि तत्यज आकृतिं त्र्यधीशः॥ २८ ॥**

---

नन्वत्रोद्धवेन श्रुत्वा तूष्णीं गतमुत किमप्यभिहितम् ? तत्राह—**नन्विति** । ननुशब्दः हेत्वर्थः । तत्त्वसंराद्धः तत्त्वज्ञानसिद्धः । कौषारवो मैत्रेयः । इदं गुणनामापि वैशम्पायनवल्लोके प्रसिद्धत्वादुच्यते । अन्ति मे मम समीपे स्थितः ते तव, भगवतस्तत्त्वज्ञानोपदेशायेति शेषः । जिहासता हातुकामेन । तस्मान्न मया पृथग् वक्तव्यमिति शेषः ॥ २६ ॥

सूतः शौनकायेमां कथां कथयति—**इतीति** । गुणकथाख्यया सुधया प्लुतो गत उरुतापो यस्य स तथा । प्लु गताविति धातुः । यमस्वसुः यमुनायाः । यस्याः पूर्वसन्ध्यायां विदुरदर्शनं तां निशां समुषितः सुखमुषित औपगविः उपगोरपत्यमुद्धवः ततो यमुनायाः ॥ २७ ॥

परीक्षित् बदरीं त्वं प्रयाहीत्यादिश्रुतकथत्वेन ज्ञातोद्धवावशेषो विशेषबुभुत्सया पृच्छति—**निधनमिति** । तुशब्द एवार्थः । तेषु वृष्ण्यादिषु निधनं देहत्याग[1]लक्षणं नाशमुपगतेषु सत्सु स उद्धव एव कथमवशिष्ट इत्यन्वयः । अयोद्धृमुख्यत्वादुर्वरित इति तत्राह—**अधिरथेति** । अधिरथानां यूथं पान्तीति अधिरथयूथपास्तेषां यूथं पान्तीति अधिरथयूथपयूथपास्तेषु मुख्यो मुख्यतो योद्धा । हरेरवशिष्टत्वात्तदपेक्षयेति तत्राह—**यद्धरिरिति** । हरिरप्याकृतिं पृथिवीं तत्यजे तत्याजेत्यन्वयः । इति यदतस्तदपेक्षापि दूरोत्सारिता । त्रिलोकेशत्वमिन्द्रस्याप्यस्तीति त्र्यधीश इति । अनेन भूलोकात् स्वर्गलोकं गत इत्यर्थः सम्पद्यते । आकृतिशब्दस्य पृथिव्यभिधेयत्वे सर्वमुपपद्यते तत् कथमितीय-

---

[1] देहवियोग–च,ङ,छ,घ

शुक उवाच —

ब्रह्मशापापदेशेन कालेनामोघवाञ्छितः ।
संहृत्य स्वकुलं नूनं त्यक्ष्यन् देहमचिन्तयत् ॥ २९ ॥

अस्माल्लोकादुपरते मयि ज्ञानं मदाश्रयम् ।
अर्हत्युद्धव एवाद्धा सम्प्रत्यात्मवतां परः ॥ ३० ॥

नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्निर्जितः प्रभुः ।
अतो मद्वत् पुनर्लोकं ग्राहयन्निह तिष्ठतु ॥ ३१ ॥

---

माशङ्का 'शरीरमाकृतिर्देहः कुः पृथ्वी च मही तथा' इत्यनेन परिहृता । अस्त्वाकृतेः पृथिवी-पर्यायत्वम् । तथाप्यत्र तच्छब्देन शरीरमेवोच्यत इति अङ्गीकर्तव्यम् । अनन्तरमपि निश्चितनत्वेन तदाकारदर्शनात् । अतो युक्तिर्वक्तव्येति चेन्न । नित्यानन्दस्वरूपत्वेन देहत्यागायोगात् । अतो देहत्यागो नाम पृथिवीलोकत्याग एव । तेन तदाकारदर्शनं दुष्टजनमोहनाय कृतम् । तदुक्तम्— 'पृथिवीलोकसंत्यागो देहत्यागो हरेः स्मृतः । नित्यानन्दस्वरूपत्वादन्यो नैवोपलक्ष्यते । दर्शये-ज्जनमोहाय सदृशीं मृतकाकृतिम्[1] । नटवद् भगवान् विष्णुः परज्ञानाकृतिः सदा' इति । 'राजन् परस्य तनुभृज्जननाप्ययेहां मायाविडम्बनमवैहि यथा नटस्य' इत्यत्राप्युक्तम् ॥ २८ ॥

परिहारं वक्ष्यन् उपोद्घातं[2] नृपं शुको वक्ति—**ब्रह्मेति** । ब्रह्मशापापदेशेन विप्रशापाभि-धानेन । कालेन मृत्युना । देहं पृथिवीम् । 'यस्य पृथिवी शरीरम्' इति श्रुतिः ॥ २९ ॥

परिहरति—**अस्मादिति** । अस्माद् पृथिवीलोकात् उपरते स्वर्लोकं गते सति अर्हति, उपदेष्टुमिति शेषः । आत्मवतां ब्रह्मज्ञानिनां मध्ये परः ॥ ३० ॥

एतदेव निर्धारयति—**नेति** । प्रभुरहं यद्गुणैः यस्य भक्त्यादिगुणैर्निर्जितो वशीकृतः स उद्धवोऽण्वपि किञ्चिदपि मन्न्यूनो मत्तो हीनो न भवति किन्तु मम सम एव । 'उत्तमैरधिकत्वं वा साम्यं वापि जयोऽपि वा । उच्यतेऽपि तु नीचानां मोहार्थं वाप्युपेक्षया' इत्यादेर्दुष्टजनमोहार्थं, तत्काले स्वज्ञानोपदेष्टृपुरुषाधिक्यज्ञापनार्थं वा श्रीकृष्णेन स्वसाम्यमुद्धवस्योक्तं न तु तत्त्वार्थमिति ज्ञातव्यम् । यतो मज्ज्ञानोपदेष्टृपुरुषाधिकोऽयमतः पुनर्मद्वल्लोकं जनं ज्ञानादिकं ग्राहयन्निह तिष्ठतु इत्यचिन्तय दित्यन्वयः । एतेन कारणेनोद्धवोऽवशिष्ट इति प्रश्नपरिहारः ॥ ३१ ॥

---

[1] तत्तदाकृतिं-ङ,छ,क [2] अयं च,घ,छ पाठः ।

एवं त्रिलोकगुरुणा सन्दिष्टः शब्दयोनिना ।
बदर्याश्रममासाद्य हरिमीजे समाधिना ॥ ३२ ॥

विदुरोऽप्युद्धवाच्छ्रुत्वा कृष्णस्य परमात्मनः
क्रीडयोपात्तदेहस्य कर्माणि श्लाघितानि च ॥ ३३ ॥

देहन्यासं च तस्यैवं धीराणां धैर्यवर्धनम् ।
अन्येषां दुष्करतरं पशूनां विक्लवात्मनाम् ॥ ३४ ॥

आत्मानं च कुरुश्रेष्ठ कृष्णेन मनसेक्षितम् ।
ध्यायन् गते भागवते रुरोद प्रेमविह्वलः ॥ ३५ ॥

कालिन्द्याः कतिभिर्विद्वानहोभिर्भरतर्षभ ।
प्रापद्यत द्युसरितं यत्र मित्रासुतो मुनिः ॥ ३६ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे चतुर्थोऽध्यायः ।

---

उद्धवेनाप्येतदाज्ञा कृतेत्याह—**एवमिति** । शब्दो वेदो योनिर्ज्ञप्तिकारणं यस्य स तथा तेन । ईजे पूजयामास ॥ ३२ ॥

औद्धवीं समाप्य वैदुरीं कथामाह—**विदुरोऽपीत्यादिना** ॥ ३३ ॥

देहन्यासं पृथिवीलोकत्यागम् । पशूनाम् अज्ञानाम् ॥ ३४ ॥

आत्मानं स्वम् । मनसेक्षितं स्मृतम् ॥ ३५ ॥

द्युसरितं गङ्गाम् । मित्रासुतो मैत्रेयः ॥ ३६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे चतुर्थोऽध्यायः ॥

॥ अथ पञ्चमोऽध्यायः ॥

शुक उवाच —

द्वारि द्युनद्या ऋषभः कुरूणां मैत्रेयमासीनमगाधबोधम् ।
क्षत्ताऽभिसृत्याच्युतभावशुद्धः पप्रच्छ सौशील्यगुणातितृप्तम् ॥ १ ॥

विदुर उवाच —

सुखाय कर्माणि करोति लोको न तैः सुखं नान्यदुपारमं वा ।
विन्देत भूयस्तत एव दुःखं यदत्र युक्तं भगवान् वदेन्नः ॥ २ ॥

जनस्य कृष्णाद् विमुखस्य दैवादधर्मशीलस्य सुदुःखितस्य ।
अनुग्रहायेह चरन्ति नूनं भूतानि भव्यानि जनार्दनस्य ॥ ३ ॥

---

अत्र गङ्गाद्वारे मैत्रेयं प्राप्य विदुरस्य प्रश्नप्रकारं कथयति—**द्वारीति** । क्षत्ता द्युनद्या द्वारि गङ्गाद्वारे आसीनमगाधबोधम् अनवगाह्यज्ञानं विदुरस्य सौशील्यादिगुणैरतितृप्तं मैत्रेयमभिसृत्य गुरूपसत्तिविधिना प्राप्य पप्रच्छेत्यन्वयः । अच्युतभावेन भगवद्भक्त्या शुद्धः । अच्युतभावतृप्त इति पाठे अच्युतलीलामृतपानेन शरीरयात्रावानित्यर्थः । 'भावो लीला क्रिया चेष्टा' इत्यभिधानम् । कुरूणामृषभ इत्यनेन कुलीनत्वेन ज्ञानग्रहणयोग्यत्वं सूचयति ॥ १ ॥

ननु पृच्छतेर्द्विकर्मकत्वेन भाव्यत्वादत्र तदप्रतीतेर्निरर्थकोऽयं प्रश्न इति तत्राह—**सुखायेति** । लोको जनः सुखाय सुखप्राप्तये यागादिकर्माणि करोति तैः कर्मभिः सुखमन्यस्य दुःखस्योपारमं विनाशं वा न विन्देत । किञ्चातः बहुतरानर्थप्राप्तिरपि स्यादित्याह—**भूय इति** । ततः कर्मभ्यो भूयो दुःखमेवाप्नोति । तदस्तु, तव किम् ? अत्राह—**यदत्रेति** । अत्र सुखप्राप्तये दुःखनिवृत्तये च यद् युक्तं अविप्रतिपन्नत्वेन योग्यं तत् किं, नो वदेदित्यन्वयः । अनेन सुखप्राप्तिं दुःखनिवृत्तिं च पप्रच्छेत्युक्तं भवति ॥२॥

नन्वत्र सुखप्राप्तिदुःखनिवृत्त्युपायप्रश्न एव क्रियते न भगवत्तत्त्वविषय इति तत्राह—**जनस्येति** । स्वतो ज्ञानाभावात् बोधकपुरुषालाभाच्च कृष्णाद् विमुखस्येत्याह नत्वयोग्यत्वाद् । अन्यथा तस्यानुग्रहाय जनार्दनस्य भूतानि चरन्तीत्युक्तिर्विरुद्धा स्यात् । भव्यानि मङ्गलानि । एवंविधानि जनार्दनस्य भूतानि ज्ञानोपदेशलक्षणप्रसादकरणायेह कर्मभुवि देहधारणं कृत्वा वर्तन्त इति भावः ॥ ३ ॥

तत् साधुवर्यादिश शर्मवर्त्म संराधितो भगवान् येन पुंसाम् ।
हृदि स्थितो यच्छति भक्तिपूते ज्ञानं स्वसत्ताधिगमं पुराणम् ॥ ४ ॥

करोति कर्माणि कृतावतारो यान्यात्मतन्त्रो भगवांस्त्र्यधीशः ।
यथा ससर्जाग्र इदं निरीहः संस्थाप्य वृत्तिं जगतो विधत्ते ॥ ५ ॥

यथा पुनः स्वे ख इदं निवेश्य शेते गुहायां स निवृत्तवृत्तिः ।
योगेश्वराधीश्वर एक एतदनुप्रविष्टो बहुधा यथासीत् ॥ ६ ॥

क्रीडन् विधत्ते द्विजगोसुराणां क्षेमाय कर्माण्यवतारभेदैः ।
मनो न तृप्यत्यपि शृण्वतां नः सुश्लोकमौलेश्चरितामृतानि ॥ ७ ॥

---

फलितमाह—**तदिति** । यतो लोकानुग्रहाय भवज्जीवनं, तत् तस्मात् साधुवर्य शर्मवर्त्म सुखप्राप्तिमार्गम् आदिशेत्यन्वयः । येन शर्मवर्त्मना । स्वसत्ताधिगमं स्वव्याप्तिज्ञापकम् । पुराणं संप्रदायागतम् ॥ ४ ॥

सुखवर्त्मापि भगवत्सृष्ट्यादिगुणकर्मकथनश्रवणादिकमेव नातोऽन्यदित्याशयवान् तत्सृष्ट्यादिप्रकारं पृच्छति—**करोतीति** । देवदत्तव्यावृत्तये आत्मतन्त्र इति । स्वातंत्र्यं च कतिपयवस्तुष्वेव न सर्वत्रेत्यत उक्तं भगवांस्त्र्यधीश इति । तानि कर्माणि दुष्टनिग्रहादीनि वर्णयेति प्रत्येकमन्वेतव्यम् । किञ्चाग्रे आदिकाले यथा इदं जगत्ससर्ज तं प्रकारमिति सर्वत्र योज्यम् । तत् सेतौ[1] संस्थाप्य न्यस्य यथा जगतो वृत्तिं जीविकां विधत्ते तवेयमिति शास्त्रतो[2] वक्ति ॥ ५ ॥

पुनः प्रलये स्वे खे निजोदराकाशे गुहायामिदं निवेश्य निवृत्तजगत्सृष्ट्यादिवृत्तिः स हरिः यथा शेते । एतज्जगत् सृष्ट्वा तदनुप्रविष्टो हरिर्यथा बहुधासीत् । अनायासेन बहुरूपं गृह्णातीति योगेश्वराधीश्वर इत्युक्तम् ॥ ६ ॥

जगत्सर्जनादिकर्मकथनश्रवणादे[3]रवतारभेदैः क्रियमाणकर्मकथनादौ सम्यक् मनो निर्विशतीत्यतस्तानि कर्माणि अवश्यं वक्तव्यानीत्याशयेन पुनरुक्तं करोति—**क्रीडन्निति** । द्विजगोसुराणां क्षेमायेति चतुर्थ्या तदेव प्रयोजनमित्यवधारयति । भवता श्रुतपूर्वाणि हरेः कर्माणि । पुनः प्रश्नस्य कोऽर्थ

---

[1]सेतादित्यस्यान्वयो न स्फुटः । [2] शास्त्रोक्तां–च । [3] श्रवणादौ सतीत्यर्थः

यैस्तत्त्वभेदैरधिलोकनाथो लोकानलोकान् सह लोकपालान् ।
अचीक्लृपद् यत्र हि सर्वसत्वनिकायभेदोऽधिकृतः प्रतीतः ॥ ८ ॥
येन प्रजानामुत आत्मकर्मरूपाभिधानेन भिदां व्यधत्त ।
नारायणो विश्वसृगात्मयोनिरेतच्च नो वर्णय विप्रवर्य ॥ ९ ॥
परावरेषां भगवन् कृतानि श्रुतानि मे व्यासमुखादभीक्ष्णम् ।
न तृप्नुमः कर्णसुखावहानां तेषामृते कृष्णकथामृतौघात् ॥ १० ॥

---

इत्याशङ्क्य सत्यं किन्त्वलंबुद्ध्यभावाद् विशेषश्रवणेच्छार्थ[1]मित्याह—**मनो नेति** । चरितामृतश्रवणलक्षणपानं[2] कुर्वतामित्यर्थः ॥ ७ ॥

ननु चतुर्मुखेन लोकादयः कल्प्यन्ते । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इत्यादि श्रुतेः । अतः कथं हरेः सकाशात् लोकादिसर्जनादिकम्? तत् कथनीयमिति प्रश्न इत्याह—**यैरिति** । महदादितत्त्वभेदैः[3] । 'भेदो विशेषो दलनम्' इत्यभिधानम् । भूरादिलोकान् । अलोकान् पृथिव्यादिबाह्यावरणविशेषान् । तत्त्वभेदैरित्युक्त्या प्रथमतो ब्रह्माण्डनिर्माणं तदनन्तरं लोकादिकल्पनमिति ग्राह्यम् । तथा वक्ष्यमाणत्वात् । तेन यत्र ब्रह्माण्डे क्लृप्तलोकेषु सर्वसत्वानां सर्वप्राणिनां निकायस्य देवमनुष्यादिभेदोऽधिकृतः तत्तत्पदाधिकारयोग्यतया क्लृप्तः प्रतीतः प्रत्यक्षानुमानाभ्यामवगतः । [4]कथमित्येतदपि वर्णयेति ॥ ८ ॥

नारायणो येन वा प्रजानां आत्मना देहेन स्वभावेन वा, कर्मणा चेष्टालक्षणेनादृष्टेन वा, रूपेण शुक्लनीलाद्याकारविशेषेणाभिधानेन घटादिनाम्ना भिदां व्यावृत्तिं उत अपि व्यधत्त एतदप्यस्माकं वर्णयेत्यन्वयः । सर्वसत्वनिकायेति सामान्येनोक्तस्य विशेषोऽयम् । नारायणो देवदत्त इवेत्यत उक्तम्—**विश्वसृगिति** । स्वयमन्येन सृष्टः कथं विश्वसृक् स्यादित्यत उक्तम्—**आत्मयोनिरिति** । आत्मा स्वयमेव योनिः कारणं यस्य स तथा । स्रष्टा धातेति चतुर्मुखस्य स्रष्टृत्वप्रसिद्धेः कथमस्य विश्वसृक्त्वमित्यतो वा उक्तम्—**आत्मयोनिरिति** । आत्मनः विरिञ्चस्य योनिरित्यर्थः ॥ ९ ॥

भगवज्ज्ञानोपयोगित्वेनापादनीयत्वाद् भवतु एवं, मनुष्यादिभेदज्ञानेन किं प्रयोजनमित्याशङ्क्य तज्ज्ञानस्य भगवज्ज्ञानोपयोगित्वेन युक्तमापाद्यत्वमित्याह—**परावरेषामिति** । परावरेषां ब्रह्मादिदेव-

---

[1] विशेषश्रवणेच्छया—इति स्यात् [2] अयं ङ, च, घ, छ पाठः । चरितश्रवणपानं-क
[3] महदादितत्त्वविशेषैः इति स्यात् । एवं सति कोशोदाहरणं सङ्गच्छते ।
[4] इतः परं उत्तरश्लोकस्थस्य 'एतच्च वर्णय' इत्यस्य अर्थानुवादः, अन्ते इतीत्यधिकमिति भाति ।

कस्तृप्नुयात् तीर्थपदोऽभिधानात् सत्रेषु वः सूरिभिरीड्यमानात् ।
यः कर्णनाडीं पुरुषस्य यातो भयप्रदां गेहरतिं छिनत्ति ॥ ११ ॥

मुनिर्विवक्षुर्भगवद्गुणानां सखाऽपि ते भारतमाह कृष्णः ।
यस्मिन् नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीता न हरेः कथायाम् ॥ १२ ॥

---

मनुष्याणां कृतानि मे मया व्यासमुखादभीक्ष्णं श्रुतानि । ततः किम् ? तत्राह—**नेति** । श्रुतानां तेषां ब्रह्मादिचरित्राणां ऋते अवगमे तात्पर्यज्ञाने सति ब्रह्मादिमहिम्नामपि भगवन्महिमावलम्बित्वात् कृष्णकथामृतौघ एवासौ इति यतोऽतः तेषां भागवतानां कृष्णस्य च कथामृतौघात् श्रुतात् न तृप्नुमः । तात्पर्यज्ञाने सति कृष्णकथामृतौघत्वं कुत इति तत्राह—**कर्णेति** । कृष्णकथामृतौघस्यैव कर्णसुखावहत्वं नान्यस्य । तस्य कर्णकर्कशत्वमित्यर्थः । ऋ गताविति धातोर्निष्ठान्तमृतमिति रूपम् । न तु ऋत इत्यव्ययम् । तथाङ्गीकारे तेभ्यो न तृप्नुमः इति प्रयोगः स्यात् न तु तेषामिति । ग्रन्थान्तरे भारतस्य प्रशंसानुपपत्तेश्च ॥ १० ॥

इतोऽपि श्रीकृष्णस्य गुणगण[1]कथामृतस्य पात्रीभूतात् भारतात् न कस्यापि तृप्तिरित्याह—**कस्तृप्नुयादिति** । वः युष्माकं सत्रेषु सूतादिसूरिभिरीड्यमानात् स्तूयमानात् तीर्थपदो हरेरभिधानात् भारतनामकीर्तनाद्[2] रसज्ञः कः पुरुषः तृप्नुयाद् अलमिति बुद्धिं कुर्यादित्यन्वयः । अलम्बुद्ध्यभावे हेतुमाह—**य इति** । यस्तीर्थपात् पुरुषस्य कर्णनाडीद्वारा हृदयगुहां प्रविष्टः संसारभयप्रदां गेहरतिं गृहजायापुत्रादिस्नेहलक्षणां रतिं छिनत्ति, तस्येति शेषः ॥ ११ ॥

यन्मोक्षसुखानुवादि शास्त्रं तदेवाभ्यसनीयं, भारतस्य ग्राम्यसुखानुवादित्वेन पुरुषार्थानुपयोगित्वादिति तत्राह—**मुनिरिति** । गुणानामिति षष्ठी द्वितीयार्थे । भगवद्गुणान् वक्तुकामस्ते तव सखा मुनिः सर्वज्ञोऽपि कृष्णः भारतमाह । ननु गुणान् वक्तुमकामयत[3] नत्वभ्यधाद् यतो ग्राम्यसुखानुवादेन नृणां मतिर्गृहीतेति तत्राह—**यस्मिन्निति** । यस्मिन् भारते श्रवणादिनाऽभ्यस्यमाने सति नृणां मतिर्ग्राम्यसुखानुवादैर्न गृहीता हरेः कथायामेव गृहीता । 'भारतान्नाधिकं[4] विष्णोर्महिमावाचकं क्वचित् । भारतान्न विरागाय भारतान्न विमुक्तये' इति वचनात् । सत्यकामेन हरिणा विवक्षिता गुणा भारते कथिता इत्यत इदमेव शास्त्रं मुमुक्षुणा[5]ऽभ्यसनीयमित्यविगीतम् ॥ १२ ॥

---

[1] श्रीकृष्णगुण-ङ [2] भारतं इति नाम्ना यत् कीर्तनं वर्तते तस्मात् । [3] वक्तुकाम इव-ङ,घ,च
[4] अयं घ-पाठः । अन्यत्र-न परम् । [5] मुमुक्षुभिः-घ,ङ,घ,च

सा श्रद्धधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः ।
हरेः सदानुस्मृतिनिर्वृतस्य समस्तदुःखाप्यय[1]माशु धत्ते ॥ १३ ॥

ताञ्छोच्यशोच्यानविदोऽनुशोचे हरेः कथायां विमुखानघेन ।
क्षिणोति देवोऽनिमिषस्तु तेषामायुर्वृथावादगतिस्मृतीनाम् ॥ १४ ॥

तदस्य कौषारव शर्मदातुर्हरेः कथामेव कथासु सारम् ।
उद्धृत्य पुष्पेभ्य इवार्तबन्धो शिवाय नः कीर्तय तीर्थकीर्तेः ॥ १५ ॥

स विश्वजन्मस्थितिसंयमार्थे कृतावतारः प्रगृहीतशक्तिः ।
चकार कर्माण्यतिपौरुषाणि यानीश्वरः कीर्तय तानि मह्यम् ॥ १६ ॥

---

अस्तु हरेः कथायां गृहीता नृणां मतिः, ततः किं फलं विधत्त इति तत्राह—**सा श्रद्धधानस्येति** । ग्राम्यसुखानुवादेन गृहीता हरेः कथायां विवर्धमाना सा श्रद्धधानस्य पुंसो मतिरन्यत्र विषयेषु विरक्तिं करोतीति प्रथमं वैराग्यं, द्वितीयं भक्तिलक्षणं, तृतीयमुपासनाजनितापरोक्षज्ञानं, चतुर्थं समस्तसंसारदुःखोच्छेदेन परमानन्दलक्षणं मोक्षाख्यं फलं करोति । एतदेवाह—**हरेरिति** । सदानुस्मृत्या जातापरोक्षज्ञानेन निर्वृतस्य असम्प्रज्ञातसमाध्यवस्थासुखं प्राप्तस्य आशु कालक्षेपमन्तरेण ॥१३॥

व्यतिरेकमुखेन हरेः कथायाः दुःखाप्ययहेतुत्वमाह—**तानिति** । अविदो ज्ञानदुर्बलान् । अघेन व्यसनेन । आत्मनः शोकाधिकरणत्वं यथार्थं न मिथ्याभूतमिति द्योतयितुं अनुशोच इत्यात्मनेपदप्रयोगः । अनिमिषो देवः कालात्मा विष्णुः । वृथावादो वृथागतिर्वृथास्मृतिश्च येषां ते तथा[1] तेषामायुः वृथा क्षिणोति इति वा । तदा, वादो[2] विवादः तत्सहिते गतिस्मृती येषां ते तथा तेषाम् । न हरिकथावतां वृथेति विशेषद्योतकस्तुशब्दः ॥ १४ ॥

स्वार्थप्रश्नमुपसंहरति—**तदिति** । हरिकथाविमुखा व्यर्थायुष इति यस्मात् तस्मात्, तीर्थं यथा सेवमानानां पापं क्षिणोति तथा हरेः कीर्तिरपि तादृशी । तीर्थरूपा कीर्तिर्यस्य स तथा तस्य । नान्यकथा शिवसाधनमित्यस्मिन्नर्थे एवशब्दः ॥ १५ ॥

सारकथापि सृष्ट्यादिविषयलीलैवेत्याशयेनाह—**स इति** । पुरुषा ब्रह्मादयः तत्कर्मातिक्रान्तानि अतिपौरुषाणि । कृतवासुदेवाद्यवतारः । सृष्ट्यादिकर्तारौ ब्रह्मरुद्राविति भ्रान्तिनिवारणार्थमीश्वर इत्युक्तम् । ब्रह्मशिवेशनशील ईश्वर इत्यर्थः । प्रगृहीतसृष्ट्यादीच्छाशक्तिः वशीकृतप्रकृतिशक्तिर्वा ॥१६॥

---

[1] अयं च,ग,घ पाठः । दुःखात्यय–क । [2] वृथावादः–क,घ

शुक उवाच —

स एवं भगवान् पृष्टः क्षत्त्रा कौषारविर्मुनिः ।
पुंसां निःश्रेयसार्थाय तमाह बहुमानयन् ॥ १७ ॥

मैत्रेय उवाच —

साधु पृष्टं त्वया साधो लोकान् साध्वनुगृह्णता ।
कीर्तिं वितन्वता लोके आत्मनोऽधोक्षजात्मनः ॥ १८ ॥

नैतच्चित्रं त्वयि क्षत्तर्बादरायणवीर्यजे ।
गृहीतोऽनन्यभावेन यत् त्वया हरिरीश्वरः ॥ १९ ॥

माण्डव्यशापाद् भगवान् प्रजासंयमनो यमः ।
भ्रातुः क्षेत्रे भुजिष्यायां जातः सत्यवतीसुतात् ॥ २० ॥

---

मैत्रेयो विदुरप्रश्नपरिहारं वक्तुमुपाक्रमत इत्याह शुकः—**स एवमिति** । निःश्रेयसार्थाय मोक्षादिपुरुषार्थाय ॥ १७ ॥

बहुमानप्रकारं वक्ति—**साध्विति** । अधोक्षजे हरावात्मा मनो यस्य स तथा तस्य । आत्मनो मम स्वस्य परमात्मनो[1] वा ॥ १८ ॥

तव तद्विषयप्रश्न उचित एवेति कथयति— **नैतादिति** । यादृशो भावो विष्णोरन्यस्मिन् वस्तुनि नास्ति तादृशो भावोऽनन्यभावः, तेन सर्वोत्तमत्वज्ञानपूर्वकबहुमानेनेत्यर्थः । हरिरीश्वर इत्येतौ शब्दौ अन्योन्यव्यावर्तकत्वेन प्रवृत्ताविति[2] ज्ञातव्यम् ॥ १९ ॥

देवयोनित्वात् तव हरिकथाप्रश्नो नाश्चर्यकर इति भावेन कथयति—**माण्डव्येति** । व्यासस्य भ्रातुः विचित्रवीर्यस्य क्षेत्रे वीर्याधानयोग्यायां भुजिष्यायां दास्यां यः सत्यवतीसुताज्जातः प्रजासंयमनो यमो भवानिति यस्मात् ॥ २० ॥

---

[1] अस्मिन् कल्पे अधोक्षजश्चासौ आत्मा स्वामी च, तस्य ।

[2] प्रयुक्ताविति–घ,ङ,ग,च

**भवान् भगवतो नित्यं सम्मतः सानुगस्य हि ।**
**ज्ञानोपदेशाय च मामादिशद् भगवान् व्रजन् ॥ २१ ॥**

**अथ ते भगवल्लीला योगमायोपबृंहिताः ।**
**विश्वस्थित्युद्भवांतार्था वर्णयाम्यनुपूर्वशः ॥ २२ ॥**

इति श्रीमद्भागवते तृतीयस्कन्धे पञ्चमोऽध्यायः ॥

॥ अथ षष्ठोऽध्यायः ॥

**मैत्रेय उवाच —**

**भगवानेक आसेदमग्र आत्मात्मनां विभुः ।**
**आत्मेच्छानुगतो ह्यात्मा नानाशक्त्युपलक्षितः ॥ १ ॥**

---

किञ्च स्वधाम व्रजन् तव ज्ञानोपदेशाय मामादिशदिति यस्मात् तस्मात् भवान् सानुगस्य भगवतो नित्यं प्रियत्वेन सम्मतोऽतो युक्त इति भावः । हिशब्देन सम्मतत्वे ग्रन्थान्तरप्रसक्तिं द्योतयति ॥ २१ ॥

श्रोतुरभिमुखीकरणार्थं वक्तव्यार्थं प्रतिजानीते — **अथेति** । योगमायोपबृंहिताः स्वरूपसामर्थ्योपेताः ॥ २२ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे पञ्चमोऽध्यायः ॥

॥ अथ षष्ठोऽध्यायः ॥

भगवानेक इदमग्रे अस्याग्रे । आत्मा परमात्मा । आत्मनां जीवानाम् । विभुरधिपतिः । आत्मा आदानादिकर्ता । आत्मेच्छां स्वरूपभूतां सृष्टीच्छामनुगतः सिसृक्षामीति भावमुपगतः । तदुपकरणाभावे देवदत्तेच्छावत् तदिच्छाऽपि व्यर्था नेत्याह — **नानाशक्तीति** । स्वाधीननानासाधनोपलक्षितः । नानामत्युपलक्षित इति पाठे ‘सदेव सोम्येदमग्र आसीदसदेवेदमग्र आसीत्’ इत्यादि श्रुतितात्पर्यार्थाज्ञानिनानावादिमतोपलक्षित इत्यर्थः । ‘सतो बन्धुमसति निरविन्दन्’ इत्यादि श्रुतेः असत्त्वमतमासुरमतमिति प्रसिद्धेः ॥ १ ॥

स वा एष तदा द्रष्टा नापश्यद् विश्वमेकराट् ।
मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक् ॥ २ ॥

सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका ।
माया नाम महाभाग ययेदं निर्ममे विभुः ॥ ३ ॥

कालवृत्त्यां तु मायायां गुणमय्यामधोक्षजः ।
पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान् ॥ ४ ॥

---

एकस्य सतो हरेः सृष्टीच्छोत्पत्तिप्रकारमाह—**स वा इति** । योऽसावेकराडेको राजा चक्रवर्ती स एष तदा प्रलये विश्वं नापश्यत् । सर्वकार्याणां मूलप्रकृतौ लीनत्वादिति शेषः । दर्शनशक्त्यभावादित्यत उक्तम्—**द्रष्टेति** । 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुतिर्वा इत्यनेन गृहीता । असुप्तदृगित्यनेन एतदेव विव्रियते । जीवानां नित्यत्वेनालीनत्वात् तद्दर्शनसम्भवात् कथं नापश्यदिति तत्राह—**मेन इति** । आत्मानमिति जातावेकवचनम् । 'परमात्मा यतो जीवं मेनेऽसन्तमशक्ततः' इति वचनादसत्त्वमशक्तत्वमेव । न तु स्वव्यतिरेकेणासत्त्वम् ।' 'पुरुष आसीत्'[1] इति श्रुतेः । 'क्षेत्रज्ञः पुरुषो ह्यात्मा संसारी चेतनो मतः' इत्यभिधानम् । सुप्ता आत्मन्येवातीव रता शक्तिः शक्यत्वाद् भार्या रमा यस्य सः सुप्तशक्तिः । तदुक्तम्—'शक्यत्वाच्छक्तयो भार्याः शक्तिः सामर्थ्यमुच्यते' इति । 'सुप्तिस्तु प्रकृतेः प्रोक्ता अतीव भगवद्रतिः' इति च । अनेन प्रकृतिदर्शनमपि प्रत्युक्तम् । पृथगनवस्थानात् । हरिरपि निद्रामुद्रितनेत्रत्वेन नापश्यदिति किं न स्यादित्यत उक्तम्—**असुप्तदृगिति** । क्वापि तथोच्यमानस्य गतिः 'अनास्थान्यत्र च प्रोक्ता[2] विष्णोश्चक्षुर्निमीलनम्' इति वक्तव्या ॥ २ ॥

शक्तेर्नामाह—**सा वा इति** । महान् भागो भाग्यसमूहो यस्य स तथा । महतीं भां प्रति गच्छतीति महाभागो वा । तस्य संबुद्धिर्महाभागेति । एतस्य संद्रष्टुः सर्वदर्शनशक्तिमतो नारायणस्य या प्रलये सायुज्यं प्राप्य रमते सा शक्तिर्माया नाम । सर्वप्रधानत्वान्मयो विष्णुः तस्येयं माया । चार्थे वैशब्दः । सा जडात्मिका शक्तिश्च माया नाम स विभुर्ययेदं जगन्निर्ममे । कीदृशी ? सदसदात्मिका । आद्या महदादिकार्यकारणव्यापिनी । द्वितीया तद्रूपा ॥ ३ ॥

ययेदं निर्ममे जगदित्युक्तं प्रपञ्चयति — **कालवृत्त्यामिति** । 'जगृहे पौरुषं रूपं' इत्यारभ्योक्तात्ममूलरूपाविर्भूतपुरुषरूपेणाधोक्षजः कालेन पुरुषादृष्टाख्यफलपाचकेन वृत्तिः सिसृक्षुत्वादिलक्षणा

---

[1] पुरुषमद्राक्षीदिति श्रुतेः–घ [2] अनास्थान्यत्र च प्रोक्तेति लक्ष्मीसुप्तिविवरणम् ।

ततोऽभवन्महत्तत्त्वमव्यक्तात् कालचोदितात् ।
विज्ञानात्मात्मदेहस्थं विश्वं व्यञ्जंस्तमो नुदन् ॥ ५ ॥
सोऽप्यंशगुणकालात्मा भगवद्दृष्टिगोचरः ।
आत्मानं व्यकरोदात्मा विश्वस्यास्य सिसृक्षया ॥ ६ ॥

---

यस्याश्चेतनायाः सा तथोक्ता । अन्यत्र क्षोभलक्षणा वृत्तिः । गुणमय्यां सत्वादिगुणाभिमानिन्यां इतरत्र तद्रूपायां मायायां चेतनायामचेतनायां च वीर्यं रेतआख्यं परिणामकरं सामर्थ्यं चाधत्त । तुशब्देन उभयोर्महावैलक्षण्यं वक्ति । वीर्यवानिति हरेर्नपुंसकरूपं नास्तीति लक्षयति । 'नैनं वाचा स्त्रियं ब्रुवन् नैनमस्त्री पुमान् ब्रुवन्' इति श्रुतेः । यद्वा स्वेनाहितवीर्यस्य जनकत्वशक्तिं द्योतयति[1] ॥ ४ ॥

नहि लोके वीर्यमादधानाः कार्यं जनयन्तो दृश्यन्ते । न चैवमयम् । तत् कुतः ? कार्योत्पत्तिदर्शनादित्याह—**तत इति** । यत्र वीर्यमाहितं ततो मायाख्यवस्तुनो महत्तत्त्वं चतुर्मुखशरीरमभवत् । मायाया नामान्तरमाह—**अव्यक्तादिति** । अतिसूक्ष्मत्वात् तन्नाम्नः, कालेन सकलप्राण्यदृष्टसाक्षिणा पुरुषेण सृष्ट्युद्बोधकेन च चोदितात् प्रेरितात् । अभिमानिनोऽभिमानानुत्पादे शरीरोत्पादो व्यर्थ इति तत्राह—**विज्ञानात्मेति** । विज्ञानात्मा ब्रह्मा च ततोऽव्यक्ताभिमानित्वात् तन्नाम्नो रमाख्यात् कूटस्थाद् अभूत् मदीयोऽयं देह इत्यभिमानोत्पत्तिमानभूदित्यर्थः । उत्पत्तेः प्रागपि ज्ञाननाशो नास्तीति द्योतनाय विज्ञानात्मेति पदम् । अभिमानोत्पत्तेः किं लक्षणमत्राह—**आत्मदेहस्थमिति** । निरालोके कथमिदं व्यज्यत इत्यत उक्तम्—**तमो नुदन्निति** । नारायणप्रसादप्रादुर्भूतज्ञानलक्षणप्रकाशेन सूर्यवद् वर्तमान इत्यर्थः । शरीरनिमित्तग्लानिरहितो वात्माभिमानरहितो वा ॥ ५ ॥

प्रपञ्चपञ्चीकरणप्रकारं प्रपञ्चयति—**सोऽपीति** । स आत्मा महत्तत्वाभिमानी विरिञ्चोऽपि अंशो जीवः, गुणाः सत्वादयः, कालः फलपाचकः, एषां आत्मा अभिमानी भगवतो हरेः दृष्टेः कटाक्षवीक्षणस्य गोचरो विषयः अस्य प्रपञ्चस्य सिसृक्षया आत्मानं स्वकीयत्वेनाभिमन्यमानं महत्तत्त्वं व्यकरोत् परिणामोन्मुखं कृतवान् । चैतन्यस्याविकारित्वेनात्रात्मपदं न चैतन्यवाचि किन्तु देहवाच्येव । 'कालजीवगुणादीनामभिमानी चतुर्मुखः' इति वचनात् अंशगुणकालात्मेत्यत्रात्मपदेनाभिमान्युच्यते न देहः । क्वचिच्च हिरण्यगर्भस्यांशशब्दवाच्यत्वमङ्गीकर्तव्यम् । 'सर्वजीवाभिमानित्वादंश इत्येव चोच्यते' इति वचनात् ॥ ६ ॥

---

[1] मतुपः अतिशयार्थत्वेन वीर्येऽतिशयो नामामोघत्वमेव ।

महत्तत्त्वाद् विकुर्वाणादहंतत्त्वमजायत ।
कार्यकारणकर्त्रात्मा भूतेन्द्रियमनोभवः ॥ ७ ॥
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ।
अहंतत्त्वाद् विकुर्वाणान्मनो वैकारिकादभूत् ॥ ८ ॥
वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः ।
तैजसानीन्द्रियाण्येव ज्ञानकर्ममयानि च ॥ ९ ॥
तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः ॥ १० ॥
कालमायांशयोगेन भगवद्वीक्षितं नभः ।
तामसानुसृतं स्पर्शं विकुर्वन् निर्ममेऽनिलम् ॥ ११ ॥

---

अहंतत्त्वमजायतेत्यत्र जडात् जडस्योत्पत्तिः अभिमानिनो गरुडादय उदभूवन्निति तात्पर्यं ग्राह्यम् । 'भूतं भूताभिमानी च' इति वचनात् । तत्त्वस्वरूपमाह—**कार्येति** । कार्यं शरीरं कारणानीन्द्रियाणि कर्तृ मनः एषामात्मा आदिकारणम् । किमुक्तम् ? तत्राह—**भूतेति** । भूतेन्द्रियमनसां भवः उत्पत्तिर्यस्मात् स तथा ॥ ७ ॥

भूतादीनां त्रयाणां कारणस्याहङ्कारस्य नामभेदेन त्रित्वमाह—**वैकारिक इति** । अधुना त्रित्वसंख्याविशिष्टाहंकारात् पृथक् पृथक् सृष्टिभेदमाह — **अहंतत्त्वादिति** । अंशगुणकालानामीशस्य[1] च प्रेरणया विकुर्वाणादहंतत्त्वाद् वैकारिकनाम्नो मनस्तत्त्वमभूदित्यन्वयः ॥ ८ ॥

यतो येभ्योऽर्थानां विषयाणामभिव्यञ्जनं तद्विषयज्ञानं भवति ये चेन्द्रियाभिमानिनो वैकारिकनामानो देवास्ते च वैकारिकादहंतत्त्वादभूवन्निति सम्बन्धः । ज्ञानकर्ममयानि ज्ञानप्रधानानि श्रोत्रादीनि कर्मप्रधानानि वागादीनि च तैजसान्येव तैजसादहंकारादेवोत्पन्नानि नान्यस्मादहङ्कारादित्यन्वयः ॥ ९ ॥

तामसाहङ्कारो भूतसूक्ष्माणामादिः कारणं, शब्दादितन्मात्राः तामसाहङ्काराज्जाता इत्यर्थः । तत्र कीदृशी शब्दतन्मात्रा ? यतः यत्र शब्दतन्मात्रायां[2] आत्मनो हरेर्लिङ्गं गमकं प्रमाणं खं समुत्पन्नमित्यन्वयः ॥ १० ॥

कालमायांशयोगेन कालस्य सृष्टिविशिष्टस्य मायायाः प्रकृतेरंशस्य जीवाभिमानिनश्चतुर्मुखस्य सन्निकर्षलक्षणसम्बन्धेन भगवता वीक्षितं तामसानुसृतं स्वकारणतामसाहंकारेणानुस्यूतं, अत एव विकुर्वत् नभः स्पर्शं स्पर्शतन्मात्रां निर्ममे । तस्मात् स्पर्शादनिलं वायुं निर्ममे ॥ ११ ॥

---

[1] ईशस्य चतुर्मुखस्य चशब्दात् भगवतश्च । [2] अयं घ-पाठः । अन्यत्र 'यतः यस्याः शब्दतन्मात्रायाः' ।

अनिलोऽपि विकुर्वाणो नभसोरुबलान्वितः ।
ससर्ज रूपतन्मात्रां ज्योतिर्लोकस्य लोचनम् ॥ १२ ॥

अनिलेनान्वितं ज्योतिर्विकुर्वत् परवीक्षितम् ।
आधत्ताम्भो रसमयं कालमायांशयोगतः ॥ १३ ॥

ज्योतिषाम्भोऽनुसंसृष्टं विकुर्वत् परवीक्षितम् ।
महीं गन्धगुणामाधात् कालमायांशयोगतः ॥ १४ ॥

भूतानां नभआदीनां यद्यद् भाव्यं परात् परम् ।
तेषां परानुसंसर्गाद् यथासंख्यं गुणान् विदुः ॥ १५ ॥

एते देवाः कला विष्णोः कालमायांशलिङ्गिनः ।
नानात्वात् स्वक्रियानीशाः प्रोचुः प्राञ्जलयो विभुम् ॥ १६ ॥

---

कालादिसहकारिणा नभसा स्वकारणेनानुस्यूतत्वादुरुबलान्वितो विकुर्वाणोऽनिलो रूपतन्मात्रां ससर्ज । तन्मात्रया लोकस्य लोचनं प्रकाशकं, लुच् प्रकाशन इति धातोः, ज्योतिः तेजस्तत्त्वं अस्राक्षीत् ॥ १२ ॥

रसमयं रसतन्मात्राकार्यं, परेण हरिणा वीक्षितं, कालमायांशयोगतः कालात् परिणामात् मायायाः प्रकृतेः अंशाद् हिरण्यगर्भाच्च ॥ १३ ॥

गन्धाख्यो गुणो यस्यास्तां गन्धगुणकार्यामित्यर्थः ॥ १४ ॥

विशेषगुणत्वाच्छब्दादयो नभआदिव्यावर्तका इति यद् वैशेषिकमतं तन्निराकरोति—**भूतानामिति** । नभआदीनां भूतानां मध्ये यद्यत् परात् परस्मात् पूर्वस्मात् परं पश्चात् यद् भाव्यमुत्पाद्यं तेषां परानुसंसर्गात् पूर्वेषां कारणानां उत्तरोत्तरकार्येषु अनुप्रवेशाद् यथासंख्यं एकद्वित्र्यादिसंख्याविशिष्टान् शब्दादीन् गुणान् विदुः, वैशेषिकादितर इति शेषः ॥ १५ ॥

ब्रह्माण्डोत्पत्तिप्रकारं वक्तुं महदाद्यभिमानिदेवानां स्तुतिप्रकारं कथयति—**एते देवा इति** । ये महदाद्यभिमानित्वेन हरिणा सृष्टा एते ब्रह्मादयो देवा विभुं प्रोचुरित्यन्वयः । कीदृशाः ? विष्णोः कलाः भिन्नांशाः । कालनिमित्तेन मायानिमित्तेनांशनिमित्तेन च लिङ्गं शरीरमेषामस्तीति कालमायांशलिङ्गिनः । अत्रैकस्यैव विरिञ्चस्य कालांशाभिमानिरूपद्वयमस्तीति ग्राह्यम् । 'कालजीवाभिमानेन रूपद्वन्द्वी चतुर्मुखः' इति वचनात् । स्तुतौ निमित्तमाह—**नानत्वादिति** । नानात्वादश्लिष्टत्वात् स्वक्रियायां ब्रह्माण्डोत्पादनक्रियायां अनीशाः असमर्थाः । शिरसि प्रकृष्टोऽञ्जलिर्येषां ते तथा ॥ १६ ॥

देवा ऊचुः —

नताः स्म ते देव पदारविन्दं प्रपन्नतापोपशमातपत्रम् ।
यन्मूलकेता यतयोऽञ्जसोरुसंसारदुःखं बहिरुत्क्षिपन्ति ॥ १७ ॥

ऋते यदस्मिन् भव ईश जीवास्तापत्रयेणाभिहता[1] न शर्म ।
आत्मल्ँभन्ते भगवंस्तवाङ्घ्रिच्छायांशविद्यामत आश्रयेम ॥ १८ ॥

मार्गन्ति यत् ते मुखपद्मनीडैश्छन्दः सुपर्णैर्ऋषयो विविक्ते ।
यच्चाघमर्षो द्युसरिद्वरायाः परं पदं तीर्थपदः प्रपन्नाः ॥ १९ ॥

---

किमूचुरिति तत्राह—**नताः स्मेति** । ते तव प्रपन्नानां पुंसां आध्यात्मिकादितापोपशमायातपत्रमिव स्थितम् । आतपात् त्रायत इत्यातपत्रं छत्रम् । न केवलं तात्कालिकतापनिवारणपटु, अनादिसंसारदुःखनिवारणसमर्थमिति भावेनाह—**यन्मूलेति** । यत् पादारविन्दमेव मूलकेतमधिष्ठानं गृहं येषां ते तथा, यतयो निर्जितेन्द्रियग्रामा अञ्जसा ऋजुमार्गेण संसाराख्यं दुःखं हृदयग्रन्थिलक्षणं बहिरुत्क्षिपन्ति निर्मूलयन्ति ॥ १७ ॥

ईश अणिमादिपूर्णैश्वर्यमूर्ते अस्मिन् भवे संसारे जीवाः बन्धमोक्षोपायभूतपादारविन्दमृते तत्सेवां विना आत्मन् आत्मनि शर्म न लभन्ते यदतो भगवंस्तवाङ्घ्रिच्छायायाः ब्रह्मविद्यायाः अंशविद्यामेकदेशविद्यामाश्रयेम । "ब्रह्मविद्या हरेश्छाया तदंशो हि सुरेष्वपि । सर्वविद्याश्रयः प्रोक्तः प्रधानांशश्चतुर्मुखः" इति वचनात् योग्यतातारतम्यमपेक्ष्यांशविद्यामित्युक्तम् । अनेन व्यतिरेकन्यायो दर्शितः ॥ १८ ॥

इतोऽपि भगवत्पाद[2]ज्ञानमेव स्वाभीष्टसाधनमिति स्तुवन्ति—**मार्गन्तीति** । ऋषयो ब्रह्मादिज्ञानिनो विविक्ते स्थित्वा, मुखपद्मनीडैः मुखपद्ममेव नीडं येषां ते तथा तैः, छन्दांसि वेदा एव सुपर्णाः पक्षिणस्तैः, ते तव यत् पदं मार्गन्ति अन्विछन्ति विचारयन्ति । अद्यापि मृगयन्त इति वा । यच्च यस्माच्च प्रपन्नानाम् अघमर्षः दुःखनाशः स्यात् । यच्च द्युसरितो धरायाश्च परं पदं, वयं तीर्थपदस्ते तव पदं प्रपन्ना इत्यन्वयः ॥ १९ ॥

---

[1] तापत्रयेणोपहता-च [2] भगवत्पाद एव-क

यच्छ्रद्धया श्रुतवत्या च भक्त्या संमृज्यमाने हृदयेऽवधार्य ।
ज्ञानेन वैराग्यबलेन धीरा व्रजन्ति यत् तेऽङ्घ्रिसरोजपीठम् ॥ २० ॥

विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदाम्बुजं ते
व्रजेम सर्वे शरणं यदीश स्मृतं प्रयच्छत्यभयं स्वपुंसाम् । ॥ २१ ॥

यत् सानुबन्धेऽसति देहगेहे ममाहमित्यूढदुराग्रहाणाम् ।
पुंसां सुदूरं वसतोऽपि पुर्यां भजेम तत् ते भगवन् पदाब्जम् ॥ २२ ॥

तं त्वामसद्वृत्तिभिरक्षिभिर्ये पराहृतान्तर्मनसः परेश ।
अथो न पश्यंत्युरुगाय नूनं यत् ते पदन्यासविलासलक्ष्म्याः ॥ २३ ॥

---

एतत्पदप्राप्तौ साधनमाहुः—**यच्छ्रद्धयेति** । संमृज्यमाने सम्यक् शोध्यमाने । अवधार्य सन्निधाप्य । वैराग्यमेव बलं यस्य स तथा तेन । अङ्घ्रिसरोजाख्यं पीठम् ॥ २० ॥

हरेर्विक्रमो लोकोपकाराय न स्वार्थाय यदतः स्मरणमात्रेण प्रीतोऽस्मदभीष्टं करोतीति भावेन स्तुवन्ति—**विश्वस्येति** । तव यत् पदाम्बुजं स्मृतं स्वपुंसां अभयं प्रयच्छति सर्वे तत् शरणं व्रजेमेत्यन्वयः । कृतावतारस्य गृहीतपुरुषादिप्रादुर्भावस्य ॥ २१ ॥

हरेः पदं विरक्त्यैकलभ्यमिति भावेन स्तुवन्ति—**यत् सानुबन्ध इति** । सानुबन्धे पुत्रादिपरिकरसहिते असत्यमङ्गले देहगेहे[1]ऽहमिति ममेदमिति चोढदुराग्रहाणां दुष्टज्ञानस्य चोढॄणां पुंसां पुर्यां देहे वसतोऽपि तव यत् पदाम्बुजं सुदूरमत्यन्तमगोचरं हे भगवन् ते पदाम्बुजं भजेमेत्यन्वयः ॥ २२ ॥

निकटवर्तिनो हरेर्दर्शनासम्भवे किं कारणमिति तत्राह—**तं त्वामिति** । यस्त्वमेवमुक्तमहिमा अथो तस्मात् ते तं त्वां नूनं निश्चयेन न पश्यन्तीत्यन्वयः । असद्वृत्तिभिरक्षिभिरिन्द्रियैः पराहृतं बहिष्कारितमन्तः स्थितं मनो येषां ते पराहृतान्तर्मनसो यस्मात् । अन्तःस्थितं प्रत्यगात्मानम् । विषयीकर्तुं योग्यमिति सूचनायान्तरिति विशेषणम् । कीदृशम् ? न्यासेन सकलकर्मणां परब्रह्मार्पणेन विलासो येषां ते न्यासविलासाः, तेषां लक्ष्म्याः लक्षदर्शनाङ्कनयोरिति धातोर्दर्शनस्य, पदं विषयम् । अनेन परमहंसाश्रमस्था एनं पश्यन्तीत्युक्तम् । मुडागमो ङीप् च[2] तज्ज्ञानस्यातिशयं सूचयतः ।

---

[1] देहगेहे इत्यनन्तरं जातिभिन्ने देहे इत्यधिकः पाठः—क, घ, च, छ

[2] अयं चकारः चकोशस्थः । अन्यत्र नास्ति ।

पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ।
वैराग्यसारं प्रतिलभ्य बोधं यथाऽञ्जसा त्वेयुरकुण्ठधिष्ण्यम् ॥ २४ ॥

तथापरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् ।
त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्नतु सेवया ते ॥ २५ ॥

तत् ते वयं लोकसिसृक्षयाऽद्य त्वया विसृष्टास्त्रिभिरात्मभिर्ये[3] ।
सर्वे वियुक्ताः स्वविहारतन्त्रं न शक्नुमस्तत् प्रतिकर्तवे ते ॥ २६ ॥

---

पदयोर्न्यासो भुवि क्षेपविशेषः तस्य विलासलक्ष्म्याः पदमिति द्विरावृत्त्यान्वेतव्यम् । अनेन पदविषया स्तुतिरयुक्तेति शङ्का निरस्तेति ज्ञातव्यमिति वा ॥ २३ ॥

एवंविधस्य हरेरपरोक्षज्ञानसाधनोपासना द्विविधा ध्यानरूपा, वेदान्तशास्त्रश्रवणादिलक्षणा च । तत्र क्षिप्रप्रवृत्त्यर्थं प्रथमा क्लेशसाध्या द्वितीया सुखसाध्येति उभे विशिनष्टि—**पानेनेति** । हे देव ते कथासुधायाः पानेन श्रवणादिलक्षणेन प्रवर्धमानया भक्त्या विशदाशयाः निर्मलान्तःकरणाः वैराग्यसारं वैराग्यफलं बोधमपरोक्षज्ञानं प्रतिलभ्य प्राप्य अञ्जसा ऋजुमार्गेण अकुण्ठधिष्ण्यमप्रतिहतवैकुण्ठादिस्थानं अपरिच्छिन्नस्वरूपं वा[1] त्वा त्वां यथा ईयुः ॥ २४ ॥

तथापरे येऽन्ये योगिनः यमनियमादियोगनिष्ठाः आत्मसमाधियोगबलेन परमात्मचित्तैकाग्र्यलक्षणध्यानसामर्थ्येन बलिष्ठां अन्यसाधनाजेयां प्रकृतिं बन्धकशक्त्यभिमानिनीं प्रसादाज्जित्वा धीरा धीषु रममाणा अपरोक्षज्ञानिनः पुरुषं पूर्णषड्गुणं त्वामेव विशन्ति । 'तुः स्याद् भेदेऽवधारणे' इति वचनात् । तत्र तेषां योगिनां श्रमः स्याद् यथा तथा ते तव श्रवणादिरूपया सेवया न तु नैव श्रमः स्यात् किन्तु सुखमेवेत्यन्वयः । अत्र प्रकृतिजयो[2] नाम तत्प्रसादैकलभ्यो नान्यः । तदुक्तम् "वायोश्च प्रकृतेर्विष्णोर्जयो भक्त्यैव नान्यथा" इति ॥ २५ ॥

स्तुत्या प्रसन्नीकृत्य स्वाभीष्टं विज्ञापयन्तीत्याह—**तत् ते वयमिति** । यस्मात् त्वं लोकदयालुस्तत् तस्मात् त्वया लोकसिसृक्षया त्रिभिरात्मभिः कालमायांशैर्विसृष्टा ये ते वयमद्य सर्वे वियुक्ताविश्लिष्टाः स्वविहारतन्त्रं स्वस्य तव क्रीडोपकरणं यत् ब्रह्माण्डं तत् प्रतिकर्तवे प्रतिकर्तुं न शक्नुम इत्यन्वयः ॥ २६ ॥

---

[1] वाकारः चकोशस्थः । [2] प्रकृतिजयो नाम भक्त्या प्रसादोन्मुखीकरणम् इति यादुपत्याभिप्रायः ।
[3] आत्मभिः ख-च,ग

यावद् बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र ।
तथोभयेषां त इमे ह लोका बलिं हरन्तोऽन्नमदन्त्यनीशाः ॥ २७ ॥

त्वं नः सुराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः ।
त्वं देव शक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविरादधेऽजः ॥ २८ ॥

ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन् करवाम किं ते ।
त्वं नः स चक्षुः परिदेहि शक्त्या देव क्रियार्थे यदनुग्रहेण ॥ २९ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे षष्ठोऽध्यायः ।

---

ब्रह्माण्डनिर्माणेन[1] प्रयोजनमाहुरित्याह—**यावदिति** । यावद् बलिं भक्त्या हराम यावत्पर्यन्तं ब्रह्माण्डं समुत्पाद्य तस्मिन् स्थित्वा त्वद्विषयज्ञानकर्मलक्षणं बलिमुपहारं समर्प्य तर्पयामः, यत्र ब्रह्माण्डे स्थिता वयं काले काले यथान्नमदाम स्वविषयेषु व्यवहरामः, तथोभयेषामस्माकं युष्माकं च बलिं हरन्तः समर्पयन्तस्त इमेऽनीशाः असत्प्रेरणामन्तरेण प्रवृत्तावसमर्था लोका जनाः अन्नं ज्ञानकर्मलक्षण-मदन्ति तादृशब्रह्माण्डनिर्माणोपायं, कुर्विति वाक्यशेष, इत्यन्वयः । तादृशमण्डं कर्तुं न शक्नुम इति पूर्वेण सम्बन्ध इति वा । अज विष्णो । 'अजा विष्णुहरच्छागाः' इत्यभिधानम् ॥ २७ ॥

किमिति मां प्रत्येतद् विज्ञापनमन्यं प्रति किं न स्यादिति तत्रैवमूचुरित्याह—**त्वं न इति** । आद्यः आदेरुत्पत्तेः कर्ता, पितृत्वात् त्वां विज्ञापयाम इति भावः । अस्मत्पदं विशिनष्टि—**सुराणामिति** । न केवलमस्माकमेव जनयिता किन्त्वस्मत्सन्ततीनामिति भावेनोक्तम्—**सान्वयानामिति** । त्वं क इति । पुराणः पुरुषः श्रीनारायणः । पितुरपि देहरूपेण विकारदृष्टेस्त्वद्विकारा वयमिति शङ्का मा भूत् । कूटस्थः विकारकूटेषु तिष्ठति, न तु विकारवान् । हरेः पितृस्थानीयत्वं स्पष्टयितुमाहु-रित्याह—**त्वं देवेति** । हे देव, त्वं कविरतिक्रान्तदर्शी अजश्च । देवदत्तवत् भवतो गर्भाधानादि कर्माण्यसम्भावितानि । तथापि भवान् शक्त्यां भार्यायां सत्वादिगुणानां कर्मणामदृष्टानां योनौ कारण-भूतायामजायां जननधर्मरहितायां चिदचित्प्रकृतौ रेतो गर्भमादध इत्यन्वयः । तुशब्देनोभयेषां महान्विशेषोऽस्तीति सूचयति ॥ २८ ॥

ततस्तस्याः प्रकृतेः वयं सत्प्रमुखा [2]महत्तत्त्वप्रमुखा बभूविम । ततः किम् ? तत्राह—**यदर्थ इति** । आत्मन् स्वामिन् यदर्थे यत्प्रयोजनाय बभूविम तदर्थं ते तव किं करवाम । वियुक्ता[3] अस्वतन्त्रा यस्मात्

---

[1] निर्माणे-क [2] अयं कपाठः । अन्यत्र महत्तत्त्वमुखाः । [3] षोडशश्लोकस्थं पदमिदम् ।

॥ अथ सप्तमोऽध्यायः ॥

**ऋषिरुवाच —**

**इति तासां स्वशक्तीनामसतीनां समेत्य सः ।**
**प्रसुप्तलोकतन्त्राणां निशम्य गिरमीश्वरः ॥ १ ॥**

**कालसंज्ञां तदा देवीं बिभ्रच्छक्तिमुरुक्रमः ।**
**त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ॥ २ ॥**

---

तस्मात् । स त्वं चक्षुर्ज्ञानमण्डनिर्माणोपायविषयं परिदेहि । कीदृशम् ? तत्राहुः—**शक्ता इति** । यस्य ज्ञानस्यानुग्रहेण क्रियार्थे ब्रह्माण्डनिर्माणाय शक्ताः स्यामेत्यन्वयः ॥ १९ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे षष्ठोऽध्यायः ॥

अस्मिन्नध्याये तदनन्यत्वमारम्भणशब्दादिभ्य इत्यधिकरणार्थः प्रपञ्च्यत इत्यभिप्रेत्यादौ हरेस्तत्त्वेषु प्रवेशं वक्ति—**इतीति** । उरुक्रमः त्रयोविंशतितत्त्वानां गणं युगपदाविशदित्यन्वयः । आकाशादि-पञ्चभूतानि शब्दादिपञ्चतन्मात्राः श्रोत्रादिदशेन्द्रियाणि मनोमहदहङ्कारा इति त्रयोविंशतितत्त्वानि । तदुक्तम्—"शब्दाद्या नभआद्याश्च मनोयुक्तेन्द्रियाणि च । अहङ्कारो महांश्चैव त्रयोविंशतिको गणः" इति । देवतेन्द्रियाणामेकत्वविवक्षया पृथङ्नोक्तम् । "देवतेन्द्रिययोरैक्यान्न पृथग् गणनं तयोः" इति । प्रकृतिश्चतुर्विंशा, तत्प्रवेशस्य पूर्वसिद्धत्वान्नोक्ता । हरिः 'आविशाद्' इति पञ्चविंशत्त्वेन सूचितः । अत्रापि यदा जडांशस्वीकारस्तदा जीवः पञ्चविंशकः । विष्णुः श्रिया सह षड्विंशकः । सप्तविंशको वा । "यदा जडांशस्वीकारो जीवस्तत्पञ्चविंशकः" इत्यादेः । इदं सर्वमुरुक्रमपदेन सूचितम् । प्रवेश-कारणमाह—**इतीति** । समेत्यासतीनां असमेतानां विश्लिष्टानां स्वशक्तीनां शक्यत्वात् स्वाधीनत्वा-च्छक्तिशब्दवाच्यानां प्रसुप्तलोकतन्त्राणां अनाविर्भूतलोकसृष्टिशक्तीनां प्रलीनलोकसृष्ट्युपकरणानां वा । "तनुते येन कार्यं यत् तन्त्रं साधनमुच्यते । कारणानां स्वशक्तिर्वा प्रधानं साधनं यतः" इति[1] । तासामित्युक्तप्रकारां गिरं निशम्य । "शक्यत्वाच्छक्तयो विष्णोर्महदाद्या रमा तथा" इति वचनात् शक्तिशब्दवाच्यत्वं महदादीनां युक्तम् ॥ १ ॥

प्रवेशोऽपि रमया सहेतिभावेनाह—**कालसंज्ञामिति** । यदा प्रवेष्टुमैच्छत् तदा "त्रयो-

---

[1] वचनादिति शेषः

सोऽनुप्रविष्टो भगवान् चेष्टारूपेण तं गणम् ।
भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् ॥ ३ ॥

प्रबुद्धकर्मा दैवेन त्रयोविंशतिको गणः
प्रेरितोऽजनयत् स्वाभिर्मात्राभिरपि[1] पूरुषम् ॥ ४ ॥

परेण विशता स्वस्मिन् मात्रया विश्वसृग् गणः ।
चुक्षोभान्योन्यमासाद्य यस्मिन् लोकश्चराचरः ॥ ५ ॥

हिरण्मयः स पुरुषः सहस्रपरिवत्सरान् ।
आण्डकोश उवासाप्सु सर्वसत्त्वोपबृंहितः ॥ ६ ॥

---

विंशति तत्त्वानि प्राविशद् रमया सह । कालाख्यया स्वयं विष्णुः शक्यत्वाच्छक्तिरूपया " इति वाक्यं मानम् । तत्र कारागृहप्रवेशवन्नायं प्रवेशः किन्तु स्वातन्त्र्येणेति द्योतनायेश्वर इति ॥ २ ॥

निलये निलीन इव किमयं तूष्णीमास्ते, किञ्चित् कर्माकार्षीद् वेति तत्राह—**सोऽनुप्रविष्ट इति** । " सर्वचेष्टकरूपेण स्वसामर्थ्येन केशवः । तानि भिन्नानि तत्त्वानि योजयामास चांशतः " इत्यनेन चास्यार्थो दर्शितः । भिन्नं विश्लिष्टं प्रलये सुप्तं कर्म अप्रतिबुद्धशक्तिकं सृष्टिनिमित्तमदृष्टं प्रबोधयन् कार्योन्मुखं कुर्वन् । यद्यपीश्वरः स्वमनसैवाण्डं स्रष्टुं शक्तः, तथापि कर्त्रा पुरुषेण सोपकारणेन भाव्यमिति दर्शयितुं संश्लिष्टो गणः ॥ ३ ॥

किं कार्यं चकारेति तत्राह—**प्रबुद्धकर्मेति** । प्रबुद्धमुन्मुखीकृतं कर्मादृष्टं यस्य सः प्रबुद्धकर्मा, दैवेन हरिणा प्रविश्य प्रेरितः त्रयोविंशतिको गणः स्वाभिर्मात्राभिरंशैः पुरुषस्य ब्रह्मणः शरीरत्वात् पुरुषशब्दवाच्यं ब्रह्माण्डमजनयदित्यन्वयः । अधिपुरुषमिति पाठे अधिगतः पुरुषसूक्तवाच्यो यस्मिंस्तत् तथेत्यर्थः । " ईश्वरो दैवमुद्दिष्टं सर्वस्यापि प्रभुत्वतः " इत्यतः पूर्वोक्तेश्वरो दैवशब्देन गृह्यते ॥ ४ ॥

एतदेव स्पष्टयति—**परेणेति** । चुक्षोभ ब्रह्माण्डाकारेण विकृतवान् यस्मिन्नण्डे उत्पन्नः ॥ ५ ॥

प्रथमं शरीरप्रवेशो हरेरनन्तरं भोगिनश्चेतनस्येति दर्शयितुकामस्य हरेरण्डप्रवेशमाचष्टे—**हिरण्मय इति** । यस्य प्रेरणया तत्त्वगणोऽण्डमजनयत् स हिरण्मयो ज्ञानानन्दात्मककरचरणाद्यवयववान् पुरुषाख्यो हरिरांडकोशेऽप्सु[2] अण्डकोशस्थोदके शेषपर्यङ्के सहस्रपरिवत्सरानुवासेत्यन्वयः । प्रलये

---

[1] अपिशब्दस्य व्याख्यानं लिखितकोशेषु न दृश्यते । अधिपूरुषं इत्येव बहुत्र पाठः । अभिपूरुषमित्यपि क्वचित् ।
[2] अयं घपाठः । अन्यत्र ' आण्डकोशेऽण्डकोशस्थप्सु अण्डकोशस्थोदके ' इति पाठः ।

स वै विश्वसृजां गर्भो दैवकर्मात्मशक्तिमान् ।
विबभाजाऽऽत्मनाऽऽत्मानमेकधा दशधा त्रिधा ॥ ७ ॥

एष ह्यशेषसत्त्वानामात्मांशः परमात्मनः ।
आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यते ॥ ८ ॥

---

सर्वचेतनानां परमचेतनेनैकीभाव इति शङ्कां निवारयति—**सर्वेति** । सर्वसत्त्वैः सर्वजीवैरुपबृंहितो नत्वेकीभूतः ॥ अनेन निर्देहानां चेतनानां प्रलयेऽवस्थानं कथमिति शङ्का निरस्ता । परमात्मन्यवस्थानोपपत्तेः ॥ ६ ॥

सिसृक्षोर्हरेर्गर्भोदके बहुकालव्यापकेन निवासेन सृष्टिकथोपरतेति शङ्कां परीक्षितो हार्दां परिहरन्नण्डान्तर्वर्तिनो हरेर्विक्रमविशेषमाह—**स वा इति** । यो गर्भोदके शेषपर्यङ्के शयानः स विश्वसृजां ब्रह्माण्डं सृष्टवतां तत्त्वानां गर्भोऽन्तर्यामी, [दैवं ब्रह्मादिदैवं तेष्वाधिक्यं[1]] कर्म प्राण्यदृष्टं सुखदुःखभोगसाधनं आत्मशक्तिः प्रकृतिः नित्यमेतैर्युक्तत्वाद् दैवकर्मात्मशक्तिमान्, ब्रह्मणो विराडाख्यं शरीरं सृष्ट्वा तत् प्रविश्य आत्मना परप्रेरणामन्तरेण स्वेच्छया आत्मानं तद्देहहृदयादिनियामकत्वेन एकधादिभेदेन विबभाज[2] विभक्तवानित्यन्वयः । वा इत्यनेनोक्तार्थस्य ग्रन्थान्तरप्रसिद्धिद्योतकेन विश्वसृजां गर्भः कार्यात्मा[3]त्मानमण्डरूपमेकधादिभेदेन विबभाजेत्येतदपव्याख्यानं प्रत्याख्याति । स्वतोऽचेतनस्य कार्यकारणशक्त्यदर्शनादप्रसिद्धत्वाच्चेति ॥ ७ ॥

ननु विश्वसृजां गर्भः अण्डकोश एव भवेत्—"एष ह्यशेषसत्वानामात्मा" इति सर्वप्राण्याधारत्वेन परामर्शात् तदर्थं सृष्टत्वाच्चेति तत्राह—**एष हीति** । नायमण्डकोशस्य परामर्शः किन्तु 'पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान्' इति यः पुरुषाख्यो हरिरभिहितः स एष इति परामृश्यते । परमात्मनोंऽश इत्युक्तत्वादाद्योऽवतार इत्यवतारशब्देन विशेषितत्त्वाच्च । नह्यण्डकोशस्य हरेरवतारत्वनिर्देशः क्वचिद् दृष्टः श्रुतो वा । तथाचायमक्षरार्थः—यो महदादितत्त्वानि सृष्ट्वा तेषामण्डसृष्टावस्वातन्त्र्यं प्रकाश्यात्मानं तैः स्तावयित्वा तदनुग्रहाय सर्वचेष्टकरूपेण रमया सह प्रविश्य संयोज्य क्षोभयित्वा तदंशैरण्डं सृष्ट्वा तत् प्रविश्य अप्सु सहस्रपरिवत्सरानुषित्वा तदन्ते ब्रह्मणो विराट्शरीरं

---

[][1] तात्पर्यविरोधादत्र लेखकप्रमादः संभाव्यते। यादुपत्येतुं शक्तिपदं प्रत्येकं संबध्य 'दैवशक्तिः प्रभुत्वं कर्मशक्तिः क्रियाशक्तिः आत्मशक्तिः स्वभार्यारूपा प्रकृतिः' इति व्याख्यातम् ।

[2] अयं च पाठः । अन्यत्र एकधादि विबभाज । [3] कार्यात्मनामिति अन्यत्रपाठः ।

साध्यात्मं साधिदैवं च साधिभूतमिति त्रिधा ।
विराट्प्राणो दशविध एकधा हृदयेन च ॥ ९ ॥

स्मरन् विश्वसृजामीशो विज्ञापितमधोक्षजः ।
विराजमतपत् स्वेन तेजसैषां विवृद्धये ॥ १० ॥

---

सृष्ट्वा तद्देहेन्द्रियादिनियामकत्वेनाविर्बभूव एष ह्यशेषसत्वानामात्मा नियामकः परमात्मनः स्वरूपांश आद्योऽवतारः, एतादृशमहिमेति शेषः । कोऽसाविति तात्पर्यात् श्रद्धातिशयजननार्थं पूर्वोक्तमेवाह—यत्रेति । यत्र यस्मिन्नाद्यावतारे पुरुषनाम्नि भूतग्रामो भूतसमूहो विभाव्यते सत्तां प्राप्य दृश्यते स इत्यर्थः । हिशब्दः "अद्योऽवतारो विष्णोस्तु पुरुषो नाम कीर्तितः" इत्यादौ प्रसिद्धोऽयमर्थ इति दर्शयति ॥ ८ ॥

एकधेत्याद्युक्तं विवृणोति—**साध्यात्ममिति** । क्रमोल्लङ्घनं प्राधान्यदर्शनाय । अध्यात्मादित्रित्वस्य नित्यत्वात् । 'द्वादशानीन्द्रियाण्याहुः' इति श्रुतेरिन्द्रियाणां दशविधत्वस्य प्रायिकत्वात् । हृदयस्य ज्ञानविवक्षयैकत्वादन्तःकरणविवक्षया चातुर्विध्यात् । अध्यात्मसाहित्येन वर्तमानं रूपमित्यादि योज्यम् । विशेषेण राजनाद् विराट् प्रकृष्टचेष्टकत्वात् प्राणनामा ब्रह्मान्तर्यामी । ब्रह्म दशेन्द्रियान्तस्थत्वेन दशविधः । ब्रह्म हृदयस्थरूपेणैकविधः । चशब्दस्त्वध्यात्मादिषु त्रिषु श्रोत्रादीन्द्रियेषु हृदये च प्रवेशसंभवाद्धरेः संख्याभेदः 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतिसिद्धत्वात् युज्यत इति दर्शयति[1] । प्राणादिनागादिदशप्राणा अपि अध्यात्मादिभेदेन त्रिधा ज्ञातव्याः । तदुक्तम्—"प्राणादिपञ्चकं चैव तथा नागादिपञ्चकम् । एवं तु दशधा प्राणा अध्यात्मादित्रिधाखिलाः" इति । अधिभूतमपि द्विधा प्रधानवायुत्वगादिभेदेन । "प्राणः प्रथमजो यस्तु प्रधानो वायुरीरितः । त्वगात्माद्यास्तु तत्पुत्रा द्विधाभूतमुदाहृतम्" इति वचनात् । इदं प्रसङ्गादुक्तम् ॥ ९ ॥

इदानीं तत्त्वानामस्माकमायतननिर्माणे शक्तिं देहीति यदुदितं तत्करणप्रकारमाह—**स्मरन्निति** । अधोक्षजो विराजं ब्रह्मशरीरमन्तर्यामिरूपेण प्रविश्य स्वेन तेजसा वैराजाख्यं ब्रह्मशरीरं एषां अग्न्यादिदेवानां यथा आयातनानि भवन्ति तथा विवृद्धये अतपत् अवकाशवदकारोदित्यन्वयः ॥ १० ॥

---

[1] प्रवेशस्य श्रुतिसिद्धत्वात् संख्याभेदः युज्यत इति दर्शयति इत्यभिप्रायः स्यात् ।

अथ तस्याभितप्तस्य कतिचायतनानि ह ।
निरभिद्यन्त देवानां तानि मे गदतः शृणु ॥ ११ ॥

तस्याग्निरास्यं निर्भिण्णं लोकपालोऽविशत् पदम् ।
वाचा स्वांशेन वक्तव्यं ययासौ प्रतिपद्यते ॥ १२ ॥

निर्भिण्णं तालु वरुणो लोकपालोऽविशद्धरेः[1] ।
जिह्वयांशेन च रसान् ययाऽसौ प्रतिपद्यते ॥ १३ ॥

निर्भिण्णे अश्विनौ नासे विष्णोराविशतां पदम् ।
घ्राणेनांशेन गन्धस्य प्रतिपत्तिर्यतो भवेत् ॥ १४ ॥

निर्भिण्णे अक्षिणी त्वष्टा लोकपालोऽविशत् प्रभोः[2] ।
चक्षुषांशेन रूपाणां प्रतिपत्तिर्यतो भवेत् ॥ १५ ॥

निर्भिण्णान्यथ[3] चर्माणि लोकपालोऽनिलोऽविशत् ।
प्राणेनांशेन संस्पर्शं येनासौ प्रतिपद्यते ॥ १६ ॥

---

तापकार्यमाह—**अथेति** । देवानां यान्यायतनानि तस्याभितप्तस्य शरीरस्य सकाशान्निरभिद्यन्त विवृतानि, अथ गदतो मम सकाशात् तानि शृण्वित्यन्वयः । कतिचेत्येकं पदम् । चशब्दः चित्पर्यायः । हेत्यनेन "सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत् तमभ्यतपत् तस्याभितप्तस्य मुखं निरभिद्यत" इत्यादिसमाख्यां सूचयति ॥ ११ ॥

शरीरावयवेभ्यो मुखलक्षणावयवस्य प्राधान्यज्ञापनाय तदुत्पत्तिं तदभिमान्यभिमानोत्पत्तिं चाह – **तस्येति** । तस्य ब्रह्मान्तर्यामिणो विवक्षोर्हरेरास्यं मुखसंज्ञायतनं यन्निर्भिण्णं विवृत्तं तत् पदं स्थान लोकपालोऽग्निर्वाचा वागिन्द्रियाख्यस्वांशेन सहाविशदित्यन्वयः । "अग्निर्वाग्भूत्वा मुखं प्राविशत्" इति श्रुतिः । यया वाचा येन वागिन्द्रियेण ब्रह्मशरीरवर्ती हरिर्वक्तव्यं वागिन्द्रियविषयं व्यवहाराख्यं प्रतिपद्यते विज्ञाय व्यवहरतीत्यन्वयः । उत्तरग्रन्था एवमेव व्याख्येयाः ॥ १२ ॥

तालु जिह्वामूलम् । असौ हरिः प्रतिपद्यते जानाति ॥ १३ ॥

नासे नासिके ॥ १४ ॥

चर्माणि त्वगिन्द्रियस्थानानि ॥ १६ ॥

---

[1] लोकपालोऽविशत्पदं–ग [2] विभो–घ,ग,च,छ [3] निर्भिण्णान्यस्य–ग,च

कर्णावस्य विनिर्भिण्णौ धिष्ण्यं स्वं विविशुर्दिशः ।
श्रोत्रेणांशेन शब्दस्य सिद्धिं येन प्रपद्यते ॥ १७ ॥

त्वचमस्य विनिर्भिण्णां विविशुर्धिष्ण्यमोषधीः ।
अंशेन रोमभिः कण्डूं यैरसौ प्रतिपद्यते ॥ १८ ॥

मेढ्रं तस्य विनिर्भिण्णं स्वधिष्ण्यं क उपाविशत् ।
रेतसांशेन येनासावानन्दं प्रतिपद्यते ॥ १९ ॥

गुदं पुंसो विनिर्भिण्णं मित्रो लोकेश आविशत् ।
पायुनांशेन येनासौ विसर्गं प्रतिपद्यते ॥ २० ॥

हस्तावस्य विनिर्भिण्णाविन्द्रः स्वर्पतिराविशत् ।
वार्तयांशेन पुरुषो यया वृत्तिं प्रपद्यते ॥ २१ ॥

पादावस्य विनिर्भिण्णौ लोकेशो विष्णुराविशत् ।
गत्या स्वांशेन पुरुषो यया प्राप्यं प्रपद्यते ॥ २२ ॥

हृदयं चास्य निर्भिण्णं चन्द्रमा धिष्ण्यमाविशत् ।
मनसांशेन येनासौ विक्रियां प्रतिपद्यते ॥ २३ ॥

---

ओषधीरोषध्यभिमानिदेवताः । अस्य[1] । हरेः[2] । रोमभिरंशेन ॥ १८ ॥

कः प्रजापतिः । रेतसा गुह्येन्द्रियेण आनन्दं मैथुनोत्थसुखम् ॥ १९ ॥

विसर्गं धातुमलोत्सर्जनादिक्रियाम् ॥ २० ॥

" इन्द्रो वृषात्मशक्रार्केषु " इत्यभिधानादिन्द्रशब्दस्य पुरन्दरादन्यविषयत्वनिरासाय स्वर्पतिरित्युक्तम् । वार्तया हस्तेन्द्रियेणांशेन । वृत्तिमादानाख्याम् ॥ २१ ॥

गत्या गतिसाधनपादेन्द्रियेण ॥ २२ ॥

हृदयं मनोनिवासस्थानम् । मनसेन्द्रियेण विक्रियां सङ्कल्पविकल्परूपाम् ॥ २३ ॥

---

1 ब्रह्मशरीरस्येत्यर्थः 2 हरेः सकाशादित्यर्थः

आत्मानं चास्य निर्भिण्णं वाचस्पतिरुपाविशत्[1] ।
बुद्धया स्वांशेन येनासौ निश्चयं प्रतिपद्यते ॥ २४ ॥

अहं चास्य विनिर्भिण्णमभिमानोऽविशत् पदम् ।
कर्त्रा स्वांशेन येनासौ कर्तव्यं प्रतिपद्यते ॥ २५ ॥

सत्त्वं चास्य विनिर्भिण्णं महान् धिष्ण्यमुपाविशत् ।
चित्तेनांशेन येनासौ विज्ञानं प्रतिपद्यते ॥ २६ ॥

शीर्ष्णोऽस्य द्यौर्धरा पद्भ्यां खं नाभेरुदपद्यत ।
गुणानां वृत्तयो येषु प्रतीयन्ते सुरादयः ॥ २७ ॥

औत्पत्तिकेन सत्त्वेन दिवं देवाः प्रपेदिरे ।
धरां रजःस्वभावेन पणयो ये च ताननु ॥ २८ ॥

---

आत्मानं आत्मनाडीविशेषमुत्पन्नं वाचस्पतिर्बृहस्पतिः बुद्धया स्वांशेनाविशत् । यया बुद्धया असौ हरिनियतो ब्रह्मा निश्चयं प्राप्नोति । "आत्मनाड्यां तथा बुद्धिस्तत्रस्थश्च बृहस्पतिः" इत्यत आत्मशब्देनात्र नाड्येवोच्यते ॥ २४ ॥

अस्य ब्रह्मणो देहस्य निर्भिण्णमहं नाम नाडीविशेषं अभिमानोऽहङ्कारो हरेः पदं स्वस्थानमविशत् । कर्त्रा स्वांशेन अहं कर्तेत्यभिमानेन सह । येन कर्त्रंशेन ॥ २५ ॥

महान् ब्रह्मा सत्वं सत्वनाडीविशेषं धिष्ण्यं स्वस्थानं चित्तेनाविशत् । असौ ब्रह्मान्तर्यामी ब्रह्मा च । "शतं चैकाच[2] हृदयस्य नाड्यः" इति श्रुतेः बहुत्वान्नाडीनां किमेते विशिष्योच्यन्त इति चेदुच्यते ब्रह्मनाड्या अवान्तरत्वज्ञापनाय एतयोर्मुख्याभिमानी ब्रह्माचेति[3] । तदुक्तम्—"अहं सत्वमिति द्वेधा ब्रह्मनाड्या अवान्तरम् । कर्तृनामात्वहङ्कारस्त्वहन्नाड्यां व्यवस्थितः । सत्वनाड्यां तथा चित्तमभिमानो हरस्तथा । अहन्नाड्यां सत्वनाड्यां ब्रह्मा चैव व्यवस्थितः" इति ॥ २६ ॥

शीर्ष्णः शिरसः, धरा भूमिः, खमन्तरिक्षं, येषु प्राणिषु सत्वादिगुणानां वृत्तयः सुखकर्मप्रमादलक्षणाः दृश्यन्ते, तेषु लोकेषु सुरासुरादयो वसन्तीति शेषः । आदिशब्देन मनुष्या रुद्रपार्षदगणा गृह्यन्ते ॥ २७ ॥

एतदेव विवृणोति—**औत्पत्तिकेनेति** । औत्पत्तिकेन स्वाभाविकेन सत्वेन स्वाभाविकसात्विकत्वात् । पणयो हानोपादनव्यवहारं कुर्वन्तो मनुष्याः । ये च तान् पणीननु अनुगतास्तेऽपि ॥ २८ ॥

---

[1] अथाविशत् इति पाठान्तरम् । [2] चैकास्य–क [3] ब्रह्मेति ज्ञापनाय च इति स्यात् ।

तार्तीयेन स्वभावेन भगवन्नाभिमाश्रिताः ।
उभयोरन्तरं व्योम ये रुद्रपार्षदा गणाः　　॥ २९ ॥

मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह ।
यत्रोन्मुखत्वाद् वर्णानां मुख्योऽभूद् ब्राह्मणो गुरुः　　॥ ३० ॥

बाहुभ्योऽवर्तत क्षत्रं क्षत्रियस्तदनुव्रतः[1] ।
यो जातस्त्रायते वर्णान् पुरुषान्[2] कण्टकक्षतात्　　॥ ३१ ॥

विशोऽवर्तन्त तस्योर्वो र्लोकवृत्तिकरीर्विभोः ।
वैश्यस्तदुद्भवो वार्तां नृणां यः समवर्तयत्　　॥ ३२ ॥

---

तार्तीयेन तामसेन स्वभावेन भगवन्नाभिमन्तरिक्षमाश्रिताः रुद्रपार्षदगणाः उभयोर्द्यावापृथिव्योः अन्तरं मध्यं व्योम, आश्रिता इति शेषः ॥ २९ ॥

इदानीं[3] वर्णोत्पत्तिं तदभिमान्युत्पत्तिं च वक्ति—**मुखत इति** । पुरुषस्य ब्रह्मान्तर्यामिणो मुखतो ब्रह्म ब्राह्मणजातिरवर्तत । अत्र ब्रह्मशब्देन ब्राह्मणजातिः तदुत्पन्ना ब्राह्मणास्तज्जात्यभिमानिनश्च उच्यन्त इति ज्ञापनाय ब्रह्मेत्युक्तम् । उत्तरत्राप्येवमेवानुसन्धेयम् । "ब्रह्माभिमानी तु भृगुरजनि ब्रह्मणो मुखात् । क्षत्राभिमानी तु मनुर्ब्रह्मबाह्वोरजायत" इत्यादिवचने[4]नाश्रुतव्याख्येयमित्यपवादं निवारयति । यत्र हरावुन्मुखत्वाद् ब्राह्मणस्त्रिवर्णानां मुख्यो गुरुरभवत् । तस्य पुरुषस्यैव तत्त्वोपदेशात् तत्त्वज्ञानदानेनाविद्यादिदोषनिगरणाच्च गुरुरित्यर्थः । गृ शब्दे गृ निगरण इति धातुः ॥ ३० ॥

तं ब्राह्मणमनुव्रतः । क्षत्रशब्दं निर्वक्ति—**य इति** । कण्टकाः शत्रवः । "वेणौ द्रुमाङ्गे रोमाञ्चे क्षुद्रशत्रौ च कण्टकः" इति यादवः । क्षतात् त्रायत इति क्षत्रम् ॥ ३१ ॥

विशो वैश्यजातयः तदभिमानी वास्तुश्च । वार्ता कृषिगोरक्षणादिजीवनम् । "आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने । स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः" इत्यमरः । विष्णुब्रह्मवायुरुद्रेभ्यो जातत्वाद् विश इति बहुवचनम् । "एते पूर्वं हरेर्जाता ब्रह्मणस्तदनन्तरम्" इत्यादेः । विरिञ्चादिभ्यो जन्म चेत् 'यद् वृत्त्या तुष्यते हरिः' इत्येतत् कथं युक्तमिति चेन्न तदन्तस्थस्य हरेर्जातत्वात् । 'तदन्तस्थहरेर्जनिः' इति च ॥ ३२ ॥

---

[1] तमनुव्रतः–ग,ङ,छ　[2] अयं गपाठः । पौरुषात्–मूलकोशपाठः छ,ङ घपाठश्च पौरुषः–च
[3] इदानीं च–ग,ङ,घ । चतुर्वर्णोत्पत्तिं–च　[4] वचनमिति स्यात्

पद्भ्यां भगवतो जज्ञे शुश्रूषाकर्मसिद्धये ।
तस्यां जातः पुरा शूद्रो यद्वृत्त्या तुष्यते हरिः ॥ ३३ ॥

एते वर्णाः स्वधर्मेण यजन्ते स्वगुरुं हरिम् ।
श्रद्धयाऽऽत्मविशुद्ध्यर्थं यज्जाताः सह वृत्तिभिः ॥ ३४ ॥

एतत् क्षत्तर्भगवतो दैवकर्मात्मरूपिणः ।
कः श्रद्दध्यादुदाहर्तुं योगमायाबलोदयम् ॥ ३५ ॥

अथापि कीर्तयाम्यङ्ग यथामति यथाश्रुतम् ।
कीर्तिं हरेः स्वां संस्कर्तुं गिरमन्याभिधां सतीम्[1] ॥ ३६ ॥

---

शूद्रजात्यभिमानी कृतिः कृतिनामा । शुश्रूषाकर्मसिद्धये शुश्रूषाख्यकर्मसाधनाय । पुरा आदिसृष्टौ । यस्य शुश्रूषाख्यया वृत्त्या ॥ ३३ ॥

एतेषां स्वस्ववर्णविहितकर्मैव श्रीहरियजनात्मकत्वेन तत्तुष्टिकरं नान्यदिति भावेनाह—**एत इति** । तत्र हेतुमाह—**यज्जाता इति** । स्वस्वविहितवृत्तिभिः सह विष्णोर्जाता यद् यस्मात् तस्मात् पितृत्वाद् गुरुत्वादिष्टदेवतात्वात् स्वामित्वाच्च । आत्मविशुद्ध्यर्थं अन्तःकरणनैर्मल्याय ॥ ३४ ॥

एवंविधस्य हरेर्माहात्म्यं पुरुषायुषशतेनापि वर्णयितुं न कस्यापि शक्तिरित्याह—**एतदिति** । भगवानेवमतीतानागतवर्तमानानन्तब्रह्माण्डानां निर्मातेति यतोऽतो दैवकर्मात्मरूपिणः देवेष्वधिकत्वाद्दैवं, सर्वस्य मूलकारणत्वात् कर्म, व्याप्तत्वदात्मा, एवंविधं रूपं स्वभावोऽस्यास्तीति । "रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ हितादिषु । सौन्दर्ये च स्वभावे च" इति यादवः । तस्य भगवतो योगमायायाः स्वरूपमहिम्नो बलोदयं शक्तिप्रसरं कः पुमानुदाहर्तुं सदृष्टान्तं वक्तुं श्रद्दध्यात् श्रद्धां कुर्यात्, अनन्तत्वादिति शेषः । "अधिकत्वाद्दैवशब्दो दैवतेष्वधिको यतः । दैवं हरिः कर्ममूलं कृतिरित्येव भण्यते । व्याप्तत्वादात्मशब्दश्च श्रीपतित्वाच्च माधवः" इति वचनादुक्त एवार्थः, 'दैवं दिष्टं भागधेयम्' इत्याद्यभिहितो न भवति ॥ ३५ ॥

भगवन्माहात्म्यकथानुवर्णनसामर्थ्याभावेऽपि स्वप्रयोजनवशाद् वक्ष्यामीत्याह — **अथापीति** । यद्यप्यानन्त्याद् वक्तुं न शक्नोमि तथापि हरेरन्यस्याभिधानं यस्याः सा अन्याभिधा तां, स्वां गिरं संस्कर्तुं, अन्यवार्तापरित्यागेन सतीं कर्तुमित्यर्थः ॥ ३६ ॥

---

[1] सतीं कीर्तिमित्यन्वयः । सतीं विद्यमानाम् इति याद्गुपाठ्यम् ।

एकान्तलाभं वचसो नु पुंसः सुश्लोकमौलेर्गुणवादमाहुः ।
श्रुतेश्च विद्वद्भिरुपाकृतायाः कथासुधाया उत संप्रयोगः ॥ ३७ ॥

आत्मनोऽवसितो वत्स महिमा कविनादिना ।
संवत्सरसहस्रान्ते धिया योगविपक्कया ।
अतो भगवतो माया मायिनामपि मोहिनी ॥ ३८ ॥
यत् स्वयं चात्मवर्त्मात्मा न वेद किमुतापरे ॥ ३९ ॥

---

वागादीन्द्रियाणां जन्मलाभोऽयमेवेत्याह—**एकान्तलाभमिति** । पुंसो वचसो वागिन्द्रियस्य सुश्लोकमौलेर्हरे[1]र्गुणानुवादं गुणानामभिवन्दनं एकान्तलाभमव्यभिचरितपुरुषार्थफलमाहुः, प्रेक्षावन्त इति शेषः । श्रुतेः श्रवणेन्द्रियस्य च विद्वद्भिरुपाकृतायाः व्याख्यातायाः कथासुधायाः संप्रयोग एकान्तचित्तत्वेन श्रवणमेकान्तलाभः । उतशब्दाचक्षुरादिग्रहणं कर्तव्यम् । 'तमुस्तोतारः पूर्व्यं यथाविदम्' । " यन्नामसकृच्छ्रवणात् पुल्कसोऽपि विमुच्यते " इत्यादि श्रुतिस्मृतयोऽप्यस्मिन्नर्थे प्रमाणम् ॥ ३७ ॥

ननु आदिकविना हरेर्महिम्नः समापितत्वादेष उदाहर्तुं कथं न शक्यत इति तत्राह—**आत्मन इति** । आदिना कविना विरिञ्चेन संवत्सरसहस्रांते[2] योगेन शमदमाद्युपायेन विपक्कया परिपाकं प्राप्तया धिया सकलशास्त्रार्थावधारणशक्तिमत्या बुद्ध्या अवसितः उपाश्रितः आत्मनः परमात्मनो महिमाऽवसितः[3] परोक्षीकृत्य ज्ञातो यदतो भगवतो माया महिमा मायिनां ज्ञानिनामपि मोहिनी बुद्धिभ्रंशं करोति । " माया तु महिमा प्रोक्तः प्राचुर्ये तु मयड् यतः" इति प्रमाणान्मायाशब्दस्य उक्त एवार्थः, नत्वनिर्वाच्या अविद्या मायाऽत्रोच्यते ॥ ३८ ॥

ब्रह्मणा ज्ञातत्वात् कथं मोहकरीत्याशङ्क्य तस्यापि साकल्येन ज्ञानं दुष्करमित्याशयेनाह—**यदिति** । आत्मवर्त्मा परमात्मज्ञानोपदेशाचार्य आत्मा ब्रह्मा स्वयमपि भगवतो मायां न वेदेति यत् यस्मात्, सर्वात्मनेति शेषः । अतोऽपरेऽस्मदादयो न विदुरिति किमुत । " गुणपूर्तेरात्मशब्दो ब्रह्माऽहीनत्वतो हरः । अहंशब्दस्तथाप्येतौ न जानीतो हरिं परम् " इति स्मृतेः अहं रुद्रः ॥ ३९ ॥

---

[1] हरेः इत्यनन्तरं 'गुणवादम्' इति मूलानुवादः स्यात् । 'गुणानुवादम्' इति तस्य व्याख्यानम् । 'गुणानामभिवन्दनम्' इति तस्यैव विवरणम् । [2] अयं घ पाठः । अन्यत्र संवत्सरसहस्रम् ।
[3] 'किं साकल्येनावसितो नैवेति काका योज्यम्' इति यादुपत्यम् ।

यतोऽप्राप्य निवर्तन्ते वाचश्च मनसा सह ।
अहं चान्य इमे देवास्तस्मै भगवते नमः ॥ ४० ॥

इति श्रीमद्भागवते तृतीयस्कन्धे सप्तमोऽध्यायः ।

अथ अष्टमोऽध्यायः

एवं ब्रुवाणं मैत्रेयं द्वैपायनसुतो बुधः ।
प्रीणयन्निव भारत्या विदुरः प्रत्यभाषत ॥ १ ॥

विदुर उवाच --
ब्रह्मन् कथं भगवतश्चिन्मात्रस्याविकारिणः ।
लीलया चापि युज्येरन् निर्गुणस्य गुणाः क्रियाः ॥ २ ॥

---

नैतच्चित्रमितिभावेनाह—**यत इति** । वाचः अनन्तवेदाभिमानिन्यः श्रियश्चानादिकालमारभ्य मनसा गुणगणान् ध्यायन्त्यो वागिन्द्रियेण निरन्तरं वर्णयन्त्यो गुणकथावसानमप्राप्य न शक्यमिति यतो निवर्तन्ते अनन्तगुणपूर्ण इति निश्चित्य नित्यपरिचितगुणकथने च नितरां वर्तन्त इति, अहं चाहङ्काराभिमानिनो रुद्रगरुडशेषाश्च अन्ये इमे देवा इन्द्रियाभिमानिन इन्द्रादिदेवा यन्मायां न विदुरिति यतस्तस्मै भगवते नम इत्यन्वयः । वाच इति बहुवचनं श्रियो रूपानन्त्याद् युज्यते । "श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः" इति च । अहं त्रिधेत्यहंशब्दस्याहङ्कारे प्रयुक्तत्वान्न मैत्रेयोऽत्रोच्यते । "अहीनत्वतो हरः अहंशब्दस्तथाप्येतौ न जानीतो हरिं परम्" इति च[1] ।

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे सप्तमोऽध्यायः ॥

दुर्भगशरीरस्थस्य हरेर्देवदत्तस्येव माहात्म्यतिरोभावो दुःखभोगश्च नास्तीत्ययमर्थः[2] विदुरस्य च वक्ष्यमाणार्थप्रश्नग्रामश्चास्मिन्नध्याये निरूप्यते । तत्रादौ विदुरप्रश्नोपक्रमं[3] वक्ति—**एवमिति** । भरतस्य मुख्यप्राणस्य प्रियया वाचा ॥ १ ॥

कालवृत्त्यांतु मायायामित्यादिना निर्गुणस्य हरेः सत्वादिगुणैरुपादानकारणैर्जगत्सृष्ट्यादि करोति

---

[1] उक्तत्वादिति शेषः । 'श्रीर्यत्र ........' 'अहं त्रिधा' इति भागवतवचने । 'अहीनत्वत........' इत्यादि तात्पर्योदाहृतब्राह्मवचनम् । [2] अयं क पाठः । अन्यत्र नास्ति । [3] प्रश्नप्रकारं–ग

क्रीडाया मुद् यतोऽर्हस्य कामं चिक्रीडिषान्यतः ।
स्वतस्तृप्तस्य तु कथं निर्वृतस्य सदात्मनः ॥ ३ ॥
अस्राक्षीत् भगवान् विश्वं गुणमय्याऽऽत्ममायया ।
तथा संस्थापयत्येतद् भूयः प्रत्यभिधास्यति ॥ ४ ॥

---

ईश्वर इत्युक्तम्[1] । तत्र चोदयति विदुर इत्याह—**ब्रह्मन्निति** । हे ब्रह्मन् शमदमादिगुणबृंहित चिन्मात्रस्य ज्ञानैकरसशरीरस्यात एव निर्गुणस्य सत्वादिगुणरहितस्यात एवाविकारिणो भगवतः ऐश्वर्यादि गुणसमुद्रस्य हरेः सत्वादिगुणाः तन्निमित्तजगत्सृष्ट्यादिक्रियाश्च कथं युज्येरन् ? न कथमपि उक्त-हेतोरित्यन्वयः । लीलया घटत इति तत्राह—**लीलयेति** । न हि कश्चिल्लीलया कंटकाग्रे पादं निक्षिपति । अपि तु प्रत्युत दूरादेव परिहरति । ऐश्वर्याद् युज्यत इत्यतः—**अपीति**[2] । निरनिष्टो-निरवद्यः ' इति श्रुतेर्गर्हितत्वात्[3] । करोति च अत इदं तत्त्वतो ब्रूहीति प्रश्नार्थः ॥ २ ॥

[4]लीलया वा न युज्यत इत्यत्र किं बाधकमत्राह-**क्रीडाया इति** । क्रीडासम्बन्धिसुखं क्रीडाया मुद् अर्हस्य अपूर्णसुखस्य यतो यस्मात् तस्मात् न घटत इति । तत्र कैमुत्यमाह–**कामेति**–यथेष्टं क्रीडितु-मिच्छापि अन्यतोऽरतितः तन्द्या संभवति । अन्येन समेन पुरुषेण वा सह । एतद् द्वयमप्याक्षिपति–**स्वत इति**—शब्दादिविषयनिमित्ततृप्तिमन्तरेण स्वभावेनैव अलंबुद्धिगोचरानन्दसमुद्रमग्नस्यात एव निर्वृतस्य रोमांचितगात्रस्यारत्यसम्भवात्[5] । सच्चासावात्मा च सदात्मा, तस्य । "सदेव सौम्येदमग्र आसीत्" 'आत्मा वा इदमेक एवाग्र आसीत्', 'एकमेवाद्वितीयम्' इत्यादिश्रुतेरसमत्वाच्च न पुरुषान्तरेण सह । क्रीडेच्छाया एवासंभवात् । किमुत लीलासंभव इति । सदा निर्वृतस्य आत्मन इति भिन्नं वा पदम् । समस्तगुणपूर्णत्वेन लीलाप्राप्यप्रयोजनानवकाशादित्यर्थः । तुना प्रकारान्तरं निवारयति ॥ ३ ॥

ननु हरेर्गुणैः सृष्ट्यादिक्रीडायां सत्यामियं चिन्ता, सैव नास्ति 'निष्क्रियम् .... ' इति श्रुतेः इति तत्राह—**अस्राक्षीदिति** । आत्ममायया स्वाधीनया प्रकृत्या । भूयः पुनः तया रजोरूपया अस्राक्षीत्, सत्वरूपया संस्थापयति, तमोरूपया तद् विश्वं प्रत्यभिधास्यति संहरिष्यतीत्यतो गुणक्रिया-संसर्गदर्शनान्ममायं संशय इत्यर्थः ॥ ४ ॥

---

[1] निर्गुणो हरिः सत्त्वादिगुणैरुपादानकारणैः जगत्सृष्ट्यादि करोतीत्युक्तमित्यभिप्रायः ।

[2] अत्र ऐश्वर्यादपि न युज्यत इत्युपस्कर्तव्यम् । [3] अवद्यात्मकगुणसंबन्धस्य इति शेषः ।

[4] लीलया वा न युज्यत इति कुतो बाधकात् अत्राह । इत्यभिप्रायः स्यात् ।

[5] स्वतः क्रीडादिसाधनमनपेक्ष्य तु विशेषेण तृप्तस्य पूर्णसुखस्य .... निर्वृतस्य अरतिशून्यस्य—इति यादुपत्यम् ।

देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः ।
अविलुप्तावबोधात्मा स युज्येताजया कथम् ॥ ५ ॥

भगवानेष एवैकः सर्वक्षेत्रेष्ववस्थितः ।
अमुष्य दुर्भगत्वं वा क्लेशो वा कर्मभिः कुतः ॥ ६ ॥

एतस्मिन् मे मनो विद्वन् खिद्यते ज्ञानसंकटे ।
तन्नः पराणुद विभो कश्मलं मानसं महत् ॥ ७ ॥

शुक उवाच —

स इत्थं चोदितः क्षत्त्रा तत्त्वजिज्ञासुना मुनिः ।
प्रत्याह भगवच्चित्तः स्मयन्निव गतस्मयः ॥ ८ ॥

---

इतोऽपि संशयो दुरुत्साद इत्याह— **देशत इति** । देशादिनिमित्तत्वेन[1] अवस्थातो जाग्रदाद्यवस्थानिमित्तेन स्वतोऽन्यतः परतः, अविलुप्तावबोधात्मा अविनष्टज्ञानस्वरूपो योऽसौ भगवान् सोऽजया प्रकृत्या कथं युज्येत ? युक्त्या गुणरूपप्रकृतिसंसर्गो न संभवति । दृश्यते तथा । तुच्छेनाभ्वपिहितमिति श्रुतेः । अतः संदेह इत्यर्थः ॥ ५ ॥

विदुरः प्रकारान्तरेण संशेत इत्याह—**भगवानिति** । नित्यनिरतिशयसकलैश्वर्यादियोगोऽस्ति हरेरित्याशयेनोक्तं भगवानिति । यथा देवदत्तस्य दुर्भगत्वम् ऐश्वर्यादिराहित्यम्, अविद्यास्थितरागद्वेषाभिनिवेशात्मकसंसारजन्यदुःखलक्षणक्लेशो वा दृश्यते, तथा दुर्भगसर्वक्षेत्रेषु सत्त्वादमुष्यापि तत्संसर्गः संभाव्यः । स न युज्यते । कुतः ? भगवत्त्वात् । अतः संशय इत्यर्थः ॥ ६ ॥

युक्तिज्ञानपूर्वकत्वादयं संशयः स्वयमेव श्लथितो भवतीत्याशङ्क्य ज्ञानदार्ढ्याभावात् स्थाणुवदवस्थानात् त्वयैव निर्मूलनीय इति भावेनाह—**एतस्मिन्निति** । ज्ञानसंकटे ज्ञानसंबाधे निश्चितज्ञानाभाव इत्यर्थः । पराणुद निराकुरु । 'मूर्छा तु कश्मलं मोहः' इत्यभिधानम् । सन्तः आत्मनि अल्पमपि दोषं महत्त्वेन भावयन्तीत्याशयेन महदित्युक्तम् । न तु तत्त्वेन । अत एव मानसं, न तु बुद्धिसंस्थम् ॥ ७ ॥

शुकस्तस्य परिहरतीत्याह—**स इति** । गतस्मयो गताहङ्कारः । स्मयन् मन्दं हसन्निव ॥ ८ ॥

---

[1] देशादिनिमित्तेनेति यावत् ।

मैत्रेय उवाच —

सेयं भगवतो माया न्याय्यं येन विरुध्यते ।
ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम् ॥ ९ ॥

यथाऽर्थेन विनाऽमुष्य पुंस आत्मविपर्ययः ।
प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः ॥ १० ॥

---

दुर्भगशरीरस्थस्यापि दुःखादिकर्दमास्पर्शो माहात्म्यातिशयादिनि परिहरति — **सेयमिति** ईश्वरस्यैश्वर्यमूर्तेर्हरेः कार्पण्यं दैन्यं विमुक्तस्य नित्यमुक्तस्यापि बन्धनं विरुध्यते प्रमाणतो युक्तितश्च विरुद्धमिति येन तेन तन्न्याय्यं न्यायोपेतमेव । कथम् ? सेयं भगवतो माया । अयं हि हरेर्महिमा[1] । 'यत् प्रमाणयुक्तिभ्यामुपपन्नं तत् परमार्थवस्तु । यत् ताभ्यां दुर्घटं तथापि प्रतीयते, शुक्तिरजतवत्, सा मायेत्यनुभवसिद्धम् इत्यभिप्रेत्य प्रश्नं परिहरति—**सेयमिति** । यत् येन न्यायेन विरुध्यते सा भगवतो माया अनिर्वाच्याऽविद्यालक्षणा इयमिति सर्वानुभवसिद्धत्वान्नापाकरणयोग्येति न्यायविरोधं दर्शयति ईश्वरस्येति' इत्येतद्भगवत इत्युक्त्याऽपहस्तितमिति ज्ञायते । तथाहि—समस्तैश्वर्यादिमतो भगवच्छब्दार्थत्वेन प्रमितत्वान्न तस्य कार्यकरणे मायापेक्षा । अशक्ता हि साल्वादयो मायामपेक्षन्ते । 'अशक्ताः सत्यसृष्टौ हि मायासृष्टिं वितन्वते' इति च । 'कथं देहे परो देवो न लिप्येतेह बन्धनैः । कथं न दुःखी स भवेद् दुःखी चेदीश्वरः कुतः' इत्यादि श्रुतिविरुद्धत्वादुक्त एवार्थ इति । प्राकृतदेहवत्त्वात् देवदत्तवन्मायायोगो घटत इतीयमाशङ्का अविलुप्तावबोधात्मेति वाक्यमवतारयता त्वयैव परिहृता, तदुक्तम्—'अलुप्तबोधरूपत्वान्नासौ प्राकृतदेहवान्' इति[2] । अत एव मायासृष्ट्याद्यर्थं तद्योग इति च न युक्तम् । 'यच्चिकेत सत्यमित् तन्न मोघं' इति सत्यत्वावधारणात् । एवमपि तदङ्गीकारे दानवमतप्रवेशः स्यात् । तदुक्तम्— 'न च सृष्ट्यादिकं भ्रान्तिर्भ्रान्तिवादा हि दानवाः । अतो भ्रान्त्यादिसंबन्धो नास्य क्वचन युज्यते' इति ॥ ९ ॥

तर्हि कस्य भ्रान्त्या संसार इत्याशङ्क्य प्रकृतिसंबन्धात्तया जीवस्यैव संसार इतीममर्थं सदृष्टान्तमाह—**यथेति** । अमुष्य पुंसो जीवस्य उपद्रष्टुः स्वप्नं पश्यतः अर्थेन विना प्रयोजनादृते स्वप्ने स्वशिरश्छेदनादिक आत्मविपर्ययः आत्मनो देहस्य विपर्ययो दृष्टश्रुतवासनयाऽविद्यमान एव प्रतीयते ।

---

[1] एतदनन्तरं 'दुर्भगातिशरीरस्थस्यापि तद्दोषास्पर्श एव तन्महिमेत्यर्थः' इत्यधिकं–घकोशे ।

[2] इतीयमाशंका अलुप्तबोधरूपत्वान्नासौ प्राकृतदेहवानिति वाक्यमवतारयता त्वयैव परिहृता अविलुप्तावबोधात्मेति–क,ग,घ,ङ,च,छ

यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः ।
दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः ॥ ११ ॥

स वै निवृत्ति[1]धर्मेण वासुदेवानुकम्पया ।
भगवद्भक्तियोगेन तिरोधत्ते शनैरिह ॥ १२ ॥

---

अत्रेदं तात्पर्यम्—अस्मिन् जन्मनि जन्मान्तरे वा शिरश्छेदः स्कन्धारोहणं वा दृष्टः श्रुतो व सन्नप्यैकाधिकरण्येन दर्शनं भ्रान्त्या दृश्यते । तद्दर्शनं न च प्रयोजनवत् । अत एवार्थेन विनेत्युक्तम् । न च तावता स्वप्नस्य मिथ्यात्वम् । अर्थक्रियाकारित्वात् । 'सूचकश्च हि श्रुतेराचक्षते च तद्विदः' इति सूत्रात् । निमित्तकारणेशेच्छानियतजीवोपादानकारणभूतमनोग[2]तवासनाजन्यत्वाच्चेति । वैदिकाधिकारविवक्षया पुंस इत्युक्तम् । स्वाधीनज्ञानाभावादुपद्रष्टुरिति ॥ १० ॥

यथा च जले चन्द्रप्रतिबिम्बस्य तत्कृतः जलचलनादिकृतः कम्पादिः जलगुणः असन्नपि द्रष्टुः पश्यतः पुरुषस्य दृश्यते । एवमेव आत्मनो जीवस्य तत्त्वज्ञानादीशेच्छयाऽनात्मनो देहस्य जननमरणादिगुणो 'जातोऽहम्' 'मृतोऽहम्'[3] इत्यादि प्रतीयते । अतः स्वतः द्रष्टुः ज्ञानादिरूपस्य जीवस्येशेच्छया तत्स्वातन्त्र्यस्वपारतन्त्र्याद्यज्ञानाज्जातया भ्रान्त्या संसारः, तस्माद् यथा जपाकुसुमसंपर्ककृतं स्फटिकलौहित्यं तथा प्रकृतिसंबन्धकृतः संसारः सत्य एव, नानिर्वाच्याविद्याजन्यत्वेन भ्रान्तिः । तदुक्तम् 'भ्रान्त्या जीवस्य संसारः' इति । स्वप्नस्य वासनाजन्यत्वेनास्पष्टत्वात् तद्दृष्टान्तेन संसारस्य सत्यत्वं दुष्प्रतिवादमिति द्वितीयदृष्टान्तकथनम् ॥ ११ ॥

ननु संसारस्य सत्यत्वे निवृत्त्यभावेन कदापि मोक्षो न स्यादिति तत्राह—**स वा इति** । इहजीवे दृश्यमानः । भगवद्भक्तियोगेन जातया वासुदेवानुकम्पया । 'यस्य प्रसादात्' इति श्रुतेः । तिरोधत्ते विलीयते । वा इत्यनेन 'ईशज्ञानाद्विलीयते' इति मानं दर्शयति । यथा गरुडध्यानाद् विषनाशः तथा[4] सत्यस्यापि नाशो घटत इत्यस्मिन्नर्थे वा । ईशस्वातन्त्र्याज्ञानादुत्पन्नकर्तृत्वाभिमानलक्षणभ्रान्तिविलयः ईशज्ञानाद् युज्यते । 'भ्रान्तिर्हि देहाभिमतिरीशज्ञानाद् विनश्यति' इति च । 'बहूनां जन्मनामन्ते' इति वचनाच्छनैरिति ॥ १२ ॥

---

[1] निवृत्त–च,छ,घ [2] उपादानकारणभूतजीवमनोगतेत्यर्थः । [3] कर्ताहम् इत्यधिकः पाठः च,छ,घ,ग
[4] 'इति'–क,च,छ,घ,ग

यदेन्द्रियोपरामार्थो दृष्टात्मनि परे हरौ ।
विलीयन्ते तदा क्लेशाः संसुप्तस्येव कृत्स्नशः ॥ १३ ॥

अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः ।
किं वा पुनस्तच्चरणारविन्दपरागसेवारतिरात्मलब्धा ॥ १४ ॥

विदुर उवाच —
संछिन्नः संशयो मह्यं तव सूक्तासिना विभो ।
उभयत्रापि भगवन्मनो मे सम्प्रधावति ॥ १५ ॥

---

[1]सर्वनामसंज्ञाभावात् पर इति। सर्वोत्तमे हरौ संसारकारणदुरितदूरीकरणसमर्थे भगवति दृष्टात्मनि अपरोक्षीकृतस्वरूपे सति । यदा इन्द्रियाणां विष्णुसमीपरमणाख्यपुरुषार्थो मुक्तिः तदा सर्वे क्लेशा विलीयन्ते । संसुप्तस्य सम्यक् सुप्तस्य जीवस्य सुप्त्यवस्थायां कृत्स्नशः क्लेशा यथा विलीयन्ते तथेत्यर्थः ॥ १३ ॥

क्लेशनिवृत्तौ कैमुत्यन्यायप्रदर्शनव्याजेन सुगमोपायं दर्शयति—**अशेषेति** । गुणानामनुवादयुक्तश्रवणम् । यद्वा गुणानामनुवादो येषु ते गुणानुवादा भागवतादयः तेषां श्रवणमेवाशेषसंक्लेशविनाशं करोति । किं पुनर्व्याख्यानमिति सिद्धत्वात् पृथङ् नोक्तम् । आत्मनि लब्धा तस्य मुरारेश्चरणारविन्दपरागसेवायां रतिः क्लेशशमं विधत्ते इति किं वा किं वक्तव्यम् । पुनरिति सन्देहं निवारयति । 'पुनरप्रथमे प्रश्ने व्यावृत्ताववधारणे' इति वचनात् । अनेन श्रवणमननव्याख्यानोपासनानामुत्तरोत्तरप्राबल्यमुपायान्तराभावश्चेति दर्शितम् ॥ १४ ॥

विदुरो मैत्रेयस्यावश्यवक्तव्यत्वे[2] तात्पर्यं जनयितुमुक्तार्थे वक्तव्यांशो नास्तीत्याह—**संछिन्न इति** । सूक्तमेवासिः खड्गः तेन। अत्र संशयपदेनान्यथाज्ञानं ग्राह्यम् । अन्यथोभयत्रेत्युत्तरार्धमनुपपन्नं स्यात् । अज्ञानं वा । 'शीङ् स्वप्ने' इति धातुजत्वात् 'स्वप्नस्त्वज्ञानशब्दोक्तो विपरीतमथापि वा' इति वचनात् । दुर्भगदेहस्थस्यापि[3] हरेस्तद्गतदुःखादिभोगः संभाव्यत इत्यन्यथाज्ञानं निरस्तमित्यर्थः । मह्यं ममेति व्यत्यासः चिरकालस्थायी न स्यादित्याशयेन कृतः । नन्वन्यथाज्ञानस्य च्छिन्नत्वात् किमुत्तरग्रन्थेनेति तत्राह—**उभयत्रेति** । उभयत्र देहाद्यहंममतादौ हरौ च अन्यथाज्ञाननाशादिदमदोवेति सन्देहो जायत इति भावः । अपिशब्दः समुच्चयार्थः ॥ १५ ॥

---

[1] विकल्पेनेत्यधिकपाठः–छ,घ [2] विदुरः स्वस्यावश्यवक्तव्यत्वे मैत्रेयस्य तात्पर्यं जनयितुं …….. इत्यभिप्रायः स्यात् । [3] अपीत्यधिकमिति भाति ।

साधु तद् व्याहृतं विद्वन्नात्ममायायनं हरेः ।
आभात्यपार्थं निर्मूलं विश्वमूलं न यद् बहिः ॥ १६ ॥

यश्च मूढतमो लोके यश्च बुद्धेः परं गतः ।
तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥ १७ ॥

अर्थाभावं विनिश्चित्य प्रतीतस्याप्यनात्मनः ।
तां चापि युष्मच्चरणसेवयाहं पराणुदे ॥ १८ ॥

---

असद्वचने नैशित्याभावात् तव संशयः किम् ? नेत्याह—**साध्विति** । हे विद्वन् ब्रह्मसाक्षात्कारयोग्यज्ञानवन् हरेरात्ममायायनं स्वरूपसामर्थ्याश्रयम् अयं हि भगवन्महिमेति यद् व्याहृतं त्वयोक्तं तत् साधु संशयनिरासनैशित्योचितम्[1] । आत्मेत्यनेन मायाशब्दस्येन्द्रजालाभिधेयत्वं दूरोत्सारितम् । यद्यप्येवं तथाप्यपार्थं प्रयोजनशून्यमत एव निर्मूलं पूर्वादृष्टमन्तरेण कारणान्तरशून्यं देहात्मत्वादि मनस्याभाति । विश्वमूलं ब्रह्म च मम ज्ञानाद् बहिर्न भवति । यद् यस्मात् तस्मादन्तरितः उभयभ्रष्ट इवास्मीतिशेषः ॥ १६ ॥

एतदेव स्पष्टयति—**यश्चेति** । लोके ब्रह्मणा सृष्टे जने यो मूढतमः अत्यन्तविवेकज्ञानशून्यः यश्च बुद्धेः प्रकृतेः परं ब्रह्म गतः तावुभौ मत्तवत् सुप्तवत् सुखमेधेते । अन्तरितस्तयोर्मध्यवर्ती जनः स्वप्नदर्शिवत् क्लिश्यति क्लेशं प्राप्नोति । तथाहमपि क्लिश्यामीत्यर्थः ॥ १७ ॥

त्वमन्तरितजनेष्वेकश्चेत् संशयानपगमेन मुक्तो न स्याः । 'तत्त्वसंशययुक्ता ये सर्वे ते निरयोपगाः' इति वचनादित्याशङ्क्य स्थाणुर्वा पुरुषो वेति सन्दिहानो यथाप्तवाक्याद् वक्रकोटरादिदर्शनाद् वा संशयप्रतीतिं पराहृत्य[2] स्थाणुरेवायं न पुरुष इति निश्चयज्ञानं प्रतिपद्यते तथाहमपि युष्मच्चरणसेवाप्रसन्नयुष्मदुपदेशादनात्मनो देहस्य सम्बन्धिनोऽहंममतादेः मोहात् सत्त्वेन प्रतीतस्यापि अर्थाभावं जीवस्वरूपपर्यालोचनया प्रयोजनाभावं विनिश्चित्य च उभयविषयां तां प्रतीतिं निरस्य पुरुषार्थोपयोगिज्ञानं लभ इत्यभिप्रायवानाह—**अर्थाभावमिति** । द्वितीयापिशब्देन सेवायाः प्राधान्यं वक्ति । चशब्दः संशयनिरास-निश्चयज्ञानलब्ध्योः समुच्चये वर्तते । पराणुद इत्यनेन नियतपरस्मैपदेनान्यथाप्रयुक्तेन[3] विद्यमानमपि अनुभवमन्यथा वदति विदुर इति सूच्यते । न च शूद्रयोनौ जातस्य यथार्थज्ञानमेव नास्तीति वाच्यम् । 'द्रोणद्रौणिकृपाः पार्था भीष्मो विदुरसंजयौ । ये चान्ये तत्र देवांशाः

---

[1] नैशित्योपेतमिति यावत् । [2] पराकृत्य—च [3] आत्मनेपदतया प्रयुक्तेनेत्यर्थः ।

यत्सेवया भगवतः कूटस्थस्य मधुद्विषः ।
रतिरासो भवेत् तीव्रः पादयोर्व्यसनार्दनः ॥ १९ ॥

दुरापा ह्यल्पतपसः सेवा वैकुण्ठवर्त्मसु ।
यत्रोपगीयते नित्यं देवदेवो जनार्दनः ॥ २० ॥

सृष्ट्वाऽग्रे महदादीनि सविकाराण्यनुक्रमात् ।
तेभ्यो विराजमुद्धृत्य तमनु प्राविशद् विभुः ॥ २१ ॥

---

सम्यक् तत्त्वापरोक्षिणः' इति वचनात् सम्यक्तत्त्वापरोक्षित्वात् । तर्ह्यनृतभाषित्वेन दोषित्वमापन्नमिति चेन्न । पृष्टमेव वक्तव्यं नापृष्टमिति अपृष्टार्थप्रवचनोपरमार्थत्वेन गुणत्वात् । 'आत्मनस्तु गुणाभावं वदतो नत्वसत्यता । अपृष्टस्य दमार्थं च गुणायैव भवत्यपि ' इति वचनात् ॥ १८ ॥

श्रीनारायणचरणारविन्दनिषेवा संसारव्यथानिरासकत्वेन पुरुषार्थोपयोगिनी स्यात् किमस्मच्चरण-सेवा करिष्यतीति शङ्का माभूदित्याह—**यत्सेवयेति** । येषां हरिस्वरूपद्रष्टॄणां युष्माकं सेवया भगवतः पादयोः तीव्रः पटुतरो रतिरासो रतिरूपा क्रीडा रतिलक्षणो रागो वा भवेदित्यन्वयः । मधुद्विष इत्यनेन हरेर्बहिरेवावस्थानं प्रतीयते । तन्निरासार्थं कूटस्थस्येति । चेतनाचेतनराशिनियाम-कत्वेन तदन्तस्थस्य क्रोधादिविकारबाह्यस्य वा[1] ॥ १९ ॥

पूर्वसञ्चितपुण्यैरेव भवादृशानां महतां सेवा लभ्या नान्यैरित्याह—**दुरापेति** । वैकुण्ठस्य वर्त्म ज्ञानोपदेशमार्गो येषां तेषु महत्सु सेवा । हिशब्द एवार्थे । दुष्प्रापत्वे निमित्तमाह—**यत्रेति** । यत्र येषां भवादृशानां परिसरे । भगवद्विमुखानां जनार्दनप्रसंगो दुःसह इति यस्मादतस्तत्कथा-प्रसङ्गकेषु सत्सु दुःसहत्वेन सेवा दुरापेत्यर्थः । जनो जननमुपलक्षणं मरणं चार्दयति नाशयतीति जनार्दनः । अर्द हिंसागत्योरिति धातुः ॥ २० ॥

विदुरो विशेषं श्रोतुं श्रुतमनुवदति—**सृष्ट्वेति** । अग्रे जगदादौ षोडशविकारास्तैः सहितानि, तेभ्यो महदादिभ्यः अण्डं सृष्ट्वाऽण्डान्तर्वर्तिविराजब्रह्माणमुद्धृत्य सृष्ट्वा तं ब्रह्माणं अनु प्राविशत् । तत्त्वप्रवेशानन्तरं ब्रह्मप्रवेश इति ज्ञापनायान्विति । विभुर्व्यासः ॥ २१ ॥

---

[1] इत्यर्थ इत्युपस्कर्तव्यम् ।

यमाहुराद्यं पुरुषं सहस्राङ्घ्र्यूरुबाहुकम् ।
यत्र विश्व इमे लोकाः सविकाराः समासते ॥ २२ ॥

यस्मिन् दशविधः प्राणः सेन्द्रियार्थेन्द्रियस्त्रिवृत् ।
त्वयेरिता यतो वर्णास्तद्विभूतीर्वदस्व नः ॥ २३ ॥

यत्र पुत्रैश्च पौत्रैश्च नप्तृभिः सह गोत्रजैः ।
प्रजा विचित्राकृतय आसन् याभिरिदं ततम् ॥ २४ ॥

प्रजापतीनां स पतिश्चक्लृपे कान् प्रजापतीन् ।
सर्गांश्चैवानुसर्गांश्च मनून् मन्वन्तराधिपान् ॥ २५ ॥

एतेषामपि वंशांश्च वंशानुचरितानि च ।
उपर्यधश्च ये लोका भूमेर्मित्रात्मजासते ।
तेषां संस्थां प्रमाणं च भूर्लोकस्य च वर्णय ॥ २६ ॥

---

नन्वन्तर्बहिर्व्यासस्य परिच्छिन्नयोग्यः प्रवेशः कथमित्याशङ्क्य तत्तद्वस्तुपरिमितरूपग्रहणेन सुकर इति भावेनाह—**यमाहुरिति** । यत्र यस्मिन् पुरुषे । इमे पातालादयः ॥ २२ ॥

यस्मिन् ब्रह्मान्तर्यामिणि पुरुषे 'प्राणापानौ तथा व्यानस्तथोदानसमानकौ । नागः कूर्मोऽथ-कृकलदेवदत्तधनञ्जयाः' इति दशविधः, सेन्द्रियार्थैन्द्रियः इन्द्रियार्थैः शब्दादिभिश्चक्षुरादीन्द्रियैश्च सहितः त्रिवृद् ओजःसहोबलरूपः, वर्तत इति शेषः । श्रुतमनूद्य वक्तव्यांशं प्रार्थयते—**त्वयेरिता इति** । त्वया ये ब्राह्मणादिवर्णा यतो ब्रह्मान्तर्यामिणः सृष्टा ईरिताः तद्विभूतीस्तेषां वर्णानां तस्य ब्रह्मान्तर्यामिणश्च विभूतीः नोऽस्माकं वदस्व यथा ज्ञातुं शक्यन्ते तथा ब्रूहीत्यन्वयः । 'भासनोपसंभाषा-ज्ञानयत्नविमत्युपमन्त्रणेषु वदः' इत्यात्मनेपदम् ॥ २३ ॥

यत्र येषु वर्णेषु जातैर्नप्तृभिः पुत्रपौत्रैर्विचित्राकृतयः परस्परव्यावृत्तलक्षणोपेताकाराः । विभु-र्ब्रह्मा विराजं ब्रह्माण्डं जलादुद्धृत्यावकाशवत् कृत्वानुप्राविशदिति प्रतीतार्थं परित्यज्याप्रतीतार्थाङ्गीकारे किं नियामकम्? सृष्टिश्च ब्रह्मण इति प्रसिद्धिरिति चेन्न । 'ब्रह्माणं प्राविशद् विष्णुः सहस्राक्षः सहस्र-पात्' । 'अनुप्रविश्य ब्रह्माणं प्राणं दशविधं तथा । इन्द्रियाणीन्द्रियार्थांश्च वर्णांश्चैवासृजद्धरिः' इति प्रमाणद्वयेन नियतत्वादज्ञरूढेः दुर्बलत्वाच्च ॥ २४ ॥

आसते तिष्ठन्ति । संस्थां व्यवस्थाम् ॥ २६ ॥

तिर्यङ्मानुषदेवानां सरीसृपपतत्रिणाम् ।
वद नः सर्गसंव्यूहं गर्भस्वेदद्विजोद्भिदाम्[1] ॥ २७ ॥

गुणावतारैर्विश्वस्य सर्गस्थित्यप्ययात्मनः ।
सृजतः श्रीनिवासस्य व्याचक्ष्वोदारविक्रमम् ॥ २८ ॥

वर्णाश्रमविभागांश्च रूपशीलस्वभावतः ।
ऋषीणां जन्मकर्माणि वेदस्य च विकर्षणम् ।
यज्ञस्य च वितानानि योगस्य च पथः प्रभो ॥ २९ ॥

नैष्कर्म्यस्य च सांख्यस्य तन्त्रं वा भगवत्स्मृतम् ।
पाषण्डपथवैषम्यं प्रतिलोमनिवेशनम् ॥ ३० ॥

---

सरीसृपाः सर्पादयः सहस्रपादादयो वा । सर्गसंव्यूहं सृष्टिविस्तारम्[2] । गर्भजस्वेदजोद्भिदामिति वा पाठः । अस्मिन् पक्षे पुनरुक्तिर्नास्ति ॥ २७ ॥

ब्रह्मान्तर्यामिणो विभूतीर्वदस्वेत्युक्तं विशेषतः प्रार्थयते—**गुणावतारैरिति** । सर्गस्थित्यप्ययात्मनो विश्वस्य जगतोऽर्थे सृजतः आत्मानमिति शेषः । ज्ञानादिगुणयुक्तावतारैः सत्त्वादिगुणनिमित्तावतारैर्वा । 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्' इत्यादेः । वीर्यादि[3]गुणप्रकाशैर्वा । श्रीनिवासस्योदारविक्रमं प्रख्यातचरितं व्याचक्ष्वेत्यन्वयः । 'उदारो महति ख्याते' इत्यभिधानम् । सर्वस्मादिदं श्रीहरिचरितं विस्तृत्य वदेत्यतो व्याचक्ष्वेति । श्रिया सह निवासोऽस्यास्तीति श्रीनिवासस्तस्य । अनेन द्वावेतौ नित्यमुक्ताविति श्रुतिः सूच्यते । श्रीर्निवसत्यस्मिन्निति वा । 'अकर्तरि च कारके संज्ञायाम्' इति घञ् ॥ २८ ॥

रूपतः शीलतः स्वभावतः । विकर्षणं विभागम् । यज्ञस्य वितानानि विस्तारान् । योगस्याष्टाङ्गयोगस्य पथः मार्गान् ॥ २९ ॥

नैष्कर्म्यस्य सांख्यस्य मोक्षसाधनज्ञानस्य, स्मृतं प्रणीतं, तन्त्रं शास्त्रम् । पाषण्डपथवैषम्यं पाषण्डमार्गोत्पत्तिविशेषम् । 'गुणानां विषमावस्था संभवः परिकीर्तितः । साम्यं तु प्रलयो ज्ञेय इति तत्त्वविदो विदुः' इति वचनात् । यद्वा पाषण्डपथस्य पापलिङ्गमार्गस्या[4]धर्मस्य सकाशाद् बुद्धिवैषम्यम् ।

---

[1] द्भिजां–ङ,च,घ,छ [2] इतःपरं 'गर्भस्वेदद्विजोद्भिजां गर्भजानां जरायुजां स्वेदजानां मत्कुणादीनां द्विजानामण्डजानां पक्षिणां उद्भिजां स्थावराणां' इत्यधिकः पाठः–च,घ,ङ [3] विद्यादि–च

[4] अयं घ,च पाठः । अन्यत्र पाषण्डस्य पापलिङ्गस्येति पाठः ।

जीवस्य गतयो याश्च यावतीर्गुणकर्मजाः ।
धर्मार्थकाममोक्षाणां निमित्तान्यविरोधतः ॥ ३१ ॥

वार्ताया दण्डनीतेश्च श्रुतस्य च विधिं पृथक् ।
श्राद्धस्य च विधिं ब्रह्मन् पितॄणां सर्वमेव च ॥ ३२ ॥

ग्रहनक्षत्रताराणां कालावयवसंस्थितिम् ।
दानस्य तपसो वापि यच्चेष्टापूर्तयोः फलम् ॥ ३३ ॥

प्रवासस्थस्य यो धर्मो यश्च पुंस उतापदि ।
येन वा भगवांस्तुष्येद् धर्मयोनिर्जनार्दनः ॥ ३४ ॥

सम्प्रसीदति वा येषामेतदाख्याहि मेऽनघ ।
अनुव्रतानां शिष्याणां पुत्राणां च द्विजोत्तम ॥ ३५ ॥

अनापृष्टमपि ब्रूयुर्गुरवो दीनवत्सलाः ।
तत्त्वानां भगवंस्तेषां कतिधा प्रतिसंक्रमः ॥ ३६ ॥

---

प्रतिलोमनिवेशनं ब्राह्मणादिकन्यकानां क्षत्रियादिविवाहलक्षणम् ॥ ३० ॥

यावतीर्यावत्यः, तावतीरितिशेषः । सत्वादिगुणकर्मभ्यो जाताः । निमित्तानि साधनानि । अविरोधतः परस्पराविरोधेन ॥ ३१ ॥

वार्ताया वाणिज्यादेः । दण्डनीतेः अर्थशास्त्रोक्तस्य राजधर्मस्य । श्रुतस्य श्रुत्युक्तस्य । विधिं प्रकारम् ॥ ३२ ॥

ग्रहाः सूर्यादयः । नक्षत्राण्यश्विन्यादीनि । तारा ध्रुवादयः । कालावयवानां परमाण्वादीनां संस्थितिः । इष्टं यागादि । पूर्तं तडागखननादि ॥ ३३ ॥

धर्मात् पुण्यात् योनिराविर्भावलक्षणोत्पत्तिर्यस्य स तथा । धर्मस्य योनिः कारणं वा, लोक-संग्राहकत्वेन कर्तेत्यर्थः ॥ ३४ ॥

प्रतिसंक्रमः प्रलयः ॥ ३६ ॥

तत्रेमं क उपासीरन् क उ स्विदनुशेरते ।
पुरुषस्य च संस्थानं स्वरूपं वा परस्य च ॥ ३७ ॥

ज्ञानं च नैगमं यत् तद् गुरुशिष्यप्रयोजनम् ।
निमित्तानि च तस्येह प्रोक्तान्यनघ सूरिभिः ॥ ३८ ॥

स्वतो ज्ञानं कुतः पुंसां भक्तिर्वैराग्यमेव वा ॥ ३९ ॥

एतान् मे पृच्छतः प्रश्नान् हरेः कर्मविवित्सया ।
ब्रूहि मेऽन्धस्य मित्रत्वादजया नष्टचक्षुषः ॥ ४० ॥

सर्वे वेदाश्च यज्ञाश्च तपोदानानि चानघ ।
जीवाभयप्रदानस्य न कुर्वीरन् कलामपि ॥ ४१ ॥

---

तत्र प्रलये इमं हरिम् । उना हृत्तापं सूचयति । प्रश्नप्रतिवचनपर्यन्तं सोऽस्तीति । 'उ तापेऽव्ययमीशाने'[1] इति यादवः । चेत्यस्मिन्नर्थे वा । पुरुषस्यावतारसंस्थानम् । परस्य परमात्मनः स्वरूपम् । अवतारेष्वपि निजावताराः क इत्यर्थः । यद्वा पुरुषस्य जीवस्य एकत्वादिविषयम् । परस्य मुक्तस्य स्वरूपम् । "मुक्तिर्हित्वाऽन्यथा रूपं स्वरूपेण व्यवस्थितिः" इति वक्ष्यति ॥ ३७ ॥

गुरुशिष्ययोः प्रयोजनं व्याख्यानश्रवणाभ्यां नैशित्यनिश्चयलक्षणम् । यद्वा गुरुशिष्यौ प्रयोजयतीति वा । नैगमं वेदान्तजन्यं ज्ञानम् । इह शास्त्रे । तस्य ज्ञानस्य यानि निमित्तानि साधनानि तान्यपि ॥ ३८ ॥

पुंसां स्वतः[2] साधनानि विना ज्ञानं कुतो भवेत् ? भक्तिर्वैराग्यं वा कुतः, स्यातामिति शेषः ॥ ३९ ॥

कर्म विवित्सया वेत्तुमिच्छया, पृच्छत इति शेषः । वक्तव्यत्वे निमित्तमाह—**मित्रत्वादिति** । 'आपत्सु मित्रं जानीयात्' इति वचनात् । का तव आपदिति तत्राह—**अजयेति** । अजया प्रकृत्या । पुरुषस्यान्धत्वादधिकापन्नास्तीत्यर्थः । अन्धकारेण नष्टचक्षुःशक्तेः पुंसो यथा मित्रः सूर्यः प्रयोजकः तथा त्वमपीति भावेनोक्तम्—**मित्रत्वादिति** ॥ ४० ॥

त्वदभीष्टत्वे कुत एतदेव वक्तव्यमन्यत् किं न स्यात् ? अत्राह—**सर्व इति** । जीवाभयहेतुज्ञानप्रदानस्य कलां षोडशीम् । अपिना वेदादिज्ञातृप्रवक्तृपुरुषमन्तरेणेति सूचयति ॥ ४१ ॥

---

[1] ईशे च—ङ ।  [2] स्वतः उपदेशाभावे—इति या दुपस्यम् ।

श्रीशुक उवाच —

**स इत्थमापृष्टपुराणकल्पः कुरुप्रधानेन मुनिप्रधानः ।**
**प्रवृद्धहर्षो भगवत्कथायां संचोदितस्तं प्रहसन्निवाह ॥ ४२ ॥**

इति श्रीमद्भागवते तृतीयस्कन्धे अष्टमोऽध्यायः ।

अथ नवमोऽध्यायः

मैत्रेय उवाच —

**सत्सेवनीयो बत पूरुवंशो यल्लोकपालो भगवत्प्रधानः ।**
**बभूविथेहाजितकीर्तिमालां पदे पदे नूतनयस्यभीक्ष्णम् ॥ १ ॥**

**सोऽहं नृणां क्षुल्लसुखाय दुःखं महद् गतानां विरमाय तुभ्यम् ।**
**प्रवर्तये भागवतं पुराणं यदाह साक्षाद् भगवान् ऋषिभ्यः ॥ २ ॥**

---

शुकः पृष्टेन मैत्रेयेण पृष्टमेवोक्तमन्यद् वेति परीक्षितो हार्दां शङ्कां परिहरति—**स इत्थमिति** । प्रश्नाख्यपुराणविषयः कल्पः विकल्पः । 'कल्पो न्याये सुरद्रुमे विकल्पे च' इति यादवः । बालकथाप्रश्नवद् बह्वी कथैव, सारभूता न भगवत्कथा पृष्टेति मन्दाशङ्कां परिहरति—**भगवत्कथायामिति** । अनेन सर्वेऽपि प्रश्नाः भगवत्कथाविषया इति सूचितं भवति ॥ ४२ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे अष्टमोऽध्यायः ॥

अस्मिन्नध्याये सर्वजीवोत्तमहिरण्यगर्भसृष्ट्यभिधानेन हरेः सर्वोत्तमत्वमाहात्म्यमवधृतमतस्तज्ज्ञानमवश्यमापाद्यं मुमुक्षुभिरिति निरूप्यते । तत्रादौ प्रश्नान् परिहरिष्यन् तं विदुरं मानयन् स्वस्य पुराणावगतिप्रकारं कथयति—**सत्सेवनीय इति** । बतानुकम्पायाम् । यद् यस्मिन् पूरोर्वंशे भगवानेव प्रधानः सर्वोत्तमो यस्य स तथा, लोकपालस्त्वम् । लिङ्ग लोकविडम्बनार्थं गर्भवासानुभवं परोक्षयति । भगवत्प्रधानत्वं प्रकाशयति—**इहेति** । इह लोकेऽजितस्य हरेः कीर्तिपुष्पमालां नूतनयसि नवां करोषि यस्मात् तस्मादित्यध्याहार्यौ ॥ १ ॥

अधुना प्रश्नप्रतिवचनं प्रतिजानीते—**सोऽहमिति** । योऽहं कृष्णेन तव ज्ञानोपदेशायादिष्टो यश्च मम ज्ञानमुपदिशेति त्वया प्रार्थितः सोऽहं क्षुल्लसुखायाल्पसुखाय महद्दुःखगानां नृणां दुःखस्य

आसीनमुर्व्यां भगवन्तमाद्यं सङ्कर्षणं देवमकुण्ठसत्वम् ।
विवित्सवस्तत्त्वमतः परस्य कुमारमुख्या मुनयोऽन्वपृच्छन् ॥ ३ ॥

स्वमेव धिष्ण्यं बहुमानयन्तं यं वासुदेवाभिधमामनन्ति ।
प्रत्यक्धृताक्षाम्बुजकोषमीषदुन्मीलयन्तं विबुधोदयाय ॥ ४ ॥

स्वर्धुन्युदारैः स्वजटाकलापैरुपस्पृशन्तश्चरणोपधानम् ।
पद्मं यदर्चन्त्यहिराजकन्याः सप्रेम नानाबलिभिर्वराहाः ॥ ५ ॥

---

विरमाय निर्मूलनाय साक्षात् सङ्कर्षणो भगवान् सनत्कुमारादिभ्यः ऋषिभ्यः यदाह तद् भागवतं पुराणं त्वत्प्रश्नपरिहारत्वेन प्रवर्तय इत्यन्वयः ॥ २ ॥

सूचितमाप्तिमूलत्वं प्रपञ्चयति—**आसीनमुर्व्यामिति** । उर्व्यां पाताले त्रिलोकीविवक्षया भूमिपदेन पातालाभिधेयत्वं[1] युक्तम् । अतः सङ्कर्षणात् परस्य हरेस्तत्त्वं विवित्सवः ज्ञातुकामाः कुमारमुख्या मुनयः उर्व्यां पाताले विस्तृतायां बृस्यां आसीनं, आद्यं सनकादिभ्यः पूर्वजातं, देवं श्रीहरिस्तुत्यामेव प्रकाशमानं अकुण्ठसत्वम् अप्रतिबद्धज्ञानशक्तिम् । न कुण्ठो यस्य तदकुण्ठं सत्वं वैष्णवस्वभावो यस्य सोऽकुण्ठसत्वस्तमिति वा । सङ्कर्षणं भगवन्तम् अन्वपृच्छन्नित्यन्वयः ॥ ३ ॥

भगवदुपास्तिमन्तरेणान्यो व्यापारोऽस्य नास्तीति तादृशैर्विशेषणैस्तं विशिनष्टि—**स्वमेवेति** । प्रेक्षावन्तो यं वासुदेवाभिधमामनन्ति तं स्वं सदानन्दरूपं स्वतन्त्रं वा धिष्ण्यं स्थानमाधारं भगवन्तमेव बहुमानयन्तं भक्त्योपासमानम् । पुनरपि कीदृशम् ? प्रत्यगात्मनि स्वान्तर्यामिणि धृतमाहितम् अक्षाख्यमम्बुजकोशं विबुधानामुदयाय ईषदुन्मीलयन्तं विकसितं कुर्वाणम् । अनेन " संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् " इति वचनादवनतजनानुग्रहायोन्मीलनमन्यदा न युक्तमित्युपास्तावित्थं भावो दर्शितः । 'आधार आश्रयो धिष्ण्यं निधानं चाभिधीयते' इति वचनात् ' धिष्ण्यौ शुक्रानिलौ[2]-धिष्ण्यमृक्षे स्थाने बले गृहे' इत्युक्त शुक्रादिकं न ग्राह्यमनुपयोगात्, वासुदेवाभिधमित्युक्तत्वाच्च ॥ ४ ॥

पथिकसार्थप्रश्नवन्नायं प्रश्नः अवश्यं ज्ञातव्यत्वेनेति बहुमानं वक्ति[3]—**स्वर्धुन्युदारैरिति** । सप्रेमेति क्रियाविशेषणम् । अहिराजकन्याः नानाबलिभिर्बहुविधपूजासाधनैर्यत्पद्ममर्चयन्ति[4] । वरार्हाः वरप्राप्तियोग्याः इत्यनेनोत्तमभर्तृप्राप्तये पूजेति सूच्यते । स्वर्धुन्या भागीरथ्या उदस्य उदकस्य आरा

---

[1] पातालमिधानमित्यर्थः । [2] शुक्रानलौ—च,घ,ङ [3] अस्या अवतारिकाया अभिप्रायो मृग्यः ।
[4] अर्चन्ति—च

मुहुर्गृणन्तो वचसानुरागस्खलत्पदेनास्य कृतानि तज्ज्ञाः ।
किरीटसाहस्रमणिप्रवेकप्रद्योतितोद्दामफणासहस्रम् ॥ ६ ॥

प्रोक्तं किलैतद् भगवत्तमेन निवृत्तिधर्माभिरताय तेन ।
सनत्कुमाराय स चाह पृष्टः सांख्यायनायाङ्गधृतव्रताय ॥ ७ ॥

सांख्यायनः पारमहंस्यमुख्यो विवक्षमाणो भगवद्विभूतीः ।
जगाद सोऽस्मद्गुरवेऽन्विताय पराशरायाथ बृहस्पतेश्च ॥ ८ ॥

प्रोवाच मह्यं सदयालुरुक्तो मुनिः पुलस्त्येन पुराणमाद्यम् ।
सोऽहं तवैतत् कथयामि वत्स श्रद्धालवे नित्यमनुव्रताय ॥ ९ ॥

---

स्नानलक्षणा प्राप्तिर्येषां ते स्वर्धुन्युदारास्तैः । ऋ गताविति धातोर्घञ् प्रत्यये आर इति रूपम् । यद्वा स्वर्धुन्या अवगाहेन उदारैर्महद्भिः 'उदारो दातृमहतोः' इत्यभिधानम्[1] । एवं विधैः स्वजटा-कलापैस्तस्य सङ्कर्षणस्य चरणयोरुपधानं पीठायमानं तत्पद्ममुपस्पृशन्तः यावत्प्रसादं स्पृष्ट्वा नमन्त इत्यर्थः ॥ ५ ॥

नमस्कारस्याष्टाङ्गविशिष्टत्वं सूचयतीत्याह—**मुहुर्गृणन्त इति** । अस्य शेषस्य कृतानि कर्माणि अनुरागेण भक्त्या स्खलन्ति पदानि यस्मिंस्तत् तथोक्तं तेन वचसा, तज्ज्ञाः नमनप्रकारं जानन्त[2] इत्यर्थः । देवाः किरीटाद्यलङ्कारवन्तः श्रूयन्ते । कोऽस्यालङ्कारो येन देवमित्युक्तिः सार्था स्यादिति तं विशिनष्टि—**किरीटेति** । सहस्रमेव साहस्रं किरीटानां साहस्रे प्रत्युप्तानां मणीनां प्रवेकैः श्रेष्ठैः प्रद्योतितं प्रकाशितम् उद्दामम् उत्कृष्टं च फणानां सहस्रं यस्य स तथोक्तस्तम् ॥ ६ ॥

तेन सङ्कर्षणेन सनत्कुमाराय प्रोक्तम् इदं पुराणं त्वत्प्रश्नपरिहारत्वेन वक्ष्यामीत्येतावता पूर्णत्वात् सांख्यायनायेत्यादिकथनेन किं प्रयोजनमित्याशङ्क्य पुराणाध्येतृगुरुपरम्पराकथने श्रोतॄणां आस्त्यति-शयबुद्ध्या तच्छ्रवणादौ क्षिप्रं निरन्तरं प्रवृत्तिः स्यादिति महाप्रयोजनमस्तीति सूचयन्नाह — **प्रोक्तमित्यादिना** । निवृत्तिधर्माभिरतत्वादिकं पुराणश्रवणाधि[3]कारसंपत्त्यर्थमुच्यत इति ज्ञातव्यम् ॥ ७, ८, ९ ॥

---

[1] 'उदारो महति ख्याते' इति यादवः–च,छ,ङ,ग

[2] अयं छ,ग पाठः । अन्यत्र तु 'नमन प्रकारं कर्म प्रचारं च जानन्तः' इति ।

[3] श्रवणाद्यधिकार–च,छ

उदप्लुतं विश्वमिदं तदासीद् यन्निद्रया[1] मीलितदृङ् न्यमीलयत् ।
अहीन्द्रतल्पेऽधिशयान एकः कृतक्षणः स्वात्मरतावनीहः ॥ १० ॥

सोन्तःशरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाणः ।
उवास तस्मिन् सलिले पदे स्वे यथाऽनलो दारुणि रुद्धवीर्यः ॥ ११ ॥

चतुर्युगानां च सहस्रमप्सु स्वपंस्तयोदीरितया स्वशक्त्या ।
कालाख्ययाऽऽसादितकर्मतन्त्रो लोकानपीमान् ददृशे स्वदेहे ॥ १२ ॥

---

तदेवं शुकः पाद्मं कल्पमिमं शृण्वित्युक्त्वा पाद्मं कल्पं मैत्रेयेण विदुरप्रश्नपरिहाररूपत्वेन कथयति—**उदप्लुतमिति** । अनीहोऽक्लिष्टकारी । अनः प्राणोऽस्यास्तीति अनी प्राणी तदर्थमीहा चेष्टावतारादिचरितं यस्य सोऽनीहः । उपरतसर्गादिव्यापारो वा । स्वात्मनि रतौ कृतक्षणः लब्धावसरः अहीन्द्रस्यानन्तस्य तल्पे भोगाख्यशय्यायामेकोऽधिशयानो यद् यदा मीलितदृक् विनिद्रोऽपि निद्रामीलितलोचनो न्यमीलयत् योगनिद्रामुद्रितनेत्रः अभूत्, तदेदं विश्वं उदप्लुतं उदे जले प्लुतं गतं मग्नं कल्पप्रलये जलशायिश्रीनारायणोदरगतमासीदित्यर्थः ॥ १० ॥

तदोदरीकृतलोकयात्रो हरिः किं चकारेति तत्राह—**सोऽन्तरिति** । यथाऽनलो दारुणि काष्ठे रुद्धवीर्यः प्रतिबद्धदाहकत्वशक्तिर्वसति तथा हरिरपि शरीरान्तर्हृदयाकाशे[2]ऽर्पितानि स्थूलकार्यदेहस्य लीनत्वाद् भूतानां सूक्ष्माणि रूपाणि यस्य स तथा । यद्वा भूतसूक्ष्माणि[3] शब्दादितन्मात्रारूपाणि एतदात्मकत्वात् सर्वस्येति चराचरात्मकं सर्वं गृह्यते । कालात्मिकां प्रलयकालमात्राख्यां[4] शक्तिम् । यद्वा प्रलयकालाभिमानिनीं शक्तिं भार्यां सुखे प्रेरयन् स्वे पदे स्वस्थाने सलिले उवासेत्यन्वयः । उदीरयाणः उदीरयमाण[5] इति शानचा स्वात्मनीति सूचयति ॥ ११ ॥

स्वापावधिमाह—**चतुर्युगानामिति** । चशब्देनोवासेति पदमनुकर्षति । चतुर्युगानां सहस्रमिति संख्यातं कालं स्वपन्नप्सूवासेति । तत उत्तरकाले का क्रियाऽभूदिति तत्राह—**तयेति** । सृष्टिसंहारशक्त्योरेकत्वद्योतनाय तयेति परामृष्टम् । सृष्टिकालाख्ययोदिरितया प्रेरितया स्वशक्त्यासादितकर्मतन्त्रः सृष्ट्यर्थमुपस्थापितजगत्सर्गादृष्टाख्यसाधनः, नित्यज्ञानगोचरत्वात् इमान् लोकान् स्वदेहे

---

[1] निद्रयाऽमीलितदृक् इत्यपि पाठः । अमीलितदृक् विनिद्रोऽपि न्यमीलयत् नेत्रे निमीलितवान्—इति यादुपत्यम् । [2] उदराकाश इत्यर्थः । अखिलं जठरे निधायेति वचनात् । [3] अयं ग,घ पाठः । अन्यत्र नास्ति । [4] अस्याभिप्रायो मृग्यः । [5] उदीरयमाण इति ग,घ,ङ कोशेषु नास्ति ।

**तस्यात्मसूक्ष्माभिनिविष्टदृष्टेरन्तर्गतोऽर्थो रजसा तनीयान् ।**
**गुणेन कालानुगतेन विद्धः शुष्यंस्तदाऽभिद्यत नाभिदेशात् ॥ १३ ॥**

**स पद्मकोषः सहसोदतिष्ठत् कालेन कर्मप्रतिबोधितेन ।**
**स्वरोचिषा तत् सलिलं विशालं विद्योतयन्नर्क इवात्मयोनिः ॥ १४ ॥**

---

हृदयाकाशे ददर्श । अपिशब्दात् त्रिविधानपश्यदिति[1] ग्राह्यम् । दृष्ट्वा सिसृक्षुरभूदिति वा । अपीतानित्यपपाठः[2] ॥ १२ ॥

सिसृक्षोस्तस्मादादौ किमुदभूद् येन तद्विशेषणोपादानं प्रयोजकं स्यादिति तत्राह[3]—**तस्येति** । यदा सिसृक्षुरभूत् तदा अर्थो गर्भोदकलक्षणः तस्य हरेर्नाभिदेशात् अभिद्यत नाभिदेशं भित्त्वा प्राकाशते[4]त्यन्वयः । हरेः स्वातन्त्र्यद्योतनार्थं भावप्रयोगः[5] । हरेः सृज्येष्वशेषविशेषज्ञानमस्ति न केवलं कुलालवद् युक्तिज्ञानमेवेति भावेनाह—**आत्मेति** । आत्मनि स्थितेषु सूक्ष्मेषु योगिप्रत्यक्षविषयेषु आकाशादिभूतेषु इन्द्रियेषु जीवेषु वा अभिनिविष्टा सम्यक् विषयीकृता दृष्टिरपरोक्षज्ञानं यस्य स तथा तस्य । घटकारणादिवद् बाह्यार्थो नेत्याह—**अन्तर्गत इति** । अनेनाऽभूत[6]स्योदरे सत्त्वमुक्तं भवति । इतोऽपि बाह्योदकं नेत्याह—**तनीयानिति**[7] । परमाणुत्वं प्राप्तः । गर्भोदकस्य प्रागेव सत्त्वात् किमिति कार्यानुत्पत्तिरिति तत्राह—**रजसेति** । रजसा गुणेन विद्धः अनुस्यूतः । रजसोऽपि सत्त्वात् किमिति ततः पूर्वमनुत्पत्तिरित्यतः—**कालेति** । सृष्टिकालशक्त्या अनुन्न[8] इत्यनुत्पन्न इति भावः[9] । अनेनेश्वरस्येच्छा मुख्यं कारणमित्युक्तं भवति । वायुमन्तरेण कथमुत्पत्तिर्घटत इत्यत उक्तम्—**शुष्यन्निति** । शुष्यन् घनीभवन् वायुनेति शेषः । 'उदकं वायुना शुष्यद् भिन्नं पद्ममभूद्धरेः' इति ॥ १३ ॥

उक्तकारणानां बहुत्वात् किमस्य मुख्यं कारणं किं चास्य नामधेयमिति तत्राह—**स पद्मकोष इति** । लयोदकं विनान्यस्य वस्तुनोऽभावादनिरूपितत्वेनैतद्दर्शनात् सहसेत्युक्तम् । आत्मा विष्णुर्योनिर्मुख्यं कारणं यस्य स आत्मयोनिः । कर्मणा अदृष्टेन प्रतिबोधितेन फलदानाय प्रेरितेन कालेनेरित

---

[1] दृष्ट्वा सचेतनगणात् .... इति महाभारततात्पर्यनिर्णयोक्तरीत्या त्रिविधान् जीवानित्यभिप्रायः स्यात् ।
[2] श्रीधरीयोऽयमपपाठः । [3] अस्या अवतारिकाया अभिप्रायो मृग्यः । [4] प्राकाश्यत—च,छ,घ,ङ ।
[5] अर्थे नाभिद्यत इति भावे प्रयोगे कर्तव्ये अर्थोऽभिद्यत इति विलक्षणभावप्रयोगः कर्तृवाचकतृतीयाभावात् अर्थस्यास्वातन्त्र्यं हरेश्च स्वातन्त्र्यं द्योतयतीति भावः । [6] अनेनोद्भूत—च,ङ [7] अतनीयान् गर्भोदकरूपः स्थूलोऽर्थः—इति याउुपस्यम् । [8] अयं च,ङ पाठः । अन्यत्र 'अनुत्पन्नः' । [9] रजोगुणः कालेनानुन्नः इति हेतोः अर्थः पूर्वमनुत्पन्न इति भावः ।

**तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत् सर्वगुणावभासम् ।**
**तस्मिन् स्वयं वेदमयो विधाता स्वयंभुवं यं स्म वदन्ति सोऽभूत्॥ १५॥**

---

इति शेषः । उदतिष्टत् यथा चतुर्दशभुवनं स्यात् तथा प्रवृद्धोऽभूदित्यर्थः ॥ १४ ॥

चेतनसम्बन्धमन्तरेणाचेतनस्य पद्मस्य सूर्यवत् प्रकाशकत्वं कथम् ? मण्यादीनामीश्वरेच्छया तेजःपरमाणूनां प्राचुर्येण संयोगसंभवात् कथंचिद् युज्यते । अस्य तु रजसेति पार्थिवपरमाणुभ्य उत्पत्तिकथनात् तेषां तादृशशक्त्यदर्शनात् । अतः कारणान्तरेण भाव्यम् । तत् किम् ? तत्राह—**तल्लोकेति** । यस्मात् पद्ममभूत् स एव विष्णुस्तल्लोकविभागकारणं पद्मं प्राविशत् । यथा सूर्यवत् प्रकाशकत्वमाहात्म्यं स्यात् तथाविष्टवान् । उकारेण रूपान्तरेण प्रवेशं सूचयति । एवकारेणाणुमात्रमपि भेदो नास्तीति निर्धारयति । भेददर्शनेन सन्तापलक्षणं दुःखं स्यादित्यर्थवाची वोकारः । 'उ तापेऽव्ययमीशाने[1]' इति यादवः । विष्णोरेव प्रकाशकत्वं न पद्मस्य तस्य पृथिव्यात्मकत्वादिति भावेनाह—**सर्वेति** । सर्वेषां शब्दादिगुणानामवभासः प्रतीतिर्यस्यां पृथिव्यां सा सर्वगुणावभासा । तदात्मकत्वात् पद्ममपि गुणावभासमित्युच्यते । तदुक्तम्—'तस्यासनविधानार्थं पृथिवी पद्ममुच्यते' इति । तत्प्रवेशप्रयोजनमाह—**तस्मिन्निति** । तस्मिन् पद्मे सन्निविष्टात् स्वयं प्रधानात् सर्वोत्तमाद्धरेः स विधाताऽभूदित्यन्वयः । 'प्रधानवाचकस्त्वेकस्त्वनन्यः केवलः स्वयम्' इति । अतः स्वयं शब्दस्य प्रधानवाचित्वेपि विष्णोर्जातत्वं कथमवगतमितीयं शङ्का—'पद्मसंस्थाद्धरेस्तत्र ब्रह्माजनि चतुर्मुखः' इत्यनेन परिहर्तव्येति । ननु विधातेति क इति तत्राह—**स्वयंभुवमिति** । अनेनाजत्वमपि व्याख्यातम् । आत् विष्णोर्जात इति । पद्मे स्वयं सम्भूत इति च प्रत्युक्तम् । उक्तप्रमाणात् । अन्यथा जनिकर्तुः प्रकृतिरिति सूत्रविरोधश्च[2] । सर्वस्याग्रे हरेर्जातश्चतुर्मुख इति निश्चंतु तस्य नामान्तरं ध्वनयति—**वेदमय इति** । मय गताविति धातोर्वेदेन गम्य[3] इति वेदमयः । लक्ष्मीनारायणावन्तरेण वेदप्रतिपाद्येषु प्रधानत्वात् वा । 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' इति श्रुतिः । 'यो वै ब्रह्माणं विदधाति पूर्वम्' इति च । पद्मभूतत्वमपि पद्मस्थितविष्णुभूतत्वमेवार्थ[4] इत्यङ्गीकर्तव्यम् ॥ १५ ॥

---

[1] ईशे च—ङ [2] सूत्रविरोधोपपादनक्रम आलोचनीयः । [3] गम्यते—छ,ग

[4] अर्थ इत्यधिकमिति भाति ।

**तस्यां स चाम्भोरुहकर्णिकायामवस्थितो लोकमपश्यमानः ।**
**परिक्रमन् व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानि ॥ १६ ॥**

**तस्माद् युगान्तश्वसनावघूर्णमहोर्मिचक्रात् सलिलाद् विरूढम् ।**
**अपाश्रितः कञ्जमु लोकतन्त्रं नात्मानमद्धाऽविददादिदेवः ॥ १७ ॥**

**क एष योऽसावहमब्जपृष्ठ एतत् कुतो वाऽब्जमनन्यदप्सु ।**
**अस्ति ह्यधस्तादिह किञ्चनैतदधिष्ठितं यत्र सतानुभाव्यम्[2] ॥ १८ ॥**

---

नन्वत्र जातः स्वयंभूर्विष्णुः स्यात् स्वभूरिति प्रसिद्धेः न ब्रह्मा । विष्णोः पद्मप्रवेशाच्चेति तत्राह—**तस्यामिति** । लोकं पृथिव्यादिकं स्वेतरं जनं वाऽपश्यमानः विवृत्तनेत्रः पर्यस्तलोचनः । अत्र जातो ब्रह्मैव भवेत् तस्य चतुर्मुखत्वोक्तेः ॥ १६ ॥

इतोऽपि ब्रह्मैवोच्यत इत्याह—**तस्मादिति** । युगान्तश्वसनः प्रलयवायुः तेनावघूर्णं क्षुब्धं महतीनामूर्मीणां चक्रं मण्डलं यस्मिन् तत्तथा तस्मात् सलिलाद् विरूढम् उत्पन्नं लोकतन्त्रं पृथिव्यादि-लोकनिर्माणकारणं कञ्जं पद्मम् उ एव । आदौ उत्पन्नो देवः आदिदेवः आत्मानं स्वं परमात्मानं चाद्धा प्रत्यक्षं नाविदत् न ज्ञातवान् । अनेन विष्णुः स्वयं ब्रह्मा समभूदित्याशङ्का परिहृता । तस्या-ज्ञानासंभवात् । 'अद्धा प्रत्यक्षसत्ययोः'[1] इति यादवः ॥ १७ ॥

ब्रह्मणः संशयप्रकारं दर्शयति[3]—**क एष इति** । योऽसावब्जपृष्ठे निषण्णः एषोऽहं कः ? अप्स्वनन्यत् प्रधानमेतदब्जं कुत उत्पन्नम् ? कारणाभावे च पद्मलक्षणकार्यस्याप्यसम्भवात् केनचित् कारणेन भवितव्यमिति युक्त्या निरचिनोद् ब्रह्मेत्याह—**अस्तीति** । हिशब्दोऽवधारणार्थः । इह जले अधोदेशे किञ्चन पृथिव्यादिविलक्षणं कारणं वस्तु अस्ति ह्येव । एतत्पद्मं यत्राधिष्ठितं तत् कारणं पृथिव्याद्यन्यतमं न स्यात् तेषामनुत्पन्नत्वात् । अतो ब्रह्मैव मूलकारणमिति परिशिष्टमाह—**सतेति** । सता ब्रह्मणा अनुभाव्यमनुभवसिद्धत्वेनाङ्गीकार्यमित्यर्थः । 'स ब्रह्माचिन्तयत् कुतो नु पद्मं ब्रह्मणः स्यात्' इति श्रुतेः । कुतो नु पद्ममिति सन्दिह्य ब्रह्मण उत्पन्नं स्यादिति निश्चितवानित्यर्थः । अनेन चतुर्मुखस्याज्ञानं क्षणिकम्, जीववन्न स्वरूपसम्बद्धं, दुर्बलदृष्टिभिः नृभिः कल्प्यमानं मध्यन्दिनार्कक्षो-भवदिति ज्ञायते ॥ १८ ॥

---

[1] तुल्ययोः—ङ [2] 'नु भाव्यम्' इति पाठान्तरम् । सता अनुभाव्यम्, सता नु भाव्यम्—इति द्वेधापि च्छेदोऽनन्ततीर्थसम्मतः । [3] कथयति—च

स इत्थमुद्वीक्ष्य तदब्जनालनालीभिरन्तर्जलमाविवेश ।
नार्वाग्गतस्तत्खरनालनालीः स वै विचिन्वंस्तदविन्दताजः ॥ १९ ॥

तमस्यपारे विदुरात्मसर्गं विचिन्वतोऽभूत् सुमहांस्त्रिनेमिः ।
यो देहभाजां भयमीरयाणः परिक्षिणोत्यायुरजस्य हेतिः ॥ २० ॥

ततो निवृत्याप्रतिलब्धकाष्ठः स्वधिष्ण्यमास्थाय पुनः स देवः ।
शनैर्जितश्वासनिवृत्तचित्तो न्यषीददारूढसमाधियोगः ॥ २१ ॥

---

युक्त्या ज्ञातपद्मकारणो ब्रह्मा पुनः किमकार्षीदिति तत्राह—**स इत्थमिति** । इत्थं परिशिष्ट-प्रमाणेन उद् ब्रह्म 'तस्योदिति नाम' इति श्रुतेः वीक्ष्यालोच्य तस्याब्जस्य नालस्य दण्डस्य नालीभिः नाडीभिः सुषिरैः । ततश्च किम् ? तत्राह—**नेति** । खरनालस्य पद्मस्य नालसम्बन्धिनीर्नालीर्विचिन्वन् अन्विच्छन् मार्गमाण इत्यर्थः । तत्कारणं नाविन्दत चक्षुर्विषयं न लब्धवान् ॥ १९ ॥

भगवत्प्रसादमन्तरेण पुरुषायुषेणापि तद्दर्शनं दुःशकं तादृङ्माहात्म्योपेतत्वादिति तत्कालस्यानेक-संख्यया[1] विशिष्टत्वमाह—**तमसीति** । अपारे अनवसाने तमसि स्वरूपाच्छादकमायालक्षणान्धकारे भो विदुर[2] आत्मनः सर्गो यस्मात् स आत्मसर्गः तं स्वकारणम् । तिस्रो नेमयश्चातुर्मास्यलक्षणा यस्य स त्रिनेमिः । अजस्य विष्णोर्हेतिः चक्राख्यः ॥ २० ॥

एतद् दर्शनमपि न स्वप्रयत्नेन साध्यं किन्तु तत्प्रसादेनैव । तत्प्रसादश्च तत्समाधियोगेनेति तं करवाणीति[3] तदुपास्तिप्रकारं कथयति[4]—**तत इति** । अप्रतिलब्धा अदृष्टा काष्ठा उत्कर्षो ब्रह्मलक्षणो येन स तथा अदृष्टस्वकारणब्रह्मरूप इत्यर्थः । ततो निर्मार्गणात्[5] । स्वधिष्ण्यं पद्ममास्थायारुह्य शनैः प्राणं कुम्भके निरुध्य जितश्वासो भूत्वा विषयेभ्यो निवृत्तचित्तः सन् आरूढसमाधियोगः असम्प्रज्ञातचित्तैकाग्र्यलक्षणध्यानः पद्मकर्णिकायां चैलाजिनलक्षणायां न्यषीदत् स्वनासाग्रावलोकनोऽतिष्ठदित्यन्वयः । पुनः शश्वन्निरन्तरमित्यर्थः ॥ २१ ॥

---

1 अनेकसंख्याविशिष्टत्वं नाम दीर्घत्वम् । 2 भो विदुरेति च,छ,घ पाठः, अन्यत्र नास्ति ।
3 इतःपरं-ब्रह्मा विचिन्त्य तथा कृतवानिति मैत्रेयः—इत्युपस्कर्तव्यम् । 4 दर्शयति–च ।
5 ततोऽतिमार्गणात्–ग ।

कालेन सोऽजः पुरुषायुषाभिप्रवृद्धयोगेन विरूढबोधः ।
स्वयं तदन्तर्हृदयेऽवभातमपश्यतापश्यत यन्न पूर्वम् ॥ २२ ॥

मृणालगौरायतशेषभोगपर्यङ्क एकं पुरुषं शयानम् ।
फणासहस्रायुतमूर्धरत्नद्युभिर्हतध्वान्तयुगान्ततोये ॥ २३ ॥

प्रेक्षां क्षिपन्तं हरितोपलाद्रेः सन्ध्याभ्रनीवेरुरुरुक्ममूर्ध्नः ।
रत्नोदधेरोषधिसौमनस्यवनस्रजो वेणुभुजाङ्घ्रिपाङ्घ्रेः ॥ २४ ॥

---

योगफलमाह—**कालेनेति** । पुरुषायुषा शतवर्षावधिना कालेन तत्कारणमपश्यतेत्यन्वयः । उपासनाजनितज्ञानफलमिदं दर्शनमिति भावेनाह—**प्रवृद्धेति** । अनुदिनं चन्द्रोदयेन समृद्ध[1]समुद्रवत् प्रवृद्धयोगेन प्रकर्षेण समृद्धेन[2] ध्यानापरपर्यायोपासनया विरूढबोधः समुत्पन्नापरोक्षज्ञानः । तदपि स्वप्रसादेनेति[3]भावेनाह— **अन्तर्हृदय इति** । अवभातं प्रकाशितम् । स्वयं प्रधानम् । अनेन तस्मिन् स्वयमित्युक्तत्वात् ब्रह्मोत्पादकमेवापश्यन्नान्यदिति सिद्ध्यति । अवभातमिति विशेषणं विशिनष्टि —**अपश्यतेति** । पूर्वं पद्मनालनिर्मार्गणसमये यन्नापश्यत् तदिति शेषः । आत्मनेपदप्रयोगेण ममेयमेवेष्टदेवता नान्येति ध्वनयति ॥ २२ ॥

कीदृशं हरिमपश्यदित्याशङ्क्य नवभिः श्लोकैस्तं विशिनष्टि —**मृणालेति** । फणानां सहस्राणां अयुतेषु अविमिश्रितेत्रेषु अन्योन्यसम्पर्करहितेषु मूर्धसु औत्पत्तिकानां रत्नानां द्युभिर्द्युतिभिर्हतं नष्टं ध्वान्तं यस्य तद्धतध्वान्तं तच्च युगान्ततोयं हतध्वान्तयुगान्ततोयं तस्मिन् कल्पप्रलयजलस्थिते मृणालगौरायतशेषभोगपर्यङ्के शेषस्यानन्तस्य नागस्य भोगो देहः शेषभोगः । अहेः शरीरं भोगः स्यादित्यभिधानम् । मृणालवद्गौर[4]श्चायतश्च मृणालगौरायतः सचासौ शेषभोगश्च मृणालगौरायतशेषभोगः । स एव पर्यङ्कः शयनीयं तस्मिन् शयानम् । पुरुषं पुरुषाकारम्, एकं केवलम् अप्राकृतमित्यर्थः ॥ २३ ॥

ध्यानसौकर्याय नीलपर्वतसाधर्म्येण वर्णयति—**प्रेक्षामिति** । हरितोपलाद्रेः नीलपर्वतस्य प्रेक्षां दर्शनीयकान्तिं क्षिपन्तं निराकुर्वन्तम् । कीदृशस्य नीलगिरेः ? सन्ध्याभ्रनीवेः सन्ध्याकालीनाभ्रमेव नीविर्वस्त्रं यस्य स तथा तस्य । उरूणि बहूनि रुक्माणि सुवर्णानि मूर्ध्नि शृङ्गे यस्य स तथा तस्य । रत्नैरुदधिस्तस्य रत्नाकरस्येत्यर्थः[5] । ओषधयः सौमनस्यानि सुमनसां समूह एव वनस्रक् वनमाला यस्य

---

[1] संवृद्धेति स्यात् । [2] वृद्धेनेति स्यात् । [3] विष्णुप्रसादेनेत्यर्थः । [4] गौरवर्ण–घ

[5] रत्नैरुदधिरिव रत्नोदधिः, तस्य रत्नाकरस्य नीलगिरेरित्यर्थः ।

आयामतो विस्तरतः समानदेहेन लोकत्रयसंग्रहेण ।
विचित्रदिव्याभरणांशुकानां कृतश्रियोपाश्रितदिव्यवेषम् ॥ २५ ॥
पुंसां स्वकामाय विविक्तमार्गैरभ्यर्चतां कामदुधाङ्घ्रिपद्मम् ।
प्रदर्शयन्तं कृपया नखेन्दुमयूखभिन्नाङ्गुलिचारुपत्रम् ॥ २६ ॥
मुखेन लोकार्तिहरस्मितेन परिस्फुरत्कुण्डलमण्डितेन ।
शोणायितेनाधरबिम्बभासा प्रत्यर्हयन्तं सुनसेन सुभ्र्वा ॥ २७ ॥

---

स तथा तस्य । वेणव एव भुजा यस्य, अङ्घ्रिपा वृक्षा एवाङ्घ्रयो यस्य स तथा तस्य । अनेन हरिरपि नीलद्युतिदेहः पीताम्बरधरः सुवर्णकिरीटालङ्कृतमूर्धा कौस्तुभरत्नकन्धरः वनमालाञ्चितो दीर्घदोर्दण्डमण्डितः प्रणतार्तिहारिश्रीपादपद्म इत्युत्प्रेक्षितं भवति । सन्ध्याभ्रवन्नीविर्यस्येत्यादिव्याख्यानं प्रेक्षां क्षिपन्तमित्यनेनानन्वितं स्यात् ॥ २४ ॥

लोकत्रयं संगृह्णातीति लोकत्रयसङ्ग्रहस्तेन आयामतो विस्तरतः दैर्घ्यपरिमण्डलाभ्यां समानेन न्यग्रोधपरिमण्डलत्वादिलक्षणवता देहेन विचित्रदिव्याभरणाद्यानां कृतश्रिया पूर्णश्रिया उपाश्रितः समाश्रितः दिव्य औत्पत्तिकः वेषः सौन्दर्यं यस्य स तथा तम् । यद्वा आभरणादीनां कृतश्रिया उपगम्याश्रितः सेवितो दिव्यवेषो यस्य स तथा तमिति ॥ २५ ॥

कामं दोग्धीति कामदुघं तच्चाङ्घ्रिपद्मं पुंसां प्रदर्शयन्तमित्यन्वयः । नन्वेवं तर्हि किमिति सर्वे पुरुषार्थभाजो नाभूवन्निति तत्राह—**स्वकामायेति**[1] । विचिर्[2] पृथग्भाव इति धातोर्विविक्तैर्वैदिकादिभेदेन पृथक् कृतैर्मार्गैरभ्यर्चतां यथाभिमुखो भवति तथार्चनं कुर्वताम् । नखा एवेन्दवः तेषां मयूखाः रश्मयस्तैर्भिन्ना इतरेतरविलक्षणा अङ्गुलयः ता एव चारूणि पत्राणि यस्याङ्घ्रिपद्मस्य तथा तत् । अज्ञजनबुद्ध्यारोहार्थम् एवमुक्तम् । स्वत इतरपद्मविलक्षणमिदमङ्घ्रिपद्ममित्यर्थः ॥ २६ ॥

मुखेन प्रत्यर्हयन्तं शरणागतजनान् सम्मानयन्तमिवस्थितमितिशेषः । लोकार्तिहरस्मितेनेत्यादिना मुखं विशिनष्टि । अधरबिम्बभासा शोणायितेन रक्तवद्वर्तमानेन, सुनसेन शोभमाननासिकेन, सु शोभना भ्रूर्यस्य तत् सुभ्रु तेन सुभ्र्वा । नपुंसकखलपू[3]शब्दवदयं शब्दः ॥ २७ ॥

---

[1] स्वकामायेति प्रतीकस्थाने विविक्तमार्गैरभ्यर्चतामिति प्रतीकधारण अवतारिका व्याख्या च संगच्छतः ।

[2] अयं क,छ,घ पाठः । अन्यत्र विविक्

[3] सुवालु–क,छ,घ । सुबल–ग

कदम्बकिञ्जल्कपिशङ्गवाससा स्वलङ्कृतं मेखलया नितम्बे ।
हारेण चानन्तधनेन वत्स श्रीवत्सवक्षस्थलवल्लभेन ॥ २८ ॥

परार्घ्यकेयूरमणिप्रवेकपर्यस्तदोर्दण्डसहस्रशाखम् ।
अव्यक्तमूल भुवनाङ्घ्रिपेन्द्रमहीन्द्रभोगैरधिवीतवल्कम् ॥ २९ ॥

चराचरौको भगवन्महीध्रमहीन्द्रबन्धुं सलिलोपगूढम् ।
किरीटसाहस्रहिरण्यशृङ्गमाविर्भवत्कौस्तुभरत्नगर्भम् ॥ ३० ॥

---

किञ्जल्कः केसरः । कदम्बेति तत्पुष्पम् । मेखला काञ्ची । अनन्तधनेनेति हारस्यानर्घ्यत्वं वक्ति । हे वत्स विदुर । श्रीवत्सलक्षणस्य वक्षस्थलस्य वल्लभेन प्रियेण ॥ २८ ॥

अधुना वृक्षसाधर्म्येण हरिं वर्णयति—**परार्घ्येति** । परार्घ्यैरनर्घ्यैः केयूरैः, मणीनां प्रवेकाः श्रेष्ठाः येषु तैः कङ्कणैश्च पर्यस्तं परितो न्यस्तमलंकृतं दोर्दण्डसहस्रमेव शाखा यस्य स तथोक्तम्। अव्यक्तं प्रधानं त्रिगुणं मूले पादे यस्य स तथा तम् । प्रकृतेः कारणं वा । 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इति वचनात् । अविज्ञाताधःप्रदेशमिति वा । 'प्रधानेऽव्यक्तमव्यक्तो ब्रह्मण्यस्पष्टमूर्खयोः' इति यादवः । भुवनेषु विद्यमानानाम् अङ्घ्रिपाणां वृक्षाणाम् इन्द्रम्[1] । यद्वा चतुर्दशभुवनाख्यांघ्रिपाणामिन्द्रं श्रेष्ठम् । अहीन्द्रस्य शेषस्य भोगैः शरीरविशेषैरधिवीतवल्कं संवीतत्वचम् । उभयत्र सममिदम् ॥ २९ ।

पुनरपि पर्वतसाधर्म्येण वर्णयति—**चराचरौक इति** । भगवन्महीध्रं श्रीनारायणाख्यपर्वतमपश्यदित्यन्वयः । चराचरस्य जगतः ओको मन्दिरम् । 'ओकसी मन्दिराश्रयौ' इति च । प्रलयसलिले उपगूढम्[2] । किरीटानां सहस्राण्येव हिरण्यशृङ्गाणि यस्य स तथा तम् । कण्ठे आविर्भवन्कौस्तुभरत्नगर्भं प्रकाशमानं कौस्तुभं कुस्तुभात्समुद्राज्जातं तन्नामरत्नं गर्भं आभरणं यस्य स तथा तम् । 'गर्भो पचारके तुन्दे नेपथ्ये प्रसितेऽपि च' इत्यभिधानम् ॥ ३० ॥

---

[1] अंघ्रिपेभ्य इन्द्रः श्रेष्ठः अंघ्रिपेन्द्रस्तम् । पुरुषोत्तमशब्दवत्समासः । [2] अयं घ पाठः । अन्यत्र—प्रलयसलिलेन ।

**निवीतमाम्नायमधुव्रताश्रयस्वकीर्तिमय्या वनमालया हरिम् ।**
**सूर्येन्दुवाय्वग्न्यगमत्त्रिधामभिः[1] परिक्रमत्प्राधनिकैर्दुरासदम् ॥ ३१ ॥**
**तर्ह्येव तन्नाभिसरःसरोजमात्मानमम्भः श्वसनं वियच्च ।**
**ददर्श देवो जगतो विधाता नातः परं लोकविसर्गदृष्टिः ॥ ३२ ॥**
**स्वकर्मबीजं रजसोपरक्तः प्रजाः सिसृक्षन्नियदेव दृष्ट्वा ।**
**अस्तौद् विसर्गाभिमुखस्तमीशमव्यक्तवर्त्मन्यभिवेशितात्मा ॥ ३३ ॥**

इति श्रीमद्भागवते तृतीयस्कन्धे नवमोऽध्यायः ।

---

आम्नाया एव मधुव्रताः भृङ्गास्तेषामाश्रयया स्वरूपकीर्तिमय्या वनमालया निवीतं संवीतं, कण्ठ इति शेषः । इयन्तं कालम् अमुक्तं शबलं ब्रह्म ब्रह्मा ददर्श, न नित्यमुक्तं निर्गुणमिति तत्राह—**सूर्येति** । त्रिधाम्नो विष्णोरगच्छद्भिः नित्यं तत्समीप एव तिष्ठद्भिर्मुक्तैः सूर्येन्दुवाय्वग्निभिर्वृतम् । अत्र व्यत्यासादादिशब्दप्रक्षेपो ज्ञातव्यः । सूर्येन्दुवाय्वग्न्यादिभिरित्याचार्यवचनाच्च । परिक्रमद्भिः प्रदक्षिणं कुर्वद्भिः प्राधनिकैः प्रधानस्य हरेर्भृत्यैः[2] पुरपालकैश्च कृतमिति शेषः । तदुक्तम्[3] 'मुक्त-वाय्वादिभिर्विष्णुं वृतं ब्रह्मा ददर्श ह' इत्यादि विशिष्टवचनाच्च । दुरासदमित्यनेनापि मुक्तैर्निषेवितं विष्णुमपश्यदिति गम्यते ॥ ३१ ॥

अनेनैतच्च लब्धमित्याह—**तर्हीति** । यदैवंविधं हरिमपश्यत् तर्हि तदैव नाभिसरसि उत्पन्ने सरोजे स्थितमात्मानं स्वम् । ब्रह्मणो[4] लोकविसर्गदृष्टिः लोकेन ज्ञानेन विशिष्टमुक्तस्वभावो येषां सूर्यादीनां ते लोकविसर्गाः तेषां दर्शनं, लोके विसर्गाः सृष्टिरहिता लयोदकवाय्वादय एव तेषां दर्शन-मभूत् । अतः एतद्दर्शनात् परं अन्यद्दर्शनं नाभूत् । मुक्तसूर्यादिकं प्रलयजलादिकमेव ब्रह्मा ददर्श परं न ददर्शेत्युक्तं भवति । यद्वा लोकस्य ज्ञानस्य विसर्गस्य सृष्ट्यादिव्यापारशून्यस्य निर्गुणस्य दृष्टिरतः परं न भवति । इदमेव निर्गुणदर्शनमिति भावः ॥ ३२ ॥

यदर्थमहं हरिणा सृष्टः तत् कर्तुं तदनुग्रहमन्तरेण न शक्नोम्यतः स्तुत्या तं प्रसाद्य तत्कटाक्षे-धितज्ञानवीर्योऽभीष्टं कार्यं शुश्रूषालक्षणं करोमीति भावेन तं स्तौतीत्याह—**स्वकर्मबीजमिति** । स ब्रह्मा

---

[1] अगमत्त्रिधामभिः—इति पाठान्तरम् । त्रिधाम्नो न विद्यते गमो गमनं येषां ते अगमत्त्रिधामाः तैः—इति यादुपत्यम् । [2] प्राधानिकैरिति तात्पर्यपाठं स्वीकृत्यैवं व्याख्यातम् । प्राधनिकैरिति तात्पर्यपाठे भगवत्सेनाभूतैरित्यर्थः । [3] तदुक्तमित्यधिकमिति भाति । इत्यादिविशिष्टवचनेन, दुरासदमित्यनेनापि मुक्तैर्निषेवितं विष्णुमपश्यदिति गम्यत इत्यभिप्रायः स्यात् । [4] ब्रह्मण इत्यध्याहृत्य लोकविसर्गदृष्टिरिति-पदं द्वेधा व्याख्याय अभूदिति शेषः कृतः ।

अथ दशमोऽध्यायः

**ब्रह्मोवाच —**

**ज्ञातोऽसि मेऽद्य सुचिरान्ननु देहभाजां**
**न ज्ञायते भगवतो गतिरित्यवद्यम् ।**
**नान्यत् त्वदस्ति भगवन्नपि तत्त्वशुद्धं**
**मायागुणव्यतिकराद् यदुरुर्विभासि ॥ १ ॥**

---

तमीशमस्तौदस्तौषीदित्यन्वयः । कीदृशम् ? स्वकर्मबीजं सृष्टौ स्वनिमित्तकारणादृष्टस्य व्यञ्जकम् । कीदृशो ब्रह्मा ? रजसा गुणेन उपरक्तः । उपरागफलमाह—**प्रजा इति** । सृष्टिसाधनमियदम्भआदिकं दृष्ट्वा विसर्गाभिमुखः विविधसृष्ट्यभिमुखः । अव्यक्तवर्त्मनि ब्रह्मलक्षणमार्गे अभिनिवेशितात्मा निर्विषयाविष्टमनाः[1] ॥ ३३ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे नवमोऽध्यायः ॥

अथ दशमोऽध्यायः

ब्रह्मणः स्तुतिप्रकारोऽस्माकमपि श्रवणगोचरः किमिति मनःशङ्का माभूदिति भावेन तत्स्तुतिप्रकारं कथयति—**ज्ञातोऽसीत्यादिना** । नन्वित्यवधारणार्थोऽनुनयार्थो वा । मे ननु मम सुचिरात् तप आद्यनुनयेन अद्य ज्ञातोऽसि । नन्वेवं मे अव्यक्तस्वभावस्य ज्ञानं कथं घटत इति तत्राह—**देहभाजामिति** । भगवतो गतिः स्वरूपं देहभाजामनुनयेन न ज्ञायत इति यत् तदवद्यं दुष्टम् । अतः अव्यक्तस्वभावोऽपि भक्त्यादिसाधनसामग्र्या ज्ञायत एवेत्यर्थः । ननु तर्हि कस्मात् सर्वे पुरुषार्थभाजो नाभूवन्नित्यस्येदमेवोत्तरम् । तव गतिर्न ज्ञायत इत्यत्र अवद्यं पापं कारणं नन्वित्यर्थः । देहभाजामिति स्वस्वामिसम्बन्धज्ञापनाय षष्ठी[2] । स्वस्वामिभावज्ञानाभावात् न ज्ञायत इति भावः । ननु स्वव्यतिरिक्तवस्तुनोऽसत्त्वान्न ज्ञायत इति किं न स्याद् ? अत्राह—**नेति** । त्वदन्यद् वस्तु अस्ति । स्वतो नास्ति त्वदधीनसत्ताकत्वात् । 'द्रव्यं कर्म च कालश्च' इत्यादेः । तर्हि तेन ज्ञायेतेति तत्राह—**तदिति** । तुशब्दो भेदेऽवधारणे वा । त्वत्तो भिन्नं तज्जगदशुद्धं सदोषमेव । अतः सदोषत्वान्निर्दोषो भवान् न ज्ञायत इत्यर्थः । त्वदन्यस्य सदोषत्वं भवतो निर्दोषत्वं च कथम् ? अत्राह—**मायेति** । मायायाः प्रकृतेः

---

[1] अयं घ पाठः । निर्विषयनिविष्टमनाः–ङ । अन्यत्र–'निर्विषयान्निविष्टमनाः' । विषयेभ्यः प्रत्याहृतं मनो यस्य स इत्यर्थः । [2] अस्याभिप्रायस्तु मृग्यः ।

रूपं यदेतदवबोधरसोदयेन
शश्वन्निवृत्ततमसः सदनुग्रहाय ।
आदौ गृहीतमवतारशतैकबीजं
यन्नाभिपद्मभवनादहमाविरासम् ॥ २ ॥

नातः परं परम यद् भवतः स्वरूप-
मानन्दमात्रमविकारमविद्धवर्चः ।
पश्यामि विश्वसृजमेकमविश्वमाद्यं
भूतेन्द्रियात्मकमदस्त उपाश्रितोऽस्मि ॥ ३ ॥

---

सत्त्वादिगुणानां व्यतिकराद् विकाराज्जातेषु महदादितत्त्वेषु अन्तर्यामिरूपैरवतारैश्च उरुर्बहुत्वसंख्या-विशिष्टो विभासीति यत् तस्मादितरत् सर्वं सदोषं त्वं निर्दोष इत्यतो विभासीत्युक्तम्[1] । अत्र यत् स्वनानात्वं तदपि स्थानभेदादसदेव भाति । 'एकोऽपि स्थाननानात्वान्नानेव हरिरीयते । सर्वान्तर्यामिणस्तस्य न भेदो विद्यते क्वचित्' इति वचनात् ॥ १ ॥

इतोऽपि वाङ्मनसागोचरं भगवतः स्वरूपमित्येतदवद्यमित्याह— **रूपमित्यादिश्लोकद्वयेन** । अवबोधरसोदयेन अपरोक्षज्ञानरससमुद्रेकेण शश्वन्निवृत्ततमसः नित्यनिरस्तप्रकृतिगुणासक्तेः[2] तव यदेतदवतारशतैकबीजं मत्स्याद्यवतारशतानां व्यञ्जकं रूपमादौ गृहीतं, अनादित एव, नेदानीं गृहीतं, 'यत् तद्दिव्यं हरेरूपं क्षीरसागरमध्यगं' इत्यतः क्षीरसमुद्रशायियन्नाभिपद्मभवनाद् यन्नाभिकमलाख्यगृहादहमाविरासं जातोऽस्मि । 'अनादिनित्यादव्यक्तात् तस्माज्जज्ञे चतुर्मुखः' इति वचनात् ॥ २ ॥

हे परम यद् आनन्दमात्रं सत् ज्ञानानन्दैकरसम् अत एव अविकारं षड्विकाररहितम् अत एवाविद्धवर्चः अप्रतिहतार्चीरूपं भवतः स्वरूपं पश्यामि अतः परं निर्गुणं नास्तीति पश्यामि । 'सज्ज्ञानानन्दैकमात्रं न ततः परमं क्वचित्' इति वचनाच्च । यच्च विश्वसृजं विश्वस्य स्रष्टृ, एकं स्रष्ट्रन्तररहितम्, अविश्वं प्रपञ्चविलक्षणं, आद्यं सर्वस्यादिभूतम् उपजीव्यं वा, भूतेन्द्रियात्मकं व्यापकं, यच्चाप्नोतीत्यादेः, ते तवादोरूपमुपाश्रितोऽस्मीत्यतो न ज्ञायते वाङ्मनसागोचरत्वादित्येतदवद्यम् । अतस्त्वभद्रं मतम्[3] अत्युत्तमाधिकार्यपेक्षयोक्तं, न देवदत्ताद्यधमापेक्षयेति तत्त्वम् । अनेन प्रकृतिगुणविकृतपदार्थेषु

---

[1] अत्रावतारिकायाः प्रश्नस्य समाधानस्य च संगतिश्चिन्तनीया । [2] गुणशक्तेः—ग, घ

[3] अत्र 'इति' इत्युपस्कर्तव्यम् । ब्रह्मणा ज्ञातत्वान्न ज्ञायत इत्यवद्यं मतं ब्रह्माद्युत्तमाधिकार्यपेक्षया । देवदत्ताद्यधमापेक्षया तु नावद्यमिति भावः । तात्पर्यवचनमिदमन्यैर्व्याख्यातृभिः प्रकारान्तरेण व्याख्यातम् ।

यद् वा इदं भुवनमङ्गलमङ्गलं यद्
ध्यानात्मनो दर्शितं त उपासकानाम् ।
तस्मै नमो भगवतेऽनुविधेम तुभ्यं
योऽनादृतो निरयभाग्भिरसत्प्रसङ्गैः ॥ ४ ॥

ये तु त्वदीयचरणाम्बुजकोशगन्धं
जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् ।
भक्त्या गृहीतचरणः परया च तेषां
नापैषि नाथ हृदयाम्बुरुहात् स्वपुंसाम् ॥ ५ ॥

---

तिष्ठतो हरेरज्ञानादि कथं न स्यात्, कथं चोदासीनस्याद्वितीयस्य रूपान्तरग्रहणम्, कथं वा विकारिसृज्यं सृजतो विकाराभाव इत्येतच्छङ्कात्रयमुन्मूलितम्, उक्तयुक्ते[1]रिति भावः । अद इत्यनेन दूरस्थवस्तुवाचिना, पूर्णमदः पूर्णमिदम्' इति श्रुतेः जगद्व्यापिरूपेण स्वदृग्विषयरूपस्यैकत्वं ध्वनयति ॥ ३ ॥

न केवलं मयैव ज्ञातोऽसि त्वत्प्रसादेनान्यैरपि ज्ञायमानत्वान्न ज्ञायत इत्यवद्यमिति भावेनाह—**यद्वा इति** । ध्यानात्मनो ज्ञानरूपस्य तत्तद्ध्यानानुगुणरूपस्य वा ते तवोपासकानां यदिदं दर्शितं तादृग्रूपविशिष्टाय नमः[2] अनुविधेम कुर्मः । तर्हि 'दुर्ज्ञेया हि हरेर्गतिः' इत्यादेः कोऽभिप्राय इति तत्राह—**य इति** । असत्सु विषयेषु प्रकर्षेण सङ्गो येषां ते तथा तैः । इदानीमभावेऽपि जन्मान्तरेऽपि सत्सङ्गत्या सद्गतिः स्यात् तत्राह—**निरयेति** । अय गताविति धातोः अयनं गमनं निरस्तं यस्मात् स निरयः निर्गमशून्यमन्धं तम इत्यर्थः, तत् भजन्तीति निरयभाजः, तैरन्धन्तमःप्राप्तियोग्यैरित्यर्थः । यैश्चानादृतः सादरं नार्चितः तैर्दुर्ज्ञेय इति शेषः । तस्मै नमः । वा इत्यनेन साधनसामग्र्यां दर्शनं भवत्येवेति सूचयति ॥ ४ ॥

बलिसमये यक्षप्रत्यक्षवद्धरेः प्रत्यक्षत्वं न साक्षादतो न ज्ञायत इति तत्राह—**ये त्विति** । उपासकत्रैविध्यसूचकस्तुशब्दः । तत्र येऽन्तरुपासकाः महान्तो गुरुमुखेभ्यः श्रुतिवातनीतं उपनिषदुक्तप्रकारेण श्रवणाख्यवायुना कर्णविवरैः प्रापितं त्वदीयचरणाम्बुजकोशस्य क्षीराब्ध्यादिस्थितमूलरूपाख्यपद्ममुकुलस्य गन्धं हृदि व्यक्तरूपं जिघ्रन्ति अपरोक्षीकृत्यानुभवन्ति । 'हृदि व्यक्तं तु यद् रूपं हरेर्गन्धः स उच्यते'[3] इति । 'उत्तमानां तु पादेन सर्वरूपं तु कथ्यते' इति वचनाच्च । चरणः पाद इति पर्यायः । 'गन्धगन्धवतोर्यस्मान्न भेदः क्वचनेष्यते' इति वचनात्, 'गन्धो लेशो विनिर्दिष्टः'

---

[1] युक्तिस्तु न स्फुटा । [2] नमः इति–घ [3] अत्र वचनादिष्युपंस्कर्तेभ्यम् ।

तावद् भयं द्रविणगेहसुहृन्निमित्तं
　　शोकः स्पृहा परिभवो विपुलश्च लोभः ।
तावन्ममेत्यसदवग्रह आर्तिमूलं
　　यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः　　॥ ६ ॥

दैवेन ते हतधियो भवतः प्रसङ्गात्
　　सर्वाशुभोपशमनाद् विमुखेन्द्रिया ये ।
कुर्वन्ति कामसुखलेशलवाय दीना
　　लोभाभिभूतमनसोऽकुशलानि शश्वत्　　॥ ७ ॥

क्षुत्तृट्त्रिधातुभिरिमा मुहुरर्द्यमानाः
　　शीतोष्णवातवर्षैरितरेतराच्च ।
कामाग्निनाऽच्युत रुषा च सुदुर्भरेण
　　संपश्यतो मन उरुक्रम सीदते मे　　॥ ८ ॥

---

इति भेदशङ्कापि न कार्येत्यर्थः । हे नाथ तेषां स्वपुंसां हृदयाम्बुरुहान्नापैषि नापसरसि न तिरोभवसि । तत्र निमित्तमाह—**भक्त्येति** । भक्तिलक्षणदृढपाशेन गृहीतचरणः प्रबद्धपाद इत्यर्थः । अनेन भगवद्वशीकरणे भक्तिरेव प्रधानसाधनमित्युक्तं भवति ॥ ५ ॥

द्रविणादिनिमित्तं भयं यावत् तावन्न ज्ञायत इति मतं निर्मूलमिति भावेनाह[1]—**तावदिति** ॥६॥

कस्मात् तर्हि न ज्ञायत इत्याग्रहो न निवर्तत इत्याशङ्क्य भगवदनुग्रहापात्रत्वादित्याशयेनाह—**दैवेनेति** । अन्धन्तमःप्राप्तिपर्यन्तं शश्वदकुशलकरणान्न ज्ञायत इत्याग्रहो न निवर्तत इति भावः । दैवेन सर्वोत्तमेन हरिणा विमुखवागादीन्द्रियाः सुखलेशलवायाल्पादल्पसुखाय । लुभ गार्ध्ये इति धातोर्लोभो गार्ध्यमभिलाषस्तेनाभिभूतं मनो येषां ते तथा । यद्वा सद्ययानिच्छुत्वं तेन ॥ ७ ॥

त्वयि ज्ञाते सर्वमिदं ज्ञायते । 'अविज्ञातं विज्ञातम्' इति श्रुतेः । अतस्तव गतिर्न ज्ञायत इत्यत्यन्तसाहसमिति सूचनाय ब्रह्मा दुर्ज्ञानफलभोगिप्रजानुकम्पाव्याजेन सज्ज्ञानोत्पत्तौ प्रथमं वैराग्यमेव साधनीयं बुभूषुणेति भावेनाह— **क्षुत्तृडिति** । क्षुधा तृषा त्रिभिर्धातुभिर्वातादिभिराध्यात्मिकैः इमाः प्रजाः । शीतोष्णवातवर्षैः आधिदैविकैः । इतरेतरादन्योन्यनिमित्तादाधिभौतिकैः । सुदुर्भरेण कामाग्निना सुदुर्भरया रुषा च ॥ ८ ॥

---

[1] अस्याभिप्रायस्तु न व्यक्तः ।

यावत् पृथक्त्वमयमात्मन इन्द्रियार्थं
मायाबलं भगवतो जन ईश पश्येत् ।
तावच्च संसृतिरसौ प्रतिसङ्क्रमेत
व्यर्थापि दुःखनिवहं वहती क्रियार्था ॥ ९ ॥

---

त्रिविधो जीवसंघो मुक्तियोग्यः संसारयोग्यस्तमोयोग्य इति । तत्र भगवतो गतिर्न ज्ञायत इत्यादिरूपा मुक्तियोग्यानां संसृतिः कदा निवर्तत इति तत्राह—**यावदिति** । चशब्दोऽनुक्तसमुच्चयार्थोऽवधारणार्थो वा । यावद् यदा आत्मनः स्वस्य भगवतः सकाशादिन्द्रियार्थं इन्द्रियविषयभोगार्थम् अयं मुक्तियोग्यो जनो ध्यायामि पश्यामि शृणोमीत्यादि पृथक्त्वं[1] विभागलक्षणं मायाबलं भगवदिच्छाबलं भगवदिच्छया प्रणीतं चेष्टितमित्यर्थः । बल प्राणन इतिधातोः । पश्येत् । चशब्दान्मुक्तावपि । 'ध्याये मंस्ये तथा पश्ये शृणोमीति विभक्तता । जीवस्य तु हरेरिच्छाबलादिन्द्रियभुक्तयः' इत्यतो नानिर्वाच्यलक्षणो भेदः पृथक्त्वम् । पश्येदिति दृग्विषयत्वेन ज्ञेयत्वोक्तेर्हरेरिच्छैव माया नानिर्वाच्या अविद्या । तदुक्तम्—'ज्ञेयत्वं दुर्घटस्यापि घटनाऽधिकशक्तिता । अभेद ईश्वरेणापि सृष्ट्यादावन्तरङ्गता । उच्येत यस्याः सा माया हरेरिच्छाऽथवा बलम्' इति । ननु तर्हि मायाशब्दवाच्ययोर्लक्ष्मीबन्धकशक्त्योर्विभागज्ञानं कथमचेतनप्रकृतेश्चेति प्रसक्ता शङ्का 'भगवत्तन्त्रता यस्यास्तद्भार्यात्वं सुरूपता । उच्येत माया सा तु श्रीर्दोषयुक्ता जडा स्मृता । परिणामिनी च यस्यास्तु दोषाश्चेतनता तथा । शैवली नाम सा माया जगद्बन्धात्मिका सदा' इत्यनेन परिहर्तव्या इत्यभिप्रायेणाचार्यैः शेषोदाहरणं कृतम् । तावत् तदा व्यर्थाऽपि आत्यन्तिकप्रयोजनशून्याऽपि धर्मादिक्रियार्था दुःखनिवहं दुःखपरम्परां वहती संसृतिः प्रतिसंक्रमेत नाशं गच्छत्येवेत्यन्वयः । अघटितघटकत्वशक्तिरस्तीति द्योतनाय ईशेति सम्बोधनम् । एतदभिप्रायेणोक्तम् 'ज्ञेयत्वं दुर्घटस्यापि घटनाधिकशक्तिता' इति[2] ॥ ९ ॥

---

[1] इन्द्रियार्थं इन्द्रियभोगार्थं, इदं पृथक्त्वं अहमेव श्रवणादि करोमीत्यादिरूपं स्वातन्त्र्यं यावद् यदा भगवतो मायाबलं पश्येत् भगवदिच्छाबलनिमित्तं जानाति—इत्यनन्ततीर्थाः ।

पृथक्त्वं तत्तदिन्द्रियव्यापारकर्तृत्वानुसंधानं भगवतो मायाबलं माया इच्छा बलं प्रापकं यस्येति विग्रहेणेच्छाबलप्राप्तम्—इति यादुपत्यम् । [2] इत्यादि इति स्यात् ।

अध्याहृतार्थकरणा निशि निःशयाना
नानामनोरथधियः क्षणभग्ननिद्राः[1] ।
दैवाद्धतार्थरचना ऋषयोऽपि देव
युष्मत्प्रसङ्गविमुखा इह संसरन्ति ॥ १० ॥

त्वद्भावयोगपरिभावितहृत्सरोजा
ये सच्छ्रुतेक्षितपथा ननु नाथ पुंसाम् ।
यद् यद् धिया त उरुगाय विभावयन्ति
तत् तद् वपुः प्रणयसे तदनुग्रहाय ॥ ११ ॥

---

नित्यसंसारिणां संसरणप्रकारं निरूपयति—**अध्याहृतेति** । अध्याहृतार्थानि आकृष्टशब्दादिविषयाणि करणानीन्द्रियाणि येषां ते तथा अन्योन्याकर्षणज्ञापनायैवमुक्तम् । तत्र निमित्तमाह—**निशिति** । 'अज्ञानं तु निशा प्रोक्ता दिवा ज्ञानमुदीर्यते' इति वचनान्निशि अज्ञाने नितरां शयानाः । परमतत्त्वाज्ञानं कारणमित्यर्थः । नानामनोरथधिय इति हेतुगर्भविशेषणम् । तस्मात् प्रतिक्षणं भङ्गयुक्तनिद्राः । निद्रातुमप्यवसरो नास्तीत्यर्थः । नित्यलुप्तकर्मानुष्ठानत्वेन दैवादनुदितप्रसादाद्धतार्थरचनाः विनाशितार्थां[2]भीष्टवस्तुचमत्कारा ऋषयोऽपि ऋषिकुलप्रसूता अपि । अत्र सर्वत्र स्पष्टं निमित्तमाह—**युष्मदिति** । इह जीवलोके स्वर्गे नरके च ॥ १० ॥

पृथक्त्वं मायाबलं पश्येदिति यदपरोक्षज्ञानमुक्तं तदुत्पत्तावित्थंभूतसाधनमाह—**त्वद्भावेति** । पुंसां नाथ पुरुषोत्तम । सतो लोकमान्यात् श्रेष्ठादाचार्यात् श्रुतेन शास्त्रश्रवणेन ईक्षितो दर्शितः पन्था विष्णुभक्त्यादिलक्षणो येषां ते तथोक्ताः । अत एव त्वद्भावयोगेन त्वद्विषयेण च भक्तियोगेन भावितमधिवासितं हृत्सरोजं मनःकमलं येषां ते तथोक्ताः । मन इत्युपलक्षणम् । वेदान्तादिसच्छास्त्रश्रवणसञ्जातत्वद्भक्तियोगेन निर्मलीकृतेन्द्रियग्रामा ये मुक्तियोग्या जनाः । हे उरुगाय विष्णो ते पुरुषाः तव यद् यद् वपुर्नन्वनुमते यथा[3] स्वस्वयोग्यज्ञानानन्दादिगुणत्वेनानुज्ञातं धिया विभावयन्ति तदनुग्रहाय तेषामनुग्रहाय तत्तद् वपुः तादृशं तादृशं शुभाकारं प्रणयसे व्यक्तीकरणेन स्निग्धं करिष्यासीत्यन्वयः । नन्वित्यनेनैतिह्यवाचिना 'यादृशो भावितस्त्वीशस्तादृशो जीव आभवेत्' । 'तं यथा यथोपासते तदेव भवति' इति वाक्यद्वयं प्रमाणयति । एतदुक्तं भवति । सद्गुरुमुखात् सच्छास्त्रश्रवणेनेतरविरक्तिद्वारा

---

[1] क्षणभङ्गनिद्राः—इति पाठान्तरम् । [2] अर्थेत्यधिकमिति भाति ।
[3] अयं च पाठः । अन्यत्र 'यथा यथा' इति भिन्नपदम् ।

नातिप्रसीदसि ततोपचितोपचारै-
रराधितः सुरगणैर्हृदि बद्धकामैः ।
यः सर्वभूतदययाऽसदलभ्ययैको
नानाजनेष्ववहितः सुहृदन्तरात्मा ॥ १२ ॥

पुंसामतो विविधकर्मभिरध्वराद्यै-
र्दानेन चोग्रतपसा व्रतचर्यया च ।
नाराधनं भगवतस्तव सत्क्रियार्थो
धर्मोऽर्पितः कर्हिचित् क्रियते न यत्र ॥ १३ ॥

---

हरौ भक्तिः । तया स्वस्वयोग्यगुणोपसंहारलक्षणोपासना । तयास्य हरेरपरोक्षज्ञानम् । तेन पृथक्त्वस्य मायाबलविषयत्वम् । तस्माद्धरेः प्रसादः तेन न ज्ञायते भगवतो गतिरित्यादिलक्षणा दुष्टजनसङ्गसञ्जाता संसृतिर्निवर्तत इति ॥ ११ ॥

धिया यद्यद्विभावयन्तीत्यत्र सकामैरेवोपास्यत इत्यन्यथा प्रतीयते । सा[1] तु मुक्तिपरिपन्थिनीति सा न कर्तव्येति भावेनाह—**नेति** । हृदीत्युभयत्रान्वेतव्यम्[2] । सर्वभूतदयायाः कर्तव्यत्वे हेतुर्नानाजनेष्ववहित इति । दुर्भगशरीरस्थत्वेप्यणुमात्रं दुःखमस्य नास्तीत्यत्र हेतुरन्तरात्मेति । अन्तः स्थित्वापि रतिरूप इत्यर्थः । अत एव सुहृद् अनिमित्तबन्धुः । एवंविधो यस्त्वमसद्भिरसुरप्रकृतिभिरलभ्यया लब्धुमशक्यया सर्वभूतदयया सुरगुणैर्हृद्याराधितो यथातिप्रसीदसि स त्वं तथा हृदि बद्धकामैर्जनैरुपचितोपचारैराराधितो नातिप्रसीदसि । मन्त्रगुरुदेवताशक्त्या त्वन्नियतया किञ्चित्फलदानाभिमुखोऽपि नात्यन्तिकमुक्तिफलदत्वेन प्रसन्नो भवसीत्यतोऽतीत्युक्तम् । 'आराधितो यो ब्रह्माद्यैर्भक्तिज्ञानदयादिभिः । किं तस्य कामुकजनैः कृतया परिचर्यया' इति वचनादुक्त एवार्थः । इतरेषां सेवानुगुणफलदत्वेऽपि त्वमेक एवंविधस्वभाव इत्येक इति ॥ १२ ॥

न केवलं निष्कामतया कृतं भगवत्प्रसादजनकं किन्तु भगवदर्पणसहितमित्याह—**पुंसामिति** । पुरुषैर्यत्र येषु यज्ञादिषु सत्क्रियार्थः तव पूजाप्रयोजनादृष्टाख्यो धर्मः यत्र यस्मिन् त्वय्यर्पितो न क्रियते तेषां पुंसामध्वराद्यैः क्रियमाणं भगवदाराधनं प्रसादजनकं न भवतीत्यन्वयः[3] ॥ १३ ॥

---

[1] सकामोपासनेत्यर्थः । [2] सुरगणैः हृदि आराधितः, हृदि बद्धकामैराराधित इति च ।

[3] न भवतीत्यर्थ इति स्यात् ।

शश्वत् स्वरूपमहसैव निपीतभेद-
मोहाय बोधधिषणाय नमः परस्मै ।
विश्वोदयस्थितिलयेषु निमित्तलीला-
रामाय ते नम इदं चकृमेश्वराय ॥ १४ ॥

यस्यावतारगुणकर्मविडम्बनानि
नामानि येऽसुविगमे विवशा गृणन्ति ।
ते नैकजन्मशमलं सहसैव हित्वा
संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥ १५ ॥

---

हरेस्तत्त्वाज्ञानादुत्पन्नो यो न ज्ञायते गतिरित्यादिरूपः संसारस्तन्निवर्तकोपास्तौ तादृग्गुणोपसंहारः[1] कर्तव्य इत्याह— **शश्वदिति** । देवदत्तवदेकदापि भेदमोहोऽस्तीत्यन्यथाप्रतीतिनिरासाय शश्वदिति । परोपदेशमन्तरेण[2] स्वरूपज्ञानेनैव, 'तद् ब्रह्माऽहं वेद अहं ब्रह्मास्मि' इति श्रुतेः[3] । निपीतभेदमोहाय सम्यक् निरस्तेशापूर्णतादिषड्विधभेदमोहाय । 'ईशस्यापूर्णताज्ञानं विष्णोरन्यस्य चेशता । भेदस्तस्यावतारेषु जीवस्येशत्वमेव वा । तथा जीवत्वमीशस्य जडाभेदस्तयोरपि । भेदमोह इति प्रोक्तः स सदा न हरेः क्वचित् । अन्येषां तत्प्रसादेन शनैर्याति सतामपि ।' इत्यादिवचनात् । स्वतो मोहाभावेऽपि प्राकृतबुद्ध्या स स्यादिति तत्राह—**बोधेति** । अप्राकृतज्ञानरूपबुद्धये । नन्वेतज्जीवस्याप्यस्तीत्यत उक्तम् — **परस्मा इति** । स्वनियतकालप्रकृतित्वेन तदुत्तमत्वेन ततो विलक्षणत्वेन दूरीकृततदुपद्रवाय[4] । जीवस्य तद्वशत्वात् कर्मवशत्वात् तन्मग्नत्वात् । अलौकिकं तद्वस्तु[5] लक्षणमन्तरेण ज्ञातुमशक्यमिति मन्वानो जगत्कर्तृत्वादिलक्षणविशिष्टत्वेन नमति—**विश्वेति** । निमित्तभूता लीला शृंगारचेष्टा । तस्या आरामाय क्रीडावनाय ते तुभ्यम् । एवंविधलक्षणवतः किं नामेत्यत उक्तम्—**ईश्वरायेति** । प्राक्कालीनजन्मप्रचितपुण्यराशेरिदानीमपि भगवद्दर्शनं प्राप्तमिति सूचयितुं चकृमेति लिट्प्रयोगः ॥ १४ ॥

भगवतोऽवताराणां गतिरपि न ज्ञायत इत्येतदपि मतं दुष्टं यतो मूलरूपवदवताराणामपि मुक्त्यादिदानसामर्थ्यं दृश्यते तस्मादिति भावेनाह—**यस्येति** । यथा हराववतारभेदमोहो नास्ति

---

[1] संसारनिवर्तकगुणोपसंहार इत्यभिप्रायः स्यात् । भगवतः निपीतभेदमोहत्वादिगुणोपासने जीवस्यापि भेदमोहनिवृत्तेः । [2] स्वरूपमहसैवेत्याधिकपाठः–ङ,च,ग । [3] तद्ब्रह्मावेद् अहं ब्रह्मास्मीति–क
[4] अयं घ पाठः । अन्यत्र–तदुपद्रवस्येति पाठः । [5] 'वस्तु इत्येव पाठः– घ,ग,ङ,च
[6] मूलस्वरूपेति क पाठः । अन्यत्र सर्वत्र मूलरूपेति ।

**यो वा अहं च गिरिशश्च विभुः स्वयं च**
**स्थित्युद्भवप्रलयहेतव आत्ममूलाः ।**
**भूत्वा त्रिपाद् ववृध एक उरुप्ररोह-**
**स्तस्मै नमो भगवते भुवनद्रुमाय ॥ १६ ॥**

**लोको विकर्मनिरतः कुशले प्रमत्तः**
**कर्मण्ययं त्वदुदिते भवदर्चने स्वे ।**
**यस्तावदस्य बलवानिह जीविताशां**
**सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥ १७ ॥**

---

तथा तत्प्रसादात् तदीयेष्वपि नास्तीति द्योतनाय[1] वा स्तौति—**यस्येति** । असुविगमे प्राणप्रयाणकाले विवशा भक्तिविवशाः । अनेन पूर्वाभ्यासपाटवं दर्शयति । 'ये भक्त्या विवशा विष्णोर्नाममात्रैकजल्पकाः । तेऽपि मुक्तिं व्रजन्त्याशु किमुत ध्यायिनः सदा' इति कैमुत्यन्यायसिद्धत्वाद् बलवत्प्रतिबन्धकात् तत्काले मुक्त्यभावेऽपि कालान्तरे निश्चितेति—**सहसेति** । अपावृतं स्वाच्छादकमायावरणरहितम् । सृष्टिप्रलयादिषु विकाररहित्याद् ऋतम् । ऋतत्वे हेतुरजमिति ॥ १५ ॥

सृष्टिप्रलयहेत्वोः भवतः शिवस्य च जाग्रतोः सतोर्हरेर्विश्वोद्भवादिलीलारामत्वं कथमिति तटस्थशङ्कां परिहर्तुमाह—**यो वा इति** । चशब्दाः समुच्चयार्थाः । 'अनन्तासनवैकुण्ठक्षीराब्धिस्थो हरिस्त्रिपात्' इति वचनात् यः त्रिपाद् एको हरिरात्मा नारायणो मूलं कारणं येषां ते आत्ममूलाः यो विभुः स्वयं विष्णुर्यो वा अहं मदन्तर्यामी ब्रह्माख्यो यश्च गिरिशाख्यः शिवान्तर्यामी स्थित्युद्भवप्रलयहेतवो भूत्वाऽवतीर्य सृज्यपदार्थानां नानाविधत्वात् तेषु अन्तर्यामित्वेनोरुप्ररोहो बहुरूपो ववृधे तस्मै भुवनद्रुमाय नम इत्यन्वयः । वृक्षसाधर्म्यकथनेन विकारित्वमुक्तमिति बिभ्यच्चतुर्मुखो भगवत इत्याह । नायं लोकद्रुमवद् विकारी किन्तु ऐश्वर्यादिगुणविग्रह इति । तस्माद् बुद्ध्यवताराय तथोक्तमिति भावः । वा इत्यनेन 'ब्रह्मादिभावो विष्णोस्तु तन्नियामकता भवेत् । मत्स्यादिता स्वभावस्तु नान्यथा क्वचिदिष्यते' इति प्रमाणप्रसिद्धिं सूचयता मत्स्यादिवदेतौ ब्रह्मशिवौ न साक्षात् स्वरूपे इति ज्ञापितम् ॥ १६ ॥

शतं वर्षसहस्राणां जीवामि तदनन्तरं पुण्यं सञ्चिनोमि किमिदानीं तत्करणमिति मत्वा भगवदुपासनादिसत्कर्मण्यालस्यं न कर्तव्यमिति भावेन कालान्तर्यामिणं भगवन्तं नमति—**लोक इति** ।

---

[1] द्योतयन्निव-क

यस्माद् बिभेम्यहमपि द्विपरार्धधिष्ण्य-
मध्यासितः सकललोकनमस्कृतं यत् ।
तेपे तपो बहुतपोऽवरुरुत्समान-
स्तस्मै नमो भगवते विसखाय तुभ्यम् ॥ १८ ॥

तिर्यङ्मनुष्यविबुधादिषु जीवयोनि-
ष्वात्मेच्छयाऽऽत्मकृतसेतुपरीप्सया यः ।
रेमेऽनिरस्तरतिरप्युपलब्धकाष्ठ-
स्तस्मै नमो भगवते पुरुषोत्तमाय ॥ १९ ॥

---

तावत् तदा बलवान् योऽस्य जनस्येह जीविताशां सद्यः कालक्षेपमन्तरेण छिनत्ति । अपराधमन्तरेण जीविताशाच्छेदनं साहसमिति न मन्तव्यमित्यत उक्तम्—**विकर्मेति** । विहिताकरणादिनात्महत्यादिदोषापत्तेः अतोऽधिकोऽपराधोऽस्तीत्यतो न वैषम्यनैर्घृण्ये हरेरिति भावः । स्वे स्वविहिते । तस्मै अनिमिषाय नित्यज्ञाननेत्रेण नित्यं पश्यते कालान्तर्यामिणे नित्यं तुभ्यं नम इत्यन्वयः । 'नित्यज्ञानदृशा नित्यं लवकालमपीश्वरः । पश्येत् तात्कालिकं चैव तस्मादनिमिषो हरिः' इत्यादेर्न देवमात्रमत्र ग्राह्यम् । कालान्तर्यामिणोऽनिमिषत्वं नित्यं लवादिकालनिरीक्षणात् । तच्चोक्तम्— 'कालस्यानिमिषत्वं च लवादेर्नित्यवीक्षणात्' इति । इतरस्य तच्छब्दवाच्यत्वं तन्नियतत्वात् ॥ १७ ॥

कल्पसकालोऽहमपि यस्माद् बिभेमि, किम्वितरे, तस्मात् कालान्तर्यामिहरिप्रसादोऽवश्यं सम्पादनीयः पुण्यनिचयं सम्पिपादयिषुभिरिति भावेन कालान्तर्यामिणं विशिनष्टि—**यस्मादिति** । धिष्ण्यमध्यासित इति सप्तम्यर्थे द्वितीया । द्विपरार्धधिष्ण्यं ब्रह्मशतवर्षकालावस्थायिस्थानं सत्याख्यम् । स्वस्य भीतिश्चानेन ज्ञातव्येत्याशयेनाह—**तेप इति** । मुक्तावानन्दवृद्धिकरं बहुतपः पूर्णज्ञानं चावरुरुत्समानः प्राप्तुमिच्छन् तपस्तेपे । गुणोपसंहाररूपामुपास्तिमकरवमित्यर्थः । स्वक्रियमाणे कर्मणि सहायान्तरानपेक्षणाद् विगतः सखा यस्य स तथा तस्मै ॥ १८ ॥

तिर्यगादिजीवयोनिषु विज्ञानविलोपहेतुष्ववतारान् नित्योदितज्ञानानन्दत्वेनानन्यसाध्यं विक्रमं कुर्वन् क्रीडतीति यत् तेनैव तत्त्वज्ञानं सुलभं पुंसाम् अतोऽपि न ज्ञायते गतिरित्यहो दुराग्रहो दुष्टानामिति भावेन श्रीहरिं स्तौति—**तिर्यगिति** । आत्मेच्छया स्वेच्छया । प्रयोजनमाह— **आत्मेति** । परीप्सया पालनेच्छया । तिर्यगादिजीवयोनिष्वप्यनिरस्तरतिः । अन्यत्र नित्यरतिरिति किमु ।

योऽविद्ययानुपहतोऽपि दशार्धवृत्त्या
निद्रामुवाह जठरीकृतलोकयात्रः ।
अन्तर्जलेऽहिकशिपुस्पर्शानुकूलं
भीमोर्मिमालिनि जनस्य सुखं विवृण्वन् ॥ २० ॥

यन्नाभिपद्मभवनादहमासमद्य
लोकत्रयोपकरणो यदनुग्रहेण ।
तस्मै नमस्त उदरस्थभवाय योग-
निद्रावसानविकसन्नलिनेक्षणाय ॥ २१ ॥

---

अत्र हेतुगर्भविशेषणमाह—**उपलब्धकाष्ठ इति** । नित्यानन्दानुभवलोपे हि दुःखानुभवः सम्भाव्यते नास्य तथा । नित्यानुभूतानन्दोत्कर्षत्वादित्यर्थः ॥ १९ ॥

हरेः श्रमोद्रेकोत्थनिद्रादिदर्शनात् तद्गतिर्दुरवबोधेति तत्राह—**य इति** । दशार्धेन पञ्चसंख्यया वृत्तिर्यस्याः सा तथा तया पञ्च[1]वृत्त्येत्यर्थः । एवंविधाविद्ययानुपहतोऽबाधितोऽपीत्यनेन एकमेव ब्रह्माविद्यया संसरति विद्यया मुच्यत इति मतं दूरादुत्सादितम् । भीमा भयङ्करी ऊर्मीणां माला अस्य सन्तीति भीमोर्मिमाली तस्मिन्नन्तर्जले । अहिकशिपुस्पर्शानुकूलम् इति क्रियाविशेषणम् । अहिः शेष एव कशिपुरुत्तरवस्त्रास्तृतशय्या तस्य स्पर्शानुकूलं स्पर्शसुखानुगुणं यथा भवति तथा । न स्वार्थेयं निद्रा किन्तु परार्थेत्याशयेनाह—**जनस्येति** । अनेनापि निद्रा मुद्रितनेत्रत्वमेव । न सर्वेन्द्रियोपरम इत्युक्तं भवति ॥ २० ॥

पितृनमस्कारोऽपि पुत्रेणावश्यं कार्य इत्याशयेन तं नमति—**यन्नाभीति** । यदनुग्रहेणेत्युभयत्रान्वयः । अहं यदनुग्रहेण यन्नाभिपद्मभवनादासं यदनुग्रहेण लोकत्रयोपकरणश्चासम् इति लोकत्रयसृष्टौ सहकारीत्यनेन सृष्टौ मुख्यस्रष्टा स एवेत्युक्तं भवति । शिवोऽपि भगवदाज्ञानियत इति भावेनाह—**उदरस्थेति** । उदरे तिष्ठतीत्युदरस्थः । उदरस्थो भवो रुद्रो यस्य स तथा तस्मै । अनेन सर्वसंहर्तृत्वमपि रुद्रकृतमप्युपचारमात्रं मुख्यं तु हरेरित्युक्तं भवति । रुद्रस्यापि संहर्ता किमुत जगत इति वा । ब्रह्मरुद्रौ नारायणात्मानाविति भ्रान्तिरपहस्तितेति च ज्ञातव्यम् । योगनिद्रावसानविकसन्नलिनेक्षणायेत्युक्त्या नित्यविकसन्नलिनेक्षणस्य कादाचित्कविकासोक्तिरज्ञजनदृष्टिमपेक्ष्य । अतो भगवतो गतिर्न ज्ञायत इति मतमवद्यात्मकत्वाद् बुभूषुभिर्न ग्राह्यमिति सिद्धम् ॥ २१ ॥

---

[1] पञ्चपर्ववत्या–क

सोऽयं समस्तजगतां सुहृदेक आत्मा
सत्त्वेन यन्मृडयते भगवान् भगेन ।
तेनैव मे दृशमनुस्पृशताद् यथाऽहं
स्रक्ष्यामि पूर्ववदिदं प्रणतप्रियोऽसौ ॥ २२ ॥

एष प्रपन्नवरदो रमयाऽऽत्मशक्त्या
यद् यत् करिष्यति गृहीतगुणावतारः ।
तस्मिन् स्वविक्रम इदं सृजतोऽपि चेतो
युञ्जीत कर्मशमलं च यथा विजह्याम् ॥ २३ ॥

---

अधुना स्वाभीष्टं प्रार्थयत इत्याह— **सोऽयमिति** । स इति ज्ञातोऽसीत्युक्तः परामृश्यते । सुहृत्वाद् एकत्वात् सुहृदन्तररहितत्वात् आत्मत्वात् उत्कृष्टत्वात् इमं वरं प्रार्थये इति भावः । 'आत्मशब्दस्य मुख्यार्थो विष्णुरेकः सनातनः । सन्देह[1] देहमनसो बुद्धिजीवाः स्वयं तथा । ब्रह्माप्यमुख्याः[2] क्रमश उत्कर्षोऽप्यात्मता भवेत्' इति वचनान्मुख्यार्थो विष्णुरेव । तस्यैव ग्राह्यत्वात् । यद् येन भगेन ऐश्वर्यादिरूपेण, सत्त्वेनात्मभावेन पराक्रमेण वा, मृडयते रक्षति विश्वमिति शेषः । स्पृश दान इति धातोः, अनुस्पृशतात् ददातु । दृशं विशिनष्टि—**यथेति** । एवं प्रयच्छतः प्रतिदानमिदमेवेति भावेनाह —**प्रणतेति** । अनेनेश्वरस्य स्वतस्तृप्तस्य तर्पकान्तरानपेक्षां सूचयति ॥ २२ ॥

उक्तमेवार्थं विशेषणान्तरप्रक्षेपेण प्रार्थयते—**एष इति** । आत्मशक्त्या स्वभार्यया स्वसामर्थ्येन वा । 'स्वसामर्थ्यात् स कर्माणि रमया सह केशवः । कुरुते स्वयमेवैष कानिचित् पुरुषोत्तमः' इति वचनात् । यद्यत् यं यं विक्रमम् । तस्मिन् स्वविक्रमे स्वव्यापारे वीर्यलक्षणे जगत्सर्जनव्यापारमग्नस्यापि मे चेतः स्मृतिकारणं ज्ञानं युञ्जीत अपुष्टं पुष्टं कृषीष्ट । इयदेव नालमित्याह —**कर्मेति** । ज्ञानप्रतिबन्धकं पापात्मदैत्यादिसृष्टिकर्मणा प्राप्तं शमलं यथा येन जहामि तादृशमिति शेषः[3] । सत्त्वादिगुणाधीने ज्ञानाज्ञाने किमनेन स्यातामित्यत उक्तम्—**गृहीतेति** । स्वनियतसत्त्वादिगुणप्रकाशः । हयग्रीवादिप्रसादप्राप्यं ज्ञानमस्मात् कथं स्यादित्यतो वेत्युक्तम्[4]— **गृहीतेति** । स्वप्रकाशित[5] ज्ञानादिगुणहयग्रीवाद्यवतारः । एतत्प्रार्थनया रूपान्तरं प्राप्य[6] फलमपि स्यादित्यर्थः ॥ २३ ॥

---

[1] सन्दोह इति क्वचित् । [2] ब्रह्माप्यमुख्यः—क [3] जह्यामीदृशमिति शेषः—ङ [4] वोक्तम् इति स्यात् । [5] विशेषतः प्रकाशित—ङ [6] रूपान्तरप्राप्येति स्यात् । रूपान्तरप्रसादप्राप्येत्यर्थः ।

नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो
विज्ञानशक्तिरहमासमनन्तशक्तेः ।
रूपं विचित्रमिदमस्य विवृण्वतो मे
मा रीरिषीष्ट निगमस्य गिरां विसर्गः ॥ २४ ॥

सोऽसावदभ्रकरुणो भगवान् विवृद्ध[1]-
प्रेमस्मितेन नयनाम्बुरुहं विजृम्भन् ।
उत्थाय विश्वविजयाय मनोविषादं
माध्व्या गिराऽपनयतात् पुरुषः पुराणः ॥ २५ ॥

मैत्रेय उवाच —
स्वसम्भवं निशाम्यैवं तपोविद्यासमाधिभिः ।
यावन्मनोवचः स्तुत्वा विरराम स खिन्नवत् ॥ २६ ॥

---

वैदिकप्रतिपाद्यवस्तुनो ज्ञानविशेषो वेदार्थतात्पर्यज्ञाननान्तरीयक इति तद्विषयकज्ञानमपि न विनष्टं स्यादिति प्रार्थयते—**नाभिह्रदादिति** । इह अम्भसि सतोऽस्य हरे रूपं प्रतिमास्थानीयम् । निगमस्य सम्बन्धिनीनां गिरां वाचां विसर्गः विशिष्टनिश्चयो विष्णुरेव सर्वोत्तम इत्यादिलक्षणो मा रीरिषीष्ट क्षीणो नष्टो माभूदित्यर्थः ॥ २४ ॥

अनुग्रहमात्रेणाभिप्रायसिद्धावपि संलापेनाधिकविश्वासो भवतीति सृष्टिविषादापनयनप्रार्थनव्याजेन संलापमभिप्रैति—**सोऽसाविति** । योऽसौ मया वर्णितगुणोऽदभ्रकरुणः पूर्णदयासमुद्रः स पुराणः पुरुषो भगवान् विश्वविजयाय शेषपर्यङ्कादुत्थाय विवृद्ध[1]प्रेमस्मितेन पूर्णस्नेहप्रसरप्रादुर्भूतमन्दहासेन सह नयनाम्बुरुहं विजृम्भन्नुन्मीलयन् माध्व्या मदिरावद् रोमाञ्चं जनयन्त्या गिरा नो मनोविषादं भयमपनयतादित्यन्वयः । हे वेदगर्भ भयं मा भूत् सर्गोद्यमं कुर्वित्यादिवचनेन प्रीतिमावहेत्यर्थः ॥ २५ ॥

हरिगुणानन्त्यात् प्राज्ञेन विरिञ्चेन यावदायुः स्तुतो हरिः किमिति मन्दाशङ्कां परिहरति— **मैत्रेय इति** । स्वसम्भवं स्वजनकम् । विद्या मन्त्रलक्षणा निष्ठा । स्तुतेरुपरमो गुणानामानन्त्याद-प्रतिभानात् स्वाभीष्टसिद्धेरित्यनेकविधो दृष्टोऽत्र तु प्रथमपक्ष एवेति भावेनाह—**यावदिति** । खिन्न-वदलम्बुद्धिरहितवत् इत्यनेन पुनरपि स्तोतुमिच्छां सूचयति ॥ २६ ॥

---

[1] प्रवृद्ध–घ

अथाभिप्रेतमालक्ष्य ब्रह्मणो मधुसूदनः ।
विषण्णचेतसस्तेन कल्पव्यतिकराम्भसा ॥ २७ ॥

लोकसंस्थानविज्ञान आत्मनः परिखिद्यतः ।
तमाहागाधया वाचा कश्मलं शमयन्निव ॥ २८ ॥

भगवान् उवाच —
मा वेदगर्भ गास्तन्द्रीं सर्ग उद्यममावह ।
तन्मया चोदितं ह्यग्रे यन्मां प्रार्थयते भवान् ॥ २९ ॥

भूयश्च तप आतिष्ठ विद्यां चैव मदाश्रयाम् ।
ताभ्यामन्तर्हृदि ब्रह्मन् लोकान् द्रक्ष्यस्यपावृतान् ॥ ३० ॥

तत आत्मनि योगेन भक्तियुक्तः समाहितः ।
द्रष्टासि मां ततं ब्रह्मन् मयि लोकांस्त्वमात्मनि ॥ ३१ ॥

---

तर्ह्यनया स्वाभीष्टं न सेत्स्यतीति तत्राह—**अथेति** । कल्पव्यतिकरः प्रलयः तदम्भसा ॥२७॥

आत्मनः स्वस्य लोकानां संस्थानस्यावयवशो विन्यासविशेषस्य विज्ञाने परिखिद्यतः अलम्बुद्धिमकुर्वतस्तस्य ब्रह्मगः अभिप्रेतमालक्ष्य लक्षणतो ज्ञात्वा । कश्मलं ज्ञानसङ्कटम् ॥ २८ ॥

तन्द्रीं लोकसंस्थानविज्ञानविषयं परिखेदं मा गाः । भवान् यल्लोकसंस्थानविज्ञानं प्रार्थयते तन्मया पूर्वमेव तप इति द्व्यक्षरकथनेन चोदितम् । तत्प्रार्थनमपि न स्वाधीनं किन्तु मत्प्रेरणयैवेतीममर्थं हिना सूचयति ॥ २९ ॥

नैतावतालमित्याह—**भूयश्चेति** । 'तप आलोचनं प्रोक्तं विद्या निष्ठा प्रकीर्तिता' इति वचनात् तप आलोचनं गुणोपसंहारलक्षणं ध्यानम् । विद्यां निष्ठां भक्तिलक्षणाम् । ततः किं स्यादिति तत्राह—**ताभ्यामिति** ॥ ३० ॥

लोकदर्शनमेव विशिनष्टि—**तत इति** । भक्तियुक्तः समाहितः एकाग्रचित्तस्त्वं ततः स्वेन योगेन ध्यानेनात्मनि देहमध्ये हृदि ततं सर्वगुणपूर्णं मां द्रष्टासे । आत्मनि त्वयि स्थिते मयि लोकान् द्रष्टासीत्यन्वयः । 'देहे देहे हरिस्तस्मिन् लोकाः सर्वे प्रतिष्ठिताः । अङ्गुष्ठमात्रेऽपि परे परशक्तिर्यतो विभुः' इति वचनात् हृद्यन्तर्लोकदर्शनं युक्तमिति भावः ॥ ३१ ॥

यदा तु सर्वभूतेषु दारुष्वग्निमिव स्थितम् ।
प्रतिचक्षीत मां लोको जह्यात् तर्ह्येव कश्मलम् ॥ ३२ ॥

यदा रहितमात्मानं भूतेन्द्रियगुणाशयैः ।
स्वरूपेण मयोपेतं पश्यन् स्वाराज्यमृच्छति ॥ ३३ ॥

नानाकर्मविपाकेन प्रजा बह्वीः सिसृक्षतः ।
नात्मावसीदत्यस्मिंस्ते वर्षीयान् मदनुग्रहः ॥ ३४ ॥

ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुणः ।
यन्मनो मयि निर्बद्धं प्रजाः संसृजतोऽपि ते ॥ ३५ ॥

---

लोकसंस्थानविज्ञानयोगमुपदिश्याधुना ब्रह्मणः सर्वेषां गुरुत्वात् तदुपदिष्टज्ञानस्य मुक्तिसाधनत्वाल्लोकोपकारकं तज्ज्ञानप्रकारमुपदिशति —**यदा त्विति** । तुशब्दो ज्ञानविशेषसूचकः । लोको योग्यो जनो दारुष्वग्निमिव निःसङ्गतया सर्वभूतेषु स्थितं, तुशब्दात् सर्वभूतेषु स्थितेऽङ्गुष्ठमात्रे मय्यपि लोकान् यदा प्रतिचक्षीत प्रतिदेहं पश्येत्, तर्हि तदानीमेव कश्मलं जीवेश्वराभेददर्शननिमित्तदुःखं जह्यात् जहाति । 'देहे देहे हरिस्तस्मिन्' इत्येतदत्राप्युदाहर्तव्यम् ॥ ३२ ॥

नैतावतापि पूर्यत इति पूर्वोपदिष्टज्ञानमुपचिनोति—**यदेति** । यदात्मानं भूतेन्द्रियगुणाशयै रहितं पश्यति स्वाराज्यमृच्छतीत्यन्वयः । किन्तु विशेषोऽप्यस्तीत्याह—**स्वरूपेणेति** । स्वरूपेण मयोपेतं हृदि स्थितं जीवस्वरूपं पश्यन् मुक्तो भवति । अयं भावः, यदात्मानं स्वरूपं जीवसंज्ञं भूतेन्द्रियादिरहितं देहादिष्वात्मभावं त्यक्त्वा हृदि स्थिते जीवस्वरूप आत्मभावं दृष्ट्वा हृदि स्थितेन स्वरूपेण स्वबिम्बरूपेण मया उपेतं समीपे स्थितं मम पादाब्जसेवकत्वेन वर्तमानं पश्यति तदा स्वरूपानन्दानुभवमुपैति । तदुक्तम्— 'त्यक्त्वा देहाद्यात्मभावं जीवरूपे हृदि स्थिते । दृष्ट्वात्मभावं तं चापि हरिपादाब्जसंस्थितम् । यदा पश्यत्यापरोक्ष्यात् तदा मुक्तिं व्रजत्यसौ' इति ॥ ३३ ॥

इदानीं तस्मिन् स्वविक्रम इति यत् प्रार्थितं तद्दानप्रकारमाह—**नानेति** । अस्मिन् सृष्टिकर्मणि नानाविधादृष्टाख्यकर्मणां विपाकेन फलदानोन्मुखेन कालेन बह्वीः प्रजाः सिसृक्षतस्ते तव आत्मा बुद्धिर्नावसीदति न नश्यति । तत्र निमित्तमाह—**वर्षीयानिति** । वर्षीयान् बहुसंवत्सरकालसम्पन्नो मदनुग्रहोऽस्तीति यत् तस्मादिति शेषः । वर्षीयान् ज्यायानिति वा ॥ ३४ ॥

एतदेव स्पष्टयति—**ऋषिमिति** । ऋषिस्त्रिकालदर्शी स्यादिति वचनात् ज्ञानित्वात् आद्यमादौ भवन्तं त्वाम् । प्रथमोत्पन्नत्वेन तव श्रेष्ठत्वात् । हेत्वन्तरमाह—**यन्मन इति** । प्रजाः संसृजतस्ते

ज्ञातोऽहं भवता त्वद्य दुर्विज्ञेयोऽपि देहिनाम् ।
यन्मां त्वं मन्यसे युक्तं भूतेन्द्रियगुणात्मभिः ॥ ३६ ॥

तुभ्यं मद्विचिकित्सायामात्मा मे दर्शितो बहिः ।
नालेन सलिले मूलं पुष्करस्य विचिन्वतः ॥ ३७ ॥

यच्चकर्थ मम स्तोत्रं मत्कथाभ्युदयाङ्कितम् ।
यद् वा तपसि निष्ठा च स एष मदनुग्रहः ॥ ३८ ॥

प्रीतोऽहमस्तु भद्रं ते लोकानां विजयेच्छया ।
यदस्तौषीद् गुणमयं निर्गुणं माऽनुवर्णयन् ॥ ३९ ॥

---

तवाऽऽत्मा बुद्धिर्नावसीदति । अन्यव्यापारग्रस्तस्य अन्यत्र मनोनिधानं दुष्करम् । तथापि तत् कृतम् । अत इतरान् प्रति पापीयानपि रजोगुणस्त्वां न बध्नातीत्यर्थः ॥ ३५ ॥

मनोनिर्बन्धनफलमाह—**ज्ञात इति** । यथास्थितवस्तुज्ञानमेव मत्प्रसादजनकं तत् तवास्तीत्याह—**यन्मामिति** । त्वं भूतेन्द्रियगुणात्मभिः भूतेन्द्रियत्रिगुणमनोबुद्धिभिर्नियामकतया युक्तं मां मन्यसे न तु तदात्मकत्वेनेति यत् तस्माद् यथार्थज्ञानित्वादित्यर्थः । 'भूतेन्द्रियमनोबुद्धित्रिगुणादिषु सर्वशः । युक्तं नियामकतया पश्यन् जानाति केशवम्' इति वचनात् भूतेन्द्रियादिनियामकतया तद्युक्तज्ञानमेव केशव[1]ज्ञानमिति भावः ॥ ३६ ॥

इतः पूर्वं स्वरूपानाविष्करणमपि तवानुग्रहविशेषार्थमित्याशयेनाह—**तुभ्यमिति** । प्रलयसलिले पुष्करस्य पद्मस्य नालेन नालनाडीद्वारा पुष्करस्य मूलं कारणं मां विचिन्वतस्तव मद्विचिकित्सायां मद्दिदृक्षाजिज्ञासायां मे आत्मा सच्चिदानन्दलक्षणस्तुभ्यं त्वदर्थं बहिर्दृग्विषयत्वेन दर्शितः ॥ ३७ ॥

त्वत्कथातपोनिष्ठाबलात् त्वं प्रत्यक्षोऽभूर्न तु स्वत इति दर्पो माभूदिति भावेनाह—**यच्चकर्थेति** । कथ वाक्यप्रबन्ध इति धातोः स्तोत्रलक्षणो वाक्यप्रबन्धः कथा । तस्याः सम्यगुदय उत्कर्षस्तेनाङ्कितं युक्तम् । वागिन्द्रियव्यापारस्य मदनुग्रहमन्तरेणानुपपत्तेस्तेन शुभविषया प्रवृत्तिरभूत् तव । स एष मदनुग्रह इत्युच्यते । 'यो वाचि तिष्ठन्, यो मनसि तिष्ठन्' इत्यादेः ॥ ३८ ॥

कथापि स्तोत्रलक्षणा न प्रहेलिका बालप्रियेति भावेनोक्तं स्फुटयति—**प्रीत इति** । लोकानां सृष्टिविजयेच्छया गुणमयं सार्वज्ञ्यादिगुणपूर्णं निर्गुणं सत्त्वादिगुणरहितं मामनुवर्णयन्नस्तौषीदिति यत्

---

[1] केशवेति क कोशे नास्ति ।

य एतेन पुमान् नित्यं स्तुत्वा स्तोत्रेण मां भजेत् ।
तस्याहं सम्प्रसीदेयं सर्वकामवरेश्वरः ॥ ४० ॥

पूर्तेन तपसा यज्ञैर्दानैर्योगैः समाधिना ।
राज्यं निःश्रेयसं पुंसां मत्प्रीतिस्तत्त्वविन्मतम् ॥ ४१ ॥

अहमात्मात्मनां धातः प्रेष्ठः सन् प्रेयसामपि ।
अतो मयि रतिं कुर्याद् देहादिर्यत्कृते प्रियः ॥ ४२ ॥

---

तेनाहं प्रीतोऽस्मि । ते भद्रं कल्याणमस्तु इत्यन्वयः । 'सार्वज्ञ्यादिगुणैर्युक्तं सत्त्वादिगुणवर्जितम् । यो जानाति हरिं तस्य प्रीतो भवति केशवः' इतीदं प्रमाणं गुणोत्कर्षज्ञानमेव प्रीतिजनकं न निर्गुण-ज्ञानमिति भावेनोदाहृतम् ॥ ३९ ॥

त्वत्कृतस्तोत्रेण मां भजमानो यस्तस्मै प्रसन्नोऽभीष्टं ददामि किमु तुभ्यमित्यभिप्रेत्याह—**य एतेनेति** । 'आधिकारिकदेवानां स्वाधिकाराभिकामनम् । भवति प्रीतये विष्णोर्भक्त्यादेरपि यत् सदा'[1] इत्यनेन सृष्टिस्वाधिकारकामेन ब्रह्मणा कृतमिदं स्तोत्रं कथं हरिप्रीतिजनकं स्यादितीदं चोद्यं निर्मूलनीयम् । अत एव सर्वकामवरेश्वर इत्युक्तम् । सर्वकामितवराणामीश्वर इत्यर्थः ॥ ४० ॥

मत्प्रीतेरेव सर्वपुरुषार्थोत्तमत्वं नान्यस्येत्याह—**पूर्तेनेत्यादिना** । तुलापुरुषादिहिरण्यदानैः । पुंसां मत्प्रीतिः निःश्रेयसं राज्यं[2] रञ्जनीयं तत्त्वविन्मतं तत्त्वज्ञानिनः मतम् । रञ्जनीयमित्यनेन मोक्षेऽपि रञ्जनीया मत्प्रीतिरेवेति ध्वनयति । तदुक्तम्—'मुक्तस्यापि हरेः प्रीतिः सर्वतोऽप्यनुराजते[3]' इति ॥ ४१ ॥

मुक्तावपि मत्प्रीतिरेव रञ्जनीयेत्युक्तं, तत्र मुख्यसाधनं भक्तिरेवेत्याह—**अहमिति** । धातश्चतु-र्मुख । अहमात्मनां सर्वजीवानां आत्मा अन्तर्यामित्वेनानन्दादिनिर्माता, अत एव प्रेयसामतिशयेन प्रियाणां स्वात्मादीनामपि सन् अभ्यर्हितः प्रेष्ठः प्रियतमः । सर्वस्मात् प्रियाद् देहादेस्तव प्रेष्ठत्वं

---

[1] तात्पर्यवचनमिदं पूर्वश्लोकेन संगतं स्यात् । तत्र लोकानां विजयेच्छयेति ब्रह्मण लोकविजयेच्छाश्रवणात्। 'लोकानां विजयेच्छया सर्वलोकाधिपत्येच्छया' इत्यनन्ततीर्थाः । 'विजयेच्छया सृष्टीच्छया' इति यादुपत्यम् ।
[2] 'निःश्रेयसं राज्यं' इत्येतत् 'मोक्षेऽपि रञ्जनीया' इति विभक्तिविपरिणामेन लिंगव्यत्यासेन च तात्पर्यदर्शित-रीत्या व्याख्यातम् । [3] अनुरज्यत इति पाठान्तरम् ।

सर्ववेदमयेनेमा आत्मनात्मात्मयोगिना ।
प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते ॥ ४३ ॥

मैत्रेय उवाच —

तस्मा एवं जगत्स्रष्टा प्रधानपुरुषेश्वरः ।
व्यज्येदं स्वेन रूपेण कञ्जनाभस्तिरोदधे ॥ ४४ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे दशमोऽध्यायः ।

---

कथमित्यत उक्तम्—**देहादिरिति** । देहादिर्यस्य स्वात्मनः कृतेऽर्थे प्रियः, अस्य स्वात्मनो देहादिः प्रियः स्यादिति मयैवापादितत्वादिति यदतः स्वात्मादिभ्यः प्रियतमत्वान्मयि रतिं भक्तिं भवान् कुर्यादित्यन्वयः[1] । 'सर्वतोऽपि प्रियो ह्यात्मा तस्यापि प्रियतां हरिः । आपादयति यत् तस्मात् स्वात्मनोऽपि प्रियो हरिः' । इति च ॥ ४२ ॥

सृष्टावेवाधिकृतत्वात् ब्रह्मणः सृष्टिकामनं न दोषहेतुः किन्तु हरेः प्रीतिहेतुस्तदाज्ञाकारित्वादिति सूचितम् । तदिदानीं स्पष्टमाह—**सर्वेति** । सर्ववेदमयेन 'प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव' इत्याद्यखिलवेदप्रतिपाद्येन, आत्मनो मत्तः योगः सम्बन्धोऽस्यास्तीति आत्मयोगी तेन मत्तो जातेन आत्मना देहेन आत्मा ब्रह्मा त्वं या मय्यनुशेरते ता इमाः प्रजाः यथापूर्वं यथा पूर्वकल्पे सृष्टास्तथा सृजेत्यन्वयः[2] । त्वदन्यस्यानधिकृतत्वात् त्वमेवैतत् कुर्वित्यवधारणार्थे चशब्दः । रुद्राद्युपसंग्रहार्थो वा ॥ ४३ ॥

एवंविधमहिम्नो ब्रह्मणोऽप्यदृश्योऽभून्नारायण इति माहात्म्यातिशयप्रकटनाय हरेस्तिरोधानं कथयति—**तस्मा इति** । प्रधानपुरुषयोः प्रकृतिब्रह्मणोरीश्वरः । यद् ब्रह्मणो मनसि सन्निहितमिदं व्यज्य व्यक्तीकृत्य ॥ ४४ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे दशमोऽध्यायः ॥

---

[1] 'अहं देहादिर्यत्कृते येषामर्थे प्रियस्तेषां प्रेयसामपि देहाद्यपेक्षयातिशयेन प्रियाणामप्यात्मनां जीवानां प्रेष्ठः सन् प्रियत्वापादकत्वेनातिशयेन प्रीतिविषयः सन् आत्मा अन्तर्यामी भवामि । ... इति यादुपत्यम् ।

[2] सर्ववेदमयेन सर्ववेदार्थविषयकेन आत्मात्मयोगिना आत्मनां जीवानामात्मा स्वामी यस्तद्विषयक ध्यानादिरूपयोगवता आत्मना मनसा .... ' इति यादुपत्यम् ।

अथ एकादशोऽध्यायः

विदुर उवाच —

अन्तर्हिते भगवति ब्रह्मा लोकपितामहः ।
प्रजाः ससर्ज कतिधा दैहिकीर्मानसीर्विभुः ॥ १ ॥

ये च मे भगवन् पृष्टास्त्वय्यर्था बहुवित्तम ।
तान् वदस्वानुपूर्व्येण छिन्धि नः सर्वसंशयान् ॥ २ ॥

शुक उवाच —

एवं सञ्चोदितस्तेन क्षत्त्रा कौषारवो मुनिः ।
प्रीतः प्रत्याह तान् प्रश्नान् हृदिस्थानथ भारत[1] ॥ ३ ॥

मैत्रेय उवाच —

विरिञ्चोऽपि तथा चक्रे दिव्यं वर्षशतं तपः ।
आत्मन्यात्मानमावेश्य यथाऽह भगवानजः ॥ ४ ॥

तद् विलोक्याब्जसंभूतो वायुना यदधिष्ठितम् ।
पद्ममम्भश्च तत्कालकृतवीर्येण कम्पितम् ॥ ५ ॥

---

अस्मिन्नध्याये नवविधसृष्टिकथनेन निरतिशयमहिमा हरेरुच्यते । तत्र शुको मैत्रेयं प्रति विदुरः पृच्छतीति परीक्षितमाह—**अन्तर्हित इति** । दैहिकीर्मानसीरिति देहमनोभ्यां सृष्टाः ॥ १ ॥

हृदिस्थान्, विदुरस्येति शेषः ॥ ३ ॥

भूयश्च तप आतिष्ठेति हरिणा यदुक्तं तदाज्ञाकरणप्रकारमाह —**विरिञ्चोऽपीति** । आत्मानि परमेश्वरे । आत्मानं मनः । अवेश्य निधाय ॥ ४ ॥

यदात्मनाधिष्ठितं तत्पद्मं तत्कालकृतवीर्येण प्रबोध[2]कालकृतपराक्रमेण, तीव्रेणेत्यर्थः । वायुन कम्पितमम्भश्च कम्पितं विलोक्य ॥ ५ ॥

---

[1] भार्गव–क,छ,ङ । एतदनुसारेण एतेपु कोशेषु श्लोकारम्भेऽपि सूत उवाचेति पाठः । भृगुकुलोत्पन्नं शौनकं प्रति सूतोक्त्यभिप्रायेणायम् । [2] प्रलय–क ।

तपसा ह्येधमानेन विद्यया चात्मसंस्थया ।
विवृद्धविज्ञानबलो न्यपाद् वायुं सहाम्भसा ॥ ६ ॥

तद् विलोक्य वियद्व्यापि पुष्करं यदधिष्ठितः ।
अनेन लोकान् प्राग्लीनान् कल्पितास्मीत्यचिन्तयत् ॥ ७ ॥

पद्मकोशं तदाविश्य भगवान् कर्मचोदितः ।
एकं व्यभाङ्क्षीदुरुधा त्रिधा भाव्य द्विसप्तधा ॥ ८ ॥

एतावान् जीवलोकस्य संस्थाभेदः समासतः ।
धर्मस्य ह्यनिमित्तस्य विपाकः परमेष्ठिनः ॥ ९ ॥

---

मूलोन्मूलनन्यायेन अम्भसा सह वायुं न्यपादित्यन्वयः । 'निपानमुदपानं स्यादापानं पानगोष्ठिकः[1]' इति हलायुधः ॥ ६ ॥

हरिणा स्रष्टुमुपदिष्टो ब्रह्मा संहर्तुमुपक्रमते[2] किमिदं हन्तेत्याशङ्क्य सर्गविरोधित्वात् तयोः पानं युक्तमिति भावेनाह—**तद् विलोक्येति** । वियद्व्यापि आकाशवन्महत्परिमाणोपेतम् ॥ ७ ॥

एकेन पद्मेन त्रित्वादिसंख्याविशिष्टलोकरचनं कथमिति तत्राह —**पद्मकोशमिति** । यदाऽचिन्तयत् तदैव चतुर्दशभुवननिर्माणनिमित्तेन कर्मणाऽदृष्टेन चोदितः कर्मणा विषयभूतेन[3] हरिणा प्रेरितो भगवान् ज्ञानवैराग्यादिगुणशाली[4] पद्मकोशमाविश्य एकत्वसंख्याविशिष्टमुरुधा बहुत्वसंख्याविशिष्टत्वेन व्यभाङ्क्षीद् विभक्तवान् । किमनन्तसंख्याविशिष्टमकरोत् ? नेत्याह— **त्रिधेति** । भूम्यन्तरिक्षस्वर्गात्मना त्रिधा भाव्य कृत्वा तत् त्रयं पुनर्द्विसप्तधा चतुर्दशभुवनात्मना, विभक्तवानिति शेषः ॥ ८ ॥

न्यूनातिरेकसंख्यां निषेधति—**एतावानिति** । जीवानां लोकस्यावस्थानस्य संस्थाभेदः व्यवस्थाविभागः, समासतः संक्षेपतः, मया तव कथित इति शेषः । इदमपि न स्वशक्त्या कृतमित्याह—**धर्मस्येति** । परमेष्ठिनो ब्रह्मणोऽनिमित्तस्य 'अ निषेधे पुमान् विष्णौ' इत्यभिधानाद् अः परमात्मा निमित्तं यस्य सोऽनिमित्तः, तस्य ब्रह्मार्पणबुद्ध्या कृतस्येत्यर्थः । धर्मस्य विपाकः विशिष्टफलम् इति विद्धीति शेषः । 'अः इति ब्रह्म' इति श्रुतेः निर्निमित्तो नार्थः[5] । तप आदीनां भगवद्विषयत्वोक्तेः ॥ ९ ॥

---

[1] कोष्ठिके-क,ङ । [2] हरिणा सृष्टावुपदिष्टेन ब्रह्मणा संहर्तुमुपक्रम्यते-छ,घ,ङ ।
[3] स्वज्ञानविषयभूतेनेत्यर्थः । [4] विरिञ्च इत्युपस्कर्तव्यम् । [5] निर्निमित्त इति तु नार्थः ।

विदुर उवाच --
यदात्थ बहुरूपस्य हरेरद्भुतकर्मणः ।
कालाख्यं लक्षणं ब्रह्मन् यथा वर्णय नः प्रभो ॥ १० ॥

मैत्रेय उवाच —
गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः ।
पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत् ॥ ११ ॥
विश्वं वै ब्रह्मतन्मात्रं संस्थितं विष्णुमायया ।
ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना ॥ १२ ॥

---

श्रुतहरिमहिमा विदुरः कथान्तरप्रसङ्गेन मैत्रेयः भगवत्कथां समापयतीति भीत्या मैत्रेयं पृच्छति —**यदिति** । बहुरूपस्यानन्तरूपस्य हरेः कालाख्यं लक्षणं स्वरूपं यथा यथावत् । 'लक्षणं लक्ष्य-मात्मा च स्वरूपमिति कथ्यते ' इत्यभिधानान्नान्योऽर्थः किन्तु स्वरूपमेव ॥ १० ॥

कालस्य सर्वप्रवर्तकत्वेन प्रधानत्वात् सूचीकटाहन्यायेन तत्स्वरूपं वक्ष्यन् मैत्रेय आदौ जगत्-सृष्ट्याद्यर्थं गुणत्रयोपादानकर्तृभगवद्रूपत्रयप्रादुर्भावप्रकारं वक्ति—**गुणेति** । प्रलये गुणानां द्रष्टृत्वेन स्थितो गुणानां व्यतिकरं विकारविशेषं [1]सम्यक्करोतीति गुणव्यतिकराकारः । कर्मण्यण्प्रत्ययः । पुरुषः पूर्णषड्गुणः, अत एव निर्विशेषः निर्विकारोऽधिकान्तररहितो वा अत एवाप्रतिष्ठितः, अन्यत्रेति शेषः । 'स भगवः[2] कस्मिन् प्रतिष्ठित इति स्वे महिम्नि ' इति श्रुतेः । तस्य गुणव्यतिकरस्योपादानं स्वीकारो येन स तथा तं गुणव्यतिकरोपादानकर्तारमित्यर्थः । त्रिरूपत्वेनात्मानं लीलयाऽसृजत् आविरभावयत् ॥ ११ ॥

स्वार्थाभावेऽप्यन्यस्य किम्प्रयोजनमुद्दिश्य रूपान्तरग्रहणं हरेरिति तत्राह — **विश्वमिति** । सृष्ट्याद्यर्थत्वेन तस्य पुरुषस्य ब्रह्मा विष्णुरीश्वर इति त्रीणि रूपाण्यात्मना सृष्टानीत्यनेनोच्यते । तथाहि-विश्वं ब्रह्मतन्मात्रं वै, ब्रह्माणं सृष्ट्वा चतुर्मुखत्वेन तं प्रविश्य सृष्टिबृंहणाद् ब्रह्मनाम्ना तेन विष्णुना मितं त्रातं चेति तथोक्तम् । विष्णुनाम्नो हरेर्मायया सामर्थ्येन संस्थितं व्यवस्थापितं, स्वस्वाधिकार इति शेषः । अत्र यदीश्वराख्यं संहर्तृरूपं तत् कालाख्यम् । तेन रुद्रं सृष्ट्वा पञ्चमुखत्वेन तं प्रविश्य

---

[1] मूले आकार इत्यत्र आङः सम्यगित्यर्थः ।

[2] अयं घ पाठः । अन्यत्र—भगवान् ।

यथेदानीं तथा चाग्रे पश्चादप्येतदीदृशम् ।
सर्गो नवविधस्तस्य प्राकृतो वैकृतश्च यः ॥ १२ ॥

---

कालेन संहर्त्रा अव्यक्तमूर्तिना चक्षुराद्यगम्यस्वरूपेण हरिणा परिच्छिन्नं संहृतमित्यन्वयः । चतुर्मुखं सृष्ट्वा तं प्रविश्य स्वयं चतुर्मुखो ब्रह्मनामा हरिः सृष्ट्ये रजोगुणमुपादत्ते, अन्यरूपप्रवेशमन्तरेण स्वयं विष्णुनामा रक्षार्थं सत्त्वमुपादत्ते । पञ्चमुखमीशानं सृष्ट्वा पञ्चमुखस्तं प्रविश्येश्वरनामा हरिः संहारार्थं तमोगुणमुपाददातीति तात्पर्यार्थोऽपि वा इत्यनेन श्रुतिप्रसिद्धिद्योतकेन ज्ञायते । 'अथ त्रयी वाव प्रकृतिः सत्त्वं रजस्तम इति । तां नारायणः परिपश्यत्यनन्यप्रतिष्ठस्तं वा एनमाहुः पुरुष इति पूर्णो ह्येष भवति । स त्रेधा बभूवैषां गुणानामुपादानाय विष्णुर्वा व सत्त्वस्य रजसो ब्रह्मेशो नाम तमसः । स आविवेश ब्रह्मा ब्रह्माणं चतुर्मुखं ईशं ईशानं पञ्चमुखम् । यो वा ईशं ईशानमाविवेश तं वा एतं काल इत्याचक्षते काल इत्याचक्षते' इति सौकरायणश्रुतिः ॥ १२ ॥

'तदुपादानं सोऽव्यक्तलक्षणो बोधः उपादानं कार्याधिकरणं यस्य स तथा तं तदुपादानं आत्मानमेव चेतनाचेतनस्वरूपेणासृजत् । आत्मानमसृजदित्युक्तत्वादाकाशादेरविद्यमानस्यैवोत्पत्तिः । नैतत् सारं, यतो विश्वमाकाशादितन्मात्रं प्रलयकाले बभूव । तत्कथम् ? संस्थितं प्रलीनं नष्टमिति यावत् । विष्णुमायया व्याप्तस्य ब्रह्मणो मायया अव्यक्तलक्षणया ईश्वरेण ब्रह्मणा परिच्छिन्नं विषयीकृतम् । कालेन कालात्मकेन ज्ञानस्वरूपेण साक्षिणाऽव्यक्तमूर्तिना चक्षुराद्यगम्यस्वरूपेण' इति त्रैकालिकासत्त्वेन व्याख्यनमयुक्तम् । प्रपञ्चत्रैकालिकाबाध्यत्वस्यानुमानसिद्धत्वादित्याह—**यथेति** । यथेदानीं सृष्टिकाले अर्थक्रियाकारित्वात् सत्यत्वमनुभूयते तथाग्रे सृष्टेः पूर्वं प्रलये पश्चादुत्तरत्राप्येतज्जगदीदृशं सत्यमित्यनुमातव्यम् । यथेदानीं कारणरूपेण सचैतन्यं दृश्यमाकाशादिकार्यमुपलभ्यते तथा अग्रे प्रलयकाले च कारणरूपेण सचैतन्यं दृश्यमिति चानुमातव्यमिति त्रैकालिकासत्त्वेऽयं दृष्टान्त इति चेन्न, अस्मदुक्तस्य प्रमाणानुकूल्यादन्यस्याननुकूल्यादनर्थहेतुत्वाच्च । तदुक्तम्—'सृष्टिश्च प्रलयश्चैव संसारो मुक्तिरेव च । देवर्षिप्रभृतयो लोकालोका भूरादयस्तथा । अनाद्यनन्तकालीनाः सर्वदैकप्रकारतः । जगत्प्रवाहः सत्योऽयं नैव मिथ्या कथञ्चन । ये त्वेतदन्यथा ब्रूयुः सर्वहन्तार एव ते' इत्यादि । प्रवाहरूपेण सत्यस्य विश्वस्य सर्गस्य नवविधत्वाच्च सत्यत्वं सिद्धम् । न हीन्द्रजालवन्मिथ्याभूतस्य नियतसंख्याविषयत्वमनेकविधत्वात् तस्येति भावेनाह—**सर्ग इति** । तस्य विश्वस्य । 'विधा विधौ प्रकारः[1]' स्याद् इत्यभिधानम् । प्रकृतिविकृतिमत्त्वाच्च नानिर्वाच्यमायाकृतमित्याह — **प्राकृत इति** । यः सर्गः प्राकृतो वैकृतश्चेत्यन्वयः ।

---

[1] प्रकारे-ग

कालद्रव्यगुणैरस्य त्रिविधः प्रतिसङ्क्रमः ।
आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः ॥ १४ ॥

---

'अव्यक्ताद्याः पृथिव्यन्ताः सर्वाः प्रकृतयः स्मृताः । तदुपादानकः सर्गः प्राकृतः परिपठ्यते । अण्डं तु विकृतं ज्ञेयं तज्जो वैकृत उच्यते' इति वचनात्, अण्डाद् बहिः सर्गः प्राकृतः विकृताण्डान्तस्थः सर्गो वैकृत इति ज्ञातव्यम् । चशब्देन मायामयस्य परिणामादर्शनं लिङ्गमिति सूचयति । स्वरूपाद-प्रच्युता[1]दन्यथा स्फुरणं मायेत्यङ्गीकारात् ॥ १३ ॥

प्रतिपन्नोपाधौ सत्त्वप्रतिषेधव[2]द्बाधाभावाच्च सत्य इति भावेनाह—**कालेति** । अस्य विश्वस्य प्रतिसङ्क्रमः प्रलयाख्यो नाशः कालद्रव्यगुणनिमित्तभेदेन त्रिविधो ज्ञेयः । शतवर्षादिसंख्याजातः कालतः । घटादेः मुसलादिना द्रव्यतः । प्रवृद्धेन सत्त्वेन तामसज्ञानम् उल्बणेन तमसा सात्त्विकं सुखं क्वचिदुद्रिक्तेन रजसा सात्त्विकतामसयोरपि, क्वचित् सत्त्वेन राजसतामसयोरपीत्यादिको विलयो गुणतः । 'रजस्तमश्चाभिभूय सत्त्वं भवति' इत्युदाहृतम् । 'तामसस्य पदार्थस्य सत्त्वं हि लयकारणम् । सात्त्विकस्य तमश्चैव तयोरपि रजः क्वचित् । गुणतोऽयं लयः प्रोक्तो द्रव्यतस्तु विरोधिना । कालतः कालसंख्याको[3] लयः सर्वस्य वस्तुनः' इति वचनाच्च विश्वस्य त्रैकालिकासत्त्वलक्षणो बाधो नोपपन्न इति । तत्र प्राकृतवैकृतयोर्मध्ये प्राकृतसर्गमाह—**आद्य इति** । आत्मनः परमात्मनः सकाशाद् गुणवैषम्यं गुणवैषम्यनामको महतश्चतुर्मुखदेहस्य तदभिमन्यमानमहत्तत्त्वस्य च प्राकृतेष्वाद्यः सर्ग उच्यते । अत्रेदमाकूतम्—तमोगुणाद् रजोगुणो द्विगुणः रजोगुणात् सत्त्वगुणो द्विगुणः । एवं प्रकृति-जानां गुणानां परिमाणं स्यात् । तत्र त्रिगुणेषु सत्त्वगुणः केवलो रजस्तमोभ्यामविमिश्रः । रजोगुणस्तु त्रिविधः । तथाहि मूलरजसि रजोगुणाच्छताधिकः सत्त्वगुणः रजःशतांशस्तमोगुण इति रजोराशिः । मूलतमोगुणोऽपि त्रिविधः[4] । मूलतमसि तमोगुणाद् दशगुणाधिकः सत्त्वगुणः रजस्तमस एकादश-धाविभक्तादेकांशसम्मितम्[5] । एवं गुणानां निजस्थितिः । तत्र प्रलये मूलरज एकादशधा[6] विभक्तं दशांशेन शुद्धसत्त्वेन मिश्रितं भवति । एकांशेन मूलतमस्यपि मिश्रितं स्यात् । एतां गुणानां साम्या-

---

[1] स्वरूपादप्रच्युतस्येत्यर्थः [2] प्रतिषेधरूपबाधाभावादित्यर्थः । [3] कालसंख्याज इति पाठान्तरम् ।
[4] त्रिविध इति त्रिभिर्मिश्रणमुच्यते । [5] अत्र 'तद्दशांशेन तु रजः' इति तात्पर्यवाक्येन स्फुटं विरोधात् लेखकप्रमादः संभाव्यते । रजस्तमसो दशधा विभक्तादेकांशसंमितम्—इत्येव पठनीयम् ।
[6] एकादशधा विभक्तं दशांशैः सत्त्वे एकांशेन तमसि च संगतं चेत् अन्यस्य रजस एवाभावात् 'मूलरजसि संगतं दशांशं तद्रजः' इति अत्रैवोत्तरत्रोच्यमानमसंगतं स्यात् । अतो यादुपत्यानुसारेण रजोराशिः द्वादशधा विभक्तः दशांशैः सत्त्वेन एकांशेन तमसा मिश्रितः सन् पुनरेकांशेन रजोराशौ तथैवावतिष्ठत इत्यभ्युपेयम् ।

**द्वितीयस्त्वहमस्तत्र द्रव्यज्ञानक्रियादयः ।**
**भूतसर्गस्तृतीयस्तु तन्मात्रद्रव्यशक्तिमान्**[1] ॥ १५ ॥

---

वस्थामाहुः । तत्र यदा मूलसत्त्वेन सङ्गतं मूलरजः मूलरजसि सङ्गतं दशांशं तद्रजः सर्वं तन्मूलतमसा सङ्गतं संयुक्तं भवति तदा महत्तत्त्वं समुत्पन्नमाहुः । तत् केवलसत्त्वगुणमुच्यते[2] । प्रलये मूलसत्त्वेन सङ्गतं मूलरजः मूलतमसि सङ्गतं मूलरजः मूलरजसि स्वाभाविकं रज इति रजांस्येव त्रिभागा एकांशस्तम इति चतुर्भागा एषां संयोगेनोत्पन्नगुणवैषम्यनामकं महत्तत्वं ब्रह्मणो रूपमिति । तदुक्तम्— ‘तमसो रजस्तु द्विगुणं रजसः सत्त्वमेव च । परिमाणत एवं स्युस्त्रयः प्रकृतिजा गुणाः । तत्र सत्त्वं केवलं स्याद् रजस्यपि शताधिकम् । सत्त्वं रजःशतांशन्तु तमस्तत्र प्रकीर्तितम् । तमस्यपि तथा सत्त्वं तमसस्तु दशोत्तरम् । तद्दशांशेन तु रजो मूलजं यद्रजस्तु तत् । विलये दशांशतः सत्त्वे एकांशेन तमस्यपि । मिश्रितं भवति ह्येतां साम्यावस्थां विदुर्बुधाः । यदा तु तद् रजः सर्वं तमसा सह सङ्गतम् । तदा त्वाहुर्महत्तत्त्वं तच्चतुर्भागसम्भवम् । तत्र त्रिभागो रजस एकोंऽशस्तमसतथा । तदाहुर्ब्रह्मणो रूपं गुणवैषम्यनामकम् । तदेव केवलं सत्त्वमितरापेक्षया भवेत् । श्रीर्मूलसत्त्वं विज्ञेया भूर्मूलं रज उच्यते । मूलं तमस्तथा दुर्गा महालक्ष्मीस्त्रिमूलिका । गुणेभ्यो गुणमूलाच्च योऽतीतः स जनार्दनः’ इति[3] ॥ १४ ॥

द्वितीयसर्गमाह—**द्वितीय इति** । द्वितीयोऽहंकारस्य सर्गः । तत्राहंकारसर्गे द्रव्याणि वियदादि भूतानि ज्ञानक्रिया ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि आदिशब्दगृहीता मन इन्द्रियाभिमानिदेवाश्च, जायन्त

---

[1] तन्मात्राद्द्रव्यशक्तिमान्—इति पाठान्तरम् । [2] इतरतत्त्वापेक्षया सत्त्वगुणप्राचुर्यादिति तात्पर्यं स्पष्टम् ।

[3] अत्र बहुस्थले स्फुटं तात्पर्यविरोधाल्लेखकप्रमादः संभाव्यते । तात्पर्यानुरोधियादुपत्यानुसारेणायमभिप्रायः—मूलप्रकृतौ सत्त्वरजस्तमोगुणा अपरिच्छिन्नाः । सृष्ट्यर्थं तस्याः प्रकृतेः उपादीयमानानां सत्त्वरजस्तमसां परिमाणं तु ४:२:१ । तत्र सत्त्वराशिः केवलसत्त्वगुणात्मकः । रजोराशिस्तमोराशिश्च गुणत्रयमिश्रणरूपः । रजोराशौ सत्त्वरजस्तमसां परिमाणम् १००:१:०.०१ । एवं तमोराशौ तेषां परिमाणम् १०:०.१:१ । प्रलये रजोराशिरयं द्वादशधा विभक्तः । तत्र दश भागाः सत्त्वराशौ मिश्रिता भवन्ति । एको भागस्तमोराशौ मिश्रितो भवति । पुनरेको भागो रजोराशौ तथैवावतिष्ठते । तदेवं प्रलये राशित्रयेऽपि गुणत्रयसंबन्धात् प्रळयो गुणानां साम्यावस्थेत्युच्यते । तत एते राशयः मूलप्रकृतावपरिच्छिन्नायां विलीयन्ते । सा च गुणत्रयात्मनाऽवतिष्ठत इति तदापि साम्यावस्थैव । सृष्टिकाले तावत् सत्त्वराशौ प्रविष्टं दशांशं रजः, रजोराशिस्थमेकांशं रजः, तमोराशिस्थमेकांशं रजश्च तमोराशिस्थेन तमसा संगतं भवति । इदमेव च महत्तत्त्वं यच्चतुर्मुखशरीरम् । सृष्टिकाले सत्त्वराशावितरगुणसंसर्गाभावाद्, सत्त्वराशिः रजोराशिवत् तमोराशिवच्च गुणत्रयात्मको नेति सेयमवस्था गुणवैषम्यमित्युच्यते ।

**चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः ।**
**वैकारिको देवसर्गः पञ्चमो यन्मयं मनः ॥ १६ ॥**

---

इति शेषः । भूतादीनां सर्गं क्रमेण तृतीयादित्वेनाह—**भूतसर्ग इति** । भूतानामाकाशादीनां सर्गः तन्मात्रद्रव्यशक्तिमान् । तन्मात्राः शब्दादयः । आकाशादीनां शब्दादिस्वरूपत्वात् तन्मात्रशक्तिमान् । द्रवणशक्तिमत्त्वात् द्रव्यशक्तिमान् । अहङ्कारतत्त्वेऽपि गुणवैषम्यमस्तीति ज्ञातव्यम् । तथाहि—मूले रजसि यद् रजः मूले तमसि यत् तमः एतदात्मकं महत्तत्त्वं ब्रह्मणो रूपमेकादशधा[1] विभज्य दशांशाः सत्त्वं स्युः । एकांशो रजः । रज एकादशधा[2] विभज्यैकांशस्तमः । तस्मात् तमस उत्पन्नोऽहङ्कारः । तदभिमन्यमानमहङ्कारतत्त्वं चेति महतोऽहङ्कारसर्गः । सोऽहङ्कारोऽपि त्रिविधः । तस्मिन्नहङ्कारेऽपि दशांशा सत्त्वम् । एकांशो रजः । तद्रज दशधा विभज्यैकांशस्तमः । तमोंऽशात् तामसाहङ्कारः रजोंऽशात्तैजसोऽहङ्कार सत्त्वांशाद् वैकारिकाहङ्कार इति । तत्रापि तामसाद् भूतसर्गः । तैजसादिन्द्रियसर्गः । वैकारिकाद् देवसर्गः । 'यद् रजो मूलरजसि मूले तमसि यद् रजः । तमश्च मूले तमसि महत्तत्वं तदात्मकम् । दशांशास्तत्र सत्त्वं स्युरेकांशो रज एव तु । तद्दशांशं तमो ज्ञेयमहङ्कारस्तदात्मकः । स रुद्रस्तामसो ज्ञेयो विरिञ्चापेक्षयैव तु । इतरापेक्षया रुद्रं सत्त्वाद्यास्तद्रुद्रस्य तु । तत्तमोंऽशात् सात्त्विकांशो मन आद्यः प्रकीर्तितः । रजसोंऽशास्त्विन्द्रियाणि तामसांशाश्च खादयः' इति वचनादिदं तात्पर्यमवगम्यते ॥ १५ ॥

ज्ञानक्रियात्मकः ज्ञानेन्द्रियकर्मेन्द्रियात्मकः । पञ्चमो वैकारिकाहंकाराद् वैकारिकनामा देवसर्गः । इन्द्रियप्रेरकत्वेनातिविकारित्वाद् वैकारिकनामवत्त्वं तेषाम्[2] । यस्माद् वैकारिकाहङ्कारादुत्पन्नत्वान्मनश्च यन्मयमित्युच्यते । 'भूतानि द्रव्यशक्तीनि भूतेषु द्रवणं यतः । तथा तन्मात्रशक्तीनि शब्दाद्यात्मकता यतः । क्रियाशक्तीनि वागाद्यानीन्द्रियाणीतराणि च । ज्ञानशक्तीनि मनसा देवाश्च ज्ञानशक्तयः । एतेषां मूलभूतत्वादहङ्कारस्त्रिशक्तिमान् । मानुषापेक्षया देवाः सात्त्विकाः परिकीर्तिताः । तत्रापि सात्त्विकाः प्रोक्ताः तात्त्विका यास्तु देवताः । तत्रापि सात्त्विको रुद्रस्तत्रापि तु चतुर्मुखः । अविकारौ ब्रह्मरुद्रौ देहभेदादिसम्भवे । विकारवन्त इन्द्राद्यास्तस्माद् वैकारिका मताः । त एवेन्द्रियरूपेण यतस्त्वतिविकारिणः । ज्ञानमात्रगुणोद्रिक्तास्तस्मात् तैजसनामकाः । अविकारित्वयोग्यत्वं निवृत्तं हीन्द्रियेषु तु । वैकारिकत्वनामापि ततस्तेषां न विद्यते । यथा विप्रकुले मूर्खो मूर्ख

---

[1] महत्तत्त्वे सत्त्वरजस्तमसां परिमाणं १०:१:०.१ । तत्र यस्तमोभागस्तस्मादहंकारतत्त्वस्योत्पत्तिः ।
[2] अत्रैवोदाहृततात्पर्यविरोधादत्र लेखकप्रमादः संभाव्यते । इन्द्रियप्रेरकरूपेण देवानां वैकारिकनाम नास्ति । तैजसा इत्येवं च्यन्ते ।

षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभोः ।
षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु ॥ १७ ॥

रजोभाजो भगवतो लीलेयं हरिमेधसः ॥
सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषां च यः ॥ १८ ॥

---

इत्यभिधीयते । विद्याऽयोग्यत्वतः शूद्रो न मूर्खो मूर्ख एव सन् । तामसानीह भूतानि किञ्चिद् व्यवहितत्वतः । ज्ञानस्य सुष्ठुज्ञत्वेऽपि पूर्णज्ञानो हरिः स्वयम्' इति वचनात् तुशब्दचतुष्टयसूचित एषां विशेषो ज्ञातव्यः ॥ १६ ॥

तमसोऽविद्यायाः । तुशब्द एवार्थे । अः विष्णुः तस्मिन् बुद्धिरबुद्धिः तत्पूर्वमेव कृतः[1] । सदा विष्णुबुद्धित्वेऽपि तमःसंसर्गेण स्वबुद्धिर्भ्रष्टा भवतीति भीत्या विशेषतस्तद्बुद्ध्यैवेत्युक्तम् । सर्वदा तद्बुद्धिद्योतनार्थैवेति । यो भूतानां तामसोंऽशस्तस्मादंशादविद्या ब्रह्मणोत्पादिता इति द्योतनाय प्रथमस्तु-शब्दः । तदुक्तम्—'अबुद्धिपूर्वमिव तु ब्रह्मणो हरिबुद्धितः । तामसानां तु भूतानां सहस्रं सत्त्व-भागिनाम् । शतांशरजसामेकतमसां सर्वत्रेदिनाम् । केवलस्तमसो योंऽशः सा अविद्या पञ्चपर्विका जातातिदुष्टा[2] तद्देहाद् दैत्यरक्षः पिशाचकाः' इति । 'अबुद्धिपूर्वकस्तस्य प्रादुर्भूतस्तमोमयः । तमो मोहो महामोहस्तामिस्रोह्यन्धसंज्ञितः । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः' इति श्रीविष्णुपुराणे । 'पञ्चपर्वा त्वविद्या तु भूतेभ्यो हरिणा पुरा । उद्धृता ब्रह्मणि क्षिप्ता सा पुनस्तेन निःसृता । तत्-सृष्टत्वज्ञापनाय तस्मात् सा तामसा मता' इति च । मया इमे षट् प्राकृताः सर्गास्तव कथिता इति शेषः । प्राकृतसर्गकथनानन्तरं अन्यः प्रसङ्गो मा भूदिति परीक्षिद्वाक्यस्यानवकाशं[3] वक्ति— **वैकृतानिति** ॥ १७ ।

प्राकृतवैकृतसर्गकथनश्रवणेन किं फलमित्याशङ्क्य भगवल्लीलात्वाच्छ्रवणेन मुक्तिरेव फलमिति भावेनाह—**रजोभाज इति** । सृष्ट्यर्थं रजोगुणप्रवर्तकस्य हरिवत् सूर्याग्निवन्मेधा यस्य स तथा तस्य जाज्वल्यमानबुद्धेरित्यर्थः । भगवतो नारायणस्येयं सृष्टिः लीला न स्वार्थपरा किन्तु योग्यजन-मुक्त्यर्थेत्यर्थः । विरिञ्चविषयत्वे हरौ मेधा यस्य स तथा तस्य । अनेनाबुद्धिकृत इति पदं विवृतम् ।

---

[1] 'अबुद्धिपूर्वमिव' इति तात्पर्यस्वारस्याद् यादुपस्ये अबुद्धिपूर्वं कृतश्वासादिवदनायासेनैव सृष्टिरिति व्याख्याय, कुतः सर्वथा ज्ञानाभावपूर्वकत्वाभावो नोच्यत इति शङ्कापरिहारायायमप्यर्थो दत्तः ।

[2] जातातिकृष्णा—क [3] परीक्षिद्वाक्यस्यावकाशो यथा न भवति तथेत्यर्थः । वस्तुतः क्षत्तरिति विदुरेति चात्रैवोत्तरत्र मैत्रेयेण संबोधनाद् विदुरवाक्यस्येति स्वरसम् ।

वनस्पत्योषधिलता त्वक्सारा वीरुधो द्रुमाः ।
उत्स्रोतसस्तमःप्राया अन्तःस्पर्शा विशोषिणः ॥ १९ ॥
तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधो मतः ।
अविदो भूरितमसो घ्राणज्ञा हृदिवेदिनः ॥ २० ॥

---

विरिञ्चस्यापि श्रीनारायणानुग्रहेण सृष्टिरियं न श्रमजननी किन्तु लीलारूपेत्यनेनाप्यबुद्धिकृतत्वा[1]च्छ्रमकरीत्यन्यथाप्रतीतिर्निरस्ता । सृष्ट्यादावेते गुणा हरेरेव मुख्याः । तदुक्तम्—'एते गुणा हरेः सम्यक् स्वातन्त्र्यविषयाः सदा' इत्यादि । यस्तस्थुषां स्थावराणां मुख्यः सर्गः स सप्तमः । स च षड्विधः । 'स्थास्नुभिर्नियमान्मुख्या स्थितेर्गतिरवाप्यते । प्रायः परोपकर्तृत्वात् ते मुख्यस्रोतसस्ततः' इति मुख्यस्रोतस्त्वं स्थावराणां युक्तम् ॥ १८ ॥

षड्विधमाह—**वनस्पतीति** । 'फलन्ति ये विना पुष्पैस्तान् वदन्ति वनस्पतीन्' इत्यतः पनसादयो वनस्पतयः । ओषधयः फलपाकान्ता व्रीह्यादयः । लताः पराश्रयबलाः । त्वक्सारा वेण्वादयः । वीरुधः काण्डरुहाणि गुल्मानि । द्रुमाश्चूतादयः । प्रमाणवचने यन्मुख्यस्रोतस इत्युक्तं तदेवोत्स्रोतस इति कथ्यते । उत्स्रोतस इत्यस्यार्थ ऊर्ध्वस्रोतस इति किं न स्यात् ? न स्यात् । असम्भवात् । तथाहि ऊर्ध्वगन्तारो देवा मोक्षैकभागित्वात् । तदुक्तम्—'नियमादूर्ध्वगन्तारो देवा मोक्षैकभागिनः । ऊर्ध्वस्रोतस इत्येवं तस्मात् ते परिकीर्तिताः' इति । तर्हि देवानामयमर्थः कथं सम्पत्स्यते ? उच्यते । उच्चतमत्वमूर्ध्वत्वं तदेवोच्छब्दस्यापीति[2] । तदुक्तम् — 'ऊर्ध्वं इत्येव वस्तूच्चतम एवाभिधीयते । ऊर्ध्वस्रोतस एतस्माद् देवा एव न तत्परे' इति । स्थावराणामेत[3]च्छब्दवाच्यत्वमुच्चं वर्धमानेषु मुख्यत्वात् । तदुक्तम्—'उच्छब्द उच्चमात्रेऽपि तस्मात् स्थास्नुषु भण्यते' इति । अनेन मुख्यशब्दस्यार्थान्तरं दर्शितम् । तत्स्वभावमाह—**तमःप्राया इति** । तमःप्राया अज्ञानप्रचुराः । कल्पवृक्षादिव्यावृत्त्यर्थं प्रायःशब्दः । अन्तःस्पर्शाः स्पर्शने सत्यन्तर्ज्ञानवन्तः । विशोषिणः छेदने सति सपदि शोषवन्तः ॥ १९ ॥

तिरश्चां तिर्यक् स्रोतसां 'नाधो नोर्ध्वं तिरश्चां तु पुनस्तत्रैव यज्जनिः । यज्ञोपयोगं च सतामुपकारं विनापि वा । तिर्यक्स्रोतस इत्येव प्रोच्यन्ते ज्ञानिभिस्ततः' इत्यनेन तिरश्चां तिर्यक्स्रोतस्त्वं

---

[1] लीला यथा अबुद्धिपूर्वमनायासेन क्रियते तथेयं सृष्टिरपि चतुर्मुखस्येत्यर्थः ।

[2] अत्र 'तदेवोच्छब्दस्यापि' इतीयानंशः प्रक्षिप्तः स्यात् । प्रकृतासंगतत्वात् तात्पर्यविरोधाच्च ।

[3] एतच्छब्दवाच्यत्वमिति स्थाने उच्छब्दवाच्यत्वमिति स्यात् । मुख्यशब्दवाच्यत्वमिति वार्थः ।

गौरजो महिषः कृष्णः सूकरो गवयो रुरुः ।
द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम ॥ २१ ॥
खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा ।
एते चैकशफाः क्षत्तः श्रुणु पञ्चनखान् पशून् ॥ २२ ॥
श्वा सृगालो वृको व्याघ्रो मार्जारः शशशल्यकौ ।
सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः ॥ २३ ॥
कङ्कगृध्रबकश्येना[2] भासवल्लूरबर्हिणः ।
हंससारसचक्राह्वकाकोलूकादयः स्वगाः । ॥ २४ ॥

---

विवृतमिति ज्ञातव्यम् । तिरश्चां लक्षणमाह —**अविद इति ।** अविदः कार्याकार्यविशेषज्ञानशून्याः, भूरितमसः शरीरमात्रेऽहंममाभिमानवन्तः । यद्वा आहारनिद्राव्यतिरिक्तविषये ज्ञानरहिताः । घ्राणेनैव जानन्तीति घ्राणज्ञाः । हृद्येव वेदो ज्ञानं येषां ते तथोक्ताः । इदमुभयेषां तस्थुषां तिरश्चां समं लक्षणम् । तदुक्तम्—'तिरश्चीनाः स्थावराश्च अन्तःस्पर्शा इतीरिताः । यत् प्रत्यक्षानुमानाभ्यां हृद्गं ज्ञानं न शास्त्रतः' इति । यदप्रयत्नात् हृदयङ्गमं तदेव जानन्ति न शास्त्रयुक्तिभ्यामित्यर्थः । अष्टा-विंशद्विधत्वं प्रतिज्ञायाधिकोक्तिर्विशेषतो यज्ञेषूपकृतत्वाभिप्रायेण, यो यस्य सदृशः स तत्रान्तर्गत इति ज्ञापनं चेति[1] न दुष्यति । तदुक्तम्— 'अष्टाविंशद् विशेषेण यज्ञेषूपकृतं यतः । तिरश्चां तावदे-तस्माद् भण्यते शास्त्रवेदिभिः' इति । 'अष्टाविंशत् प्रधानास्तु तिरश्चां यास्तु जातयः । यो यस्य सदृशस्त्वन्यः स तत्रान्तर्गतो भवेत् । जलजान्तर्गताः सर्पाः कीटाद्या याश्च जातयः । तेषां जल-प्रधानत्वाच्छरीरस्य तु सर्वशः' इति च ॥ २० ॥

गवादिगोधान्तैः षड्विंशत् । कूर्ममकरादिभिः सप्तविंशत् । कङ्कादिभिरष्टाविंशत् । तदुक्तम् —'गौरजो महिषः कृष्णः सूकरो गवयो रुरुः । अव्युष्ट्रौ च खराश्वौ च तथैवाश्वतरोऽपरः । गौरश्च शरभश्चैव चमरी श्वसृगालकौ । वृको व्याघ्रश्च मार्जारो हरिश्च शशशल्यकौ । कपिर्गजश्च गोधाद्या जलजाः पक्षिणस्तथा' इति ॥ २१–२२ ॥

तत्र कूर्मो जलजत्वेनाष्टाविंशत्स्वन्तर्भूतोऽपि पञ्चनखत्वप्रदर्शनार्थं पृथगुक्तः । 'तत्तदाकारसंयुक्तान् सृज्यान् स्रष्टारमेव च । यः सदा संस्मरेद् योगी न स भूयोऽभिजायते' इति वचनात् प्रसिद्धाना-

---

[1] ज्ञापनायेति इति स्यात् । [2] श्येनभास—क,ङ,ग,घ

अर्वाक्स्रोतस्तु नवमः क्षत्तरेकविधो नृणाम् ।
रजोऽधिकाः कर्मपरा दुःखे च सुखमानिनः ॥ २५ ॥
वैकृतास्त्रय एवैते देवसर्गश्च सत्तम ।
वैकारिकश्च यः प्रोक्तः कौमारस्तूभयात्मकः ॥ २६ ॥

---

मपि द्विशफादीनां स्मरणविधानार्थमुक्तिः । 'उच्यते सुप्रसिद्धं च स्मरणार्थं च कुत्रचित् । अप्रसिद्धं ज्ञापनार्थं द्विधा शास्त्रवचः स्मृतम्' इति च । 'वल्लूरो नृत्तपक्षी च स वल्लूकश्च कथ्यते' इत्यभिधानम् ॥ २३–२४ ॥

नवमः सर्गोऽर्वाक्स्रोतो नाम[1] । केषाम् ? नृणां विषयाः । तुशब्दादेकविधोऽपि द्विविधः, असुराद्या मानुषा इति । मानुषाणां स्वभावमाह— **रजोऽधिका इति** । भौतिकरजोंऽशजातत्वाद् रजोनिष्ठाः । तदुक्तम्—'यद् रजो भौतिकं तेन मानुषाणां सदा जनिः । तमोगूढेन रजसा-त्वितरस्थास्नुचारिणाम्' इति । अनेन भूरितमस इति पदं विवृतम् । रजोनिष्ठत्वादेव कर्मपराः 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' इति वचनात् । किञ्च 'रजोनिष्ठास्तमोनिष्ठा द्वेधाऽर्वाक्स्रोतसः स्मृताः । असुराद्यास्तमोनिष्ठा मानुषास्तु रजोऽधिकाः' इति वचनाच्च । मानुषलक्षणमुक्त्वा असुरादिलक्षणमाह— **दुःखे चेति** । चशब्द एवार्थे । दुःख एव सुखमानिनः[2] । अनेन सर्वार्थेषु विपरीतज्ञानित्वमासुरलक्षणमुक्तं भवति । 'सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी' इति वचनात् । 'सुखे सुखैकभावास्तु देवा नैवं तु दानवाः' इति । चशब्दान्मानुषा उभयात्मका इति ज्ञातव्यम् । तर्हि अर्वाक्स्रोतस्त्वं मानुषाणां कथमिति चेत् ? शुभप्रयत्नमन्तरेणाधोगमनात् । तदुक्तम्—'प्रायोऽधोगमनं यस्मात् प्रयत्नेन विना भवेत् । अर्वाक्स्रोतस इत्येव मानुषाः परिकीर्तिताः' इति । 'तिरश्चां स्थावराणां च बुद्धिपूर्वप्रवर्तिनाम् । असुराणां रक्षसां च पिशाचानां तथैव च । अर्वाक्स्रोतस्त्वमुद्दिष्टं नियमादसुरादिनाम्' इति वचनात् तिर्यगादिसाधारणमपि असुरादीनामर्वाक्स्रोतस्त्वं नियतमिति ज्ञातव्यम् ॥ २५ ॥

सत्तम सत्सु श्रेष्ठ । एते त्रयः तस्थुस्तिर्यङ्मानुषविषया एव वैकृता अण्डाभ्यन्तरसर्गाः[3], उक्ता इति शेषः । 'एव साम्येऽवधारणे' इत्यभिधानादेवशब्दस्य साम्यार्थमाह — **देवसर्ग इति** । देवसर्गः प्राकृतो वैकृतश्चेत्यर्थः । तदेव विशदयति— **वैकारिकश्चेति** । यो वैकारिको देवसर्गः

---

[1] स्रोतोनामा–ङ [2] दुःखयतीति दुःखे दुःखसाधनतया प्रमिते हरिद्वेषादौ सुखयतीति सुखं सुखसाधनमिति मन्यमानाः । यद्वा दुःखरूपे स्वचैतन्ये सुखरूपत्वमानिन इत्यर्थः—इति यादुपत्यम् । [3] अण्डान्तरसर्गा–क

देवसर्गश्चाष्टविधो विबुधाः पितरोऽसुराः ।
गन्धर्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः ॥ २७ ॥
भूतप्रेतपिशाचाश्च विद्याध्रा किन्नरादयः ।
दशैते विदुराख्याताः सर्गास्ते विश्वसृक्कृताः ॥ २८ ॥

---

प्राकृतत्वेन प्रोक्तः स कौमारश्चेत्युभयात्मकः प्राकृतो वैकृतश्चेति । कौ भूमौ मा मानं निर्माणं तस्यारः प्राप्तिर्यस्य स तथोक्तः । अण्डाद् बहिर्जातानां देवानां पुनरण्डान्तर्भूमौ जन्म कौमार इत्युच्यत इत्यर्थः । मा निर्माण इति धातुः । 'कुम् आरन्तीति[1] कौमारो देवानामण्डजोद्भवः । वैकारिकाणां जननात् प्राकृतो वैकृतश्च सः । वैकारिकेष्वेवान्येषामीषद्भोगित्वहेतुतः । उभयात्मकत्वेनैव प्रोच्यन्तेऽष्टगणा अपि ' इति वचनात् ॥ २६ ॥

देवसर्गं विभजति—देवसर्गश्चेति । चशब्देन संख्याविशेषं केषञ्चिदन्तर्भावं[2] सूचयति । तदुक्तम्—'प्रोक्ता अष्टविधा देवा विबुधाः सर्व एव तु । पितॄणां शतमेवात्र असुरास्त्रिशदेव तु । गन्धर्वाप्सरसां चैव द्विशतं परिकीर्तितम् । सप्ततिर्यक्षरक्षःसु त्रिंशच्चारणजातिषु । शतं सिद्धास्तथान्यासु सप्ततिः सर्वजातिषु । ऊर्ध्वस्रोतस एवैते अन्येऽर्वाक्स्रोतसः स्मृताः । वैकारिकेषु देवेषु एते वै मुख्यभोगिनः । अभोगिनस्तदन्ये तु देवा एते ततः स्मृताः । सर्वज्ञास्तैः सहाराध्या भक्तास्तेष्वन्तरेव च । नृत्तगानादिकर्तारो वाहनादिकृतस्तथा । सिद्धसिद्धेतिवक्तारश्चाराश्चैषां क्वचित् क्वचित् । सेवाकरा इति ह्येतैर्भेदैरष्टविधा मताः । अन्ये च ये तु सर्वज्ञा विबुधास्ते प्रकीर्तिताः । तथाऽन्ये कर्मभिस्तैस्तैरष्टभेदान्तरं गताः ' इति । अण्डान्तर्भूमौ जायमानानां देवानां भूतशत[3]गुणत्रयादुत्पत्तियोग्यताभेदेनानेकविधा । तदुक्तम्—'भौतिकेन तु सत्त्वेन गूढं ब्रह्मण आण्डजम् । रूपं तत्रापि तु तमः शतांशेन प्रकीर्तितम् । तज्जो रुद्रस्ततस्त्वेवमिन्द्रादीनां पुनर्जनिः । गूहितं भूतरजसा तत् सत्त्वं मानुषा यदा । देवा एवं गुणास्त्वेते सर्वं व्याप्य व्यवस्थिताः । गुणातीतं च यद् रूपं ब्रह्मादीनां सुखात्मकम् । चिद्रूपं तस्य सत्त्वस्यैवोत्कर्षो यत्र विद्यते । तत्रोत्कृष्टं तमो यत्र हीनं तत् तु स्वभावतः । उपगूहने तु नैवास्ति विशेषो नित्यचिन्मये । प्रकृतेर्गुणरूपाया मूलिकायाश्च न क्वचित् । विशेषः परमे तत्त्वे वासुदेवे कुतः पुनः ' इति । देवानां शापादिदोषाद् भूमौ जननेऽपि भूतगुणस्वभावेन देवत्वमासुरत्वं ज्ञायते । तदुक्तम्— 'यदि देवादयो दोषाज्जायेरन्

---

[1] आ अरन्ति गच्छन्ति । [2] अन्तर्भावं चेति स्यात् ।

[3] भूतगुणत्रय–घ, भूतगतगुणत्रय–क

अतः परं प्रवक्ष्यामि वंशान् मन्वतराणि च ।
एवं रजःप्लुतः स्रष्टा कल्पादिष्वात्मभूर्हरिः ।
सृजत्यमोघसङ्कल्प आत्मैवाऽत्मानमात्मना ॥ २९ ॥

गुणव्यत्यय एतस्मिन् मायावत्त्वादधीशितुः ।
न पौर्वापर्यमिच्छन्ति नद्यां भ्राम्यद्भ्रमेर्यथा ॥ ३० ॥

---

मानुषादिषु । तथापि देवा विज्ञेया आसुराद्यास्तथा ध्रुवम्' इति । प्रकृतमुपसंहरति—**दशेति** । देवसर्गस्य प्राकृतवैकृतभेदेनोक्तसर्गाणां दशत्वं युज्यते ॥ २७-२८ ॥

मूलसृष्टिर्हरिणैवास्तु मन्वन्तरेष्ववान्तरसृष्टिरन्यैरिति शङ्का मा भूदित्याशयेनाह—**एवमिति** । आत्मभूरजो हरिरात्मना स्वेच्छया कल्पादिष्वात्मैव स्वयमेव स्वतन्त्रो भूत्वा प्रकृत्युपादानेन देवादिदेहान् सृष्ट्वा तन्नियन्तृतयाऽत्मानं सृजति प्रादुर्बभूव बहुरूपत्वोनेति शेषः । कीदृशो हरिः ? एवमुक्तप्रकारेण स्रष्टा । अनेन विरिञ्चादीनां स्रष्टृत्वं द्वारमात्रमुक्तं भवति । कथं स्रष्टेत्यत उक्तम्—**रजःप्लुत इति** । रजआदिगुणानां मध्यवर्तित्वाद् रजोगुणप्लुतो न तु गुणाधीनत्वादभिमानाच्च देवदत्तवत् । हरिरिन्द्राद्यन्यतमः किं न स्यादित्यत उक्तम्—**आत्मभूरिति** । कामो नेति स्रष्टेति । तर्हि विरिञ्चः किमित्यत उक्तम्—**हरिरिति** । रजोगुणेन द्रवीभूतो रजःप्लुत इति प्रसिद्धार्थं परित्यज्याप्रसिद्धार्थकल्पने किं प्रमाणमित्यत आचार्यैरिदं मानमुदाहृतम्—'गुणाप्लुतो हरिर्नित्यं गुणानां मध्ययोगतः । अनहंवेदनात् तस्य गुणासंस्पर्श एव च' इति । 'सृष्ट्वा देवादिदेहान् स आत्मानं बहुधाऽकरोत् । तन्नियन्तृतयाऽत्मानं प्रकृतिं देहभेदतः' इति वचनं स्वबहुत्वे प्रमाणम् । एकत्वेऽस्य कर्तृकर्मादिभावः कथमितीदं चोद्यं 'कर्ता च करणं चैव कर्म चैव स्वयं हरिः । आत्मनो बहुधाभावे प्रकृतेस्तु स्वतन्त्रता[1]' इति वाचा परिहर्तव्यम् । एतदभिप्रायेणामोघसङ्कल्प इत्युक्तम् ॥ २९ ॥

तर्हि कथं सृष्टिः प्रथमेत्याशङ्क्य तन्नियमो नास्तीति सदृष्टान्तमाह—**गुणेति** । एतस्मिन् गुणव्यत्यये गुणव्यतिकरे पौर्वापर्यं पूर्वापरीभावं नेच्छन्ति, विपश्चित इति शेषः । कुतः ? अधीशितुः अखण्डैश्वर्यस्य हरेर्मायावत्त्वात् इच्छानियतत्वात् । नद्यां भ्रमन्त्याः पुनः पुनरावर्तमानाया भ्रमेः आवर्तस्येव ॥ ३० ॥

---

[1] अयं च पाठः अन्यत्र—स्वतन्त्रतः

**देवासुरादयः क्षत्तः कल्पेऽस्मिन् ये प्रकीर्तिताः ।**
**त एव नामरूपाभ्यामासन् मन्वन्तरान्तरे ॥ ३१ ॥**

इति श्रीमद्भागवते तृतीयस्कन्धे एकादशोऽध्यायः ।

॥ अथ द्वादशोऽध्यायः ॥

**मैत्रेय उवाच —**
**चरमस्तु विशेषाणामनेकासंयुतः सदा ।**
**परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ॥ १ ॥**

---

एतत्कल्पसृष्टेभ्योऽन्यस्मिन् कल्पेऽन्ये सृज्यन्त इति भ्रान्तिं निवारयति—**देवेति** । इन्द्रादिनाम्ना सहस्राक्षशुक्लादिरूपेण च ॥ ३१ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे एकादशोऽध्यायः ॥

॥ अथ द्वादशोऽध्यायः ॥

हरेरुभयानन्त्यज्ञानं मोक्षैकफलमित्ययमर्थोऽस्मिन्नध्याये निरूप्यते । तत्र कालाख्यं लक्षणं ब्रह्मन्निति विदुरप्रश्नं परिहरिष्यन् परमाणुकालज्ञानाय द्रव्यपरमाणुपरिमाणमाह—**चरम इति** । तुशब्द एवार्थे । एकश्चार्थे[1] । यो विशेषाणां पार्थिवादिपदार्थानां चरमोऽन्त्यो विशेषः । तर्हि निरवयवः किम् ? नेत्याह—**अनेकेति** । यश्चानेकैरवयवैः आ समन्तात् सम्यक् युतः । अनेकावयवत्वे चरम इति विशिष्योक्तिः कथमित्यतस्तुशब्देन विशिनष्टि । देवलोके स्थिता मनुष्या विशेषेण सौक्ष्म्येण दर्शने यस्यांशांशित्वविशेषं द्रष्टुं न शक्ताः स एव चरमो विशेष इत्याचक्षते प्रेक्षावन्तः । नृणां कणादादीनां यतो यस्मादैक्यभ्रमः यतः परमाणुर्नास्ति स पदार्थः परमाणुरिति भ्रान्तिः । तेषां भ्रान्तिज्ञानं युक्तमिति दर्शयितुं नृणामित्युक्तम् । नाम्ना परमाणुर्विज्ञेय इत्यर्थः । 'मनुष्या देवलोकेऽपि विशेषेणैव दर्शने । अंशांशित्वविशेषं तु यस्य द्रष्टुं न शक्नुयुः । चरमो विशेष इति तं मुनयो ब्रूयुरञ्जसा । परमाणुः स विज्ञेयः काणादाद्या[2] निरंशिनम् । अनन्तांशयुतत्वेऽपि यं ब्रूयुर्भ्रान्तिदर्शनात् । ततोऽपि परमाणुत्वं तदंशानां तु यद्यपि । अनन्तत्वाद् विवेकार्थमस्योक्ता परमाणुता' इति वचनादस्यैव परमाणुत्वं नान्यस्येति ज्ञायते । अत एव विज्ञेय इति ॥ १ ॥

---

[1] अस्याभिप्रायो न स्फुटः । तुशब्दमावर्त्यावधारणार्थतया विशेषार्थतया चात्र व्याख्यातम् ।

[2] कणादाद्या-क

**सत एव पदार्थस्य स्वरूपावस्थितस्य यत् ।**
**कैवल्यं परममहानविशेषो निरन्तरः ॥ २ ॥**

अणुपरिमाणं निरूप्य महत्परिमाणं दर्शयति—**सत इति** । सतः परब्रह्मण एव यत् कैवल्यं यः केवलभावः स परममहानित्यन्वयः । कालतो देशतो गुणतश्चानन्तत्वं सतः परब्रह्मणः एव मुख्यमित्यर्थः । सन् घट इत्यादौ सच्छब्दवृत्तिदर्शनादित्यतः **पदार्थस्येति** । सदित्यनुवर्तते सत्पदमुख्याभिधेयस्य । 'मुख्याभिधेयस्त्वर्थः स्याद् वाच्यमन्यच्च भण्यते । अमुख्येष्वर्थशब्दस्तु नीचोपरि हितो भवेत्' इति वचनात् । मुख्यस्योपपत्तावमुख्यस्वीकारायोगात् । अणुतरवस्तुनि स्थितस्य सत्पदमुख्याभिधेयस्य तत्परिमाणत्वेन भाव्यं, समः प्लुषिणेत्यादौ दर्शनादित्यतः **स्वरूपावस्थितस्येति** । स्वरूपमेवावष्टभ्य स्थितस्य । स्वे महिम्नीति श्रुतेः । जगदावरकस्य वासुदेवाख्यस्य हरेर्जगत्प्रविष्टरूपात् किञ्चिन्महत्त्वात् स्वरूपावस्थितत्वाच्च तद्व्यावृत्तिः कथमित्यतः **कैवल्यमिति** । जगदावरणादिव्यापारोदासीनतया स्थितम् । तादृशरूपाणामनेकत्वात् कथं निर्णय इत्यतः **विशेष इति** । तादृग्रूपविशेषरहितः[1] । सर्वगतस्यापि प्रादेशमात्रतया स्थितत्वेन विशेषवत्त्वात् कथमविशेष इत्यतो **निरन्तर इति** । प्रादेशमात्रादिविशेषरहितः । एतदुक्तं भवति । परब्रह्मणः यः केवलभावोऽण्डा[2]न्तःप्रविष्ट [3]तदावरकं तस्यैव परमपुरुषादिरूपान्तरं तदेकदेशप्रादेशमात्रादिविशेषं च विना यत् सर्वगतं स्वरूपं तदेव परममहानित्युच्यते । 'कालकोटिविहीनत्वं कालानन्त्यं विदुर्बुधाः । देशकोटिविहीनत्वं देशानन्त्यं तथैव च । गुणानामप्रमेयत्वं वस्त्वानन्त्यं विदो विदुः । आनन्त्यं त्रिविधं नित्यं हरेर्नान्यस्य कस्यचित् । तस्य सर्वस्वरूपेष्वप्यानन्त्यं तु त्रिलक्षणम् । तथापि देशतस्तस्य परिच्छेदोऽपि विद्यते । परिच्छेदस्तथा व्यास्तिरेकरूपेऽपि युज्यते । तस्याचिन्त्याद्भुतैश्वर्याद् व्यवहारार्थमेव च । गुणतः कालतश्चैव परिच्छेदो न कुत्रचित् । व्याप्तत्वं देशतोऽप्यस्ति सर्वरूपेषु यद्यपि । न च भेदः क्वचित् तेषामणुमात्रोऽपि विद्यते । तथापि विद्यतेऽणुत्वं [4]यस्मादैश्वर्ययोगतः । तस्माद् [5]बुद्ध्यवतारार्थमव्याप्तत्वं च भण्यते । यत् तस्य व्यापकं रूपं परं नारायणाभिधम् । शून्यं[6] ब्रह्मेति यत् प्राहुर्द्वितीयं स्रष्टृ यत् ततः । परमः पुरुषो नाम मितं तद्देशतो विभोः । तृतीयं वासुदेवाख्यं जगदावरकं मितम् । देशतो जगदाविष्टं तुरीयं विष्णुनामकम्' इति वचनेन मन्दमतीनां शङ्कोपद्रवाः परिहृता इति ज्ञातव्यम् । किञ्च सर्वगतस्यापि ब्रह्मरूपस्य कालादिरूपया प्रकृत्या सम-

---

[1] अविशेषः दृश्यमानपरिच्छिन्नपरिमाणैतादृशरूपविशेषा अपि नेति यादुपस्यम् । अतोऽत्रापि तादृशरूपविशेषमिन्न इत्यर्थः । [2] अण्डाद्यन्तः–क, ग, ङ, च [3] तत्तदावरकं–ङ [4] केनचित्–क [5] यस्मात् इति ङ पाठः । अन्यत्र तस्मात् । [5] अस्मद्बुध्यवतारार्थं–ग । [6] अग्रं ग, ङ, च, क पाठः ।

**एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तम ।**
**संस्थानभुक्त्या भगवानव्यक्तोव्यक्तभुग् विभुः ॥ ३ ॥**

---

व्याप्तावपि दार्ष्टान्तिकेऽन्तर्भावात् तदन्यस्मिन्ननवस्थानात् स्वरूपावस्थितस्येत्युक्तम् । 'देव्यां कालादिरूपिण्यां स्थितं ब्रह्मापि सर्वगम् । उच्यते नान्यगं यस्मादात्मवत् सा हरेर्विभोः । महादादिगतं यत् तु तदन्यगतमुच्यते' इति च ॥ २ ॥

उक्तमर्थं दार्ष्टान्तिके करोति—**एवमिति** । सौक्ष्म्ये परमाणुत्वे स्थौल्ये परममहत्वे वर्तमानः कालोऽप्येवमनुमितः । कला मुहूर्ता इत्यादिशास्त्रेण साक्षिप्रत्यक्षानुगृहीतव्याप्तिमलिङ्गज्ञानवता जनेनानुमितो ज्ञात इत्यन्वयः । 'अनुमेति द्वयं प्राहुर्यथाज्ञानं च लिङ्गजम्' इत्यभिधानादर्थद्वयं सेत्स्यति । 'यावन्तं देवलोकस्थो मानुषस्त्ववधारयेत् । महाप्राज्ञो देवजूकः[1] सकालः परमाणुकः । सर्गाद्यैरनवच्छिन्नस्तदनन्तर इत्यपि । तथैव परमाण्वादिविशेषात्मापि नो भवेत् । पूर्वापरादिभेदेन स कालः परमो महान्' इति शास्त्रवचनं[2] चात्र प्रमाणम् । यज्ञादिकर्मणा प्रीतदेवताप्रसादेन प्राप्तैश्वर्यो मानवो देवजूक इति । न केवलमुभयविधः कालोऽनुमितः किन्तु तदन्तर्यामी तदाख्यो हरिरपि अनुमित इत्यभिप्रेत्याह—**संस्थानभुक्त्येति** । विभुर्व्याप्तो भगवान् संस्थानभुक्त्या संस्थानयोः परमाणुत्वेन परममहत्त्वेन व्यवच्छिन्नयोः कालयोः[3] स्थित्या[4] तदन्तर्यामित्वेनाव्यक्तोऽदृश्यः परमाणुः परममहानित्यनुमित इत्यन्वयः । तत्र स्थित्वा किङ्करोतीत्यत उक्तम्—**व्यक्तभुगिति** । व्यक्तं तत्कालवृत्तिजगत् सृजति पाति संहरतीति व्यक्तभुगिति । यद्वा स्वसमानधर्मवत्त्वादव्यक्तं[5] प्रकृतिरूपं सृष्ट्यादौ प्रवर्तयतीति । अत्र विशेषस्तु 'देशतः कालतश्चैव वस्तुतश्च त्रिधा हरेः । यथाऽनन्त्यं न चान्यस्य प्रकृतेर्देशकालतः । तथा शब्दस्य कालस्य देशानन्त्यं च कालतः । कालशब्दात्मिका सैव तथापि तु हरेः सदा । नास्याः सामर्थ्यलेशोऽपि ज्ञानानन्दगुणेष्वपि । ज्ञेयस्तदवरो वायुः शेषवीन्द्रहरास्ततः । अवरास्तत इन्द्राद्या गुणैः सर्वैर्न संशयः' इति वचनादवगन्तव्यः । किञ्च कालान्तर्यामिणः परमाण्वादिनामवाच्यत्वं तत्तद्विशेषभोक्तृत्वात् । तदुक्तम्— 'अण्वादिकालसंस्थानभोक्तृत्वात् परमेश्वरः । अण्वादिनामवाच्योऽसौ कालश्चेत्यभिधीयते' इति ॥ ३ ॥

---

[1] देवजूत इति पाठान्तरम् । देवान् प्राप्त इत्यर्थः । जु गताविति धातुः ।

[2] तात्पर्योदाहृतब्रह्मतर्कवचनमेतत् । अतः शास्त्रवचनमिति ।

[3] 'कालयोः' इति ग,ङ पाठः । अन्यत्र नास्ति । [4] स्थित्वा-ङ

[5] अव्यक्तभुगिति च छेदः ।

स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् ।
सतोऽविशेषभुग् यस्तु स कालः परमो महान् ॥ ४ ॥
अणुर्द्वौ परमाणू स्यात् त्रसरेणुस्त्रयः स्मृतः ।
जालार्करश्म्यवगतः खमेवानुपतन्नगात् ॥ ५ ॥
त्रसरेणुत्रिकं भुङ्क्ते यः कालः सा त्रुटिः स्मृता ।
तत्त्रिभागस्तु वेधः स्यात् तैस्त्रिभिस्तु लवः स्मृतः ॥ ६ ॥

---

सामान्यत उक्तं विशिनष्टि—स काल इति । यः कालः कालान्तर्यामी हरिश्च परमाणुत 'चरमस्तु विशेषाणाम्' इत्याद्युक्तलक्षणवत्तां भुङ्क्ते स कालः हरिश्च परमाणुर्वै परमाणुनाम्ना वाच्य इत्युक्तस्मृतिप्रसिद्धमित्यर्थः । सतो ब्रह्मणोऽविशेषं स्वरूपं स्वरूपावस्थितकैवल्याद्यविशेषं निरन्तरलक्षणं परममहद्रूपं यः कालः कालान्तर्यामी च भुङ्क्ते स कालः कालान्तर्यामिब्रह्मरूपं परममहानिति नाम्ना वाच्यम् । तस्य कालान्तर्यामिणोऽपि त्रिधा परिच्छेदाभावात् । तदुक्तम्—'सर्वं सर्वत्र भोक्तापि विशेषादेव भोक्तृवत् । स्थितो हरिरचिन्त्यात्मा निजैश्वर्यादजो विभुः' इति । अनेन सत एव पदार्थस्येत्यादिना यानि विशेषणानि परममहतो ब्रह्मणः कथितानि तानि महत्कालान्तर्यामिणोऽपि सन्तीत्युक्तं भवति । तथाहि यः सच्छब्दस्य मुख्यार्थः परमाण्वादिकालान्तर्यामिस्वरूपव्यावृत्तस्तथा मन्वन्तरादिकालान्तर्यामि-स्वरूपव्यावृत्तस्ततोऽपि स्थूलपरार्धपरादिकालान्तर्यामिस्वरूपव्यावृत्तो यश्चाखण्डितत्वेऽपि[1] तदेकदेशाद्यव-तार[2]भेदव्यावृत्तत्वेन परममहद्रूपभोक्ता स परममहानिति । यावता कालेन परमाणुपरममहतोरुत्पत्ति-प्रलयौ स्यातां तौ कालौ परमाणुपरममहान्तावित्ययमर्थः प्रमाणशून्यत्वादुपेक्षणीयः ॥ ४ ॥

इदानीं परमाणुपरममहतोरन्तरालकालावयवानां संख्यायोगेन नामान्याह— अणुर्द्वाविति । द्वौ परमाणू मिलितौ द्व्यणुकनामकालः स्यात् । उत्तरत्राप्येवमेव ज्ञातव्यानि । त्रयो द्व्यणुका मिलि-तास्त्रसरेणुस्त्र्यणुकः कालः । सोऽयमयोगिप्रत्यक्षसिद्ध इत्याह—जालेति । जालं गवाक्षम् । तत्र वर्त-मानार्करश्मिनावगतः खमेवानुपतन् अगात् दृष्टिविषयं प्राप्य ज्ञात इत्यर्थः । अत्र सर्वत्र तत्तत्कालाव-यवान्तर्यामित्वेन तत्तच्छब्दवाच्यत्वेन तत्तत्कालवर्तिद्रव्यप्रवर्तकत्वेन स्थितं सच्चिदानन्दलक्षणमनन्तसंज्ञं स्वरूपमनुभवतीति ज्ञातव्यम् । अत एव सर्वत्र सर्वभोगेत्युक्तम्[3] ॥ ५ ॥

तासां त्रिसृणां त्रुटीनां भागो भजनं यस्य स तत्त्रिभागः । तिस्रस्त्रुट्यो वेध इत्युक्तं भवति ॥६॥

---

[1] अयं घ,ङ पाठः । अन्यत्र—याश्चाखण्डतत्वेऽपि । [2] तदेकदेशाद्यवान्तरभेदेति स्यात् ।
[3] पूर्वश्लोकतात्पर्योदाहृतब्रह्मतर्कवचनस्यार्थत अनुवादोऽयम् ।

निमेषस्त्रिलवो ज्ञेय आम्नातास्ते त्रयः क्षणः ।
क्षणान् पञ्च विदुः काष्ठां लघु ता दश पञ्च च ॥ ७ ॥

लघूनि वै समाम्नाता दश पञ्च च नाडिका ।
ते द्वे मुहूर्तं प्रहरः षड् यामः सप्त वा नृणाम् ॥ ८ ॥

द्वादशार्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः ।
स्वर्णमाषैः कृतच्छिद्रं यावत् प्रस्थजलं पिबेत् ॥ ९ ॥

---

निमेषा अङ्गुलिस्फोटेन ज्ञेयाः । ताः काष्ठाः पञ्चदश लघु ॥ ७ ॥

पञ्चदशलघूनि नाडिका[1] । ते द्वे नाडिके मुहूर्तं विदुः । षण्णाडिकाः प्रहरः । सप्तनाडिका यामः । यामः सूर्यगतिलक्षितराशिभेदादूनातिरेकाद् वेति विकल्पः[2] ॥ ८ ॥

नाडिकावधिं वक्तुं तत्पात्रलक्षणमाह—**द्वादशेति** । द्वादशार्धैः षड्भिः पलैः कृतमुन्मानम्[3] उत्कृष्टमानं यस्य तद् द्वादशार्धपलोन्मानम् । चतुर्भिश्चतुरङ्गुलैः चतुरङ्गुलदीर्घैः स्वर्णमाषैः कृतच्छिद्रं कृतद्वारम्, एवं रचितं नाडीपात्रं यावत् प्रस्थजलं पिबेद् यावता कालेन प्रस्थजले स्थापितं तज्जलं पीत्वा निमज्जति सा नाडिकेत्यन्वयः । इदमुक्तं भवति । चतसृभिः काकिणिकाभिः[4] कृतो विंशांशः, तैश्चतुर्भिर्युतो माषः । चतुरङ्गुलदीर्घे माषचतुष्टये कृते सति यावान् परिणाहः स्यात् तावता तत्कृतद्वारं षट्पलरूपं नाडीपात्रमतिशैत्यकलङ्कमान्द्यादिदोषवर्जितं निर्मलं समोष्णं नित्यं सूर्यरश्मिसुतप्तं प्रवाहगतं वसन्तकालीनं प्रयागगतं वा जलं पिबति स कालो नाडिकेत्युच्यते । तदुक्तम्—'काकिणिकाचतुष्कं च विंशांशेत्यभिधीयते । कृष्णलेत्यपि तं ब्रूयुस्तैश्चतुर्भिस्तु माषकः । चतुरङ्गुलदीर्घे तु कृते माष-चतुष्टये । यावान् स्यात् परिणाहेन तावत् द्वारं विधीयते । प्रस्थस्य नाडीपात्रस्य षट्पलस्य शुभे जले । भाराधिक्येनोदकेन क्षिप्रं पूर्तिर्भविष्यति । अतिशैत्यकलङ्के च मान्द्ये नैव तु पूरणम् । तस्माद् वसन्तकाले च प्रयागस्योदकेन च । नाडीशुद्धिः परीक्ष्या स्यादन्यथा नैव सम्भवेद्' इति । 'निर्मलेन समोष्णेन नित्यं सूर्यांशुवारिणा । प्रवाहगेन कार्या स्यात् कालशुद्धिः सदैव तु' इति च ॥ ९ ॥

---

[1] नाडिका घटिका । [2] प्रहरयामशब्दौ भिन्नार्थौ । श्रीधरादयः समानार्थतया व्याचख्युः । यामस्य क्वचित् सार्धसप्तनाडिकत्वात् क्वचिदष्टनाडिकत्वाच्च मूले सप्त वेति विकल्पः । [3] उन्मीयते नाड्यनेनेत्युन्मानं पात्रं षट्पलपरिमितं ताम्रमयमिति यादुपत्यम् । [4] काकणिकाभिः—ग, घ, ङ ।

यामाश्चत्वारश्चत्वारो मर्त्यानामहनी उभे ।
पक्षः पञ्चदशाहानि शुक्लः कृष्णश्च मानद ॥ १० ॥

तयोः समुच्चये मासः पितॄणां तदहर्निशम् ।
द्वौ तावृतुः षडयनं दक्षिणं चोत्तरं दिवि ॥ ११ ॥

अयने अहनी प्राहुर्वत्सरो द्वादश स्मृतः ।
संवत्सरशतं नृणां परमायुर्निरूपितम् ॥ १२ ॥

ग्रहर्क्षताराचक्रस्थः परमाण्वादिना जगत् ।
संवत्सरावसानेन पर्येत्यनिमिषो विभुः ॥ १३ ॥

संवत्सरः परिवत्सर इडावत्सर एव च ।
अनुवत्सरो वत्सरश्च विदुरैवं प्रभाष्यते ॥ १४ ॥

5.

---

उभे अहनी अहोरात्रे । अहनी इत्युक्तेऽह्नो द्वित्वं, रात्रिर्न सिध्यतीत्यत उक्तम् उभे इति । 'यत्रोभयोः स शब्दः स्यात् तत्तद्विवचने[1]ऽप्युभे ' इत्यभिधानात् ॥ १० ॥

उत्तरलिङ्गापेक्षया तदित्युक्तम् । स मनुष्यमासः पितॄणामहोरात्रे । तौ द्वौ मासावृतुः । षड्-ऋतवो[2] दक्षिणायनम् उत्तरायणमिति संज्ञिताः ॥ ११ ॥

दिवि[3] स्वर्गे देवानां द्वे अयने अहनी अहोरात्रे । रात्रिक्रियाभावाद् रात्रिरप्यहःशब्देनोच्यत इत्यहनी इत्युक्तम् । मानुषद्वादशमासा वत्सरः ॥ १२ ॥

सूर्यादिनवग्रहाणां अश्विन्यादिनक्षत्राणां ध्रुवादितारकाणां चक्रस्थो मण्डलस्थः । प्राणिनां पुण्य-पापकर्मदर्शनादनिशं मिषणाद् दमनाद् वा, मिष गतौ विकासे च, अनिमिषो विभुः । परमाण्वादिसंवत्सरावसानेन कालेन पर्येति, जगदिति शेषः । 'सर्वदा दर्शनात् तस्यानिमिषत्वं विदुर्बुधाः । सततं गमनाद् वाऽपि कालस्थस्य महात्मनः ' इति । अनेनापि मुख्यतः कालशब्दवाच्यो हरिरिति सिद्धम् ॥ १३ ॥

तत्तत्संज्ञकालस्थत्वेन तन्नियन्तृत्वेन तत्तन्नामवानित्याह— **संवत्सर इति** । सौरद्वादशमासाः सङ्क्रमणावसानास्तेषु द्वादशमासेषु स्थितः संवत्सरः । द्वादशराशिषु बृहस्पतेरावृत्त्या यः कालः तस्य

---

[1] तत्र द्विवचनेऽपीति पाठान्तरम् । [2] मासा इति स्यात् । [3] पूर्वश्लोकस्थोऽयं शब्दोऽत्रान्वेति ।

यः सृज्यशक्तिमुरुधोच्छ्वसयन् स्वशक्त्या
पुंसोऽभ्रमाय दिवि धावति भूतभेदः ।
कालाख्यया गुणमयीं क्रतुभिर्वितन्वं-
स्तस्मै बलिं हरत वत्सरपञ्चकाय ॥ १५ ॥

विदुर उवाच —

पितृदेवमनुष्याणामायुः परमिदं स्मृतम् ।
परेषां गतिमाचक्ष्व ये स्युः कल्पाद् बहिर्विदः ॥ १६ ॥

---

द्वादशमे भागे यस्तिष्ठति स परिवत्सराख्यः । सप्तविंशन्नक्षत्राणि तद्द्वादशमासेषु स्थित इडावत्सर-नामा । तिथीनां द्वादशावर्तो यो द्वादशमासरूपस्तत्र स्थितो हरिरनुवत्सरः । अह्नां षष्ठ्युत्तरशत-त्रयात्मकद्वादशमासेषु स्थितो हरिर्वत्सरनामा । कालान्तर्यामी हरिरेवंरूपो प्रभाष्यत इत्यन्वयः । तदुक्तम्—'इडावत्सरनामासौ नक्षत्रद्वादशे स्थितः । तिथीनां द्वादशावर्ते यो हरिः सोऽनुवत्सरः । वत्सरो यः स्थितस्त्वह्नां षष्ठ्युत्तरशतत्रये । गुर्वावर्तद्वादशांशे यः स्थितः[1] परिवत्सरः । सौरद्वादश-मासेषु यः स्थः संवत्सरो हरिः । एवं स कालनामापि कालस्थः परमेश्वरः' इति । स्मृतिसिद्धत्वाद् इदं ग्राह्यम्[2] ॥ १४ ॥

वत्सरादिनामकरणप्रयोजनमाह—**य इति** । यः कालान्तर्यामी हरिः क्रतुभिः स्वप्रज्ञाभिः स्वेच्छानुरूपाभिः कालाख्यया स्वशक्त्या प्रकृत्या गुणमयीं सत्त्वादिगुणविकाररूपां सृज्यशक्तिं स्रष्टव्य-पदार्थविषयां प्रकृतिम् उरुधोच्छ्वसयन् जृम्भयन् पदार्थान् विनन्वन् विस्तारयन् पुंसोऽभ्रमायाज्ञान-निवृत्तये । भूतानां भेदो ज्यैष्ठ्यकानिष्ठ्यविवेकज्ञानं यस्मात् स तथोक्तः । 'भूतानां ज्यैष्ठ्यकानिष्ठ्य-ज्ञप्त्यै यज्ञादिवृत्तये । बोधयन् सृज्यशक्तिं च कालस्थो वर्तते हरिः' इति च । दिवि व्योम्नि धावति सूर्यस्थो भूत्वा वेगेन गच्छति । तस्मै वत्सरपञ्चकाय संवत्सरादिपञ्च[3]कान्तर्यामिणे बलिं हरत कुरुते-त्यन्वयः । अनेकार्थत्वाद् धातूनाम् ॥ १५ ॥

विदुर उक्तार्थमनूद्य वक्तव्यार्थं विज्ञापयति—**पितृदेवेति** । ये विदो ज्ञानिनः कल्पात् लोक-त्रयात् बहिर्महर्लोकादिषु वर्तमानाः स्युः तेषां परेषामुत्तमानां गतिं स्थितिमाचक्ष्वेत्यन्वयः ॥ १६ ॥

---

[1] यः स्थः स–ग, घ, क, च । [2] तदुक्तमिति पूर्वमेवोक्तत्वात् स्मृतीत्याद्यधिकमिति भाति ।
[3] पञ्चकालान्तर्यामिणे–च ।

भगवान् वेद कालस्य गतिं भगवतो ननु ।
विश्वं विचक्षते धीरा योगराद्धेन चक्षुषा ॥ १७ ॥

मैत्रेय उवाच —

कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ।
दिव्यैर्द्वादशसाहस्रैः सावधानं निरूपितम् ॥ १८ ॥

चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् ।
संख्यातानि सहस्राणि द्विगुणानि शतानि च ॥ १९ ॥

सन्ध्यांशयोरन्तरेण यः कालः शतसंख्ययोः ।
तमेवाहुर्युगं तज्ज्ञा यत्र धर्मो विधीयते ॥ २० ॥

---

मैत्रेयस्य वक्तव्यार्थे ज्ञानपाटवमस्तीत्याह—**भगवानिति** । कालस्य कालान्तर्यामिणो भगवतो गतिं गमनं वर्तनं वेद ननु । कुतः ? धीराः धीषु रममाणाः ज्ञानिनो योगराद्धेनाष्टाङ्गयोगसिद्धेन चक्षुषा विश्वं विचक्षते । भगवानपि तेष्वेक इति यत् तस्मादिति शेषः ॥ १७ ॥

महर्लोकादिस्थितानामायुर्वक्ष्यन् कृतादिचतुर्युगतत्सन्ध्याकालपरिमाणं वक्ति — **कृतमिति** । दिव्यैर्देवानां विद्यमानैः ॥ १८ ॥

एतदेव विवेचयति—**चत्वारीति** । एवं कृतादिषु दशसहस्राणि एकैकह्रासक्रमेण संख्यातानि द्विगुणानि शतानि चावशिष्टद्विसहस्रगतशतानि कृतादिपूर्वापरसन्ध्यारूपाणि कलियुगपूर्वापरसन्ध्यामारभ्य द्विगुणानि ज्ञेयानि । तथाहि—कलियुगपूर्वापरसन्ध्ये शतं द्वापरपूर्वापरसन्ध्ये द्विशतं त्रेतायुगपूर्वापरसन्ध्ये त्रिशतं कृतयुगपूर्वापरसन्ध्ये चतुःशतम्, एवं विंशच्छतानां युगेभ्यो द्विगुणित्वम्[1] ॥ १९ ॥

एवं तर्हि कृतादियुगत्वं कस्य कालस्येति तत्राह—**सन्ध्येति** । शतसंख्ययोः सन्ध्यांशयोरन्तस्थो यः कालः, यत्र तत्तद्युगधर्मो विधीयते, तमेव युगज्ञा युगमानमाहुः । कृतादिषु सन्ध्याकालाः पूर्वापरकोटिसंबद्धा, द्वारस्थाः कालविशेषाः सन्ध्यांशाख्या इति ॥ २० ॥

---

[1] प्रतियुगं सहस्रसंख्यापेक्षया शतसंख्यानां द्विगुणित्व मित्यर्थः ।

धर्मश्चतुष्पान्मनुजान् कृते समनुवर्तते ।
स एवान्येष्वधर्मेण व्येति पादेन वर्धता ॥ २१ ॥

त्रैलोक्याद् युगसाहस्रं बहिराब्रह्मणो दिनम् ।
तावत्येव निशा तात यन्निमीलति विश्वसृक् ॥ २२ ॥

निशावसान आरब्धो लोककल्पोऽनुवर्तते ।
यावद् दिनं भगवतो मनून् भुञ्जंश्चतुर्दश ॥ २३ ॥

स्वं स्वं कालं मनुर्भुङ्क्ते साधिकामेकसप्ततिम्[3] ।
मन्वन्तरेषु मनवस्तद्वंश्या ऋषयः सुराः ।
भवन्ति चैते युगपत् सुरेशाश्चानु ये च तान् ॥ २४ ॥

---

कृतादिषु यो धर्मो विधीयते स किमवयवो वर्तत इति तद्वृत्तिप्रकारं वक्ति—**धर्म इति** । तपः सत्यं दया शौचमिति चतुष्पात् मनुजान्, उद्दिश्येति शेषः । अन्येषु त्रेतादिषु स्वनामानुसारेण तपोविरोधिना वर्धता[1] वर्धमानेनाधर्मेण व्येति ह्रसति, क्रमेणेति योज्यम् ॥ २१ ॥

तत्र 'ये स्युः कल्पाद् बहिर्विदः' इति प्रश्नपरिहारमारभते—**त्रैलोक्यादिति** । त्रैलोक्याद् बहिः आब्रह्मणः ब्रह्मपर्यन्तं तल्लोकपर्यन्तमित्यर्थः । तावत्पर्यन्तं वर्तमानं चतुर्युगसहस्रं ब्रह्मण एकं दिनमहः । तावत्येव चतुर्युगसहस्री तस्य निशा । यद् यस्यां निशायां विश्वसृक् ब्रह्मा निमीलति निद्रामुद्रितलोचनो भवति ॥ २२ ॥

चतुर्युगसहस्ररूपनिशावमाने पुनर्ब्रह्मणोऽर्थायारब्धो लोककल्पः लोकानां जनानां तथा भूरादिलोकानां कल्पः सृष्ट्यादिलक्षणः तावदनुवर्तते, यावद् भगवतो ब्रह्मणश्चतुर्दशमनून् भुञ्जन् भुञ्जानं[2] दिनं स्यादिति शेषः । दिनस्य भोक्तृत्वं नामोपचारमात्रं, तत्र यज्ञादिमूर्त्यावतीर्णस्य हरेर्मुख्यभोक्तृत्वमित्येतज्ज्ञापनाय भुञ्जन्निति लिङ्गव्यत्ययः ॥ २३ ॥

मनूनां भोज्यमन्वन्तरकालमाह—**स्वं स्वमिति** । सार्धाष्टादशलक्षवर्षाधिकैकसप्ततिचतुर्युगावसानं मनुकाल इत्यर्थः । तदुक्तम्—'युगैकसप्ततेरूर्ध्वं सार्धाष्टादशलक्षकम् । वत्सराणां मनोर्भुक्तिः सहस्रं चतुरुत्तरम् । शतानां प्रलयश्चैव पञ्चोत्तरमथापि च । आद्येषु षट्सु प्रथमे द्विसाहस्रं प्रकीर्तितम् ।

---

[1] अधर्मेणासत्यादिरूपेण हेतुना प्रतियुगं पादेन वर्धतेति यादुपस्यम् ।

[2] भुञ्जत् इत्येव स्यात् संहरदित्यभिप्रायेण । [3] साधिका ह्येकसप्ततिः इति पाठान्तरम् ।

एष दैनन्दिनः सर्गो ब्राह्मस्त्रैलोक्यवर्तनः ।
तिर्यङ्नृपितृदेवानां संभवो यत्र कर्मभिः ॥ २५ ॥

मन्वन्तरेषु भगवान् बिभ्रत् सत्त्वं स्वमूर्तिभिः ।
मन्वादिभिरिदं विश्वमवत्युदितपौरुषः ॥ २६ ॥

तमोमात्रामुपादाय प्रतिसंरुद्धविक्रमः ।
कालेनानुगतः शेष आस्ते तूष्णीं दिनात्यये ॥ २७ ॥

तमेवानुविलीयन्ते[4] लोका भूरादयस्त्रयः ।
निशायामनुवृत्तायां निर्मुक्तशशिभास्करे ॥ २८ ॥

---

वत्सराणां मनोरन्त एवमिन्द्रादिनां भवेत्' इति । मन्वन्तरेष्वधिकृतमन्वादीनाह—**मन्वन्तरेष्विति** । तद्वंश्याः मनुवंशभवा राजानः, सुरेशा इन्द्रादयः, ये च ताननु इन्द्रादीननुचरन्तो गन्धर्वाद्याः, एते सर्वे युगपदेककाल[1] एव भवन्तीत्यन्वयः ॥ २४ ॥

ब्राह्मः ब्रह्मकृतः । दैनन्दिनः ब्रह्मणो दिने दिने क्रियमाणः । त्रैलोक्यं वर्तयतीति त्रैलोक्यवर्तनः । यत्र यस्मिन् दैनन्दिनसर्गे तिर्यगादीनां सम्भव उत्पत्तिः ॥ २५ ॥

मन्वादयो जगत्पालनादि कुर्वन्तीति यत् तद् भगवदनुगृहीतमेवेत्याह—**मन्वन्तरेष्विति** । सत्त्वं सत्त्वगुणम्[2] । उदितपौरुषः नित्योदितपराक्रमः ॥ २६ ॥

जगत्पालनमेव भगवन्नियतं न प्रलय इति मन्दां शङ्कां निवारयति—**तमोमात्रामिति** । दिनात्यये ब्रह्मदिनापगमे रात्रिसमये भगवांस्तमोमात्रां स्वनियततमोगुणप्रवर्तककालसङ्कर्षणरुद्रादिरूपम्, उपादाय प्रतिसंरुद्धविक्रमः[3] कालेन कालनाम्ना ब्रह्मणानुगतः कल्पप्रलयोदके शेषे अनन्तभोगपर्यङ्के तूष्णीं निवृत्तजगद्व्यापार आस्ते शेत इत्यर्थः । 'ब्रह्मणा कालनाम्ना तु सह शेते हरिर्निशि' इति वचनात् कालेनेति न प्रलयकालोऽत्र विवक्षितस्तस्य दिनात्यय इत्यनेन गतार्थत्वात् ॥ २७ ॥

देवदत्तस्वापविलक्षणो भगवत्स्वापः । कुतः ? अस्मिंश्चराचराणामनवशेषं[5] विनाशादित्याशयेन तल्लयप्रकारं वक्ति—**तमेवेति** । लोके निर्मुक्तशशिभास्करे सति ब्रह्मणि च शयान इव हरिं प्रविष्टे

---

[1] एककालम्–ङ,घ,ग [2] सत्त्वं सत्त्वगुणं बिभ्रत् कार्योन्मुखं कुर्वन्निति यादुपत्यम् ।

[3] प्रतिसंरुद्धः प्रत्याहृतो विक्रमः पालनानुकूलव्यापारो यस्य स इति यादुपत्यम् ।

[4] अनुविषीयन्ते इति पाठान्तरम् । [5] अनवशेषमित्युपचारेण, सर्वस्यापि नाशस्य सशेषत्वात् ।

त्रिलोक्यां दह्यमानायां शक्त्या सङ्कर्षणाग्निना ।
यान्त्यूष्मणा महर्लोकाज्जनं ऋभ्वादयोऽर्दिताः ॥ २९ ॥

तावत् त्रिभुवनं सद्यः कल्पान्ते विषसिन्धवः ।
प्लावयन्त्युत्कटाटोपचण्डवातेरितोर्मयः ॥ ३० ॥

अन्तः स तस्मिन् सलिल आस्तेऽनन्तासनो हरिः ।
योगनिद्रामीलिताक्षः स्तूयमानो जनालयैः ॥ ३१ ॥

एवंविधैरहोरात्रैः कालगत्योपलक्षितैः ।
अपेक्षितमिवास्यापि परमायुर्वयःशतम् ॥ ३२ ॥

---

सति तन्निशायामनुवृत्तायां सत्यां भूरादयो लोकास्तं ब्रह्माणमनु विलीयन्ते । अनुविधीयन्त इति पाठे शयानं हरिमनुविधीयन्ते ब्रह्मणा सह सुप्ताः क्रियन्त इत्यर्थः ॥ २८ ॥

तमेव लयं स्पष्टयति— **त्रिलोक्यामिति** । सङ्कर्षणमुखनिर्गताग्निना शक्त्या ज्वालनया[1] ऋभ्वादयो महर्लोकनिवासिनः तस्मान्महर्लोकाज्जनलोकं यदा यान्ति ॥ २९ ॥

तावत् तदा विषसिन्धवः सङ्कर्षणमुखविषसंमिश्राः सप्तसिन्धवः उत्कट आटोपो यस्य स तथा, अत एव चण्डः, उत्कटाटोपश्चासौ चण्डश्चोत्कटाटोपचण्डस्तादृशेन वातेनेरिता उन्नमिता ऊर्मयो येषु ते तथोक्ताः । आटोपः कोलाहलः ॥ ३० ॥

कल्पप्रलयोदके हरेः स्थितिप्रकारं वक्ति—**अन्तरिति** । अनन्तासन इत्यनेन हरेः स्वापः प्रलयार्थमुपचर्यते न तु तात्त्विक इत्यवगम्यते ॥ ३१ ॥

एवंविधाहोरात्रवर्णनेन किं प्रयोजनम् ? अत्राह—**एवमिति** । अस्य ब्रह्मणोऽप्येवंविधैरहोरात्रैर्वयः शतं परमायुस्तथापि पुनरपेक्षितमिवेत्यन्वयः[2] । कीदृशैः कालनाम्नः सूर्यान्तर्यामिणो हरेर्गत्युपलक्षितैः । ब्रह्मकालस्य सूर्यगत्योपलक्षणं मनुष्यकालस्य तु दर्शनमिति विवेकः[3] । अस्येति न परमात्मन उच्यते । 'नायुर्मानं भगवतः कस्मिन् रूपेऽपि विद्यते । अनादित्वादमध्यत्वादनन्तत्वाच्च सोऽव्ययः' इति वचनेन हरेः कल्पितायुर्निषेधात् । बहिराब्रह्मणो दिनमिति तस्याप्रस्तुतत्वाच्च[4] ॥ ३२ ॥

---

[1] ज्वालया—ग । [2] वर्षशतरूपं यत् परनामकमायुस्तदप्यस्य ब्रह्मणोऽपेक्षितमिव । हरिसेवोपयोगित्वादपेक्षितं, वस्तुतः परमविरक्तस्यानपेक्षितमेवेति द्योतनायेव शब्दः । [3] अस्याभिप्रायो मृग्यः । कालगत्या उपलक्षितैर्ज्ञातैरहोरात्रैरिति यावदुपस्यान्वयः । [4] चतुर्मुखस्यैव प्रस्तुतत्वेन हरेरप्रस्तुतत्वादित्यभिप्रायः ।

यदर्धमायुषस्तस्य परार्धमभिधीयते ।
पूर्वः परार्धोऽपक्रान्तो ह्यपरार्धोऽद्य वर्तते ॥ ३३ ॥

पूर्वस्यादौ परार्धस्य ब्राह्मो नाम महानभूत् ।
कल्पो यत्राभवद् ब्रह्मा शब्दब्रह्मेति यं विदुः ॥ ३४ ॥

तस्यैव चान्ते कल्पोऽभूद् यं पाद्ममभिचक्षते ।
यद्धरेर्नाभिसरस आसील्लोकसरोरुहम् ॥ ३५ ॥

अयं तु कथितः कल्पो द्वितीयस्यापि भारत ।
वाराह इति विख्यातो यत्रासीत् सूकरो हरिः ॥ ३६ ॥

कालोऽयं द्विपरार्धाख्यो निमेष उपचर्यते ।
अव्याकृतस्यानन्तस्य ह्यनादेर्जगदात्मनः ॥ ३७ ॥

---

ब्रह्मण आयुरधुनैतावद् गतमिति ज्ञापयितुं तदायुर्विभजति—**यदर्धमिति** । यत्र यस्मिन् कल्पे स ब्रह्मा सर्वस्मात् प्रथममभवत् । पाद्मादिकल्पेषु पद्मायुत्पत्त्यनन्तरं ब्रह्मोत्पत्तेः । यं[1] ब्राह्मं ब्रह्माणं वा शब्दब्रह्मेति वेदवेद्यमिति विदुः, ज्ञानिन इति शेषः ॥ ३३—३४ ॥

प्रथमपरार्धावसाने कल्पमाह—**तस्यैवेति** । यत् यस्मिन् कल्पे ॥ ३५ ॥

द्वितीयपरार्धस्याद्यकल्पमाह—**अयमिति** । द्वितीयपरार्धस्यायं वाराह इति विख्यातः प्रथमः कल्पः ॥ ३६ ॥

हरेः कालमिता[2]युर्मानं नास्तीति स्पष्टयति—**काल इति** । निमेषस्त्रिलव इत्युपचर्यते न तु परमार्थः, हरेरिति शेषः । तस्य निमेषोऽस्ति चेत् तद्धर्मत्वेन कालाभिभूतत्वमायातमिति मन्दाशङ्कां प्रत्याह—**अव्याकृतस्येति** । यः परमाण्वादिर्द्विपरार्धान्तस्तवेरितः कथितः यश्च धाम्नां लोकानां मानिनां ममाहमित्यभिमानवतां ब्रह्मादीनां प्रभुः अन्यथाकर्ता, ईश्वरः स कालो भूम्नो देशतः कालतो गुणतश्च पूर्णस्य नैवेष्टे नैवेश्वरो न प्रभुर्नान्यथा कर्तुं समर्थश्चेति यस्मात् तस्मादज्ञबोधनाय निमेष इत्युक्तम् । अत एवोपचर्यत इत्युक्तम् । भूमत्वमुपपादयति—**अव्याकृतस्येत्यादिना** । अव्याकृतस्य निमेषादिविकाररहितस्य । परिच्छिन्नत्वेन विकारसम्भवः स्यादित्यत उक्तम्—**अनन्तस्येति** । देशाद्यन्तत्रयरहितस्य । 'आकाशो नीलिमोदेति' इति श्रुतेरनन्तस्याप्याकाशस्येव जनिमत्त्वं किं

---

[1] यं ब्रह्माणं शब्दब्रह्मेति वेदवेद्यमिति विदुर्ज्ञानिन इति यादुपत्यम् । [2] कालमिमित्ता—ग,घ,ङ,छ ।

कालोऽयं परमाण्वादिर्द्विपरार्धान्त ईरितः ।
नैवेष्टे स[1] प्रभुर्भूम्न ईश्वरो धाममानिनाम् ॥ ३८ ॥

विकारैः षोडशै[3]र्युक्तो विशेषादिभिरावृतः ।
अण्डकोशो बहिरयं पञ्चाशत्कोटिविस्तृतः ॥ ३९ ॥

दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत् ।
लक्ष्यते[4]ऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः ॥ ४० ॥

---

न स्याद् ? अत उक्तम्—**अनादेरिति** । कारणशून्यस्य । विचित्रजगत्सु एकं किं कारणं न स्याद् ? अत उक्तम्—**जगदात्मन इति** । जगत्स्वामिनः । हीत्यनेनानादित्वादमध्यत्वादनन्तत्वादिति हेतुत्रयं स्मृत्युक्तं सूचितम् । अत्र कालशब्देन बहूनामभिधेयत्वेऽपि सर्वसंहर्त्री श्रीदुर्गैवाभिधीयते । तस्या एव ब्रह्मादिप्रभुत्वात् । अन्यथा चेतनसन्निधानरहितस्य पाषाणादेरपि प्रभुत्वं स्यात्, न चेदं क्वापि दृष्टमित्यभिप्रायेणाचार्यैः 'यमः कालो मानुषाणां[2] तस्य कालः सुदर्शनः । तस्यापि रुद्रस्तत्कालो ब्रह्मा दुर्गापि तस्य तु ' इत्याद्युदाहृतम् ॥ ३७-३८ ॥

प्रकारान्तरेण भगवन्माहात्म्यं कथयति— **विकारैरिति** । अन्तः दशेन्द्रियपञ्चभूतमनआख्यैः षोडशविकारैर्युक्तः । 'दशेन्द्रियाणि च मनो भूतान्याण्डगतानि तु । विकाराः ' इति वचनात् । बहिः द्विगुणया विशेषनाम्न्या पृथिव्या आवृतः । ततः परत आदिशब्दगृहीतैः दशोत्तरैः अप्तेजोवाय्वाकाशाहङ्कारमहत्तत्त्वप्रकृतिभिः पृथिव्या सहाष्टप्रकृतिसंज्ञां गतैरावृतः । 'पृथ्वीं विशेष इत्याहुः शब्दादीनां बहुत्वतः । सा सूक्ष्मत्वाद् वृणोत्यण्डं द्विगुणा तु दशोत्तराः । अबादयः प्रकृत्यन्ता अष्ट प्रकृतयः स्मृताः ' इति च । कियत्संख्याविस्तार इत्यत उक्तम् —**पञ्चाशदिति** । एवंविधोऽण्डकोशोऽयं यत्र हरौ प्रविष्टः परमाणुवल्लक्ष्यते तस्मिन्नण्डकोशेऽन्तर्गताश्चान्ये च कोटिशो हरेः शरीररूपा अण्डराशयो लक्ष्यन्ते[5] ॥ ३९-४० ॥

---

[1] यः-घ । [2] मानुष्याणां-ग,ग [3] षोडशभिः-क [4] लक्ष्यन्त-घ,ङ,ग

[5] हरेः शरीराणां बहुत्वेन प्रतिशरीरं चाण्डानां दर्शनात्, अतीतानागतैः सहाण्डानामपि बहुत्वात्, एकस्यैवाण्डस्य विष्णुसामर्थ्यविशेषेणैकस्मिन्नेव हरिरूपे प्रतिरोमकूपं दर्शनाच्चाण्डबहुत्वदर्शनमुक्तम् । न तु युगपदनेकब्रह्माण्डसृष्ट्यभिप्रायेण ।

**यमाहुरक्षरं ब्रह्म सर्वकारणकारणम् ।**
**विष्णोर्धाम परं साक्षात् पुरुषस्य महात्मनः ॥ ४१ ॥**

इति श्रीमद्भागवते तृतीयस्कन्धे द्वादशोऽध्यायः ॥

॥ अथ त्रयोदशोऽध्यायः ॥

**मैत्रेय उवाच —**
**इति ते वर्णितः क्षत्तः कालाख्यः परमात्मनः ।**
**महिमा वेदगर्भोऽथ यदस्राक्षीन्निबोध मे ॥ १ ॥**

---

परमाणुपरममहच्छब्दवाच्यः पदार्थः साक्षान्नारायण एव न पार्थिवाद्यन्यतम इत्याह—**यमिति** । यम् अण्डाधारं भगवन्तम् अक्षरं ब्रह्म सर्वकारणानां ब्रह्मादीनामपि कारणमाहुः, तस्य महात्मनः महत्-परिमाणोपेतस्य साक्षात् पुरुषस्यात्यन्ताणुतरशरीरेषु सरणाद् वर्तमानात् पुरुषनाम्नो विष्णोरयमण्डकोशः परं धाम केवलगृहवद् वर्तते । हिशब्देन तदन्तर्गता अण्डराशयोऽपि गृहवद् वर्तमानाः । एकमेवाण्डं बहुत्वेन प्रत्येकं रोमकूपगतत्वादनन्तमित्यादि विशेषस्मृतिप्रसिद्धं सूचयति । तदुक्तम् 'अन्तर्गताःशरीराणि । शरीराणां बहुत्वेन अतीतानागतैस्तथा । अस्यैव देवकायेषु प्रति प्रति च दर्शनात् । विष्णुसामर्थ्य-तोऽण्डानां बहुत्वं नान्यथा भवेद्' इति । 'एकमण्डं बहुत्वेन प्रत्येकं रोमकूपगम् । ब्रह्माऽपश्यत्-तथाऽत्मानं हरेस्तेषु पृथक् पृथक्' इति च । अतोऽतीतानागतवर्तमानानन्तब्रह्मादिपरमभागवतैरनवर-तागणिताचिन्त्यमहिमत्वादायुर्मानहीनत्वात् तस्य देशकालगुणानन्त्यज्ञानस्यानन्तकालीनतत्सामीप्यादि-निर्वाणमुख्यसाधनत्वात् तस्मिन् निरतिशयभक्त्या तज्ज्ञानं सर्वथा संपाद्यं मुमुक्षुणेति भावः ॥ ४१ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां तृतीयस्कन्धे द्वादशोऽध्यायः ।

॥ अथ त्रयोदशोऽध्यायः ॥

अत्र हरेरानन्त्यज्ञानं यथा प्रीतिजनकत्वेन मुक्तिसाधनं तथा ब्रह्मादितारतम्यज्ञानं चेत्येतदर्थं सृष्टिप्रकारः कथ्यते । तत्राविद्यायाः हेयेषु प्राथम्यात् तत्सृष्टिं वक्तुं वृत्तमनूद्य वक्तव्यार्थं प्रतिजानीते —**इतीति** । आदिकृद् ब्रह्मा अग्रे तमः ससर्जेत्यन्वयः । अथ मोहादिकम् । अत्रैवं वचनं न यथातारतम्येन सृष्टिरिति ज्ञापनायेति ज्ञातव्यम्[1] । क्रमस्तु[2] 'तमस्तु शार्वरं प्रोक्तं मोहश्चैव विपर्ययः ।

---

[1] इदं वाक्यमेतच्छ्लोकसंबद्धं चतुर्थश्लोकसंबद्धं वेति संशयो जायते । तत्र रुद्रोत्पत्तेः प्रागेव सनकाद्युत्पत्तिकथनेन प्राप्तायाः तारतम्यभङ्गशङ्काया आदिसृष्टावेव क्रमस्तारतम्यद्योतको नार्वाचीनसृष्टौ, अर्वाचीनसृष्टिश्चेयमित्याशयेन भाष्यकारैः समाधानात् । [2] वृत्तिषु तारतम्यक्रम इत्यर्थः न तु सृष्टिक्रम इति । न यथातारतम्येन सृष्टिरित्युक्तत्वात् ।

ससर्जाग्रेऽथ तामिस्रमन्धतामिस्रमादिकृत् ।
महामोहं च मोहं च तमश्चाज्ञानवृत्तयः ॥ २ ॥

दृष्ट्वा पापीयसीं सृष्टिं नाऽत्मानं बह्वमन्यत ।
भगवद्ध्यानपूतेन मनसान्यांस्ततोऽसृजत् ॥ ३ ॥

सनकं च सनन्दं च सनातनमथाऽत्मभूः ।
सनत्कुमारं च मुनिं निष्क्रियानूर्ध्वरेतसः ॥ ४ ॥

तान् बभाषे स्वभूः पुत्रान् प्रजाः सृजत पुत्रकाः ।
तन्नैच्छन् मोक्षधर्माणो वासुदेवपरायणाः ॥ ५ ॥

सोऽवज्ञातः सुतैरेवं प्रत्याख्यातानुशासनैः ।
क्रोधं दुर्विषहं जातं नियन्तुमुपचक्रमे ॥ ६ ॥

धिया निगृह्यमाणोऽपि भ्रुवोर्मध्यात् प्रजापतेः ।
सद्योऽजायत तन्मन्युः कुमारो नीललोहितः ॥ ७ ॥

---

तदाग्रहो महामोहस्तामिस्रः क्रोध उच्यते । मरणं[1]त्वन्धतामिस्रमविद्या पञ्चपर्विका' इत्युक्त एव । 'तमोऽज्ञानं विपर्यासो मोहोऽन्ये तु तदाग्रहाः' इति वचनात् । एषां मूलकारणमाह—**अज्ञानेति** । अज्ञानाद् वृत्तिर्येषां ते तथा ॥ २ ॥

अविद्या हेयेत्याह—**दृष्ट्वेति** । ततस्तर्हि सृष्टिर्निवृत्ता किम् ? नेत्याह—**भगवद्ध्यानेति** । अनेन सर्वप्रायश्चित्तरूपोपायः भगवद्ध्यानमिति सूचितम् ॥ ३ ॥

आत्मभूर्ब्रह्मा । वसिष्ठादिव्यावृत्त्यर्थं निष्क्रियानिति परमहंसान् । ऊर्ध्वरेतस इत्यनेनैव स्वाज्ञाविमुखा एत इति जानन्नपि ॥ ४ ॥

ब्रह्मा सृष्ट्यन्तरकरणाशयो वक्ति—**तानिति** । स्वो विष्णुस्तस्मादुद्भूतवानिति स्वभूः । तत् सृष्टिकर्म । मोक्षधर्माणो निवृत्तिमार्गस्थाः ॥ ५ ॥

कथमवज्ञात इत्यत उक्तम्—**प्रत्याख्यातेति** । निरस्तमनुशासनम् आज्ञाकरणं यैस्ते तथा तैः । चुक्रोधेति शेषः । क्षणिकोऽयं कोपश्चतुर्मुखस्य न दीर्घकालीन इति भावेनाह—**क्रोधमिति** ॥ ६ ॥

प्रजापतेर्ब्रह्मणः । स चासौ मन्युः क्रोधः तन्मन्युः । सद्यो नियमनात् पूर्वक्षणमेव । क्रोधसमये भ्रुकुटी नीलशिरा नेत्रं रोहितं स्यादित्यतो नीललोहित इति । कारणगुणाः कार्ये समवयन्तीति

---

[1] मरणं मरणकालीनक्लेशनिमित्ता मूर्च्छेति यादुपत्यम् ।

स वै रुरोद देवानां पूर्वजो भगवान् भवः ।
नामानि कुरु मे धातः स्थानानि च जगद्गुरो ॥ ८ ॥

इति तस्य वचः पाद्मो भगवान् परिपालयन् ।
अभ्यधाद् भद्रया वाचा मा रोदीस्तत् करोमि ते ॥ ९ ॥

यदरोदीः सुरश्रेष्ठ सोद्वेग इव बालकः ।
ततस्त्वामभिधास्यन्ति नाम्ना रुद्र इति प्रजाः ॥ १० ॥

हृदिन्द्रियाण्यसुर्व्योम वायुरग्निर्जलं मही ।
सूर्यश्चन्द्रस्तपश्चैव स्थानान्येकादशैव ते ॥ ११ ॥

मन्युर्मनुर्महानासो महाञ्छिव ऋतध्वजः ।
मरुरेता भवः कालो वामदेवो धृतव्रतः ॥ १२ ॥

धीर्वृत्तिरसहोमा[2] च नियुत् सर्पिरिलाम्बिका ।
इरावती सुधा दीक्षा रुद्राण्यो रुद्र ते स्त्रियः ॥ १३ ॥

---

न्यायात् । अनेन सद्योजातो नीललोहित इति नामद्वयम् निरुक्तम् ॥ ७ ॥

लोके बालस्वभावप्रवर्तनाय तस्य तं वक्ति—**स वा इति** । इन्द्रादिदेवानां पूर्वजः ॥ ८ ॥ पाद्मो ब्रह्मा । मा रोदीरिति पदम् ॥ ९ ॥

प्रधाननामाह—**यदिति** ॥ १० ॥

हृन्मनः ॥ ११ ॥

नामानीति नामबहुलस्य प्रार्थितत्वात् कथं रुद्रेत्येकनामकरणमिति तत्राह—**मन्युरिति** । मरुरेताः 'मरुरग्निः कृष्णवर्त्मा शुचिर्वह्निरुषर्बुधः । धूमध्वजश्चित्रभानुर्दहनो हव्यवाहनः' इत्यभिधानाद् वह्निवीर्य इत्यर्थः । ऊर्ध्वरेतस्त्वादिव्रतधारणाद् धृतव्रतः । 'ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः' इति श्रुतिः[1] ॥ १२ ॥

रुद्राण्यो रुद्रभार्यास्ते तुभ्यं, दत्ता इति शेषः ॥ १३ ॥

---

[1] ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम्–क,ग,घ । [2] अशलोमा–ग,घ,क । असिलोमा–ङ ।

गृहाणैतानि नामानि स्थानानि च सपोषणम् ।
आभिः सृज प्रजा बह्वीः प्रजानामसि यत् पतिः ॥ १४ ॥

इत्यादिष्टः स गुरुणा भगवान् नीललोहितः ।
सत्त्वाकृतिः स्वभावेन ससर्जात्मसमाः प्रजाः ॥ १५ ॥

रुद्राणां रुद्रसृष्टानां समन्ताद् ग्रसतां जगत् ।
निशाम्यासंख्यशो यूथान् प्रजापतिरशङ्कत ॥ १६ ॥

अलं प्रजाभिः सृष्टाभिरीदृशीभिः सुरोत्तम ।
मया सह दहन्तीभिर्दिशश्चक्षुर्भिरुल्बणैः[2] ॥ १७ ॥

तप आतिष्ठ भद्रं ते सर्वभूतसुखावहम् ।
तपसैव यथापूर्वं स्रष्टा विश्वमिदं भवान् ॥ १८ ॥

तपसैव परंज्योतिर्भगवन्तमधोक्षजम् ।
सर्वभूतगुहावासमञ्जसा विन्दते पुमान् ॥ १९ ॥

---

सपोषणमिति क्रियाविशेषणम् । पुष्णात्यनया गार्हस्थ्यधर्ममिति पोषणा भार्या । प्रजानां पतिरसि यद् यस्मात् तस्मात् प्रजाभावेन[1] तत्पतित्वमपि गच्छतीति ॥ १४ ॥

गुरुणा ब्रह्मणा । सत्त्वाकृतिर्वीर्याकृतिः, सत्त्वं बलमाकृतिर्मूर्तिः । स्वभावेनोग्रत्वादिगुणैरात्मसमाः ॥ १५ ॥

प्रवृत्तं कर्म निवार्य पुनः किं व्यधत्तेति तत्राह—**तपेति** । तपो बहुविधम् । तत्रेदं कीदृशम् ? अत्राह—**सर्वेति** । भगवद्गुणस्मरणलक्षणं[3] तप अतिष्ठेत्यर्थः । तप आलोचन इति धातोः । स्रष्टावनुपयुक्तेनानेन किमिति मा भूच्छङ्केति वक्ति—**तपसेति** । भवांस्तपसैव यथापूर्वं तथेदं विश्वं स्रष्टा सम्भविष्यतीत्यन्वयः ॥ १८ ॥

निर्विषयेणानेन किमिति तत्राह—**तपसेति** । स्वविषयेण तपसोपलब्धस्य हरेः प्रसादेन लब्धज्ञानो भवान् स्रष्टा भविष्यतीति भावः । सूर्यादिज्योतिर्वैलक्षण्यात् परम् । तर्हि निराकारं किम् ? नेत्याह—**भगवन्तमिति** । ऐश्वर्यादिगुणशालिनम् । तर्हि किं न दृश्यत इत्यत उक्तम्—**अधो-**

---

[1] 'प्रजानामभावे तत्पतित्वं ते मृषा भविष्यतीति भावः' इति यादुपत्यम् ।

[2] उज्ज्वलैः-च । [3] श्रवण-ङ । श्रवणस्मरण-ग ।

मैत्रेय उवाच —

एवमात्मभुवादिष्टः परिक्रम्य गिरां पतिम् ।
बाढमित्यमुमामन्त्य[1] विवेश तपसे वनम् ॥ २० ॥

अथाभिध्यायतः सर्गं दश पुत्राः प्रजज्ञिरे ।
भगवच्छक्तियुक्तस्य लोकसन्तानहेतवः ॥ २१ ॥

मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः ॥ २२ ॥

उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात् स्वयम्भुवः ।
प्राणाद् वसिष्ठः सञ्जातो भृगुस्त्वचि करात् क्रतुः ॥ २३ ॥

पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयो ऋषिः ।
अङ्गिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत् ॥ २४ ॥

---

**क्षजमिति** । अबाह्येन्द्रियज्ञानविषयम् । तर्हि शशशृङ्गतुल्यमित्यत उक्तम्—**सर्वेति** । नन्विदं जीववदवस्त्वं किम् ? नेत्याह—**अञ्जसेति** । इदमेव तत्त्वं नान्यदित्यर्थः । अञ्जसा त्वरिते तत्त्वेऽप्यहहोऽद्भुतखेदयोः ' इति यादवः । ' तत्त्वेऽप्यद्धाञ्जसा द्वयम् ' इत्यमरश्च ॥ १९ ॥

सत्त्वाकृतिः स्वभावेनेत्युक्तसत्त्वस्वभावोऽस्य स्पष्टः, गुर्वाज्ञाकरणादिति भावेनाह—**एवमिति** । वनं जलम् ॥ २० ॥

तपस्तप्त्वा रुद्र एव सृष्टिशेषं करिष्यतीति मत्वा ब्रह्मणा तूष्णीं स्थितं किम् ? तत्राह—**अथेति** । भगवतो हरे रजोमिश्रसत्त्वशक्त्या युक्तस्य चतुर्मुखस्य, अङ्गेभ्य इति शेषः ॥ २१ ॥

किन्नामानस्त इति चोद्यानवकाशायाह—**मरीचिरित्यादिना** ॥ २२ ॥

कस्मात् कस्मादङ्गादेषां जन्मेति तत्राह—**उत्सङ्गादिति** । उत्सङ्गादूरोः ॥ २३ ॥

सकलतत्त्वनिर्णायकेऽस्मिन् शास्त्रेऽयथातारतम्यसृष्टिकथनं दुष्टजनमोहनाय । तस्यापि शास्त्रतात्पर्यार्थत्वात् । महतां प्रियत्वाच्च । सृष्टेश्च बहुविधत्वात् । तत्सृज्यानां च बहुरूपत्वात् । अतो निर्णायकग्रन्थान्तरानुसारेणास्य तात्पर्यमवगन्तव्यम् । तदुक्तम्—'कालतो बलतश्चैव ज्ञानानन्दादिकैरपि । सर्वैर्गुणैर्विष्णुरेव श्रेष्ठस्तदवरा रमा । अनन्तांशेन कालात् तु समा तस्याश्चतुर्मुखः । अवरो

---

[1] बाढमित्थमुपामन्त्य–क

धर्मः स्तनाद् दक्षिणतो यत्र नारायणः स्वयम् ।
अधर्मः पृष्ठतो यस्मान्मृत्युर्लोकभयङ्करः ॥ २५ ॥

हृदि कामो भ्रुवोः क्रोधो लोभश्चाधरदच्छदात् ।
आस्याद् वाक् सिन्धवो मेढ्रान्निर्ऋतिः पायोरघाश्रयः ॥ २६ ॥

छायायाः कर्दमो जज्ञे देवहूत्याः पतिः प्रभुः ।
मनसो देहतश्चेदं जज्ञे विश्वसृजो[4] जगत् ॥ २७ ॥

---

बहुलांशेन तत्समो वायुरुच्यते । नियमाद् वायुरेवैको ब्रह्मत्वं याति नापरः । तस्मात् समानता मुक्तौ वायुत्वे किञ्चिदूनता । दश वर्षं तु तत्पश्चाज्जननं तत्स्त्रियोरपि । आनन्दादिस्तद्दशांशः कालः संवत्सरात् परः । यावत् पश्चाज्जनिस्तावत् पूर्वं देहक्षयो भवेत् । ब्रह्मवाय्वोस्तु ये देव्यौ तद्दशांशः सुखादिकः । शेषस्य गरुडस्यापि कालो दिव्यसहस्रकः । शेषरुद्रौ ब्रह्मवायू यथा तद्वत् परस्परम् । तद्देव्यस्तद्दशांशाः स्युस्ततस्त्विन्द्रादयो मताः । एवं मुक्तौ च पूर्वं च नान्यथा क्वचिदिष्यते । अन्यथोक्तिर्यत्र च स्यात् तन्मोहार्थं भविष्यति । पूर्वापरविपर्यासो बहुरूपत्वहेतुतः[1] इति वचनात् । 'इन्द्राद्याः सनकाद्याश्च दक्षाद्या येऽपि चापरे । ऋषयो मनवो देवास्तद्वंश्या ये च केचन । उमाया अवराः सर्वे गुणैः सर्वैरसंशयः[2] । तत्समो न भविष्यो वा न भूतोऽद्यतनोऽपि वा । ऋते हरिब्रह्मवायुशेषवीन्द्रान् सभार्यकान् । शङ्करं चेति वेत्तव्यमन्यन्मोहार्थमुच्यते'[3] इत्यन्यत्रापि ॥ २४ ॥

यत्र यस्य धर्मस्य गृहे नारायणः स्वयं हरिनारायणकृष्णनाम्ना जात इति शेषः । यस्मात् अधर्मान्मृत्युर्देहवियोगलक्षणः ॥ २५ ॥

उत्पत्त्यनन्तरमपि स्वकारणं मुक्त्वा न तिष्ठन्तीत्याह—**हृदीति** । अधरदच्छदादधरोष्ठात् । वाङ्मानुषी । पायोर्गोळकाद् अघाश्रयः दुःखाद्यभिमानी ॥ २६ ॥

शरीरच्छायायाः । कर्दमोऽन्योऽस्तीति देवहूत्याः पतिरिति । संक्षिप्य फलितमाह — **मनस इति** ॥ २७ ॥

---

[1],[3] इमे तात्पर्योदाहृतप्रमाणवचने अस्याध्यायस्य तृतीयचतुर्थश्लोकव्याख्यावसरे यादुपत्ये व्याख्याते । ब्रह्मजननानन्तरं दिव्यदशवत्सरात् परं वायोर्जन्म । तत एकवत्सरात् परं सरस्वतीभारत्योरित्यर्थः ।

[2] सर्वैर्न संशयः-च,छ । [4] विश्वकृतो-ग ङ ।

वाचं दुहितरं तन्वीं स्वयम्भूर्हरतीं मनः ।
अकामां चकमे क्षत्तः सकाम इति नः श्रुतम् ॥ २८ ॥

तमधर्मे कृतमतिं विलोक्य पितरं सुताः ।
मरीचिमुख्या मुनयो विस्रम्भात् प्रत्यबोधयन् ॥ २९ ॥

नैतत् पूर्वैः कृतं त्वद्य न करिष्यन्ति येऽपरे ।
यः स्वां दुहितरं गच्छेदनिगृह्याङ्गजं प्रभुः ॥ ३० ॥

तेजीयसामपि ह्येतन्न सुश्लोक्यं जगद्गुरो ।
यद्वृत्तमनुतिष्ठन् वै लोकः क्षेमाय कल्पते ॥ ३१ ॥

तस्मै नमो भगवते य इदं स्वेन रोचिषा ।
आत्मस्थं व्यञ्जयामास स धर्मं पातुमर्हति ॥ ३२ ॥

---

भगवन्महत्त्व[1]विद्भिर्महद्भिरसुरजनमोहनं कर्तव्यमिति नियममवेक्षमाणस्य ब्रह्मणः कामिजन-विडम्बनप्रकारमाह—**वाचमिति** । दुहितरं शृङ्गाररसदोग्ध्रीं तन्वीं सुन्दरीं अकामामकुत्सितां वाचं मानुषीम् । नोऽस्माकं श्रुतं वार्तामात्रं, न तु तथ्यमित्यर्थः ॥ २८ ॥

भगवदुपासनया तेन[2] तत्र नित्यसन्निहितमनस्कत्वाददुष्टमनसः स्वयम्भुवो दुष्टजनमोहनरीति-माह—**तमिति** ॥ २९ ॥

कथमब्रुवन्निति तत्राह—**नेति** ॥ योऽङ्गजं काममनिगृह्य स्वां दुहितरं गच्छेत् तस्य एतत् कर्म पूर्वैस्त्वदन्यैर्न कृतम् । ये अपरे पश्चात्तनास्तेऽपि न करिष्यन्तीत्यन्वयः ॥ ३० ॥

ननु पामरस्येदं दुष्करम्, अग्निवत् दुष्कर्मेन्धनभस्मीकरणसमर्थस्य न मद्विधस्येति तत्राह—**तेजीयसामिति** । एकस्य चेदिदं दुष्कीर्तिकरं न बहूनामिति मन्दाशङ्कानिरासाय तेजीयसामिति बहुवचनम् । बहुभिरनुष्ठितमपि सुरापानं यथा निन्द्यं तथेदमपीति हिशब्देन लोकप्रसिद्धिं सूचयति । इतोऽप्यनुपपन्नमित्याह—**यद्वृत्तमिति** । अनेन जगद्गुरुत्वेनैतत्त्वद्वृत्तकरणेनेतरेषामनर्थः स्यादिति ध्वनितम् ॥ ३१ ॥

क्रोधभीत्या सान्त्वयन्तो नमन्तीत्याशयेनाह— **तस्मा इति** । संलापेन प्रार्थयमाना इति भावेनाह—**य इति** । स्वेन स्वयंप्रतिभासमानेन रोचिषा ज्ञानेनात्मस्थं परमात्मस्थम् इदं विश्वं

---

[1] महित्व–ङ । [2] भगवता, भगवत्प्रसादेनेत्यर्थः । तत्र भगवति ।

स इत्थं गृणतः पुत्रान् पुरो दृष्ट्वा प्रजापतीन् ।
प्रजापतिपतिस्तन्वीं तत्याज व्रीडितस्तदा ।
तां दिशो जगृहुर्घोरां नीहारं यद् विदुस्तमः ॥ ३३ ॥

कदाचिद् ध्यायतः स्रष्टुर्वेदा आसंश्चतुर्मुखात् ।
कथं स्रक्ष्याम्यहं लोकान् समवेतान् यथा पुरा ॥ ३४ ॥

चातुर्होत्रं कर्मतन्त्रमुपवेदनयैः सह ।
धर्मस्य पादाश्चत्वारस्तथैवाश्रमवृत्तयः ॥ ३५ ॥

---

व्यञ्जयामास, स ब्रह्मा स्वसृष्टं धर्मं पातुमर्हतीत्यन्वयः ॥ ३२ ॥

त्यागात्यागौ त्वितरप्रार्थनया महतां स्वभाव इति भावेनाह—**स इत्थमिति** । अथापि[1] सह स्थितत्वान्नेयं निजा सरस्वती किन्त्वन्यैव । त्यागात्[2] सा केति मन्दाशङ्का 'यां तत्याज विभुर्ब्रह्मा मानुषी वाक् तु सा स्मृता । सरस्वती निजा भार्या दैवीं वाचं तु तां विदुः' इति वाक्येन परिहर्तव्या । दिश इति दिक्स्था जना लक्ष्यन्ते । अन्यथा मानुषीति विशेषोक्तिर्व्यर्था स्यात् । तथा च यद् यस्या उत्पन्नं नीहाराख्यं तमो विदुरित्यर्थः[3] ॥ ३३ ॥

वेदादितदभिमानिनां[4] सृष्टिरुर्वरितेति सुप्तप्रतिबुद्ध इव तत्सृष्टिं कथयति—**कदाचिदिति** । चतुर्मुखादिति चतुर्भ्यो मुखेभ्य इत्यर्थः । चातुर्होत्रकर्मादिकमपि भगवद्ध्यानपूर्वकं सृष्टत्वाद् ग्राह्यमिति भावेनाह—**कथमिति** । कर्मणा समवेतानुपपन्नाँल्लोकान् कथं स्रक्ष्यामि द्रक्ष्यामीति ध्यायतो ब्रह्मणो वाचा कर्मतन्त्रं कर्मशास्त्रं समुत्पन्नम्, उपवेदैः स्मृतिलक्षणैर्नयैरुपोद्घातग्रन्थैः सह । अत्र विशेषस्तु—'अभिमानिनः शब्दतश्च ब्रह्मा वेदान् ससर्ज ह । यज्ञादींश्चक्लृपे वाचा तथा सर्वाभिमानिनः । इतिहासपुराणे तु श्रुत्वा हरिमुखात् स्वयम् । भारतादीन् विना पश्चाद्धरिणान्यैश्च निर्मितान्' इत्यनेन ज्ञातव्यः । आश्रमवृत्तयः आश्रमाश्च तदाचारश्च ॥ ३४–३५ ॥

---

[1] अद्यापि–क । [2] यक्ता–क ।

[3] घोरां क्रूरां तां तदा दिशो दिक्स्था जनाः (जगृहुः) नीहारं नीहाररूपं तमः अन्धकारं यद् यथाऽभिमन्यमानं विदुरित्यनंततीर्थाः । मनुष्यसंबन्धिनी वागेव कणादादिनिर्मितकुशास्त्ररूपा । तदभिमानिनीमिति यावत् । ....... नीहारमिव नीहारं बाष्पवत् सम्यग्ज्ञानप्रतिबन्धकं तमो मिथ्याज्ञानं यद् यस्याः सकाशाद् भवतीति विदुर्ज्ञानिन इति यादुपत्यम् । [4] मानिनीनाम्–क ।

विदुर उवाच —
स वै विश्वसृजामीशो वेदादीन् मुखतोऽसृजत् ।
यद् यद् येनासृजद् देवस्तन्मे ब्रूहि तपोधन ॥ ३६ ॥

मैत्रेय उवाच —
ऋग्यजुःसामाथर्वाख्यान् वेदान् पूर्वादिभिर्मुखैः ।
शस्त्रमिज्यां स्तुतिस्तोमं[1] प्रायश्चित्तं व्यधात् क्रमात् ॥ ३७ ॥

आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः ।
स्थापत्यं चासृजद् वेदं क्रमाद् पूर्वादिभिर्मुखैः ॥ ३८ ॥

इतिहासपुराणं च पञ्चमं वेदमीश्वरः ।
सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः ॥ ३९ ॥

---

विदुरः स्वयं विभागं जानन्नपि लोकहितार्थं विविच्य वक्तव्यमिति पृच्छतीत्याह—**विदुर इति** ॥ ३६ ॥

मैत्रेयोऽपि लोकहिताय विस्तरतो विदुरप्रश्नं परिहरतीत्याह—**ऋग्यजुरिति** । पूर्वादिभिः पूर्वदक्षिणपश्चिमोत्तरदिग्भेदभिन्नैः, शस्त्रं मन्त्रं ऋग्वेदगतम्, इज्यां मन्त्रं याजुषं, स्तुतिस्तोममन्त्रौ सामवेदगौ, स्तोमः क्रियमाणकर्मपुरतः क्रियमाणस्तुतिविशेषः, अन्यदा क्रियमाणा स्तुतिः, प्रायश्चित्तमाथर्वणं[2], व्यधात्, विभागं कृतवान् । वेदानां पूर्वमेवोद्धृतत्वात् ॥ ३७ ॥

आयुर्वेदं वैद्यशास्त्रम्[3] । धनुर्वेदमायुधविद्याम् । गान्धर्वं भरतशास्त्रम् । स्थापत्यं वेदं तक्षशास्त्रम् ॥ ३८ ॥

इतिहाससहितं पुराणम् । शब्दत एव रचनं न त्वर्थतः तस्य वैदिकत्वात् । वेदस्य व्यवितमात्रमेव करणम् । न च जनिवादिनो वाक्यस्याविषयत्वेनाप्रामाण्यम् । तस्य स्वाभिमान्युत्पत्त्या चरितार्थत्वात् । 'अभिमानिनः शब्दतश्च ब्रह्मा वेदान् ससर्ज ह' इत्यादेः । सर्वदर्शनः सर्वज्ञः । अनेन ब्रह्मोक्तस्याप्तिमूलत्वं दर्शितम् । सर्वाणि दर्शनानि यस्मादुत्पन्नानि स तथोक्त इति वा ॥३९॥

---

[1] शस्त्रमिज्या स्तुतिः स्तोम इति पाठान्तरम् । [2] प्रायश्चित्तं ब्राह्ममिति यादुपत्यम् ।

[3] अयं चपाठः । अन्यत्र बाहटम् । बाहट इति कश्चन वैद्यशास्त्रकर्ता । बाहटमिति वैद्यशास्त्र उपचारेण प्रयोगः ।

षोडश्युक्थौ पूर्ववक्त्रात् पुरीष्याग्निष्टुतावथ ।
आप्तोर्यामातिरात्रौ च वाजपेयं सगोसवम् । ॥ ४० ॥

तपः शौचं दया सत्यं धर्मस्येति पदानि च ।
आश्रमांश्च यथासंख्यमसृजत् सह वृत्तिभिः ॥ ४१ ॥

सावित्रं प्राजापत्यं च ब्राह्मं चाथ बृहत् तथा ।
वार्ताऽसञ्चयशालीनं शिलोञ्छ[2] इति वै गृहे ॥ ४२ ॥

वैखानसा वालखिल्योदुम्बराः फेनपा वने ।
न्यासे कुटीचकः पूर्वं बहूदो हंसनिष्क्रियौ ॥ ४३ ॥

---

षोडश्यादयो यज्ञविशेषाः । तद्भेदः कल्पतो[1] बोद्धव्यः । अथ पुरीष्याग्निष्टुतादिकं द्वयं द्वयं च दक्षिणादिवक्त्रेभ्य उत्पन्नम् ॥ ४० ॥

तपआदिधर्मपादानामपि वक्त्रचतुष्टयाज्जन्मेति ज्ञातव्यम् । यथासंख्यं ब्रह्मचर्याद्याश्रमांश्च पूर्वादिवक्त्रेभ्यः ससर्ज, भैक्ष्यचर्यादिवृत्तिभिः सह ॥ ४१ ॥

यथासंख्यमित्यनेनाश्रमचतुष्टयावान्तरभेदमाह—**सावित्रमिति** । गुरुकुले ब्रह्मचारिणो द्वादशवर्षपर्यन्तमध्ययनकर्म सावित्रम् । प्राजापत्यं ब्रह्मचर्यम् एकभार्यर्तुगमनम् । 'प्राजापत्यं ब्रह्मचर्यमेकभार्यर्तुगामिता' इति वचनात् । ब्राह्मं ब्रह्मचर्यं यावद्विवाहमध्ययनम् । बृहन्नाम ब्रह्मचर्यं यावज्जीवं नैष्ठिकम्[3] । गृहे गृहस्थाश्रमेऽपीत्येवं चातुर्विध्यम् । वार्ता यायावरं भैक्ष्यचर्यविशेषः । असञ्चय एकाहित्वं, तद्दिनार्जितव्रीह्यादेस्तद्दिन एव व्ययः । शालीनं तु वत्सरपर्यन्तं स्ववृत्तिहेतोः कुसूलमञ्जूषादिषु व्रीहिधान्यादिग्रहणम् । शिलोञ्छस्तु व्रीहिसस्यक्षेत्रेषु गलितव्रीह्यादिना देहयात्रावर्तनम् । 'वार्ता यायावरं ज्ञेयमेकाहित्वमसञ्चयः' इति[4] ॥ ४२ ॥

वने वानप्रस्थाश्रमे । 'वैखानसा मूलभक्षाः फलभक्षा उदुम्बराः । वालखिल्याः सर्वभक्षाः फेनपा वत्सफेनपाः' इत्यनेन व्याख्यातोऽयं श्लोकः । वत्समुखगलितपयःफेनपानेन जीवन्तः । न्यासे यत्याश्रमे पूर्वं कुटीचकः कुट्यां स्वगृह एव पुत्रादिदत्तान्नादिना चक्रते तृप्यति अलंबुद्धिमाप्नोतीति ।

---

[1] वेदाङ्गात् । [2] वार्ताऽसञ्चयशालीनसिलोञ्छ इति पाठान्तरम् । [3] अत्र सावित्रं ब्रह्मचर्यमुपनयनादारभ्य वेदग्रहणपर्यन्तं गायत्रीमधीयानस्य व्रतम् । ब्राह्मं द्वादशवर्षपर्यन्तं गुरुकुले वेदमधीयानस्य व्रतम् । बृहत्तु यावज्जीवं ब्रह्मचर्यं नैष्ठिकापरनामकमिति यादुपत्यम् । [4] वचनादिति शेषः ।

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथैव च ।
एवं व्याहृतयश्चासन् प्रणवेनास्पदं गताः ॥ ४४ ॥

तस्योष्णिगासील्लोमभ्यो गायत्री च त्वचो विभोः ।
त्रिष्टुप् मांसात् स्नुतो[1]ऽनुष्टुब् जगत्यस्थ्नः प्रजापतेः ।
मज्जायाः पङ्क्तिरुत्पन्ना बृहती प्राणतोऽभवत् ॥ ४५ ॥

स्पर्शास्तस्याभवन् जीवात् स्वरो देह उदाहृतः
ऊष्माण इन्द्रियाण्याहुरन्तस्था बलमात्मनः ॥ ४६ ॥

---

चक तृप्ताविति धातुः । द्वितीयो बहूदः सवनत्रयस्नानं विना त्वकाले तीर्थजलदर्शने तत्र स्नानं कुर्वंस्त्रिदण्डी । तृतीयचतुर्थौ हंसनिष्क्रियौ । हंसः एकदण्डी यज्ञोपवीती च । निष्क्रिय एकदण्डी । हिंसादिक्रियारहितः परमहंसः ॥ ४३ ॥

आन्वीक्षिकी वेदानुसारिणी तन्त्रविद्या । त्रयी त्रयो वेदाः । वार्ता वाणिज्यादि । दण्डनीतिः राजधर्मः । एते यथा ब्रह्मणो वक्त्रचतुष्टयादासन् एवं भूरादिव्याहृतयश्च अजस्य मुखचतुष्टयादभिव्यक्ताः प्रणवेन सह तद्वक्त्रस्यास्पदं गताश्चेत्यन्वयः । त्रय्या सह पाठान्न शिवप्रोक्तान्वीक्षिकी । तस्या वेदबहिष्काराद् । विष्णुप्रोक्तेयम् । तदुक्तम्, 'आन्वीक्षिकी तन्त्रविद्या सा च वेदानुसारिणी । विष्णुप्रोक्ता शिवाद्युक्ता ज्ञेया वेदबहिष्कृता । दण्डनीती राजधर्मस्त्रयी वेदाः प्रकीर्तिताः' इति । आन्वीक्षिक्या त्रय्या च ब्राह्मणानां जीवनं, दण्डनीत्या राज्ञां, वार्तया वैश्यादीनामित्येतद् द्योतयितुं च पुनस्त्रयीग्रहणम् । 'वार्ता वाणिज्यकादि स्यादेताभिर्यत् तु जीवनम् । तदान्वीक्षिक्यादिनाम ब्रह्मणा निर्मितं पुरा' इति च । यद्वा प्रणवेन सहास्पदं ब्रह्म गतास्तत्प्रतिपादकत्वेन तदेकविषयत्वं प्राप्ता इत्यर्थः । प्रणवेनेति तीयया प्रणवस्याप्राधान्यं न श्रद्धेयम् । तस्य पूर्ववक्त्रजत्वात् । तदुक्तम्, 'प्रणवः पूर्ववक्त्रेण भूराद्याश्च मुखत्रयात् । प्रदक्षिणमवर्तन्त वेदाश्चैवाश्रमास्तथा' इति । तस्मात् प्रणवं मुखीकृत्य ब्रह्म प्राप्ता इत्येवमर्थं तृतीयेति ॥ ४४ ॥

तस्य ब्रह्मणो रोमादिभ्यः सप्तच्छन्दसां सर्गप्रकारमाह—**तस्येति** । अत्र क्रमव्यत्ययः 'तस्योष्णिग् लोमानि' इत्यादिश्रुत्यनुसारात् कारणानुगुण्याच्च ॥ ४५ ॥

पञ्चाशद्वर्णानामपि ब्रह्मणोऽभिव्यक्तिप्रकारमाह—**स्पर्शा इति** । कादयो मावसानाः स्पर्शास्तस्य ब्रह्मणो जीवाच्चैतन्यादभवन् अभिव्यक्ता आसन् । वर्णानां नित्यत्वादभिव्यक्तिरेव । स्वरोऽकारादिर्देहः

---

[1] स्नुतः स्नायुतः ।

स्वराः सप्त विहारेण भवन्ति स्म प्रजापतेः ।
शब्दब्रह्मात्मनस्तात व्यक्ताव्यक्तात्मनः प्रभोः ॥ ४७ ॥

ब्रह्मानुभावविततो नानाशक्त्युपबृंहितः ।
ततोऽपरामुपादाय स सर्गाय मनो दधे ॥ ४८ ॥

---

देहादुदाहृत उद्धृतः[1] । शषसहा ऊष्माणः श्रोत्रादीन्द्रियाणि इन्द्रियेभ्य उत्पन्ना इत्याहुः । यरलवा अन्तस्था आत्मनो ब्रह्मणो बलं बलादभिव्यक्ताः । अत्र सामानाधिकरण्यवचनम् 'यस्माद् यद् जायते चाङ्गात् तत् तदङ्गाभिधं भवेत्' इति वचनाद् युक्तम् । प्रथमा पञ्चम्यर्थे । अकुहविसर्जनीयानां कण्ठ इत्यादिस्थानभेदवत् ग्रन्थान्तरे स्थानभेदसम्भवे कथमत्रोक्तमेव स्थानमिति निर्णय इतीदं चोद्यम् 'स्पर्शास्तस्याभवन् जीवात् स्वरा देहात् प्रजज्ञिरे । ऊष्माण इन्द्रियेभ्यश्च अन्तस्था बलतो विभोः' इत्यनेन परिहर्तव्यम् ॥ ४६ ॥

'निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः' इति सप्तस्वराः प्रजापतेः विहारेण शरीरसञ्चरणविशेषेण भवन्ति स्म अभवन्नित्यन्वयः । स्वराणां शब्दविशेषत्वात् तत्सामग्रीमतस्तदुत्पादनसामर्थ्यं स्यात्, तदस्य कथमिति तत्राह -**शब्देति** । 'शब्दब्रह्मात्मको ब्रह्मा सर्वशब्दाभिधो यतः । ऋते नारायणादीनि नाम्नां स विषयो यतः' इति वचनान्नारायणादि नामव्यतिरेकेण[2] सर्ववेदादिशब्दराशेर्विषयत्वात् तदुत्पादनसामर्थ्यमस्तीत्यर्थः । नित्यवर्णात्मकवेदानां नित्यत्वेन व्याप्तत्वात् परिच्छिन्नस्य ब्रह्मणस्तद्विषयत्वं कथम्? अत्राह—**व्यक्तेति** । 'व्यक्तं ब्रह्माण्डमुद्दिष्टमव्यक्तं महदादि च । तद्व्यापकत्वाद् ब्रह्मा तु व्यक्ताव्यक्तात्मकः स्मृतः' इत्यतो व्याप्तिमत्त्वात्[3] तद्विषयत्वं युक्तम् । उक्तादन्यत्रापि व्याप्तिशक्तिमत्वात् प्रभोरित्युक्तम् ॥ ४७ ॥

देहात् तदवयवेभ्यो ब्रह्मणः सृष्टिमुक्त्वाऽधुना प्रकारान्तरेण तस्मात् सृष्टिं वक्ति—**ब्रह्मेति** । ब्रह्मा ततः पूर्वस्मादपरां स्त्रीपुरुषीकरणशक्तिमुपादाय सर्गाय मनो दध इत्यन्वयः । परतन्त्रस्य ब्रह्मणः स्वाधीनसृष्टिः कथम्? अत उक्तम्—**अनुभावेति** । अनुभावेन परब्रह्मणा विततः तस्यानुग्रहामृतेन पूर्ण इत्यर्थः । ब्रह्मानुभाववितत इत्येकं वा पदम् । परब्रह्मणः प्रभावेण विततः हरेरनुकूलेन भावेन सत्तया विततोऽधिकृतो विशेषसन्निधानवानिति वा । अत एव नानाशक्त्युपबृंहितः नानाविधसृष्टिसामर्थ्यपूर्णः ॥ ४८ ॥

---

[1] उद्धृतः उत्पन्नः । [2] अयं ग,ङ पाठः । अन्यत्र नाम्नां व्यतिरेकेणेति पाठः ।
[3] व्याप्तिशक्तिमत्त्वात्-ङ ।

ऋषीणां भूरिवीर्याणामपि सर्गमविस्तृतम् ।
ज्ञात्वा तद् हृदये भूयश्चिन्तयामास कौरव ॥ ४९ ॥

अहो अद्भुतमेतन्मे व्यापृतस्यापि नित्यदा ।
न ह्येधन्ते प्रजा नूनं दैवमत्र विघातकम् ॥ ५० ॥

एवं युक्तिमतस्तस्य दैवं चावेक्षतस्तदा ।
कस्य रूपमभूद् द्वेधा यत् कायमभिचक्षते ॥ ५१ ॥

ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत ।
यस्तु तत्र पुमान् सोऽभून्मनुः स्वायम्भुवः स्वराट् ॥ ५२ ॥

स्त्रीर्यासीच्छतरूपाख्या महिष्यस्य महात्मनः ।
तदा मैथुनधर्मेण प्रजा एधांबभूविरे ॥ ५३ ॥

---

तत्र सिंहावलोकनप्रकारेणापरां सृष्टिं चिन्तयतीत्याह—**ऋषीणामिति** । 'यत्र पश्चत्तनः श्रेष्ठस्तत्र सिंहावलोकनम्' इति वचनात् पश्चादुत्पत्स्यमानस्य मनोः श्रैष्ठ्यादत्र सिंहावलोकनं कृतमित्यर्थः[1] । मरीच्यादिऋषीणां सकाशादपि । तत् तस्मादविस्तृतत्वादेव । अनेन महताऽपि पुरुषेण करिष्यमाणं कार्यमालोच्य कर्तव्यं, न सहसेति निदर्शितम् ॥ ४९ ॥

चिन्तनविधां दर्शयति—**अहो इति** । सृष्टौ व्यापृतस्य । कुतः ? तत्राह—**न हीति** । चिन्तया निश्चितमाह—**दैवमिति** । दैवानुग्रहोऽस्ति चेत् सृष्टिः पूर्यत इति निरचिनोदित्यर्थः ॥५०॥

फलितमाह—**एवमिति** । युक्तिमतः ध्यानवतः दैवानुग्रहमप्यपेक्षमाणस्य कस्य ब्रह्मणो रूपं द्विधाऽभूत्, यद् रूपं केन ब्रह्मणा प्राप्तत्वात् कायं नाम अभिचक्षते, निरुक्तज्ञा इति शेषः ॥ ५१ ॥

तद् रूपद्वयं किमभूदिति तत्राह—**ताभ्यामिति** । तयोर्नामविशेषमाह—**यस्त्विति** । स्वराट् चक्रवर्ती ॥ ५२ ॥

अस्य मनोरयं योगो विभूतिकर इत्याह—**तदेति** । तदा तन्मिथुनसृष्टिकालमारभ्य ॥ ५३ ॥

---

[1] तात्पर्यवचनस्येति शेषः ।

स चापि शतरूपायां पञ्चापत्यान्यजीजनत् ।
प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत ॥ ५४ ॥

आकूतिर्देवहूतिश्च प्रसूतिरिति सत्तम ।
आकूतिं रूचये प्रादात् कर्दमाय तु मध्यमाम् ।
दक्षायादात् प्रसूतिं च यत आपूरितं जगत् ॥ ५५ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे त्रयोदशोऽध्यायः

॥ अथ चतुर्दशोऽध्यायः ॥

शुक उवाच —

निशम्य वाचं वदतो मुनेः पुण्यतमां नृप ।
भूयः पप्रच्छ कौरव्यो वासुदेवकथादृतः ॥ १ ॥

विदुर उवाच —

स वै स्वायम्भुवः सम्राट् प्रियः पुत्रः स्वयम्भुवः ।
प्रतिलभ्य प्रियां पत्नीं किं चकार ततो मुने ॥ २ ॥

---

अनेन मनुना कान्यपत्यान्युत्पादितानीति तत्राह—**स चेति** । तन्नामान्याह—**प्रियव्रतेत्यादिना** । यतः कन्यात्रयात् ॥ ५४–५५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे त्रयोदशोऽध्यायः ॥

॥ अथ चतुर्दशोऽध्यायः ॥

अस्मिन् अध्याये हरेरवतारकथाश्रवणादिना साक्षात् पुरुषार्थः स्यादिति निरूप्यते । श्रीशुकः परीक्षिते पुनरपि विदुरप्रश्नप्रकारं वक्ति—**निशम्येति** ॥ १ ॥

स्वधर्माचारैः स्वपतिं स्वर्गं नयतीति पत्नी । तां प्रतिलभ्य । तत इत्यनेन व्यापारान्तरं निषेधति ॥ २ ॥

चरितं तस्य राजर्षेरादिराजस्य सत्तम ।
ब्रूहि मे श्रद्दधानाय विष्वक्सेनाश्रयो ह्यसौ ॥ ३ ॥

श्रुतस्य पुंसः सुचिरश्रमस्य नन्वञ्जसा सूरिभिरीडितोऽर्थः ।
यत् तद् गुणानुश्रवणं मुकुन्दपादारविन्दं हृदयेषु येषाम् ॥ ४ ॥

शुक उवाच —

इति ब्रुवाणं विदुरं विनीतं सहस्रशीर्ष्णश्चरणोपधानम् ।
प्रहृष्टरोमा भगवत्कथायां प्रणीयमानो मुनिरभ्यचष्ट ॥ ५ ॥

मैत्रेय उवाच —

यदा स्वभार्यया साकं जातः स्वायम्भुवो मनुः ।
प्राञ्जलिः प्रणतश्चेदं वेदगर्भमभाषत ॥ ६ ॥

---

कोऽसौ वैदुरिकः प्रश्न इत्यत्राह[1]—**चरितमिति** । मे मह्यम् । वक्तव्यत्वे हेतुमाह—**विष्वक्सेनेति** । विष्वक् सर्वत्र सेना ज्ञानलक्षणा यस्य स तथोक्तः ॥ ३ ॥

विष्वक्सेनचरितं तद्भक्तचरितं चेति द्वयमेव पुरुषार्थान्तरङ्गत्वेन मुमुक्षुणा श्रोतव्यं सूरिभिरीडितत्वादित्याह—**श्रुतस्येति** । सुचिरं श्रम आयासो यस्य स तथा तस्य पुंसः श्रुतस्य वेदाद्यर्थश्रवणस्य अञ्जसा तत्त्वेन सूरिभिरीडितार्थोऽयं ननु इदं फलं हि । यत् तस्य हरेर्गुणानुवादश्रवणं येषां हृदयेषु मुकुन्दस्य पादारविन्दं, लसतीति शेषः, तेषां पुंसां चरितश्रवणं च ज्ञानिभिरभिष्टुतोऽर्थः इति यस्मात् तस्मात् स्वायम्भुवमनोर्विष्वक्सेनकथाऽविनाभूतत्वात् तत्कथां ब्रूहीति भावः ॥ ४ ॥

श्रीशुकः परीक्षिते विदुरप्रश्नप्रकारं वक्तीति वक्ति सूतः शौनकादिभ्य इत्याह—**इति ब्रुवाणमिति** । सहस्रशीर्ष्णो हरेश्चरणोपधानं पादपीठायितम् । भगवत्कथायां प्रणीयमानः प्रेर्यमाणः अभ्यचष्ट आहेत्यन्वयः ॥ ५ ॥

सम्भाषणानन्तर[2]मन्यकथाप्रसङ्गो नास्तीति भावेनाह—**यदेति** । नायमञ्जलिर्दाम्भिक इति भावेनोक्तम्—**प्रणत इति** ॥ ६ ॥

---

[1] इदं वाक्यं द्वितीयश्लोकावतारिकात्वेन स्वीकर्तुमुचितम् ।

[2] प्रश्नानन्तरमित्यर्थः ।

त्वमेकः सर्वभूतानां जन्मकृद् वृत्तिदः पिता ।
अथापि नः प्रजानां ते शुश्रूषा केन वा भवेत् ॥ ७ ॥

तद् विधेहि नमस्तुभ्यं कर्मस्विज्यात्मशक्तिषु ।
यत् कृत्वेह यशो विष्वगमुत्र च भवेद् गतिः ॥ ८ ॥

ब्रह्मोवाच —

प्रीतस्तुभ्यमहं तात स्वस्ति स्याद् वां क्षितीश्वर ।
यन्निर्व्यलीकेन हृदा शाधि मेत्यात्मनार्पितम् ॥ ९ ॥

एतावत्यात्मजैरेवं कार्याथा[2]पचितिर्गुरौ ।
शक्त्याऽप्रमत्तैर्गृह्येत शासनं गतमत्सरैः ॥ १० ॥

स त्वमस्यामपत्यानि सदृशान्यात्मनो गुणैः ।
उत्पाद्य शाधि धर्मेण गां यज्ञैः पुरुषं यज ॥ ११ ॥

---

ननु किमियं भाषा गुह्याद्यन्यतमा साङ्केतिकी वा ? न द्वितीया । अप्रस्तुतत्वादसम्भवाच्च । प्रथमा च समाधिरेवेति भावेनाह—**त्वमेक इति** । अथ जन्मकृत्त्वाद् वृत्तिदत्वात् पितृत्वाच्च पोष्यैः शुश्रूषा कर्तव्या । सा केन कर्मणा स्यादित्यर्थः । अपिशब्देन कार्याकरणे पातकं सूचयति ॥ ७ ॥

**तदिति** । तत् कर्म । इतोऽपि भगवच्छुश्रूषा कर्तव्येत्याह—**कर्मस्विति** । आत्मशक्तिषु स्वकेषु नित्यनैमित्तिकेषु कर्मस्विज्या[1] पूजा । तत् कर्म विशिनष्टि—**यत् कृत्वेति** । इह लोके सर्वत्र यशोऽमुत्र परलोके गतिः सुखप्राप्तिलक्षणा स्यात्, तादृशमिति शेषः ॥ ८ ॥

सच्छिष्ये सद्गुरुणा एवमनुग्रहः कर्तव्य इति भावं ध्वनयन् ब्रह्मा प्रतिवक्ति—**प्रीत इति** । यद् यस्मात् । शाधि शिक्षस्व । आत्मना परप्रेरणामन्तरेण ॥ ९ ॥

इयमेका गुरोः क्रियमाणा पूजेत्याह—**एतावतीति** । अपचितिः पूजा । एतावतीति केयमित्यत्राह—**शक्त्येति** । अथ गुरोर्नियोगानन्तरमेव शक्त्या शासनमाज्ञा गृह्येतेति यत् सेयमित्यर्थः ॥ १० ॥

आज्ञामाह—**स त्वमिति** । अस्यां शतरूपायाम् ॥ ११ ॥

---

[1] अत्र 'इज्य' इत्येव तात्पर्यम् । तथा ह्यनन्ततीर्थीये—'आत्मशक्तिषु आत्माधीनेषु कर्मसु नित्यनैमित्तिकेषु इज्य यजनीय इति सम्बोधनम्' इति । [2] कार्याह्यपचितिः—क ।

परं शुश्रूषणं मह्यं स्यात् प्रजारक्षया नृप ।
भगवांस्ते प्रजाभर्तुर्हृषीकेशोऽनुतुष्यति ॥ १२ ॥

येषां न तुष्टो भगवान् यज्ञलिङ्गो जनार्दनः ।
तेषां श्रमोऽप्यपार्थाय यदात्मा नादृतः स्वयम् ॥ १३ ॥

मनुरुवाच —

आदेशेऽहं भगवतो वर्तयाम्यरिसूदन[2] ।
स्थानं त्विहानुजानीहि प्रजानां मम च प्रभो ॥ १४ ॥

यदोकः सर्वसत्त्वानां मही मग्ना महाम्भसि ।
अस्या उद्धरणे यत्नो देव देव्या विधीयताम् ॥ १५ ॥

मैत्रेय उवाच —

परमेष्ठी त्वपां मध्ये तथा सन्नामवेक्ष्य गाम् ।
कथमेनां समुन्नेष्य इति दध्यौ धिया चिरम् ॥ १६ ॥

---

केन वेत्यस्य[1] प्रश्नं परिहरति—**परमिति** । अनेनाज्ञाग्रहणमेकम् इतरत् प्रजापालनमिति द्वयं शुश्रूषणमुक्तं भवति । पुरुषस्य पुरुषार्थाय श्रीनारायणप्रसाद एव, ततः प्रजापालनेन किम्? तत्राह—**भगवानिति** ॥ १२ ॥

बाधकमाह—**येषामिति** । यज्ञो लिङ्गं ज्ञापको यस्य स तथा । श्रमः इदं नः श्रेयःसाधनं इत्यनुष्ठानाद्यायासः । आत्मा परमात्मा ॥ १३ ॥

ब्रह्मणा प्रजापालनायोपदिष्टो मनुस्तदाज्ञामादाय ब्रह्माणं प्रार्थयते—**आदेशेऽहमिति** । कामाद्यरिसूदन । अनुजानीहि अनुज्ञापय आदिशेत्यर्थः ॥ १४ ॥

भूम्याख्ये स्थाने स्थितिं विधाय प्रजापालनं कर्तव्यमित्याज्ञां तावदाशङ्क्य परिहरति—**यदोक इति** । सर्वसत्त्वानां पिपीलिकादिसर्वप्राणिनां यदोक आवासस्थानं सा मही महाम्भसि प्रलयजले मग्नाऽभूत् । हे देव, अस्याः देव्या भूमेरुद्धरणे यत्नः क्रियतामित्यन्वयः ॥ १५ ।

पूर्वमेव भूमेरभावं जानन्नपि ब्रह्मा प्रार्थनापूर्वकं कृतमेवोपकृतं स्यादिति मन्वानो भूमेरुद्धारमालोचयतीत्याह[3]—**परमेष्ठीति** । यथोन्नेतुमशक्या तथा सन्नां मग्नाम् ॥ १६ ॥

---

[1] अस्य स्वायम्भुवमनोः । सप्तमश्लोकस्थोऽयं प्रश्नः । [2] वर्तमानोऽरिसूदन–घ ।

[3] प्रार्थनापूर्वकं कृतमेवैतत् स्यात् । अस्या अवतारिकाया अभिप्रायस्तु न स्पष्टः ।

पीतं मया जलं सर्वं पृथिवी च निवेशिता ।
तथापि किमिदं साद्य प्लाव्यते पुनरम्बुभिः ॥ १७ ॥

प्रजा देवासुरपितृमनुष्यपशुपक्षिणः ।
सरीसृपान् नगान् नागान् भूतान्युच्चावचानि च ॥ १८ ॥

सृजतो मे क्षितिर्वार्भिः प्लाव्यमाना लयं गता ।
अथात्र किमनुष्ठेयमस्माभिः सर्गयोजितैः ॥ १९ ॥

यस्याहं हृदयादासं स ईशो विदधातु शम्[1] ।
इत्यभिध्यायतो नासाविवरात् सहसानघ ।
वराहतोको निरगादङ्गुष्ठपरिमाणतः ॥ २० ॥

तस्याभिपश्यतः स्वस्थः क्षणेन किल भारत ।
गजमात्रः प्रववृधे तदद्भुतमभून्महत् ॥ २१ ॥

मरीचिमुख्यैर्विप्रैश्च कुमारैर्मनुना सह ।
दृष्ट्वा तत् सौकरं रूपं तर्कयामास चित्रधा ॥ २२ ॥

किमेतत् सौकरव्याजं सत्त्वं दिव्यमवस्थितम् ।
अहो बताश्चर्यमिदं नासाया मे विनिःसृतम् ॥ २३ ॥

---

मज्जने निमित्तमाह—**पीतमिति** । यावता पीतेन जलस्योद्रेकः शाम्यति तावत् सर्वमित्युच्यते । न तु निश्शेषत्वेन । अन्यथा वार्भिः प्लाव्यमानेत्यसङ्गतं स्यात् । निवेशिता निवेशनीकृता ॥ १७–१८ ॥

वार्भिर्जलैः प्लाव्यमाना चञ्चलीक्रियमाणा । लयं गता मग्ना । प्रजानां भारेणेति शेषः । सृजतः सतः । अत्र अस्यामवस्थायाम् ॥ १९ ॥

इदमेवानुष्ठेयमित्याह—**यस्येति** । सत्यसङ्कल्पस्य हरेर्भक्तत्वात् ब्रह्मापि सत्यसङ्कल्प इतीममर्थं ध्वनयन् हरेः प्रादुर्भावप्रकारमाह—**इतीति** । नासाविवरान्नासाबिलात् । सहसा सद्यो निरूपितत्वेन । वराहतोको वराहशिशुः ॥ २० ॥

तस्य ब्रह्मणः । स्वस्थः आकाशे स्थितः ॥ २१ ॥ कुमारैः सनकादिभिः ॥ २२ ॥

सौकरं सूकरस्य विद्यमानम् । तर्कयामास मीमांसितवान् । मीमांसाप्रकारं वक्ति—**किमेतदिति** । अहो इत्यनेन निकटवर्तिनो मुनीन् मुखीकरोति । बत खेदयत् ॥ २३ ॥

---

[1] मे—क ।

दृष्टोऽङ्गुष्ठशिरोमात्रः क्षणाद् गण्डशिलोपमः ।
अपिस्विद् भगवानेष यज्ञो मे खेदयन्मनः ॥ २४ ॥

इति मीमांसतस्तस्य ब्रह्मणः सह सूनुभिः ।
भगवान् यज्ञपुरुषो जगर्जागेन्द्रसन्निभः ॥ २५ ॥

ब्रह्माणं हर्षयामास हरिस्तांश्च द्विजोत्तमान् ।
स्वगर्जितेन ककुभः प्रतिस्वनयता विभुः ॥ २६ ॥

निशम्य तद् घर्घरितं स्वखेदक्षयिष्णु मायामयसूकरस्य ।
जनस्तपः सत्यनिवासिनस्ते त्रिभिः पवित्रैर्मुनयोऽगृणन् स्म ॥ २७ ॥

तेषां सतां वेदवितानमूर्तिर्ब्रह्मावधार्यात्मगुणानुवादम् ।
ननर्द भूयो विबुधोदयाय गजेन्द्रलीलो जलमाविवेश ॥ २८ ॥

---

किं बहुना ? इदं महाश्चर्यम् । अङ्गुष्ठशिरोमात्रः अङ्गुष्ठाग्रपरिमाणः । 'गलिताः स्थूलपाषाणा गण्डशैला इति स्मृताः' । एष वराहः मे मनः खेदयन् यज्ञो भगवानपि स्वित् ? ॥ २४ ॥

ब्रह्मणः सहसोत्पन्नाज्ञाननिरासप्रकारमाह—**इतीति** । मीमांसतः मीमांसमानस्य सतः । मरीच्यादिसूनुभिः ॥ २५ ॥

गर्जितफलमाह—**ब्रह्माणमिति** । प्रतिस्वनयता प्रतिध्वनिमतीः कुर्वता गर्जितेन ॥ २६ ॥

अयं हरिरिति ज्ञात्वा एतैः किमकारीति तत्राह—**निशम्येति** । मायामयसूकरस्येच्छामय-वराहस्य स्वखेदक्षयिष्णु स्वखेदविनाशकरं घर्घरितं सूकराणां नादविशेषं श्रुत्वा जनादिलोकनिवासिनो मुनयस्त्रिभिः पवित्रैर्निर्दोषवेदैस्तं यज्ञपुरुषमगृणन्नित्यन्वयः । स्मेत्यनेन गुणानुस्मरणपूर्वकस्तुतिं सूचयति । जनस्तप इति छन्दोभङ्गभयाद् वेदानुकारित्वाद् वा विसर्गान्तम् ॥ २७ ॥

स्तुतिस्तत्प्रसादजननी समभूदिति भावेनाह—**तेषामिति** । वेदानां वितानेन विस्तारेण प्रतिपादिता मूर्तिर्यस्य स तथा । यद्वा वेद एव वितानमुल्लोचमुपरिपतदवकरनिवारणवस्त्रं यस्याः सा वेदविताना, तादृशी मूर्तिर्यस्य स तथा । यज्ञवितानमूर्तिरिति पाठे यज्ञविस्तारेषु गृहीतमूर्तिरित्यर्थः । आत्मनो ज्ञानानन्दादिगुणानामनुवादो यस्मिन् तथा । ब्रह्मस्तुतिलक्षणं वेदमवधार्य ननर्द ननाद । भूय इत्युभयत्र सम्बध्यते । [1]प्रलयजलम् ॥ २८ ॥

---

[1] मूलस्थस्य जलम् इति पदस्य व्याख्यानमिदम् ।

उत्क्षिप्तवालः खचरः कठोरसटा विधुन्वन् खररोमशत्वक् ।
खुराहताभ्रः सितश्रृङ्ग ईक्षाज्योतिर्विभासो भगवान् महीध्रः ॥ २९ ॥
घ्राणेन पृथ्व्याः पदवीं विजिघ्रन् क्रोडापदेशः स्वयमध्वराङ्गः ।
करालदंष्ट्रोप्यकरालदृग्भ्यामुद्वीक्ष्य विप्रान् गृणतोऽविशत् कम् ॥ ३० ॥
स वज्रकूटाङ्गनिपातवेगविशीर्णकुक्षिः स्तनयन्नुदन्वान् ।
उत्सृष्टदीर्घोर्मिकरैरिवार्तश्चुक्रोश यज्ञेश्वर पाहि मेति ॥ ३१ ॥

---

तत्तद्योनिजानां तत्तत्क्रियायां तत्तद्भावोऽनिवार्य इति जलप्रवेशे तद्भावं वक्ति—**उत्क्षिप्तेति** । स भगवान् महीध्रः श्रीनारायणाख्यः पर्वतः कं प्रलयजलमविशदित्यन्वयः[1] । तं विशिनष्टि उत्क्षिप्तवालः उद्धृतपुच्छः अन्यत्रोन्नतकपोलः । 'वालं तु कपिलं वज्रं ह्रीबेरं दीर्घरोमकम्' इत्यभिधानात् । ह्रीबेरं[2] वा । खे आकाशे चरतीति खचरः । उभयत्र समानम् । कठोराः परिदृढाः सटाः बहलकेसरान् धुन्वन् कम्पयन् । अन्यत्र सटा लताविशेषाः । खराः परुषाः रोमशा रोमवती त्वग् यस्य स तथोक्तः । अन्यत्र रोमशः पिचुमन्दः । खरा पिचुमन्दस्य त्वग् यस्मिन् स तथा । खुरैराहतमभ्रं येनासौ खुराहताभ्रः सन्ताडितमेघः । अन्यत्र खुरैः शृङ्गैः । सितश्रृङ्गः धवलदंष्ट्रः । अन्यत्र स्पष्टम् । ईक्षाया नेत्रस्य ज्योतिस्तारा कनीनिका तया विभासो विभासनं दीप्तिर्यस्य स तथोक्तः । यद्वा दर्शनाख्याग्निज्वालया शोभमानः ॥ २९ ॥

घ्राणेन्द्रियेण विजिघ्रन् घ्राणोपादानं[3] कुर्वन् क्रोडापदेशः देवकार्यनिमित्तेन वराहः, न तु साक्षाद् वराहः, किन्तु स्वयं स्वतोऽध्वराङ्गः यज्ञमूर्तिः श्रीनारायणः । पूर्वत्र पर्वतोपमत्वेन दंष्ट्रोक्तिः । अत्राशान्तत्वद्योतनायेति न पुनरुक्तिः । अध्वरस्य यज्ञस्य अङ्गानि कुशादीनि साधनानि यस्मिन् सोऽध्वराङ्ग इति वा । 'अपदेशो लक्षणे स्यान्निमित्तव्याजयोरपि' इति यादवः ॥ ३० ॥

जलप्रवेशसमये समुद्रेण स्तुतिरेवाकारि, नत्वाक्रोश इत्याशयेनाह—**स वज्रेति** । स उदन्वान् समुद्रो हे यज्ञेश्वर मां पाहीति भावेन चुक्रोशाजुहावोन्ननादेत्यर्थः । रक्षाप्रार्थनायां कः क्लेशः प्राप्त इत्यत उक्तम्—**वज्रेत्यादि** । वज्रकूटवदयोघनवद् गरिम्णोपेतस्याङ्गस्य निपातवेगेन विशीर्णोऽतिनिष्पिष्टः कुक्षिर्यस्य स तथा । अत एवोदरवेदनया स्तनयन् शब्दं कुर्वन् । आर्त इव उत्सृष्टा ऊर्ध्वं गता अत एव दीर्घा ऊर्मय एव करास्तैः । उदरादिवेदनार्तः पुरुषो यथा आक्रोशति तथेति लौकि-

---

[1] उत्तरश्लोकस्थेन । [2] सुगन्धिवस्तु । मुडिवाळ इति कन्नडभाषायाम् । [3] गन्धोपादानमित्यर्थः ।

खुरैः क्षुरप्रैर्दरयंस्तदाप उत्पारवारं त्रिवरू रसायाम् ।
ददर्श गां तत्र सुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त ॥ ३२ ॥

स्वदंष्ट्रयोद्धृत्य महीं विलग्नां स उत्थितः संरुरुहे रसायाः
तत्रापि दैत्यं गदयाऽऽपतन्तं सुनाभसन्दीपिततीव्रमन्युः ॥ ३३ ॥

जघान रुन्धानमसह्यविक्रमः सलीलयेभं मृगराडिवाम्भसि ।
तद्रक्तपङ्काङ्किततुण्डगण्डो यथा गजेन्द्रो जगतीं विभिन्दन् ॥ ३४ ॥

---

कार्थः । अध्यात्मस्तु[1] स्तुतिरेव कृतेत्यर्थः ॥ ३१ ॥

खरतरतरणिकिरणपरितप्तलोकवराहवन्न हरेर्जलप्रवेशः किन्तु यद्दर्शनार्थं प्रावेशि तद्दर्शनमनेन कृतमित्याह—**खुरैरिति** । उत्पारवारमिति क्रियाविशेषणम् । पारे तीरान्तरे स्थितं वाः जलं यथोद्गतं भवति तथा । क्षुरप्रैः क्षुरसाधर्म्यं पूरयन्तीति क्षुरवन्निशितैरित्यर्थः । यद्वा अर्धचन्द्रैः । 'अर्धचन्द्रः क्षुरप्रः स्याद्' इति यादवः । खुरैस्तस्य समुद्रस्यापो दारयन् भिन्दन् । त्रिभिर्वेदैर्व्रियत इति त्रिवरुः । त्रिषु युगेषु अवतारं वृणोतीति वा स्थानत्रयं वृणोतीति वा । गुरुशब्दवत् प्रक्रिया । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः । अग्रे सर्वं विलाप्य सुषुप्सुः निद्रां कर्तुकामः स हरिर्यां जीवधानीं सर्वप्राण्याधारभूतामभ्यधत्त जलस्योपरि निहितवान् तां गां तत्र रसायां पाताले ददर्शेत्यन्वयः । 'वरुः सुगलरेखा स्याद् वराहस्य च विस्तृता' इत्यभिधानाद् वलित्रयाङ्कितगलो वा । पारं वृणोतीति पारवारः, कर्मण्यणित्यण्प्रत्ययः, पक्ष्यादिप्राणिजातं तत् यथोद्गतं स्यात् तथेति वा ॥ ३२ ॥

भगवता महीं दृष्ट्वा किमकारीति तत्राह—**स्वदंष्ट्रयेति** । विलग्नां रसातले बन्दीगृहवत् स्थितां महीं स्वदंष्ट्रयोद्धृत्य रसाय उत्थिताः स आदिवराहः संरुरुहे उपर्यारुरोह । रसालयैरसुरैः स्वभूत-भूम्युन्नयनसमये निद्रितं किम् ? तत्राह—**तत्रापीति** । स हरिस्तत्र भूम्युद्धरणसमयेऽपि स्वं रुन्धानं गदयाऽऽपतन्तं दैत्यमादिहिरण्याक्षं दंष्ट्रया जघानेत्यन्वयः । कीदृशः ? सुनाभवच्चक्रवत् सन्दीपित-तीव्रमन्युः प्रज्वालितात्युग्रकोपः । अत एवासह्यविक्रमः मृगराट् सिंहः इभं गजं यथा तथा । अम्भसीत्यनेन रसातलवत् किञ्चिदूर्ध्वमागत्येति सूचयति । तस्य दीप्तिविशेषमाह—**तद्रक्तेति** । यथा जगतीं तटभूमिं विभिन्दन् तिर्यग्दन्तप्रहारेण प्रोल्लिखन् तत्पङ्काङ्किततुण्डगण्डो भवति तथा दंष्ट्रया

---

[1] आध्यात्मस्तु इत्यपि पाठः ।

तमालनीलं सितदन्तकोट्या क्ष्मामुत्क्षिपन्तं गजलीलयाऽङ्ग ।
प्रज्ञाय बद्धाञ्जलयोऽनुवाकैर्विरिञ्चिमुख्या उपतस्थुरीशम् ॥ ३५ ॥

देवा ऊचुः —
जितं जितं तेऽजित लोकभावन त्रयीतनुं स्वां परिधुन्वते नमः ।
यद्रोमगर्तेषु निलिल्युरब्धयस्तस्मै नमः कारणसूकराय ते ॥ ३६ ॥

रूपं तवैतन्ननु दुष्कृतात्मनां
दुर्दर्शनं देव यदध्वरात्मकम् ।
छन्दांसि यस्य त्वचि बर्हिरोम
स्वाज्यं दृशि त्वङ्घ्रिषु चातुर्होत्रम् ॥ ३७ ॥

---

हिरण्याक्षं हत्वा तस्य रक्तपङ्केनाङ्कितटुण्डगण्ड उच्चकाश इति शेषः । अनेन विशेषणेन हिरण्याक्षौ द्वौ, तत्रैको दंष्ट्रया हत इतरस्त्वन्येनायुधेनेति ज्ञायते । 'ब्रह्मजस्तु हिरण्याक्षः प्रथमं दंष्ट्रया हतः । स एव पार्षदाविष्टो द्वितीयः कर्णताडनात् । पूर्वं लयोदके मग्नां द्वितीयं तेन मज्जिताम् । भुवमुद्धरतैवासौ हरिणा क्रोडमूर्तिना' इत्यवगन्तव्यः[1] । अत्रैवोत्तरग्रन्थे विदुरप्रश्नं परिजिहीर्षुणा हरिणा[2] हिरण्याक्ष एक एव व्यत्यस्योच्यते । तद् दुष्टमोहनार्थमविविच्य कथनं, देवानां प्रियार्थं चेति । तदुक्तम् । व्यत्यासेनापि चोच्यन्तेऽविवेकेन कुत्रचित् । दुष्टानां मोहनार्थाय तत्र तत्र कथाः क्वचित्' इति । अविवेको नाम अविविच्यकथनं न वक्तुर्हरेरज्ञानम् । 'सर्वज्ञस्य कुतोऽज्ञानं व्यासस्योदारकर्मणः' इति वचनात् ॥ ३३–३४ ॥

अयं हरिरेव, न लोकवराह इति ज्ञापनाय विरिञ्चिप्रमुखानां देवानामुपसत्तिविधिं वक्ति— **तमालेति** । उत्क्षिपन्तं उद्धरन्तम् । अनुवाकैरियत्संख्याविशिष्टैर्वेदवाक्यैः ॥ ३५ ॥

उपस्थाय किं कृतम् ? तत्राह— **जितं जितमिति** । त्रयीतनुं त्रिवेदप्रतिपाद्यां मूर्तिं परिधुन्वते रोमजलत्यागाय कम्पमानाय । निलिल्युर्निलीनाः । ते तुभ्यम् ॥ ३६ ॥

अनेन विष्णुरयं, न लोकवराह इत्यस्य किमायातमिति तत्राह— **रूपमिति** । दुष्कृतात्मनामिति विशेषणेन सुकृतात्मनां सुदर्शनमिति ध्वनितम् । अत इदमेवास्य परब्रह्मत्वे मानं सूचितम् । अध्वरात्मकं यज्ञसाधनप्रसूतिकारणम् । अनेनापि न केवलभूम्युद्धरणाय, किन्तु सकलयज्ञसाधनप्रसूतय

---

[1] अस्यान्वयायादौ अयं विशेष इति पूरणीयम् । [2] भागवतग्रन्थकर्त्रा व्यासेन ।

स्रुक् तुण्ड आसीत् स्रुव ईश नासयो-
रिडोदरे चमसः कर्णरन्ध्रे ।
प्राशित्रमास्ये रसने ग्रहास्तु
यच्चर्वणं ते भगवन्नग्निहोत्रम् ॥ ३८ ॥

दीक्षात्मजन्मोपसदः शिरोध-
स्त्वं प्रायणीयोदनीयदंष्ट्रः ।
जिह्वा प्रवर्ग्यस्तव शीर्षणं क्रतुः[4]
सभ्यावसथ्याचितयोऽसवो हि ते ॥ ३९ ॥

---

इदं रूपमिति सूचितम् । यद्वा यज्ञाख्यपरमात्मरूपम्[1] । 'यज्ञो विष्णुर्देवता' इति श्रुतेः । अनेन ब्रह्मत्वं स्पष्टमुक्तं भवति । 'अयमात्मा ब्रह्म' इति च । अस्य यज्ञात्मकत्वं स्पष्टयति-**छन्दांसीत्यादिना**। सप्तच्छन्दांसीत्यादयो[2] यस्य तव त्वगादिषु वर्तन्ते । ते तुभ्यं नम इत्यन्वयः । बर्हिर्दर्भः । दृशि चक्षुषि । चतुर्भिर्होतृभिः क्रियमाणं कर्म चातुर्होत्रम् ॥ ३७ ॥

इडा यज्ञपात्रम् । चमसः चतुष्कोणसन्निवेशो यज्ञपात्रम् । प्राशित्रं यज्ञपात्रं पुरोडाशादिर्वा । द्वादशसोमग्रहाः । रसने जिह्वाक्रियायाम्[3] । चर्वणं दन्तैश्चूर्णनम् । 'चर्वणं चूर्णनं दन्तैः' इति यादवः ॥ ३८ ॥

आत्मजन्म तव जननं दीक्षा व्रतसङ्ग्रहः उपसदः उपसन्नामानो यज्ञविशेषाः उपसत्तिविशेषा व शिरोधो ग्रीवा । त्वं प्रायणीयोदयनीयदंष्ट्रः यस्य तव दंष्ट्रयोरुपक्रमावसानकर्मणी इष्टी प्रायणीयोदनीय-संज्ञे वर्तेते स तथोक्तः । क्रतुः सङ्कल्पः । क्रतोरिति पाठे क्रतोः सत्यसङ्कल्पस्य सर्वक्रत्वाधारस्य वा तव शीर्षणं शिरः सभ्यावसथ्यौ[5] । अग्निचितयः सप्तक्रतवस्तवासवः प्राणाः । जन्मभूमयः[6] चितय इतीष्टकाबन्धनविशेषो[7] वा ॥ ३९ ॥

---

[1] अध्वरात्मकमित्यस्यार्थान्तरकथनमेतत् ।

[2] सप्त च्छन्द आद्य इत्यर्थः ।

[3] जिह्वायां क्रियायां च-क ।

[4] क्रतोः—इति पाठान्तरम् ।

[5] अस्मिन् पक्षे सभ्यावसथ्या चितयः इति छेदः । सभ्यावसथ्यावित्ति पूर्वपदस्यार्थकथनम् । आत्वमार्षम् ।

[6] अस्याभिप्रायो न स्फुटः । यज्ञभूमय इति स्याद् वा ।

[7] विशेषा इति स्यात् ।

सोमस्तु रेतः सवनान्यवस्थितिः
संस्थाविभेदास्तव देहधातवः ।
सत्राणि सर्वाणि शरीरसन्धि-
स्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः ॥ ४० ॥

नमो नमस्तेऽखिलमन्त्रदेवता
द्रव्याय सर्वक्रतवे क्रियात्मने ।
वैराग्यभक्त्याऽऽत्मजयानुभावित-
ज्ञानाय विद्यागुरवे नमो नमः ॥ ४१ ॥

दंष्ट्राग्रकोट्या भगवंस्त्वया धृता
विराजते भूधर भूः सभूधरा ।

---

सोमो लता । प्रातरादित्रीणि सवनानि । अवस्थितिर्निश्चलत्वेन गतिनिवर्तनम् । संस्थाविभेदा अग्निष्टोमादयः सप्त । 'अग्निष्टोमादयः संस्थाभेदाः सप्तास्य तन्तवः' इति यादवः । त्वगादिसप्तदेहधातवः । अत्र श्लोकद्वये सप्तसु प्रथमेति सूत्रात् प्रथमायाः सप्तमीत्वं युक्तम् । त्वचीत्यादिसप्तमीप्रयोगाच्च । सर्वाणि सत्राणि बहुभिः संभूय कर्तव्यानि दीर्घकालीनानि यज्ञविशेषकर्माणि । किं बहुनोक्तेनेत्युपसंहरति — **त्वं सर्वेति** । ऐकाहिकद्व्याहिकादिसर्वयज्ञस्थापकेच्छावान् । इष्टिबन्धनः तव देहबन्धने संहनने इष्टिः प्रतिपत्त्विथ्यादिषु क्रियमाणकर्मविशेषो वर्तत इत्यर्थः ॥ ४० ॥

उक्तानुक्तविशेषणानि समुच्चीय विशिंषन्ति—**अखिलेत्यादिना** । सत्ताप्रदत्वेन मन्त्रादिषु सन्निहितत्वादखिलमन्त्रदेवताद्रव्याय । सर्वे क्रतवः सङ्कल्पाः यस्माद् भवन्ति स सर्वक्रतुः तस्मै । क्रियात्मने कर्मकारयितृत्वेन तद्व्याप्ताय । आत्मजया आत्मनस्तव प्रसादाज्जातया वैराग्यजृम्भितभक्त्या अनुभावितं स्वस्वयोग्यतानुसारेण समुत्पादितं स्वविषयं ज्ञानं येन स तथा तस्मै, वेदादिपरविद्यागुरवे ॥ ४१ ॥

पूर्वमनाथत्वेन विलग्नामित्यनेन स्त्रीणां मध्यवत् कृशत्वं ध्वनितम् । अधुना सनाथत्वेन पर्वताद्यवयवपुष्टा भूमिर्विराजत इति स्तुवन्तीत्याह—**दंष्ट्राग्रकोट्येति** । दता दन्तेन । मतङ्गजेन्द्रस्य सपत्रपद्मिनी[1] सपत्रा बिसिनी 'नलिन्यां तु बिसिनीपद्मिनीमुखाः' इत्यमरः । अनेन हरेर्धरणीधरेति नाम सार्थकमिति सूचितम् ॥ ४२ ॥

---

[1] मतङ्गजेन्द्रस्य पद्मिनी पद्मसरसी–ग ।

यथा वनान्निस्सरतो दता धृता
मतंगजेन्द्रस्य सपत्रपद्मिनी ॥ ४२ ॥

त्रयीमयं रूपमिदं च सौकरं
भूमण्डलं नाथ दता धृतेन ते ।
चकास्ति शृङ्गोढघनेन भूयसा
कुलाचलेन्द्रस्य यथैव विभ्रमः ॥ ४३ ॥

संस्थापयैनां जगतां हि तस्थुषां[1]
लोकाय[2] पत्नीमसि मातरं पिता ।
विधेम यस्यै[3] नमसा सह त्वया
यस्यां स्वतेजोऽग्निमिवारणावधाः ॥ ४४ ॥

कः श्रद्धधी[6]तान्यतमस्तव प्रभो
रसां गताया भुव उद्विबर्हणम् ।

---

इतरसंयोगेनेतरेषां विराजनम् । हरेः स्वात्मनैवेति भावेन स्तुवन्तीत्याह—**त्रयीमयमिति** । भूमण्डलं धृतेन दता चकास्ति विराजते । चकासृ दीप्ताविति धातुः, अदादिः । शृङ्गेणोढेन धृतेन घनेन । विभ्रमः कान्तिविशेषः ॥ ४३ ॥

ब्रह्माद्यभीष्टं जानतोऽप्येनां किं करोमीति हरेः प्रश्नात् प्रागेनं स्वाभीष्टं विज्ञापयन्तीत्याह—**संस्थापयेति** । जगतां जङ्गमानां तस्थुषां स्थावराणां मातरं तव पत्नीमेनां संस्थापय, जलस्योपरीति शेषः । कीदृशस्त्वम् ? पितासि सर्वस्येति शेषः । यद्वा त्वं जगतां पितासि । तस्थुषां मातरमेनामिति[4] । त्वत्कृतोपकारप्रत्युपकारमन्यमपश्यन्तो वयमिमं नमस्कारं कुर्म इति विज्ञापयन्तीत्याह —**विधेमेति** । उभयोर्मातृत्वं पितृत्वं च एतस्मादिति व्यञ्जयन्तो विशिंषन्तीत्याह—**यस्यामिति** । अनेन भूमेर्माहात्म्यं च सूचितम् । अरणिः अग्निमथनदारुविशेषः ॥ ४४ ॥

त्वदन्येनेदं कर्म निरूपयितु[5]मशक्यं, किं पुनः करणमिति विज्ञापयन्तीत्याह—**क इति** । उद्विबर्हणं उद्धरणम् । इदमस्माकमेवाश्चर्यं न तवेति श्रावयन्तीत्याह—**नेति** । इतोऽप्यधिक-

---

[1] सतस्थुषाम्—क । [2] हिताय—घ । [3] चास्यै—ङ ।

[4] सतस्थुषां स्थावरैः सहितानां जगतां जङ्गमानां मातरमिति यादुपत्यम् ।

[5] मनसा ज्ञातुमित्यर्थः । [6] श्रद्धधीत करिष्यामीत्यध्यवस्येत—इति यादुपत्यम् ।

न विस्मयोऽसौ त्वयि विस्मये
यो माययेदं ससृजेऽतिविस्मयः ॥ ४५ ॥

विधुन्वता वेदमयं निजं वपु-
र्जनस्तपस्सत्यनिवासिनो वयम् ।
सटाशिखोद्भूतशिवाम्बुबिन्दुभि-
र्विमृज्यमाना भृशमीश पाविताः ॥ ४६ ॥

स वै बत भ्रष्टमतिस्तवैषते
यः कर्मणां पारमपारकर्मणः ।
त्वद्योगमायागुणयोगमोहतो[2]
विस्रंसतां नो भगवन् विधेहि शम् ॥ ४७ ॥

मैत्रेय उवाच —
प्रत्युपस्थीयमानस्तैर्मुनिभिर्ब्रह्मवादिभिः ।
सलिले स्वखुराक्रान्त उपाधत्तावितावनिम् ॥ ४८ ॥

---

विस्मयोऽस्तीति विज्ञापयन्तीत्याह—**य इति** । अतिविस्मयोऽतिशयितविस्मयः ॥ ४५ ॥

वाचा तव गुणगणानां सङ्कीर्तनेन मनसा संस्मरणेन अन्तःशुद्धा बहिस्तव सटाग्रसमुद्भूतशुद्धजलबिन्दुभिः पाविता वयमिति विज्ञापयन्तीत्याह—**विधुन्वतेति** । तृतीया षष्ठ्यर्थे । विधुन्वतस्तव । यद्वा विधुन्वता त्वया पाविताः । तत् कथमित्यतो विशिंषन्ति—**सटेति** । त्वया पाविता इति यत्[1] सटाग्रशिवाम्बुबिन्दुभिरिति ॥ ४६ ॥

वराहस्य गण्डशिलाद्युपमत्वेन परिच्छिन्नत्वात् कर्मणोऽपि तथात्वान्नायं विष्णुरित्याशङ्क्य तथा मन्वानो भ्रष्टमतिरित्याह—**स वा इति** । यः पुरुषोऽपारकर्मणोऽनन्तविक्रमस्य तव कर्मणां भूम्युद्धरणादिलक्षणानां पारमन्तमेषते सम्यगिच्छति स भ्रष्टमतिः । वा इत्यनेन नरकपातं लक्षयति । नोऽस्माकं तादृशज्ञानेन दुःखोदर्को लोको माभूत्, किन्तु सुखोदर्क एव स्यादिति प्रार्थयन्त इत्याह—**त्वद्योगेति** । तव बन्धकशक्त्या भ्रष्टमनस्कत्वेन विस्रंसतां गलिततत्त्वज्ञानानां नः शं सुखसाधनज्ञानसाध्यं लोकं विधेहीत्यन्वयः ॥ ४७ ॥

भक्तवत्सलोऽहमिति भावयंस्तदुक्तं करोति हरिरित्याह—**प्रत्युपस्थीयमान इति** ॥ ४८ ॥

---

[1] अत्र यदित्यनन्तरं तदित्युपस्कर्तव्यम् । [2] तद्योगमायागुणमोहितात्मनाम्–ङ ।

स इत्थं भगवानुर्वीं विश्वक्सेनः प्रजापतिः ।
रसाया लीलयोन्नीतामप्सु न्यस्य ययौ हरिः ॥ ४९ ॥

य एवमेतां हरिमेधसो हरेः
कथां सुभद्रां कथनीयमायिनः ।
श्रुण्वीत भक्त्या श्रवयेत[1] वोशतीं
जनार्दनोऽस्याशु हृदि प्रसीदति ॥ ५० ॥

तस्मिन् प्रसन्ने सकलाशिषां प्रभौ
किं दुर्लभं ताभिरलं लवात्मभिः ।
अनन्यभक्त्या भजतां गुहाशयः
स्वयं विधत्ते स्वगतिं परः पुमान् ॥ ५१ ॥

को नाम लोके पुरुषार्थसारवित्
पुराकथानां भगवत्कथासुधाम् ।
आपीय कर्णाञ्जलिभिर्भवापहा-
महो विरज्येत विना नरेतरम् ॥ ५२ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे चतुर्दशोऽध्यायः ।

---

हरिस्ततः परं किं चकारेति तत्राह—**स इत्थमिति** । प्रजापतिः प्रजापालनशीलः । उन्नीताम् उद्धृताम् ॥ ४९ ॥

अस्य वराहस्य विक्रमस्य पुरुषार्थैकहेतुत्वादयं हरिरेवेति भावेन तच्छ्रवणादिफलमाह-**य इति** । हरिमेधसः संसारसंहारिबुद्धेः । कथनीयमायिनः कथनयोग्यसामर्थ्यस्य । उशतीमभीष्टदोग्ध्रीम् ॥ ५० ॥

तत्प्रसादफलमाह—**तस्मिन्निति** । लवात्मभिः लवकालरूपाभिः पश्चान्नश्वरीभिस्ताभिः स्वर्गाद्याशीर्भिः । प्रसादोऽपि गाथाश्रवणादिना न स्यादिति ध्वनयन्नाह—**अनन्यभक्त्येति** ॥ ५१ ॥

ननु कश्चित् कालं हरिकथां निषेव्य पश्चान्मुञ्चन्तो दृश्यन्ते । तत्र[2] सारत्वं कथमित्याशङ्क्य ते पशुकल्पा इत्याह—**को नामेति** । नामशब्दः कुत्सने । को नाम कः कुत्सितः । पुराशब्दः पुराणे निकटातीतेऽनागते च वर्तते । पुराणकथानां निकटातीतकथानां अनागतकथानां च मध्ये सारभूतम् ।

---

[1] श्रावयीत-ङ घ छ । [2] तस्य-क ।

॥ अथ पञ्चदशोऽध्यायः ॥

शुक उवाच —
निशम्य कौशारविणोपवर्णितां हरेः कथां कारणसूकरात्मनः ।
पुनः स पप्रच्छ समुद्यताञ्जलिर्न चातितृप्तो विदुरो धृतव्रतः ॥ १ ॥

विदुर उवाच —
तेनैव च मुनिश्रेष्ठ हरिणा यज्ञमूर्तिना ।
आदिदैत्यो हिरण्याक्षो हत इत्यनुशुश्रुम ॥ २ ॥

---

तामिति शेषः । 'प्रबन्धे निकटातीते पुराणेऽनागते पुरा' इति यादवः । सु पूजिते मोक्षे धत्ते, सुखं धापयतीति वा सुधा डुधाञ् धारणपोषणयोः धेट्, पान इति धातू । भवापहां संसारविनाशनीम् । भद्रावहां वा[1] । 'पपौ शशाविति प्राच्या' इति सूत्रात् पकारस्य वकारः । 'भवो भद्रे' इति यादवः । नरेतरं पशुम् ॥ ५२ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे चतुर्दशोऽध्यायः ॥

॥ अथ पञ्चदशोऽध्यायः ॥

रुद्रादीनां हर्याज्ञाकारित्वेन तद्वशत्वान्निरुपमचरित[2]स्वातन्त्र्यगुणाकरे हरौ मनोरतिः कर्तव्या पुरुषेणेति विधीयतेऽस्मिन्नध्याये । तत्रादौ विदुरः पुनर्मुनिना वर्णितं वराहचरितमाकर्ण्य हरिकथायामलम्बुद्धिरहितो विशेषतः श्रोतुकामो मैत्रेयं पृच्छतीति शुकः परीक्षितं कथयति—**निशम्येति**। समुद्यताञ्जलिर्हरिमुद्दिश्येति शेषः । कुत [3]एवमवगतमित्यत उक्तम्—**न चेति** । अनेन हरिकथाश्रवणतृष्णातिशयं ध्वनयति । ततो हरिप्रसादेन हरिकथाश्रवणं स्यादिति शिरसि मुकुलितकरकमल इत्यर्थः । कथाश्रवणविघ्नपरिहाराय धृतव्रत इति ॥ १ ॥

पूर्वं लयोदके स्वयमेव मग्नां पृथिवीमुद्धरतः आदिदैत्यं हिरण्याक्षं च मारयतः श्रीवराहचरितं[4] श्रुत्वा पुनः कश्यपाद् दित्यामुत्पन्नस्य पार्षदाविष्टस्य हिरण्याक्षदैत्यस्य हन्तुस्तस्यैव श्रीवराहकथां श्रोतुकामो विदुरो मैत्रेयं पृच्छति । उक्तकथांशे वक्तव्यं नास्तीति द्योतयितुं श्रुतं सामान्यतो अनुवदति

---

[1] च—क । [2] तद्वशान्निरूपचरित—क । [3] एतदवगतम्—छ,च । एतदवगम्यते—ग,ङ

[4] श्रीवराहस्य चरितमिति स्यात् । अथवा हरेरित्युपस्कर्तव्यम् । तेन तस्यैवेत्युत्तरत्र परामर्शसंगतिः ।

तस्य चोद्धरतः क्षोणीं स्वदंष्ट्राग्रेण लीलया ।
दैत्यराजस्य च ब्रह्मन् कस्माद्धेतोरभून्मृधः ॥ ३ ॥

मैत्रेय उवाच —
साधु वीर त्वया पृष्टमवतारकथां हरेः ।
यत् त्वं पृच्छसि मर्त्यानां मृत्युपाशविशातनीम्[2] ॥ ४ ॥

ययोत्तानपदः पुत्रो मुनिना गीतयाऽर्भकः ।
मृत्योः कृत्वेह मूर्ध्न्यङ्घ्रिमारुरोह हरेः पदम् ॥ ५ ॥

अथात्रापीतिहासोऽयं श्रुतो मे वर्णितः पुरा ।
ब्रह्मणा देवदेवेन देवानामनुपृच्छताम्[4] ॥ ६ ॥

दितिर्दाक्षायणी क्षत्तर्मारीचं कश्यपं पतिम् ।
अपत्यकामा चकमे सन्ध्यायां हृच्छयार्दिता ॥ ७ ॥

---

विदुर इत्याह—**तेनेति** । येन लयोदके मग्ना भूरुदहारि तेनैव रूपान्तरेण[1] ॥ २ ॥

तत्र श्रोतव्यांशं पृच्छति—**तस्येति** । रणोत्पत्तौ महताऽपराधेन भवितव्यम् । तादृशोऽपराधः क इति प्रश्नार्थः ॥ ३ ॥

मैत्रेयो विदुरप्रश्नं स्तौतीत्याह—**साध्विति** । साधु सत्सभासूचितम् । वेर्हरेरिच्छायां रमत इति वीरः । तस्य संबुद्धिः । पुरुषार्थोपयोगित्वात् साधुत्वमस्येत्याह—**यत् त्वमिति** ॥ ४ ॥

न केवलं संसारलक्षणमृत्युपाशविशातनी[3] विच्छेदनी हरिकथा, अपि त्वैहिकामुष्मिकसिद्धिकरीति निदर्शयति—**ययेति** । मुनिना नारदेन अर्भकः पञ्चवर्षः । अस्याः प्रपञ्चश्चतुर्थे वक्ष्यते ॥ ५ ॥

श्रोतॄणां श्रद्धातिशयजननार्थं विदुरप्रश्नपरिहारत्वेन पुरावृत्तं कथयति—**अथेति** । अथशब्देन पूर्वत्र ब्रह्मपुत्रो हिरण्याक्षो वराहहरिणा हतो न तु दितिपुत्रः, स एव पार्षदाविष्टो निहन्यत इति कथाविशेष आरभ्यत इति सूचयति । वधस्यैककर्तृकत्वाद् दुष्टजनमोहनार्थत्वाच्च एवं कथनं सम्भावितमित्यपिपदेन वक्ति । श्रुतो वक्ष्यत इति शेषः ॥ ६ ॥

कोऽयमिति तत्राह—**दितिरिति** । दाक्षायणी दक्षस्य पुत्री नाम्ना दितिः । मारीचं मरीचेः पुत्रम् । रामवैरिमारीचव्यावृत्त्यर्थं कश्यपमिति । हृच्छयः कामः, तेनार्दिता पीडिता ॥ ७ ॥

---

1 रूपान्तरेणेत्यस्यार्थो मृग्यः । 2 विनाशनीम्–ग । 3 विमोचनी–घ । 4 अनुशृण्वताम्–ग, च, ङ ।

इष्ट्वाऽग्निजिह्वं पयसा पुरुषं यजुषां पतिम् ।
निम्लोचत्यर्क आसीनमग्न्यागारे समाहितम् ॥ ८ ॥

दितिरुवाच —

एष मां त्वत्कृते विद्वन् काम आत्तशरासनः ।
दुनोति दीनां विक्रम्य रम्भामिव मतङ्गजः ॥ ९ ॥

तद् भवान् दह्यमानायां सपत्नीनां समृद्धिभिः ।
प्रजावतीनां भद्रं ते मय्यायुङ्क्तामनुग्रहम् ॥ १० ॥

भर्तर्याप्तोरुमानानां लोकानाविशते यशः ।
पतिर्भवद्विधो यासां प्रजया ननु जायते ॥ ११ ॥

पुरा पिता नो भगवान् दक्षो दुहितृवत्सलः ।
कं वृणीत वरं वत्सा इत्यपृच्छत नः पृथक् ॥ १२ ॥

---

मारीचं विशिनष्टि—**इष्ट्वेति** । अग्निरेव जिह्वा यस्य स तथा तम् । यजुषां पतिं यजुर्वेदगतमन्त्राणां विषयत्वेन स्वामिनम् । निम्लोचति अस्तं गच्छति । अग्न्यागारे अग्निगृहे ॥ ८ ॥

मनसैव चकमे न तु वाक्पूर्वकमिति तत्राह—**एष इति** । त्वत्कृते त्वामुद्दिश्य रम्भां कदलीम् ॥ ९ ॥

न केवलं विषयभोगेच्छुरहं त्वां याचे । किन्तु प्रयोजनान्तरेच्छयापीत्याह—**तद् भवानिति** । प्रजावतीनां पुत्रवतीनाम् । मयि आयुङ्क्ता[1]मिति पदच्छेदः । सम्भ्रमादिकारशिरा अकारो न लुप्तः[2] ॥ १० ॥

अस्मदनुग्रहात् किं तव प्रयोजनमिति तत्राह—**भर्तरीति** । सप्तमीयम् पञ्चम्यर्थे । भर्तुराप्तोरुमानानामित्यर्थः । मानमपि पुत्रावाप्तिलक्षणमित्याशयेनाह—**पतिरिति** ॥ ११ ॥

श्रुतगुणत्वेन स्नेहोदर्कया मया भवान् वृत इत्यतोऽपि मदनुग्रहः कार्य इत्याशयेनाह—**पुरेति** ॥ १२ ॥

---

[1] आयुङ्क्तामिति छ-पाठः । अन्यत्र-अयुङ्क्ताम् ।

[2] आकारो लुप्तः-च । अकारो लुप्तः-ग,ङ । अकारो भवन् न लुप्तः-छ,घ । अस्य वाक्यस्यार्थो मृग्यः ।

स विदित्वात्मजानां नो भावं सन्तानभावनः ।
त्रयोदशाददात् तासां यास्ते शीलमनुव्रताः ॥ १३ ॥

अथ मे कुरु कल्याण कामं कञ्जविलोचन ।
आर्तोपसर्पणं भूमन्नमोघं हि महीयसि ॥ १४ ॥

मैत्रेय उवाच[1] —

इति तां वीर मारीचः कृपणां बहुभाषिणीम् ।
प्रत्याहानुनयन् वाचा प्रवृद्धानङ्गकश्मलाम् ॥ १५ ॥

एष तेऽहं विधास्यामि प्रियं भीरु यदिच्छसि ।
तस्याः कामं न कः कुर्यात् सिद्धिस्त्रैवर्गिकी यतः ॥ १६ ॥

सर्वाश्रमानुपादाय स्वाश्रमेण कलत्रवान् ।
व्यसनार्णवमत्येति जलयानैर्यथार्णवम् ॥ १७ ॥

यामाहुरात्मनो ह्यर्धं श्रेयस्कामस्य भामिनि[3] ।
यस्यां स्वधुरमध्यस्य पुमांश्चरति विज्वरः ॥ १८ ॥

---

भावं हृद्गताभिप्रायम् । अददात् अदात् ॥ १३ ॥

उपसंहरति—**अथेति** । अथ तस्मात् । भवतो महत्तमत्वान्मम भवच्छरणगमनं सफलं स्यात् तथा दृष्टत्वादिति भावेनाह—**आर्तेति** । महीयसि पुरुषे । आर्तत्वेनोपसर्पणं शरणगमनम् ॥ १४ ॥

एवं प्रार्थयमानामेनामगणय्य मारीचः किं तूष्णीमभूत् ? यत्किञ्चिदुत्तरमवददुत इति संशयो मा भूदिति भावेनाह—**इतीति** ॥ १५ ॥

यतः यस्याः भार्यायाः त्रैवर्गिकी त्रयाणां धर्मार्थकामानां सम्बन्धिनी सिद्धिः ॥ १६ ॥

एतदेव विशदयति[2]—**सर्वाश्रमानिति** । कलत्रवान् प्रशस्तभार्यायुक्तः स्वाश्रमेण गार्हस्थ्याश्रमेणान्नदानादिना ब्रह्मचर्यादिसर्वाश्रमानुपादाय सम्भाव्य संसाराख्यव्यसनसमुद्रमत्येतीत्यन्वयः ॥ १७ ॥

'अर्धो वा एष आत्मनो यत् पत्नी' इति हि श्रुतिः । एतस्या व्याख्यानरूपोऽयं श्लोकः—**यामाहुरिति** । श्रुतौ आत्मशब्दविशेषणं श्रेयस्कामपदम् । तथा पत्नी भर्तृकृतपुण्यस्यार्धभागिनी इति

[1] मैत्रेय उवाचेति गपाठः । [2] समर्थयते-ग । [3] मानिनि-ग ।

यामाश्रित्येन्द्रियारातीन् दुर्जयानितराश्रमैः ।
वयं जयेम हेलाभिर्दस्यून् दुर्गपतिर्यथा ॥ १९ ॥

न वयं प्रभवस्तां त्वामनुकर्तुं गृहेश्वरि ।
अप्यायुषा वा कार्त्स्न्येन ये चान्ये गुणगृध्नवः[4] ॥ २० ॥

अथापि काममेनं ते प्रजायै करवाण्यलम् ।
यथा मां नातिवाचन्ति मुहूर्तं प्रतिपालय ॥ २१ ॥

एषा घोरतमा वेला घोराणां घोरदर्शना ।
चरन्ति यस्यां भूतानि भूतेशानुचराणि ह[6] ॥ २२ ॥

एतस्यां साध्वि सन्ध्यायां भगवान् भूतभावनः ।
परीतो भूतपार्षद्भि[7]र्वृषेणाटति भूतराट् ॥ २३ ॥

---

श्रुत्यर्थोऽनेन श्लोकेन स्पष्टीकृतः[1] । स्वधुरं स्वव्यापारभारम् । अध्यस्य निक्षिप्य ॥ १८ ॥

इतोऽपि त्वं सम्भाव्येत्याह—**यामिति** । इन्द्रियाण्येवारातयः शत्रवः इन्द्रियारातयस्तान् । इन्द्रियाणामरातयो विषयास्तानिति वा । एवं चेद् दृष्टान्तोऽपि सङ्गच्छते । उभयेषामपि बाह्यत्वात् । पूर्वत्र[2] सम्भावनामात्रतयोक्तम् ॥ १९ ॥

वक्ष्यमाणस्ववाक्यार्थं [3]अङ्गीकारयितुं मुनिः अतिस्तुतिं करोति—**न वयमिति** । भवन्तो न प्रभवश्चेदन्यो भवादृशो नेति[5] तत्राह—**ये चेति** । येऽन्ये च गुणगृध्नवः गुणलुब्धाः पुरुषास्तेऽपि भार्यामनुकर्तुं न प्रभव इत्यर्थः ॥ २० ॥

किमिति स्तोत्रेण निष्प्रयोजनेनेति मा भूच्छङ्केत्याह—**अथापीति** । यद्यप्येवमथापि । तर्हि किमिति कालः क्षिप्यत इति तत्राह—**यथेति** । अतिवाचन्ति निन्दन्ति । तर्हीदं वचनं गुडजिह्विकाकल्पमित्यत उक्तम्—**मुहूर्तमिति** । प्रतिपालय प्रतीक्षस्व ॥ २१ ॥

प्रतीक्षायां किं कारणमत्राह—**एषेति** । घोराणां वेलेत्युक्तं स्पष्टयति—**चरन्तीति** ॥ २२ ॥

भवत्सामर्थ्येन भूतानि किं कुर्वन्तीति तत्राह—**एतस्यामिति** ॥ २३ ॥

---

[1] श्रुतौ आत्मशब्दविशेषणमित्यारभ्य स्पष्टीकृत इत्यन्तं मूलकोशादन्यत्र कुत्रापि नास्ति । [2] प्रथमविग्रहवाक्यमित्यर्थः । [3] कारयितुम्—क । [4] गुणगृध्रव इति पाठान्तरम् । [5] अन्यो भवादृशः अनुकर्तुमसमर्थो न, तथा चानुकर्तुं प्रभुः स्यादिति शङ्काभिप्रायः । [6] हि—च, छ, ग, ङ, घ । [7] पर्षद्भिः इति पाठान्तरम् ।

श्मशानचक्रानिलधूलिधूम्रविकीर्णविद्योतजटाकलापः ।
भस्मावकुण्ठामलरुक्मदेहो देवस्त्रिभिः पश्यति देवरस्ते ॥ २४ ॥

न यस्य लोके स्वजनः परो वा
नात्यादृतो नोत कश्चिद्विगर्ह्यः ।
वयं व्रतैर्यच्चरणापविद्धामाशास्महेऽजां
बत भुक्तभोगाम् ॥ २५ ॥

यस्यानवद्याचरितं मनीषिणो
गृह्णन्त्यविद्यापटलं बिभित्सवः[2] ।
निरस्तसाम्यातिशयो हरेः स्वयं
पिशाचचर्यामचरत् सतां गतिः ॥ २६ ॥

---

अस्मात् पशुपतेरपि किं भयमित्याशङ्क्य तस्मादस्मदवद्यदर्शने भयमित्याशयवानाह — **श्मशानेति** । श्मशाने विद्यमानश्चक्रानिलो वात्यावायुः श्मशानमण्डलवर्ती वातः तस्मादुत्पन्नया धूल्या धूम्रो धूमवर्णः विशीर्णश्च विद्योतश्च जटाकलापो यस्य स तथा । विशिष्टः द्योतः प्रकाशो यस्य स तथा । भस्मनाऽवकुण्ठोऽवरूषणं यस्य स तथोक्तः । अमलं रुक्मं रजतम् । भस्माऽवकुण्ठश्च[1] रजतवद्धवलो देहो यस्य स तथा । त्रिभिः, नेत्रैरिति शेषः । ते तव देवरः सहोदर्याः सत्याः पतिः ॥ २४ ॥

गर्भिणीवधनोदार्थं पिशाचचर्यायाः हर्याज्ञाकारित्वेन हरेः प्रियत्वात्, अतस्तदप्रियं तस्याप्यप्रियमितीदानीमिदं न कार्यमित्यभिप्रेत्य तस्य हरेरतिशयितमाहात्म्यमाह—**न यस्येति** । व्रतैर्हरिप्रीतिकरैर्यस्य चरणापविद्धां पदा तिर्यक् प्रहृतां भुक्तभोगामप्यजां गृहभार्यापुत्रादिरूपां प्रकृतिशब्दवाच्यां श्रियमाशास्महे इच्छामः । बतेत्यनेन हरिमाहात्म्यमचिन्त्यमित्यास्वादयति ॥ २५ ॥

अविद्यालक्षणं पटलं दर्शनप्रतिबन्धकनेत्रदोषं बिभित्सवो भेत्तुकामा मनीषिणो यस्यानवद्याचरितं जगत्सृष्ट्यादिकर्म गृह्णन्ति, श्रवणादिनेति शेषः । यश्च हरिर्निरस्तसाम्यातिशयस्तस्य हरेराज्ञया देवेन्द्रादिसतामाश्रयो हरः पिशाचचर्यामचरदित्यन्वयः । 'पिशाचचर्यामचरद् रुद्रो विष्ण्वाज्ञयैव तु । गर्भिणीवधनोदार्थमहो विष्णुर्विडम्बकृद्' इति वचनबलान्मध्ये हर्याज्ञयेति पदमध्याह्रियते । पशुपतावुक्तगुणानामसम्भवाच्च । 'अहं रुद्राय धनुरातनोमि' इति पराधीनताप्रतीतेश्च ॥ २६ ॥

---

[1] च इत्यधिकमिति भाति । [2] बिभित्सवः-इति पाठान्तरम् ।

हसन्ति यस्याचरितं हि दुर्भगाः
स्वात्मन् रतस्याविदुषः समीहितम् ।
यैर्वस्त्रमाल्याभरणानुलेपनैः
श्वभोजनं स्वात्मतयोपलालितम् ॥ २७ ॥

ब्रह्मादयो यत्कृतसेतुपाला यत्कारणं विश्वमिदं हि मायया ।
आज्ञाकरी तस्य पिशाचचर्या अहो विभूम्नश्चरितं विडम्बनम् ॥ २८ ॥

मैत्रेय उवाच —

एवं संवेदिता भर्त्रा मन्मथोन्मथितेन्द्रिया ।
जग्राह वासो ब्रह्मर्षेर्वृषलीव गतत्रपा ॥ २९ ॥

---

ननु केचिद्धरेश्चरितमपि निन्दन्ति तत् कथमित्याशङ्क्य ते तमःप्राप्तियोग्या असुरजना इति भावेनाह—**हसन्तीति**। यैः शुनो भोजनमन्नमिदं शरीरं वस्त्रादिभिः स्वात्मतया निजस्वरूपतया उपलालितं ते पुरुषाः, समीहितं विडम्बनरूपचेष्टाविशेषम् अविदुषोऽविद्वांसोऽज्ञानवन्तो[1]ऽत एव दुर्भगाः दुःखरूपतमः आप्तुं योग्याः। स्वात्मनि स्वरूप एव रतस्याचरितमुपनयात् ज्येष्ठविवाहाच्च पूर्वं पुत्रोत्पत्त्यादिरूपं हसन्ति। 'न देवचरितं चरेत्' इति द्योतको[2] हिशब्दः॥ २७॥

इतोऽपि ब्रह्मरुद्राद्यचिन्त्यमहिमा परमात्मेत्याह—**ब्रह्मादय इति**। ब्रह्मादयो देवा येन हरिणा कृतं धर्मसेतुं तदाज्ञया पालयन्ति इति तत्कृतसेतुपालाः। इदं विश्वं यो हरिः कारणं निमित्तं यस्य तद् यत्कारणम्। तत्कारणत्वं च मायया स्वेच्छया न पराधीनतया। हिशब्देन 'स हि कर्मफलोज्झितः' इति मानं सूचयति। तस्य हरेराज्ञां करोतीति आज्ञाकरी। केयम्? शिवस्य पिशाचचर्या। हरेराज्ञया शिवः पिशाचचर्यामकरोदित्युक्तं भवति। ततः किम्? तत्राह—**अहो इति**। विभूम्नः परिपूर्णस्य हरेः विडम्बनं लोकानुकारिरूपं चरितम् अहो जगत्पूज्यान् रुद्रादीनपि स्वाज्ञाकर्मणि प्रवर्तयतीति। अत्र रुद्रविषयत्वेन यथास्थितव्याख्यानस्यानुपपत्तिरुक्तेति नेह प्रपञ्च्यते॥ २८॥

हरेर्माहात्म्यं दुरवबोधं यदेवं ज्ञापितया दित्या पापकर्मणि प्रवृत्तमिति भाववान् मैत्रेय एवमुक्तया तया किमकारीति वैदुरीं[3] मनश्शङ्कां परिहरन्नाह—**एवमिति**। संवेदिता सम्यग्ज्ञापिता। वासः परिधानम्॥ २९॥

---

[1] अजानन्तः-ग,घ,च। [2] स्मृतिद्योतकः-प्र। [3] वैदुरिकीं-ग,घ,ङ।

संविदित्वाथ भार्यायास्तन्निर्बन्धं विकर्मणि ।
नत्वा दिष्टाय रहसि तया चोपविवेश ह ॥ ३० ॥

अथोपस्पृश्य सलिलं प्राणानायम्य वाग्यतः ।
ध्यायन् जजाप विरजं ब्रह्म ज्योतिः सनातनम् ॥ ३१ ॥

दितिस्तु व्रीडिता तेन कर्मावद्येन भारत ।
उपसङ्गम्य विप्रर्षिमधोमुख्यभ्यभाषत ॥ ३२ ॥

न मे गर्भमिमं ब्रह्मन् भूतानामृषभोऽवधीत् ।
रुद्रः पतिर्हि भूतानां यस्याकरवमंहसम् ॥ ३३ ॥

नमो रुद्राय महते देवायोग्राय मीढुषे ।
शिवाय न्यस्तदण्डाय धृतदण्डाय मन्यवे ॥ ३४ ॥

---

निर्बन्धं दुराग्रहम् । दिष्टाय कर्मसाक्षिणे देवाय । 'निर्वेश उपभोगः स्यादुपवेशस्तु मैथुनम्' इत्यभिधानम् । प्रत्यारम्भे प्रसिद्धे[1] हेत्यभिधानाद्धेत्यनेन प्रत्यारम्भं सूचयति ॥ ३० ॥

अप्सरामुग्धमुनिवदाकल्पं मारीचेन तयोपविष्टम् ? नेत्याह—**अथेति** । अथ वीर्यपातानन्तरमेव । आचम्य सुप्तं तेन किम् ? अत्राह—**ध्यायन्निति** । ज्योतिः स्वज्योतीरूपं विरजं कज्जलादिरजोमलविधुरं ब्रह्म ध्यायन् सनातनं प्रणवनादेन सहितं ब्रह्म गायत्र्यात्मकं मन्त्रं जजापेत्यन्वयः ॥३१॥

दित्या पुनश्च 'किं कार्यमभूत् । अथ किम् ?' इति गर्वीभूय स्थितं क्रियान्तरमारब्धमुत इति[2] तत्राह—**दितिस्त्विति** । स्वकर्मणा जातेनावद्येन ॥ ३२ ॥

स्वकृतपापकर्मप्रतीकारोपायमाह किम् ? नेत्याह—**न म इति** । भूतानामृषभ इत्यस्य व्याख्यानं पतिरित्यादि । अंहसमपराधम्[3] ॥ ३३ ॥

समस्तापराधानां प्रतीकारो नमस्कारादन्यो नास्तीति मत्वा तमेव तद्दोषनिरासपटुगुणविशिष्टत्वेन करोति—**नम इति** । रुद्रायापराधलक्षणरोगद्रावकाय । रोदनाद् रुद्र इति शिशुस्वभावो न युक्त इत्याह—**महत इति** । तस्य लोकानुकरणार्थत्वान्न दोषाय स्यादिति भावः ।

---

[1] प्रसिद्धौ-ग । [2] उत नेति-प्र । [3] अंहसोरंह इत्यपीति शब्दशेषे विश्वः—इत्यधिकं प्र कोशे ।

स नः प्रसीदताद् भीमो भगवानुर्वनुग्रहः ।
व्याधस्याप्यानुकम्प्यानां स्त्रीणां देवः सतीपतिः ॥ ३५ ॥

मैत्रेय उवाच —

स्वगर्भस्याशिषं लोक्यामाशासानां प्रवेपतीम् ।
निवृत्तसन्ध्यानियमो भार्यामाह प्रजापतिः ॥ ३६ ॥

कश्यप उवाच —

अप्रायत्यादात्मनस्ते दोषान्मौहूर्तिकादुत ।
मन्निर्देशातिचारेण देवानां चैव हेलनात् ॥ ३७ ॥

---

यक्षादेरपि महत्त्वादित्यत उक्तम्—**देवायेति** । तस्यापि देवयोनित्वादित्यत उक्तम्—**उग्रायेति** । उद्धतं[1] सर्वं ग्रसतीत्युग्रस्तस्मै । तर्ह्यसौ सर्वभक्षको, न तु निजाभीष्टवर्षीत्यत उक्तम्—**मीढुष इति** । मिह सेचन इति धातुः । स्वयं सुखित्वेन वर्तते चेन्निजाय सुखं ददातीति[2] तत्कथमित्यतः—**शिवायेति** । अनेन प्रसिद्धनामकरणेन, कृत्यकर्तरि न्यस्तदण्डाय तद्विरुद्धकर्तरि धृतदण्डायेति तत्तद्योग्यतातिरेकेण क्रियां न करोतीत्युक्तम्[3] । उभयार्थसूचकविशेषणमाह—**मन्यव इति** । मननशीलाय क्रोधात्मने वा । गुणदोषौ मत्वा निग्रहानुग्रहौ करोतीति । अनेन 'इमा रुद्राय स्थिरधन्विने गिरः क्षिप्रेषवे देवाय स्वधाम्ने' इत्यादिमन्त्रो दर्शितः ॥ ३४ ॥

फलितमाह—**स न इति** । मा भीरिति भीमः[4] । प्रसादकर्तृत्वे हेतुमाह—**व्याधस्येति** । व्यध हिंसायामिति धातोः सततहिंसाशीलस्य । अपिपदेन कैमुत्यलक्षणो हेतुरुक्तः ॥ ३५ ॥

गर्भः सर्वथा रक्षणीय इति लौकिकी लोक्या । तामनुसरन्तीम् । आशासानां कामयमानाम् । प्रवेपतीं कम्पमानाम् ॥ ३६ ॥

आत्मनः मनसोऽप्रायत्यात् उपशमनलक्षणप्रयत्नाभावात् । व्यवायाख्यदोषात्[5] । मन्निर्देशातिचारेण मदाज्ञातिक्रमणेन । हेलनादवज्ञानात् ॥ ३७ ॥

---

[1] उद्धृतम्–ग । [2] प्रददातीति–ग । स्वयं सुखित्वेऽन्येषां दद्यात् । तदेव कथमित्यभिप्रायः ।

[3] अस्याभिप्रायो न व्यक्तः । अत्र यादुपत्यम्—नतानां न भयमिति मत्वा रुद्रं नमति–नम इति । रुद्राय भक्तापराधरूपरुग्द्रावणकर्त्रे । उग्राय दुष्टानामतिक्रूराय मीढुषे भक्ताभीष्टसेचकाय साधुषु न्यस्तदण्डाय दुष्टेषु धृत-दण्डाय, अत एव मन्यवे क्रोधवते मननशीलाय वा—इति । [4] मा भीर्यस्मादसौ भीम इति यादुपत्यम् ।

[5] मौहूर्तिकाद् दोषात् सन्ध्याकालरूपमुहूर्तसंबन्धिमुहूर्तजनितदोषादिति यादुपत्यम् ।

भविष्यतस्तवाभद्रावभद्रे जाठराधमौ ।
लोकान् सपालांस्त्रींश्चण्डौ मुहुराक्रन्दयिष्यतः ॥ ३८ ॥

प्राणिनां हन्यमानानां दीनानामकृतागसाम् ।
स्त्रीणां निगृह्यमाणानां कोपितेषु महात्मसु ॥ ३९ ॥

तदा विश्वेश्वरः क्रुद्धो भगवान् लोकभावनः ।
हनिष्यत्यवतीर्यासौ यथाद्रींश्छतपर्वधृक् ॥ ४० ॥

दितिरुवाच —

वधं भगवता साक्षात् सुनाभोदारबाहुना ।
आशासे पुत्रयोर्मह्यं मा क्रुद्धाद् ब्राह्मणात् प्रभो ॥ ४१ ॥

न ब्रह्मदण्डदग्धस्य न भूतभयदस्य च ।
नारक्यश्चानुगृह्णन्ति यां यां योनिमसौ गतः ॥ ४२ ॥

---

जाठराधमौ पुत्राधमौ । अधमत्वमुपपादयति—**लोकानिति** ॥ ३८ ॥

प्राणिनां हन्यमानानां, सतामकृतापराधानां, स्त्रीणां निगृह्यमाणानां सतीनां, महापुरुषेषु कोपितेषु सत्सु ॥ ३९ ॥

शतपर्वधृक् देवेन्द्रः ॥ ४० ॥

भर्त्रैवमुक्ता दितिः किमाहेति तत्राह—**वधमिति** । सुनाभेन चक्रेण युक्तः उदारो महान् बाहुर्यस्य स तथोक्तः । 'उदारो महति ख्याते' इति यादवः । तेन मह्यं मम आशासे इच्छामि । किन्तु विशेषोऽस्तीत्याह—**मा क्रुद्धादिति** ॥ ४१ ॥

ब्रह्मशापेन हतस्य को दोष इति तत्राह—**न ब्रह्मेति** । एतादृशः कोऽन्योऽस्तीति तत्राह—**न**[1] **भूतेति** । नारक्यः नरके पच्यमानाः प्रजाः । असौ ब्रह्मशापदग्धः भूतभयदो वा । चशब्दो वार्थे ॥ ४२ ॥

---

[1] अयं नकारः नापेक्षित इति भाति ।

कश्यप उवाच —

कृतशोकानुतापेन सद्यः प्रत्यवमर्शनात् ।
भगवत्युरुमानाच्च भवे मय्यपि चादरात् ॥ ४३ ॥

पुत्रस्यैव च पुत्राणां भवितैकः सतां मतः ।
गायन्ति यद् यशः शुद्धं भगवद्यशसा समम् ॥ ४४ ॥

योगैर्हेमेव दुर्वर्णं भावयिष्यन्ति साधवः ।
निर्वैरादिभिरात्मानं यच्छीलमनुवर्तितुम् ॥ ४५ ॥

---

सुनाभायुधात् पुत्रयोर्वधं सद्गतिमाशास इति यत् तच्चाभिलषितं तद्भक्तस्य[1], न त्वभक्तस्यायोग्यस्यासुरस्य । तदुक्तम्— 'विष्णुहस्तवधाल्लोको भक्तस्यान्यस्य न क्वचित् । तथाप्यसुरमोहाय न विविक्तं क्वचित् क्वचित्' इत्याशयवान्[2] कश्यपः प्रकारान्तरेण तयोः सद्गतिः स्यादिति ध्वनयन्नुत्तरं वक्ति—**कृतशोकेति** । कृतपापकर्मनिमित्तशोकाज्जातेनानुतापेन पश्चात्तापेन ॥ ४३ ॥

तव पुत्रस्य हिरण्यकशिपोः पुत्राणां मध्ये सतां सम्मतः एकः पुत्रो भविता । स तव पुत्रस्य सद्गतेर्हेतुः स्यादिति शेषः । तदुक्तम्—'हिरण्यकशिपुश्चापि भगवन्निन्दया तमः' इत्यादि । न पुत्रमात्रात् पित्रादेः सद्गतिः । किन्तु निर्वैरादिगुणविशिष्टादिति भावेन तद्गुणमाह—**गायन्तीति** । भगवद्यशसोऽविनाभूतत्वात् सममित्युक्तम् ॥ ४४ ॥

साधवो यस्य प्रह्लादस्य शीलं शमादिस्वभावं अनुवर्तितुमात्मनि कर्तुं निर्वैरादिभिर्यथास्थितवस्तुदर्शनादिगुणैः आत्मानमन्तःकरणं भावयिष्यन्ति शमादिमत् कुर्वन्ति, दोषानपनीय । कथमिव ? योगैरौषध्याद्युपायैर्दुर्वर्णं दुष्टवर्णं हेमेव । यथा[3] भावयन्ति, अष्टादशदोषान् निरस्य स्वस्वरूपस्थितं कुर्वन्ति तथेत्यर्थः । अनेन निदर्शनेनात्रेदं तात्पर्यमवगन्तव्यम् । तथाहि—हिरण्यकशिपौ द्वौ चेतनौ स्तः तत्रैकः सद्गतियोग्यः । एकोऽन्यगतियोग्यः । अनादिभक्तिलक्षणयोग्यतौषधेन दुःसङ्गदोषलक्षणदुर्वर्णमपनीय पुत्रादिः सच्चेतनस्य सद्गतिहेतुः स्यात् । न विष्णुभक्तिविधुरस्य । अतोऽन्यद्[4] दुष्टजनमोहनार्थम् । तदुक्तम्—'स्वतः सद्गतियोग्यस्य पुत्रादेर्हेतुता भवेत् । योग्यता अनादिभक्तिः स्यादयोग्यस्य कुतो गतिः' इति ॥ ४५ ॥

---

[1] भक्तस्येत्यलम् । [2] 'क्वचित्' इति । इत्याशयवान्-प्र । [3] अत्र हेम इत्युपस्कर्तव्यम् ।
[4] वचनं तत्र तत्र शास्त्र इति शेषः ।

यत्प्रसादादिदं विश्वं प्रसीदति यदात्मकम् ।
शश्वद्दृक् भगवान् यस्य तोष्यतेऽनन्यया दृशा ॥ ४६ ॥

स वै महाभागवतो महात्मा महानुभावो महतां महिष्ठः ।
प्रवृद्धभक्त्या ह्यनुभाविताशये विवेश्य[1] वैकुण्ठमतद् विहास्यति ॥ ४७ ॥

अलम्पटः शीलधरो गुणाकरो हृष्टः
परार्थे व्यथितेषु दुःखितः ।
अभूतशत्रुर्जगतः शोकहर्ता
नैदाधिकं तापमिवोडुराजः ॥ ४८ ॥

अन्तर्बहिश्चामलमब्जनेत्रं स्वपूरुषेच्छानुगृहीतरूपम् ।
पौत्रस्तव श्रीललनाललामं द्रष्टा स्फुरत्कुण्डलमण्डिताननम् ॥ ४९ ॥

---

तव पौत्रस्य प्रह्लादस्य माहात्म्यं भगवत्प्रसादायत्तमिति भावेनाह—**यत्प्रसादादिति** । यस्य हरेः प्रसादात् । प्रसन्नत्वे हेतुमाह—**यदात्मकमिति** । यदात्मकं यत्स्वामिकं येन व्याप्तं च । शश्वद्दृक् सर्वदैकप्रकारज्ञानो भगवान् । यस्यानन्यया 'सर्वोत्तमो हरिः एतत्सदृशोऽन्यो नास्ति' इत्येवं विशिष्टया दृशा ज्ञानेन तोष्यते ॥ ४६ ॥

**स वा इति** । स एव पौत्रो महात्मा एतादृशमहिमा अतत् तस्माद्धरेरन्यत् सर्वमनित्यमसारं हीनं चेति निरूप्य विहास्यति त्यक्ष्यतीत्यन्वयः । महानुभावः महाप्रभावः, वैष्णवसिद्धान्ते महानिश्चयो वा । वैकुण्ठं नारायणम् ॥ ४७ ॥

निर्वैरादिभिरित्यत्रादिशब्दोक्तान् गुणानाह—**अलम्पट इत्यादिना** । अलम्पटो विरक्तः । शीलधरः शील समाधौ इति धातोः समाधिं कुर्वाणः । गुणाकरः गुणनिधिः । व्यथितेषु दुःखितेषु परेषु दुःखितः, तद्दुःखमात्मीयं करोतीत्यर्थः । अभूतशत्रुरजातशत्रुः । नैदाधिकमुष्णकालजातम् ॥ ४८ ॥

अतद्धास्यतीत्यनेन ब्रह्मेतरजगद्धास्यति, न तु ब्रह्मेति ध्वनितमर्थं स्पष्टयति—**अन्तर्बहिरिति** । श्रियो ललनायाः स्त्रियो ललामं तिलकस्थानीयम् । द्रष्टा द्रक्ष्यति ॥ ४९ ॥

---

[1] निवेश्य-क ।

**मैत्रेय उवाच —**

**श्रुत्वा भागवतं पौत्रममोदत दितिर्भृशम् ।**
**पुत्रयोश्च वधं कृष्णाद् विदित्वासीन्महामनाः ॥ ५० ॥**

इति श्रीमद्भागवते तृतीयस्कन्धे पञ्चदशोऽध्यायः ।

॥ अथ षोडशोऽध्यायः ॥

**मैत्रेय उवाच —**

**प्राजापत्यं तु तत् तेजः परतेजोहनं दितिः ।**
**दधार वर्षाणि शतं शङ्कमानाऽसुरार्दनात् ॥ १ ॥**

**लोके तेन हतालोके लोकपाला हतौजसः ।**
**न्यवेदयन् विश्वसृजे ध्वान्तव्यतिकरं दिशाम् ॥ २ ॥**

---

एतच्छ्रुत्वा दित्या किमकारीति तत्राह—**श्रुत्वेति** । अमोदतेत्यनेन दितिरपि सद्गतियोग्येति निरूपितमिति ॥ ५० ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे पञ्चदशोऽध्यायः ।

॥ अथ षोडशोऽध्यायः ॥

जयविजययोः शापमोक्षयोः प्रदानरूपसनकादिमहिम्नो वर्णनेन तेषां भगवत्समाधिसमुद्रेकसमुद्भूत-माहात्म्येन निरुपमचरितमहिमा हरिरिति निरूप्यतेऽस्मिन्नध्याये । तत्रादौ दित्या पुनः किमकारीति विदुरस्य हार्दं प्रश्नं परिहरति—**प्राजापत्यमिति** । प्रजापतेः कश्यपस्येदम् इति यथाविहितप्रत्ययः[1] । परेषां तेजस्विनां तेजो हन्ति हरतीति परतेजोहनम् । असुरार्दनाद्धरेर्वधं शङ्कमाना ॥ १ ॥

किमतस्तत्राह—**लोक इति** । तेन गर्भेण लोके हतालोके अपहृतप्रकाशे सति तत्परिहारार्थं हतौजसो नष्टसामर्थ्या इन्द्रादिलोकपालाः दिशां ध्वान्तव्यतिकरमन्धकारेण प्राप्तं व्यत्ययम् उपद्रव-मित्यर्थः ॥ २ ॥

---

[1] प्रत्ययात्–क

देवा ऊचुः —

तम एतद् विभो वेत्थ संविग्ना यद् वयं भृशम् ।
न ह्यव्यक्तं भगवतः कालेनास्पृष्टवर्त्मनः ॥ ३ ॥

देवदेव जगद्धातर्लोकनाथशिखामणे ।
परेषामपरेषां वा त्वं भूतानामसि भाववित् ॥ ४ ॥

नमो विज्ञानवीर्याय माययेदमुपेयुषे ।
गृहीतगुणभेदाय नमस्तेऽव्यक्तयोनये ॥ ५ ॥

---

यद् येन संविग्ना भ्रान्ता वयम् एतत् तमो वेत्थ जानासि । तत्र निमित्तं वदन्ति—**न हीति**। कालादिव्यवधानेनाज्ञानं स्यादित्यत उक्तम्—**कालेनेति**। अस्पृष्टमव्यवहितं ज्ञानवर्त्म यस्य सः । तथा तस्य, अप्रतिबद्धज्ञानमार्गस्येत्यर्थः ॥ ३ ॥

एतदेव विवृणोति—**देवदेवेति** । परेषामुत्तमानामपरेषामधमानामतीतानागतानां वा भूतानां भाववित् हृदयज्ञोऽसीति[1] यदतो व्यक्तं जानासीति भावः ॥ ४ ॥

सर्वस्मात् प्रणतिरेव प्रसादजननीति मत्वा तत्पूर्वकं स्तुवन्ति—**नम इति** । विज्ञानवीर्याय-अप्रतिबद्धज्ञानाय । तदेव विशदयति—**माययेति** । मायया श्रीनारायणानुगृहीतप्रज्ञाबलेन इदं विश्वमुपेयुषे ज्ञातवते । रजआदिगुणेन ज्ञानप्रतिबन्धः सम्भाव्यत इत्यत उक्तम्—**गृहीतेति** । हर्याज्ञया अनुपद्रावकत्वेन गृहीतरजआदिगुणविशेषाय । इतोऽपि ज्ञानवीर्यं तवैवेति भावेन स्तुवन्ति—**नमस्त इति** । व्यक्तं ब्रह्माण्डं तस्य योनये कारणाय । सृज्येषु वस्तुषु ब्रह्माण्डसर्जनस्यातिबहुलज्ञानसापेक्षत्वात् तस्य स्रष्टुर्ब्रह्मणोऽतिशयितज्ञानमस्तीति किं वक्तव्यमिति निरूपितम् । सर्वेषां ज्ञानादिगुणप्रतिबन्धका रजआदिगुणाः कथमस्य न विरोधकाः ? हरिप्रसादादिति चेत् तत्प्रसादसम्भवोऽपि कथमित्यतो वाह —**अव्यक्तेति** । अव्यक्तं ब्रह्म तद् योनिः कारणं यस्य स तथा तस्मै । 'यो ब्रह्माणं विदधाति' इति श्रुतेः । 'तेने ब्रह्म हृदा य आदिकवये' इति च । अतः स्वपुत्रत्वेन सर्वानुग्रहपात्रत्वान्न तस्य सत्त्वादिगुणाः परिपन्थिन इति ॥ ५ ॥

---

[1] हृद्गतज्ञोऽसीति–ग,प्र ।

ये त्वामनन्यभावेन भावयन्त्यात्मभावनम् ।
आत्मनि प्रोतभुवनं परं सदसदात्मकम् ॥ ६ ॥
तेषां सुव्यक्तयोगानां जितश्वासेन्द्रियात्मनाम् ।
लब्धयुष्मत्प्रसादानां न कुतश्चित् पराभवः ॥ ७ ॥

यस्य वाचा प्रजाः सर्वा गावस्तन्त्येव यन्त्रिताः ।
हरन्ति बलिमायत्तास्तस्मै मुख्यात्मने नमः ॥ ८ ॥

---

यस्य यदभीष्टं तत्प्राप्तये तेन तथानुष्ठेयमिति मन्वानाः दितिगर्भनिमित्ततिमिरप्राप्तपराभवपरिहरणाय तादृशगुणविशिष्टत्वेन स्तुवन्तीत्याह—**य इति** । ये पुरुषा अनन्यभावेन हरेरन्यः स्वतन्त्रो नास्तीति ज्ञानदृढीकृतभक्त्या त्वां भावयन्ति निरन्तरोपासनया वशीकुर्वन्ति तेषां पुंसां न कुतश्चित् पराभव इत्यन्वयः । पराभवकर्तॄणां त्वत्सृष्टजीवान्तर्गतत्वेन त्वन्नियतत्वान्न ते तावकान्[1] द्रुह्यन्तीति भावेनोक्तम्—**आत्मभावनमिति** । आत्मनो जीवान् भावयत्युत्पादयतीत्यात्मभावनस्तम् । आत्मनः परमात्मनो भावनया निरन्तरोपासनया प्रवृद्धतदनुग्रहस्य तवासाध्यं नास्तीत्यतो[2] वा—**आत्मभावनमिति** । आत्मनो भावनं यस्य स तथा तम् । न केवलं जीवजातं त्वदुत्पन्नत्वेन त्वदधीनम् । किन्तु चेतनाचेतनात्मकं सर्वमपि त्वया धृतमित्याहुरित्याह—**आत्मनीति** । त्वमपि जीवेष्वेक इति मन्दाशङ्कां निवारयति—**परमिति** । परं सर्वोत्तमम् । अनेन जीवोत्पादकत्वेऽनुपपत्तिः परिहृता । महदादिकार्यकारणव्यापित्वेन सर्वोत्तमत्वं युक्तमिति भावेनोक्तम्—**सदसदात्मकमिति** । न केवलं भारधरदेवदत्तवज्जगद्धारकत्वमस्य । किन्तु अन्तर्बहिर्व्याप्तत्वेनापीत्यतो वोक्तम्—**सदसदात्मकमिति** । 'ततो विशेषं प्रतिपद्य' इत्यादिद्वितीये सर्वव्याप्तिमत्वमुक्तम् । मुक्तामुक्तप्रपञ्चस्य सुखादिदातृत्वादुक्तं युक्तमित्यतो वोक्तम्—**सदसदात्मकमिति**। सन्त आत्मानो मुक्ताः, असन्त आत्मानोऽमुक्ताः, येषा[3]-मुभयेषामपि कं सुखं यस्मात् तत् तथोक्तम्[4] । विशिष्टध्यानमनस एवंविधफलवत्त्वं, न तु तन्मात्रस्य । तन्मात्रेण योगादीनां परिपाकाभावेन युष्मत्प्रसादानुत्पत्तिरितिभावेन तान् विशिंषन्तीत्याह—**सुव्यक्तेति** । अष्टाङ्गलक्षणो योगः ॥ ६—७ ॥

विधिनिषेधलक्षणया वेदवाचा प्रवर्तमानाः प्रजाः स्वस्वकर्मानुसारेण सुखादिकमश्नन्ति तत्रायं कुत्रोपयुज्यत इत्याशङ्क्य तया त्वदीयया नियतास्तदुक्तप्रकारेण[5] त्वत्पूजां कुर्वन्ति तदनुसारेण भवान्

---

[1] 'ये मे तनूर्द्विजवरान् दुह्रदुर्मदीयान् ....' (३-१७-१०) इत्यादि भागवतप्रयोगमनुसृत्य क्रुधद्रुहेत्यादिचतुर्थी नाश्रिता । [2] नास्तीति वा इति स्यात् । [3] तेषामिति स्यात् । [4] यस्मात् स तथोक्तम्–प्र ।
[5] त्वदुक्तप्रकारेण–प्र ।

स त्वं विधत्स्व शं भूमन् तमसा लुप्तकर्मणाम् ।
अदभ्रदयया दृष्ट्या प्रपन्नानर्हसीक्षितुम् ॥ ९ ॥
एष देव दितेर्गर्भ ओजः काश्यपमर्पितम् ।
दिशस्तिमिरयन् सर्वा एधतेऽग्निरिवैधसि ॥ १० ॥
मैत्रेय उवाच —
स प्रहस्य महाबाहो भगवान् शब्दगोचरः ।
प्रत्याचष्टात्मभूर्देवान्[1] प्रीणन् रुचिरया गिरा ॥ ११ ॥
ब्रह्मोवाच —
मानसा मे सुता युष्मत्पूर्वे वै सनकादयः ।
चेरुर्विहायसा लोकान् लोकेषु विगतस्पृहाः ॥ १२ ॥

---

फलं प्रयच्छतीत्यतस्त्वं सर्वोत्तम इत्याहुरित्याह—**यस्येति** । यस्य तव तन्त्या गोबन्धनाय रचितया दीर्घया रज्ज्वा यन्त्रिता बद्धाः । यत्रि निबन्धन इति धातुः । हरन्ति नयन्ति । मुख्यात्मने सर्वेभ्यो जीवेभ्यो मुख्याय ॥ ८ ॥

भवतां महता संरम्भेण स्तवनाभिप्रायः क इत्यतस्तमाहुरित्याह—**स त्वमिति** । स इति तच्छब्देन पूर्वोक्तवैशिष्ट्यं स्मारयन्ति । दितिगर्भनिमित्ततिमिरेण लुप्तसन्ध्यादिकर्मणाम् । तदर्थमयमेवोपाय इति विज्ञापयन्तीत्याह—**अदभ्रेति** । अदभ्रा पूर्णा दया यस्यां सा तथोक्ता तया दृष्ट्या ईक्षितुं द्रष्टुम् ॥ ९ ॥

किमिदानीं भयनिमित्तमिति तद् विज्ञापयन्तीत्याह—**एष इति** । काश्यपं कश्यपस्य विद्यमानं दित्यामर्पितम् ओजस्तेज एष गर्भः सर्वा दिशस्तिमिरयन् अन्धकारयन् । लोकप्रदीपानां सूर्यादिग्रहाणां तेजोऽवष्टम्भेन दिशामन्धकारितत्वम् । अतोऽस्य त्वया परिहारो द्रष्टव्य इति यावत् ॥ १० ॥

स्वप्रज्ञाधिगमं स्तुवतां तेषामुत्तरं प्रतिजानीने ब्रह्मेति मैत्रेयो विदुरं वक्ति—**स प्रहस्येति** । शब्दगोचरः मिथो व्यवहारविषयः, वेदवेद्यो वा । प्रीणन् प्रीणयन् । प्रत्याचष्ट भवदुक्तस्योत्तरं वक्ष्यामीत्याह ॥ ११ ॥

स्ववचनमध्ये तत्प्रश्नो माभूदिति मन्वान आदित एव वक्तुं प्रारभते—**मानसा इति** । मम मनसो जाताः । अन्तरिक्षादिलोकान् । किम्प्रयोजनवन्त इत्यत आह—**लोकेष्विति**[2] ॥ १२ ॥

---

[1] देवः–क,ङ । [2] अथापि तेषां लोकसञ्चरणं लोकतत्त्वविविरसयेत्याशय इति यादुपत्यम् ।

त एकदा भगवतो वैकुण्ठस्यामलात्मनः ।
ययुर्विकुण्ठनिलयं सर्वलोकनमस्कृतम् ॥ १३ ॥

वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्तयः ।
ये नित्यमनिमित्तेन धर्मेणाराधयन् हरिम् ॥ १४ ॥

यत्र चाद्यः पुमानास्ते भगवान् शब्दगोचरः ।
सत्त्वं विष्टभ्य विरजं स्वानां नो मृडयन् वृषः ॥ १५ ॥

यत्र नैःश्रेयसं[3] नाम वनं कामदुघैर्द्रुमैः ।
सर्वर्तुश्रीभिर्विभ्राजत्कैवल्यमिव मूर्तिमत् ॥ १६ ॥

वैमानिकाः सललनाश्चरितानि यत्र
गायन्ति लोकशमलक्षपणानि भर्तुः ।
अन्तर्जले तु [5]विलसन्मधुमाधवीनां
गन्धेन खण्डित धियोऽप्यनिलं क्षिपन्तः ॥ १७ ॥

---

ततः किम् ? अत्राह—त इति । विकुण्ठाख्यं निलयं गृहम् । नितरां लीयतेऽस्मिन् सर्वमिति ॥ १३ ॥

शून्यागारत्वभ्रान्तिं[1] निवारयति—वसन्तीति । ये नित्यमनिमित्तेन अः विष्णुर्निमित्तं यस्य सोऽनिमित्तः, तेन विष्ण्वर्पणबुद्ध्या क्रियमाणेनेत्यर्थः । धर्मेण हरिमाराधयंस्ते यत्र वसन्तीत्यन्वयः । वैकुण्ठवन्मूर्तिर्येषां ते तथोक्ताः । सारूप्यभाज इत्यर्थः ॥ १४ ॥

यत्र लोके वृषः श्रेष्ठः, आद्यः सर्वैरुपजीव्यो, भगवान् स्वैर्भगैर्मूर्तिमद्भिरुपेतः, शब्दगोचरः अनन्तानां मूर्तिधराणां वेदानां विषयः, पुमान् नारायणो, विरजं दूरीकृतरजोगुणं सत्त्वं [2]बलज्ञानसमाहारात्मत्वमवष्टभ्य स्वानां नो यदस्ति तत् सर्वं मृडयन् रक्षन् आस्त इत्यन्वयः ॥ १५ ॥

कैवल्यं ब्रह्म । 'कैवल्यममृतमक्षरं ब्रह्म' इत्यभिधानम् । [4]ज्ञानपुष्पसाध्यत्वान्नैश्रेयसम् ॥ १६ ॥

सललनाः ललनाभिः स्त्रीभिः सहिताः, वैमानिकाः विमानेन चरन्तः पुरुषाः, लोकस्य जनस्य शमलक्षपणानि पापनाशनानि भर्तुर्हरेश्चरितानि यत्र गायन्ति । नन्वत्र गानं वदनव्यादानेन न घटते पुष्पसौरभ्य-

---

[1] भ्रान्ति–ग पाठः । अन्यत्र नास्ति । [2] बलज्ञानसमाहारात्मकम्–प्र । सत्त्वं बलज्ञानसमाहारात्मकं देहं विष्टभ्य, सत्त्वं सत्त्वगुणं विष्टभ्य कार्योन्मुखीकृत्येति वेति यादुपत्यम् । [3] नैश्रेयसं—इति पाठान्तरम् । [4] ज्ञानपुण्यसाध्यत्वात्–प्र । [5] विकसदिति पाठान्तरम् ।

पारावतान्यभृतसारसचक्रवाक-
दात्यूहहंसशुकतित्तिरबर्हिणाद्यैः ।
कोलाहले विरचिते चिरमात्रयोच्चै-
र्भृङ्गाधिपे हरिकथमनुगायमाने ॥ १८ ॥

मन्दारकुन्दकुरबोत्पलचम्पकार्ण-
पुन्नागनागबकुलाम्बुजपारिजाताः ।
गन्धेऽर्चिते तुलसिकाभरणेन तस्या
यस्मिंस्तपः सुमनसो बहुमानयन्ति ॥ १९ ॥

---

समावेशादिनेन्द्रियक्षोभसम्भवादित्याशङ्क्य परिहरति—**अन्तर्जल इति**। अत्रान्तःशब्दः समीपवचनः। जलसमीपे तटे विलसन्तीनां मधौ वसन्ते विद्यमानानां माधवीनां वासन्तीलतापुष्पाणां गन्धेन खण्डितधियो विक्षुब्धबुद्धयो नित्यं गन्धनायकं[1] वायुं क्षिपन्तः परिहरन्तः। तुशब्देन भेदवाचिना 'मुक्ता अमुक्ताश्चेत्युभये सन्ति। तत्र मुक्तानां क्वचिदपि पुष्पगन्धवायुनेन्द्रियक्षोभलक्षणो भ्रमो नास्ति, अमुक्तानां क्वचित् स्यात्' इति तात्पर्यं निरूप्यते। 'मुक्ताश्चैवाधिकारस्था द्विधा वैकुण्ठलोकगाः। अमुक्तानां भ्रमः क्वापि न मुक्तानां क्वचिद् भवेत्' इति वचनात् ॥ १७ ॥

तत्रत्यानां भक्तानां हरेश्चरणारविन्दार्चनावसरः कदात्विति तत्राह—**पारावतेत्यादिना**[2]। भृङ्गाधिपे हरिकथामनुगायमाने सप्तस्वरसमाहारेण गातुमुपक्रान्ते सति तद्गानमनुकूजद्भिः पारावतादिपक्षिगणैश्चिरमात्रया त्रिमात्रादिस्वरेण कोलाहले कलकललक्षणे कूजने विरचिते सत्ययं समय इति मत्वा ॥ १८ ॥

यस्मिन् वैकुण्ठे तुलसीदले मन्दारादिपुष्पराशौ च भक्तैरङ्घ्रिमूलेऽर्चिते सति तुलसिकाभरणेन तुलसीमालाधारिणा हरिणान्यपुष्पदलमपहाय हस्तेन तुलसीदलमुद्धृत्य[3] तद्गन्धे घ्राणेनार्चिते सम्भाविते सति मन्दाराद्याः सुमनसो मन्दारादिशब्दवाच्यास्तद्देवतास्तस्यास्तुलस्यास्तपो बहुमानयन्ति। गन्धार्थमिति[4] शेषः। 'तिरश्चीनाः स्थावराश्च सर्वे ज्ञानाद् विकुण्ठगाः। अमुक्ता मुक्तिमायान्ति नियमात् कर्मणः क्षये' इति वचनात् ज्ञानान्मुक्तत्वात् तत्तत्समयज्ञानं गानं प्रशंसनं च भृङ्गाधिपादीनां तिर्यञ्चां

---

[1] गन्धप्रापकं–क। गन्धवाहकं–च। [2] यादुपत्ये तु अस्य श्लोकस्य पूर्वश्लोकेनान्वय उक्तः, अनुगायमाने गायन्तीति। [3] तुलसिकाभरणेनेत्यावर्तते। तुलसिकाभरणेन हरिणा तुलसिकाया भरणेनोद्धरणेनेत्यर्थः।
[4] गन्धार्थं कृतमिति–प्र।

यत् सङ्कुलं हरिपदानतिमात्रतृप्तै-
वैंडूर्यमारकतहेममयैर्विमानैः ।
येषां बृहत्कटितटाः स्मितशोभिमुख्यः
कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैः ॥ २० ॥

श्री रूपिणी क्वणयती चरणारविन्दं
नीलाम्बुजेन हरिसद्मनि मुक्तदोषा ।
संलक्ष्यते स्फटिककुड्य उपेतहेम्नि
सम्मार्जतीव यदनुग्रहणेऽन्ययत्नाः ॥ २१ ॥

---

मन्दारादीनां स्थावराणां च युज्यते । यद्वा तुलसिकाभरणेन तुलसिकाभरणे कृते सति गन्धार्थं तपो बहुमानयन्ति[1] । गन्ध इति तादर्थ्ये सप्तमी । ऊर्णं करवीरपुष्पम् । नागो नागकेसरः । पुन्नागः सुरकर्णिकारः ॥ १९ ॥

बृहन्तः कटितटाः श्रोणीभागाः यासां तास्तथोक्ताः । स्मितशोभिमुख्यः स्मितेन शोभमानवक्त्राः स्त्रियः । उत्स्मयाद्यैः मन्दहासशृङ्गारादिरसविशेषैः । कृष्णे हरावात्मा मनो येषां ते तथा तेषां येषां रजो रागं न आदधुर्नाकुर्वन् तेषां विमानैर्यद् वैकुण्ठाख्यं स्थानं सङ्कुलं व्याप्तम् । मञ्चस्थपुरुषन्यायेन विमानानि विशिनष्टि—**हरीति** । हरिपदयोरानतिमात्रेण तृप्तैः कृतार्था वयमिति भाववद्भिः[2] । यद्वा हरिपदे व्योम्नि आनतिमात्रतृप्तैः सञ्चरणमात्रप्रयोजनैः । वैडूर्यं पद्मरागम् । मरकतमिन्द्रनीलम् । हेम सुवर्णम् । एतैर्विराजितैः ॥ २० ॥

वैकुण्ठस्येतोऽधिकं माहात्म्यं किं वक्तव्यमिति भावेनाह—**श्रीरिति** । अन्येषामुपासकाना-मस्मदादीनां उपासनादिप्रयत्ना यस्या अनुग्रहणेऽनुग्रहार्थं स्युः सा नूपुरालङ्कृतचरणारविन्दं क्वणयती जननादिसमस्तदोषैर्मुक्ता रूपिणी सौन्दर्यसागरमूर्तिः श्रीर्यत्र वैकुण्ठे हरिवेश्मनि अन्तःपुरे उपेतहेम्नि सुवर्णखचिते स्फटिककुड्ये नीलाम्बुजे[3]नावकरधूननसाधनस्थानीयेन सम्मार्जयन्तीव संलक्ष्यत इत्यन्वयः । कुड्यं गृहभित्तिः ॥ २१ ॥

---

[1] गन्धे इत्यस्यावृत्तिः । भगवता तुलस्या गन्धेऽर्चिते सुमनसः तुलस्याः गन्धे गन्धार्थं तपो बहुमान-यन्ति । एवं अर्चिते इत्यस्याप्यावृत्तिः । भक्तैर्भगवत्यर्चिते भगवता च तुलसिकागन्धेऽर्चिते सतीति ।

[2] भावयद्भिः-घ, च । [3] लीलाम्बुजेन-छ,घ

वापीषु विद्रुमतटास्वमृतामलाप्सु[1]
प्रेष्यान्विता निजवने तुलसीभिरीशम् ।
अभ्यर्चती स्वलकमुन्नसमीक्ष्य वक्त्र-
मुच्छेषितं भगवतेत्यमताङ्ग यच्छ्रीः ॥ २२ ॥

यन्न व्रजन्त्यघभिदोऽरचनानुवादाः
शृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः ।
यास्तु श्रुता हतभगैर्नृभिरात्तवीर्या-
स्तास्तान् क्षिपन्त्यशरणेषु तमःसु हन्त ॥ २३ ॥

येऽभ्यर्थितामपि च नो नृगतिं प्रपन्ना
ज्ञानं च तत्त्वविषयं सहधर्म यत्र ।

---

अङ्ग हे देवाः यद् यत्र प्रेष्याभिर्दासीभिरन्विता निजवने कमलवने तुलसीभिरीशमभ्यर्चती रूपिणी सौन्दर्यसागरमूर्तिः श्रीरमृतामलाप्सु विद्रुमरत्नबद्धतटासु वापीषु सुखावतारकूलासु प्रतिबिम्बितं स्वलकं शोभनकुन्तलम्, उन्नसं किञ्चिदुन्नतनासिकं वक्त्रमुद्वीक्ष्य हरिणेदं चुम्बितमित्यमतेत्यन्वयः ॥२२॥

स्वर्गादीनामसुरादिगम्यत्वादस्य तदभावात् ततोऽतिशयमाहात्म्यमस्तीति भावेनाह—**यन्न व्रजन्तीति** । अघभिदः संसारदुःखहेतुभूतपापानां भेत्तुः कृष्णस्य रचनानां बालक्रीडादिचरितानां जगत्सृष्ट्यादिकर्मणां वा अनुवादाः न विद्यन्ते येषां ते[2] अरचनानुवादा असुरा यत् स्थानं न व्रजन्ति । अनुवादाः श्रवणमननादिलक्षणाः । ये चान्यविषयाः मतिघ्नीः यथार्थज्ञाननाशनीः कुकथाः कुत्सितरतिवर्णनादिरूपाः कथाः शृण्वन्ति ते च यत् स्थानं न यान्ति । तासां कथानामेतत्स्थानप्राप्तिप्रतिबन्धकत्वमेव न फलं, किन्तु तमःप्रापकफल[3]मपीत्याह—**या इति** । हतभगैर्विनष्टभक्त्यादिभाग्यैर्नृभिः श्रुताः याः कथास्ताः अशरणेषु निराश्रयेषु तमस्सु क्षिपन्ति । आत्तवीर्याः तमःपातने बह्वभ्यासेन समुन्नद्धशक्तयः । हन्त अहो कष्टम् । तुशब्दोऽधःपतितानां तारतम्यद्योतकः ॥ २३ ॥

केचित् ज्ञानसाधनयोग्यां मनुष्ययोनिं प्राप्यापि तत्साधनं न कुर्वन्ति । तत्र किं कारणमित्याशङ्क्य असुरत्वमिति भावेनाह—**येऽभ्यर्थितामिति** । ये पुरुषा नोऽस्माकं अभ्यर्थितां ज्ञानादिप्राप्तियोग्यत्वादाकाङ्क्षितां नृगतिं मनुष्ययोनिं प्राप्य यत्र यस्यां नृगतौ सहधर्म धर्मेण सह वर्तमानं तत्त्व-

[1] अमलामृताप्सु—इति पाठान्तरम् । [2] नानुवादा येषां ते–घ ग छ । [3] प्राप्नोति स्यात् ।

नाराधनं भगवतो वितरन्त्यमुष्य
संमोहिता विततया ननु मायया ते ॥ २४ ॥

यत्र [1]प्रयान्त्यनिमिषामृषभानुवृत्त्या
दूरेयमा ह्युपरि नः स्पृहणीयशीलाः ।
भर्तुर्मिथः सुयशसः कथनानुराग-
वैक्लव्यबाष्पकलया पुलकीकृताङ्गाः ॥ २५ ॥

तद्विश्वगुर्वधिकृतं भुवनैकवन्द्यं
दिव्यं विचित्रविबुधाग्र्यविमानशोचिः ।

---

विषयं ज्ञानं च प्रपन्नाः ते अमुष्य हरेः जगति विततया मायया बन्धकशक्त्या धर्मज्ञानप्राप्तावयोग्यत्वेन सम्मोहिताः न भगवत आराधनं कुर्वन्ति । न वितरन्ति । अर्थिभ्यो नोपदिशन्ति । अतो धर्म-ज्ञानादिवर्जिता असुरत्वात् ते न मनुष्या इतीममर्थं ध्वनयति नन्वित्यनेन[2] ॥ २४ ॥

सन्तो देवप्रकृतय एव भगवत आराधानं कृत्वा तज्ज्ञानेन यत्र स्थितं हरिं प्राप्नुवन्तीत्याह—**यत्रेति** । ते यत्र नोऽस्माकं उपरि वैकुण्ठस्थितं हरिं प्रयान्तीत्यन्वयः । ये अनिमिषां देवानां ऋषभस्य स्वामिनो हरेरनुवृत्त्या निरन्तरसेवया दूरेयमाः दूरीकृतयमलोकाः, अत एव सर्वैः स्पृहणीयशीलाः सुयशसो भर्तुर्हरेर्गुणगणानां मिथः कथने योऽनुरागः तस्मादुत्पन्नं यद् वैक्लव्यं पारवश्यं तन्निमित्तेन जाता या बाष्पकलानन्दाश्रुधारा तया पुलकीकृतान्यङ्गानि शरीरतदवयवा येषां ते तथोक्ताः । सुयशस इति भागवतानां विशेषणं वा । वैकुण्ठादप्युपरि शिवलोक इति केचिदाचक्षते । तस्याप्रस्तुतत्वा-दनुपपन्नत्वादिति हेतुद्वयं हीत्यनेन सूचयति ॥ २५ ॥

प्रकृतमनुसरति—**तद्विश्वगुर्वधिकृतमिति** । अथ मुनयः परां मुदमापुरित्यन्वयः । भगवत्-समाधिना नित्यतृप्तानां मुनीनां कादाचित्कमोदप्राप्तौ किं कारणम् ? उच्यते—तद् विकुण्ठस्थान-

---

[1] व्रजन्त्यनिमिषामिति पाठान्तरम् ।

[2] ये पुरुषाः सधर्मं धर्मेण सह वर्तमानं ज्ञानं यत्र नृगतावुत्पत्तुमर्हति तां साधुभिरभ्यर्थितामपि नृगतिं, तत्त्वज्ञानादियोग्यां नृगतिमिति यावत्, नो प्रपन्नाः नृगतिं प्राप्यापि तत्त्वज्ञानादिवर्जिता इति यावत् । ते नृगतिं नो प्रपन्नाः, च शब्दोऽवधारणे । मानुषा एव न भवन्तीत्यर्थः । तेषां मनुष्यजन्म व्यर्थं भवतीति भावः । कुत एव नृगतिं प्राप्ता अपि ज्ञानादिवर्जिता भवन्तीत्यतो हेतुं वदन् उक्तमेव विशदयति—नाराधनमिति । ते नृगतिं प्रपन्ना यतोऽमुष्य भगवतो विततया मायया बन्धकशक्त्या संमोहिता अतो भगवत आराधनं तत्त्वज्ञान-पूर्वकं स्वविहितभगवदर्चनरूपं न वितरन्ति न कुर्वन्ति, तत्त्वज्ञानादिवर्जिता भवन्तीत्यर्थः—इति यादुपत्यम् ।

आपुः परां मुदमपूर्वमुपेत्य
योगमायाबलेन मुनयस्तदथो विकुण्ठम् ॥ २६ ॥

तस्मिन्नतीत्य मुनयः षडसज्जमानाः
कक्ष्याः समानवयसस्त्वथसप्तमायाम् ।
देवावचक्षत गृहीतगदौ परार्ध्य-
केयूरकुण्डलकिरीटविटङ्कवेषौ ॥ २७ ॥

मत्तद्विरेफवनमालिकया निवीतौ
विन्यस्तयाऽसितचतुष्टयबाहुमध्ये ।
वक्रभ्रुवा कुटिलया स्फुटनिर्गतेन
रक्तेक्षणेन च मनाग् रभसं दधानौ ॥ २८ ॥

---

मुपेत्य । कीदृशम् ? 'उतामृतत्वस्येशानो यदन्नेनातिरोहति' इत्यादिना यो मुक्तामुक्तप्रपञ्चाधारत्वेन श्रुतः स चासौ विश्वगुरुस्तेन मुक्तामुक्तप्रपञ्चगुरुणा हरिणाऽधिकृतं विशेषतः स्वामित्वेनाभिमतम् । भुवनशब्देन तत्स्थाः पुरुषाः लक्ष्यन्ते । तैः शिवलोकोत्तमतया वन्द्यम् । दिव्यमप्राकृतम् । विचित्राणि नानावर्णानि विबुधाग्र्याणां विमानानि शोचयति दीपयति इति विचित्रविबुधाग्र्यविमानशोचिः । शुचि दीप्तौ इति धातुः । अपूर्वं पूर्वमदृष्टम् । योगमायाबलेन भगवदुपासनालब्धज्ञानबलेन प्राप्येत्यर्थः ॥ २६ ॥

मुदमुपेत्य बहिरेवावतिष्ठन् ते, उतान्तराविशन् ? आविश्य च किं चक्रुरिति तत्राह — **तस्मिन्निति** । तस्मिन् वैकुण्ठे षट्कक्ष्याः गोपुरद्वाराणि, अतीत्य तत्रासज्जमानाः अनिवार्यमाणाः सप्तमायां कक्ष्यायां स्थितौ देवावचक्षत अपश्यन्नित्यन्वयः । केयूरादिभिर्विटङ्कोऽलंकृतो वेषो ययोस्तौ तथोक्तौ ॥ २७ ॥

तयोर्भावं वर्णयति—**मत्तेति** । असितानां श्यामानां बाहूनां चतुष्टयस्य मध्ये वक्षसि विन्यस्तया, मत्ता द्विरेफा भृङ्गा यस्यां सा मत्तद्विरेफा वनमालिका वनमाला तया, निवीतौ परिवृतौ । कुटिलया वक्रया वक्रस्थितया भ्रुवा सह स्फुटं निर्गतेन रक्तेक्षणेन रक्तान्तकटाक्षनिरीक्षणेन मनाक् किञ्चिद् रभसं कोपं दधानौ अनुसन्धानं कुर्वन्तौ । अन्तः प्रविशतो निर्गच्छतश्च जनान् ज्ञात्वा तिष्ठत इत्यर्थः ॥ २८ ॥

द्वार्येतयोः प्रविविशु[1]र्मिषतोरपृष्ट्वा
पूर्वा यथाऽरपुटवज्रकपाटिका याः ।
सर्वत्र ते ह्यविषया मुनयः स्वदृष्ट्या
ये सञ्चरन्त्यविहता विगताभिशङ्काः ॥ २९ ॥
तान् वीक्ष्य वातरशनांश्चतुरः कुमारान्
वृद्धान् दशार्धवयसो विदितात्मतत्त्वान् ।
वेत्रेण चास्खलयतामतदर्हणांस्तौ
तेजो विहस्य भगवत्प्रतिकूलशीलौ ॥ ३० ॥
ताभ्यां मिषत्स्वनिमिषेषु निषिध्यमानाः
स्वर्हत्तमा ह्यपि हरेः प्रतिहारपाभ्याम् ।
ऊचुः सुहृत्तमदिदृक्षितभङ्ग ईषत्-
कामानुजेन सहसा त उपप्लुताक्षाः ॥ ३१ ॥

ये मुनयः सर्ववस्तुषु स्वस्य स्वतन्त्रस्य हरेर्दृष्ट्यान्तर्यामित्वदर्शनेन अविषया निस्पृहाः, अत एव विगताभिशङ्काः, अविहता अप्रतिहतगतयः सर्वत्र सञ्चरन्ति हि यस्मात् तस्मात् ते मुनयः तावपृष्ट्वा मिषतोः पश्यतोस्तयोर्द्वारि तथा प्रविविशुरित्यन्वयः । यथा पूर्वाः षड्द्वारः प्रविविशुः निश्शङ्कतया । कीदृशीर्द्वारः ? या आरपुटवज्रकपाटिका आरेण पित्तलेनालंकृतं पुटं यस्याः सा आरपुटवज्रशिलया कृतकपाटिका आरपुटवज्रकपाटिका यासां तास्तथा । 'लोहमप्यारकूटं स्यात् पित्तलं चारमस्त्रियाम्' इति यादवः ॥ २९ ॥

ततः किमभूदिति तत्राह—**तानिति** । वातो वायुरेव रशना वस्त्रं येषां ते तथा तान् । कुमारानित्युक्तं विवृणोति—**दशार्धवयस इति** । दृष्ट्या पञ्चवर्षान् । विदितात्मतत्त्वान् ज्ञातपरमात्मस्वरूपान् । वेत्रेण यष्ट्या अस्खलयतां प्रवेशप्रतिरोधं चक्रतुः । अतदर्हणान् स्खलनायोग्यान् । तेजस्तेषां प्रभावं विहस्यागणय्य । तत्र निमित्तमाह—**भगवदिति** । भगवतो हरेः प्रतिकूलं विरुद्धं शीलं ययोस्तौ तथा तौ । 'जयस्य विजयस्यापि कदाचिद् ब्रह्मशापतः । कृष्णावतारपर्यन्तं प्रातिकूल्यं च जायते' इति वचनेन शापनिमित्तं प्रातिकूल्यं सावधिकं चेति ज्ञायते । अन्यथा तयोस्तत्रावस्थानमेव न युज्यते । रजआद्यभावस्योक्तत्वात् ॥ ३० ॥

न्यस्तदण्डत्वात् प्रतिषिद्धास्ते तूष्णीं यथागतं ययुः किम् ? अत्राह—**ताभ्यामिति** । सुष्ठु

[1] निविविशुः—इति पाठान्तरम् ।

को वा इहैत्य भगवत्परिचर्ययोच्चै-
स्तद्धर्मिणामपि सतां विषमस्वभावः ।
तस्मिन् प्रशान्तपुरुषे गतविग्रहे वां
को वाऽऽत्मवत् कुहकयोः परिशङ्कनीयः ॥ ३२ ॥

न ह्यन्तरं भगवतीह समस्तकुक्षा-
वात्मानमात्मनि नभो नभसीव धीराः ।
पश्यन्ति यत्र युवयोः सुरलिङ्गिनोः किं
व्युत्पादितं ह्युदरभेदि भयं यतोऽस्य ॥ ३३ ॥

---

अर्हत्तमाः पूज्यतमाः, सुहृत्तमस्य हरेर्दिदृक्षितस्य दर्शनेच्छाया भङ्गे विघ्ने सति, ईषत्कामानुजेनाल्पकोपेन उपप्लुतानि अतिकलुषीकृतान्यक्षीणि येषां ते तथोक्ताः, प्रतिहारपाभ्यामनिमिषेषु देवेषु मिषत्सु निषिध्यमाना ऊचुरित्यन्वयः ॥ ३१ ॥

क्रोधाकुलितनेत्रत्वाद्धितं न किन्त्वहितमेव तत् कीदृशमूचुरिति तत्राह—**को वेति** । भगवत उच्चैः परिचर्यया समुन्नतपूजादिसेवया इह वैकुण्ठे स्वयोग्यं स्थानमेत्य तद्धर्मिणां तस्य हरेर्ध्यानादिधर्मवतां सतां भागवतानामपि मध्ये कः पुमान् विषमस्वभावः 'शत्रुरयम्, इदं मित्रम्' इति तामसशीलः । वा इत्यनेनात्यन्तानुपपत्तिं सूचयति । भगवद्विषये शङ्कनीयोऽस्तीति भवन्निषेधः क्रियत इति तत्राह—**तस्मिन्निति** । कुहकयोर्मिथ्यादृष्टिमतोर्युवयोरात्मवत् यथात्मा परिशङ्कनीयस्तथेह तस्मिन् भगवति विषये परिशङ्कनीयो विरुद्धस्वभावः को वाऽस्ति न कोऽपीत्यन्वयः । कुतो नास्तीत्यत आह—**प्रशान्तेति** । लोके अप्रशान्तस्य परेण सहोत्पादितवैरस्य च शङ्कनीयो दृष्टः, तथा नायम् । पुरुषेषु प्रशान्तत्वात् अनुत्पादितवैरत्वाच्च । किञ्च प्रकृष्टानन्दस्वरूपत्वादनुपहतैश्वर्यादिषड्गुणपूर्णत्वात् सर्वशरीरेषु गतत्वादप्रतिद्वन्द्वत्वादप्राकृतशरीरत्वाच्च । अतोऽस्मिन्निषेधो[1] व्यर्थ इत्यर्थः ॥ ३२ ॥

आपादितदोष एव पुरुषो दण्डयोग्य इति तयोर्दोषित्वमुपपादयन्ति—**न हीति** । इहास्मिँल्लोके स्थिता धीरा ज्ञानिनः समस्तस्य मुक्तामुक्तप्रपञ्चस्य कुक्षयः शरीरकुहराणि यस्यावासभूतानि स समस्तकुक्षिस्तस्मिन् । यद्वा समस्तकुक्षौ स्थिते भगवति । अन्तरं छिद्रं भेदं न पश्यन्ति किन्तु यत्र यस्मिन् लोके नभसि महाकाशे नभो घटाकाशमिवात्मानं स्वात्मस्थं भगवद्रूपमात्मनि व्याप्ते भगवद्रूपे पश्यन्ति । तयोरैक्येनेत्यर्थः । ततः किम् ? अत्राह—**युवयोरिति** । एवं ज्ञानिप्रत्यक्षे जाग्रति

---

[1] अस्मन्निषेध इत्यर्थः ।

तद् वा अमुष्य परमस्य विकुण्ठभर्तुः
कर्तुं न युक्तमिति धीमहि मन्दधीभ्याम् ।
लोकानितो व्रजतमन्तरभावदृष्ट्या
पापीयसस्त्रय इमे रिपवोऽस्य यत्र ॥ ३४ ॥

तेषामितीरितमुभाववधार्य घोरं
तं ब्रह्मदण्डमनिवारणमस्त्रपूगैः ।
सद्यो हरेरनुचरावुरुबिभ्यतस्तत्-
पादग्रहावपततामतिकातरेण ॥ ३५ ॥

---

सुरलिङ्गिनोर्देवलक्षणवतोर्युवयोर्मनसा यतो भेददर्शनाद् अस्य भेदस्य द्रष्टुः पुंसः, सर्वत्र दुःखप्राप्तिरूपं भयं भवति तादृशमुदरभेदि उद्गता अरा दोषा यस्मात् तदुदरं ब्रह्म तस्य भेददर्शननिमित्तं भयं व्युत्पादितं किम्? प्रतिशरीरमन्तर्यामित्वेन स्थितस्याभयस्य हरेरन्यस्माद् भयमस्तीति बुद्धिः कृता । अन्यथा-स्मन्निवारणं किमिति कृतम्? हि शब्देन तत् स्वानुभवसिद्धं दर्शयन्ति । यद्वा 'सर्वोदरगतं ब्रह्म ये भेदेन विचक्षते । सर्वत्रापि भयं तेषां मृतानां तम एव च' इति वाक्यं प्रमाणयन्ति । युवयोरिति तृतीयार्थे षष्ठी । तया तद्द्वारपालकत्वेन स्वस्वामित्वसंबन्धस्य स्वानुभवसिद्धत्वेन तदपलापेन सर्वापलापप्रसङ्गाद् भगवदपराध एव कृत इति द्योतयन्ति[1] ॥ ३३ ॥

एवं दोषानुपपाद्य तद्योग्यं दण्डं कर्तुमुपाक्रमन्ते—**तद् वा इति** । मन्दधीभ्यां कपटबुद्धिभ्यां युवाभ्यममुष्य विकुण्ठभर्तुर्मूलरूपस्य परं पश्चात् [2]अस्यावतारान्तर्यामिरूपस्य[3] च यद् भेददर्शनं तत् कर्तुं न युक्तमिति धीमहि चिन्तयामः । तद् युवाभ्यां कृतम् अतोऽन्तरभावदृष्ट्या भेददर्शनेनेतो वैकुण्ठ-लोकाद् यत्र येषु त्रिषु इमे त्रयोऽस्य हरे रिपवः स्युः तान् पापीयसोऽतिपापाज्जन्मयोग्यान् लोकान् देहान् व्रजतमित्यन्वयः । त्रीनासुरान् देहान् यातमित्यर्थः । वा इत्यनेन 'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति' इत्यादि श्रुतिं प्रमाणयति ॥ ३४ ॥

स्वतो जयविजयौ सच्चेतनाविति ध्वनयति—**तेषामिति** । तावुभौ हरेरनुचरौ जयविजयौ उरु बहु बिभ्यत इत्यन्वयः । ब्रह्मास्त्राद्यस्त्रपूगैरनिवारणं प्रतिषेद्धुमशक्यं घोरं तेषाम् इतीरित ब्रह्मदण्डं ब्रह्मशापम् अवधार्य हृदि कृत्वा । किञ्च तेषां पादौ गृह्णीत इति तत्पादग्रहावपततां, भूमाविति शेषः । अतिकातरेणेति भयातिरेकं दर्शयति । सद्य इति निर्दोषत्वम् ॥ ३५ ॥

---

[1] अस्यार्थस्तु न स्पष्टः । [2] परमस्यावतारा–ग,ङ । [3] अवताररूपाणामन्तर्यामिरूपाणां चेत्यर्थः ।

भूयानघाद्धि भगवद्भिरकारि दण्डो
यो नौ हरेत सुरहेलनमप्यशेषम् ।
मा वोऽनुतापकलया भगवत्स्मृतिघ्नो
मोहो भवेदिह तु नौ व्रजतोरधोऽधः ॥ ३६ ॥

एवं तदैव भगवानरविन्दनाभः
स्वानां विबुध्य सदतिक्रमार्यहृद्यः ।
तस्मिन् ययौ परमहंसमहामुनीना-
मन्वेषणीयचरणो निलयात् सहश्रीः ॥ ३७ ॥

तं त्वागतं प्रतिहृतौपयिकं स्वपुंभि-
स्तेऽचक्षताक्षविषयं स्वसमाधिगम्यम् ।

---

पादयोः पतित्वा ताभ्यां पुनः किं कृतम् ? अत्राह—**भूयानिति** । हे चतुर्थाश्रमशिखामणयः भगवद्भिः भवद्भिरस्मत्कृतादघादपराधाद्धि हेतोः भूयान् महान् दण्डोऽकारि । युक्त एवायमिति ब्रुवाते—**य इति** । यो दण्डो नौ आवयोः न केवलं युष्मदपराधमेव हरति । किन्त्वशेषं यथा तथा सुरहेलनं श्रीब्रह्मादिदेवावज्ञानमपि हरेत हर्तुं समर्थो भवति । तत्रेदं भगवतः प्रार्थयावहे । नावावयोरिह वैकुण्ठे स्थितयोरंशिनोर्वो युष्माकमनुतापकलया पश्चात्तापलेशेन पुनः पूर्ववत् भगवत्स्मृतिघ्नो भगवतो यथास्वरूपज्ञाननाशको मोहो मा भवेत् मा भूत् । कीदृशयोः ? युष्मच्छापेनाधोऽधोऽधरलोकादप्यधरलोकमासुरं व्रजतोर्गच्छतोः, अंशेनेति शेषः ॥ ३६ ॥

जयविजययोः सनकादीनां संलापो हरेः कर्णताडितः किं नाभूत् ? अत्राह—**एवमिति** । द्वयोरप्यंशांशिविवक्षया बहुत्वात् स्वानामिति बहुवचनम् । एवं स्वानां स्वपार्षदानां सत्सु सनकादिषु अतिक्रमं प्रतिघातलक्षणमपराधं निशम्य निलयात् मुक्तस्थानात् तदैव तस्मिन् सप्तमकक्ष्यास्थाने स्थितांस्तान् ययावित्यन्वयः । स्वानां स्वभक्तानां[1] सदतिक्रमं विद्यमानमपराधमिति वा । आर्याणां ज्ञानिनां हृद्यो हृदयङ्गमः । भगवदागमनं सनकादीनां पुण्याधिक्यं ध्वनयति—**परमेति** ॥ ३७ ॥

रोषकलुषितशेमुषित्वात् भृत्यापराधं तत्स्वामिन्यारोप्य तस्मिन्नागते ते मुनयस्तिर्यग्दृष्टयोऽभूवन् किम् ? अत्राह—**तन्त्विति** । तुशब्दो रोषस्तात्कालिको मध्यंदिनचलनार्कवन्न तु चिरकालभावीति निरूपयति । स्वपुंभिः स्वभृत्यैः प्रतिहृतं प्रत्यर्पितमौपयिकमुपायनादिसत्कारद्रव्यं यस्मै स तथोक्तः तम् ।

---

[1] सनकादीनां—च,छ,ग ।

हंसश्रियोर्व्यजनयोः शिववायुलोल-
शुभ्रातपत्रशशिकेसरशीकराम्बुम् ॥ ३८ ॥

कृत्स्नप्रसादसुमुखं स्पृहणीयधाम
स्नेहावलोककलया हृदि संस्पृशन्तम् ।
श्यामे पृथावुरसि शोभितया श्रिया स्व-
ग्रीवामणिं सुभगयन्तमिवात्मधिष्ण्यम् ॥ ३९ ॥

पीतांशुकं पृथुनितम्बमधिस्फुरन्त्या
काञ्च्याऽलिभिर्विरुतया वनमालया च ।
वल्गुप्रकोष्ठवलयं विनतासुतांसे
विन्यस्तहस्तमितरेण धुनानमब्जम् ॥ ४० ॥

---

सहसोत्थायागमनात् संक्षिप्तवाहनादिगमनयोग्यसाधनं वा । चक्षुर्विषयमित्यनेन प्राप्तां मायारूपभ्रान्ति-मुन्मूलयति—**स्वसमाधिगम्यमिति** । सच्चिदानन्दलक्षणमपश्यन्नित्यर्थः । तदानीन्तनवैभववैशिष्ट्यं वर्णयति—**हंसश्रियोरिति** । हंसवद्धवलश्रियोर्व्यजनयोः शिववायुना सुखस्पर्शवायुना लोलं चञ्चलं शुभ्रं धवलं चातपत्रम् उष्णनिवारणच्छत्रं तदेव शशी चन्द्रमास्तस्य केसरेभ्यो रश्मिभ्यो निःसृतानि शीकराणि वातास्त एव चाम्बूनि[1] वारीणि यस्मिन् सः शिववायुलोलशुभ्रातपत्रशशिकेसरशीकाराम्बुः तम् ॥ ३८ ॥

कृत्स्नः पूर्णः प्रसादः प्रसन्नता यस्य तत् तथा, सु प्रशस्तमेवंविधं मुखं यस्य स तथा तम् । स्पृहणीयधाम कमनीयतेजःपुञ्जम् इच्छाविषयस्थानं[2] वा । स्नेहोद्भूतयावलोककलया कटाक्षकलया भक्तानां हृदि संस्पृशन्तं त्वगिन्द्रियसुखं कुर्वन्तम् । श्यामे इन्द्रनीलरत्नकान्तिनिभे पृथौ विस्तीर्णे उरसि शोभितया श्रिया श्रीवत्सरूपया आत्मनश्चतुर्मुखस्य धिष्ण्यं गृहस्थानीयरूपम् । 'कौस्तुभो ब्रह्मणो रूपं प्राणश्चूडामणिस्तथा' इति वचनात् । स्वग्रीवायां स्थितं मणिं कौस्तुभं नाम सुभगयन्त-मिव विकासयन्तमिव स्थितम् ॥ ३९ ॥

पीतांशुकं पृथुनितम्बमधि पीताम्बरावीतविस्तीर्णकटितटोपरि स्फुरन्त्या सहस्रगुणया काञ्च्या अलिभिर्विरुतया शब्दितया वनमालया च शोभमानम् । वल्गुनि सुन्दरे प्रकोष्ठे मणिबन्धस्थाने वलयः कङ्कणो यस्य स तथा तम् । इतरेण दक्षिणेन करेणाब्जं कमलं धुनानं कम्पयन्तम् ॥ ४० ॥

---

[1] शीकराणि चाम्बूनि वारीणि–प्र । [2] पुंस इच्छाविषयस्थानं–प्र ।

विद्युत्क्षिपन्मकरकुण्डलमण्डनार्ह-
गण्डस्थलोन्नसमुखं मणिमत्किरीटम् ।
दोर्दण्डखण्डविवरे चरता परार्घ्य-
हारेण कन्धरगतेन च कौस्तुभेन ॥ ४१ ॥

अत्रोपसृष्टमिति चोत्स्मृतमिंदिरायाः
स्वानां धिया विरचितं बहुसौष्ठवाढ्यम्[2] ।
मह्यं भवस्य भवतां [3]भजनीयमङ्गं
नेमुर्निरीक्ष्य नवितृप्तदृशो मुदा कैः ॥ ४२ ॥

---

कान्त्यादिगुणैर्विद्युतं क्षिपती निरस्यती मकराकारकुण्डले विद्युत्क्षिपन्मकरकुण्डले तयोर्मण्डनार्हे अलङ्कारयोग्ये गण्डस्थले यस्मिंस्तत् तथा, तच्चोन्नसं उन्नतनासिकं मुखं च यस्य स तथा तम् । प्रशस्ता मणयोऽस्य सन्तीति मणिमत् तादृशं किरीटं यस्य स तथा तम् । दोर्दण्डानां खण्डस्य समूहस्य विवरे मध्ये चरता वर्तमानेन परार्घ्यहारेण अनर्घ्यमुक्तामालया कन्धरगतेन कौस्तुभेन मणिना च युक्तम् । एवंविशिष्टभगवन्तमचक्षतेति पूर्वेणान्वयः ॥ ४१ ॥

योऽन्तर्गर्भितभक्त्युद्रेको भगवद्दर्शनानन्तरं[1] बहिरपि निर्गत इति भावेनाह—अत्रेति । ते मुनयो हरेरङ्गं वीक्ष्य मुदा नवितृप्तदृशः अलम्बुध्यप्राप्तनेत्राः कैः शिरोभिर्नेमुरनाधारदण्डवत् भुवि पेतुरित्यर्थः । अङ्गाङ्गिनोरणुरपि भेदो नास्तीति तस्येति विशिष्यावचनमित्यतस्तदङ्गं विशिनष्टि—अत्रेति । चशब्दोऽप्यर्थः । यथा ब्रह्मादिभिराराध्येन्दिराया लक्ष्म्या अपि अत्रास्मिन्काले उपसृष्टमुद्भूतमित्युत्स्मृतम् । यद्वात्र केशादिपादावयवविशिष्टे वपुषि इदं मयोपसृष्टमवसितं निश्चितं नातः परमिति । तथापि स्वानां स्वभक्तानां धिया विरचितं स्मृतम् ‘ केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् ’ इत्यादिना । ‘अविद्यमानकरणं विद्यमानस्मृतिस्तथा । उभयं रचनं प्रोक्तं पूर्वसिद्धेषु तु स्मृतिः ’ इत्यभिधानाच्च । तस्माद् रचनाशब्दस्य स्मरणार्थत्वं च सिद्धम् । इतोऽपि भक्तधिया स्मृतं, न कृतम् । कृतस्य[4] न्यूनतातिरेकसम्भवादितिभावेनाह—बह्विति । विपुलानेकयो र्बहुरिति वचनादनन्तसौन्दर्यादिगुणपूर्णम् । इतोऽपि मायाविरचितं नेत्याह—मह्यमिति । मह्यं मम प्रदर्शितमिति वा ॥ ४२ ॥

---

[1] अत्र स इत्युपस्कर्तव्यम् । [2] सौभगाढ्यम्–क ।

[3] भजनीयमिति–छ पाठः । अन्यत्र ‘ च भजन्तम् ’ इति । [4] तस्य–ग,छ ।

तस्यारविन्दनयनस्य पदारविन्द-
किञ्जल्कमिश्रतुलसीमकरन्दवायुः ।
अन्तर्गतः स्वविवरेण चकार तेषां
सङ्क्षोभमक्षरजुषामपि चित्ततन्वोः ॥ ४३ ॥

ते वा अमुष्य वदनासितपद्मकोष-
मुद्वीक्ष्य सुन्दरतराधरकुन्दहासम् ।
लब्धाशिषः पुनरवेक्ष्य तदीयमङ्घ्रि-
द्वन्द्वं नखारुणमणिश्रयणं निदध्युः ॥ ४४ ॥

---

अर्थक्रियाकारित्वान्नेदं मायाविरचितमित्याह—**तस्येति** । स्वविवरेण स्वनासिकारन्ध्रेणान्तर्गतः प्रविष्टस्तस्य हरेः पदारविन्दयोः किञ्जल्कैः केसरैरिव स्थितैः रजोभिर्मिश्रा सम्पृक्ता या तुलसी तस्याः मकरन्देन मधुना युक्तो मन्दो वायुस्तेषां सनकादीनां चित्ततन्वोः संक्षोभं कञ्चन विकारं चकारेत्यन्वयः । विकारानुपपत्तौ का उपपत्ति[1]रिति तत्राह—**अक्षरजुषामिति** । वैराग्यादिगुणैरक्षरजुषां ब्रह्म सेवतां न्यासिनामपि । अनेन यद्यप्यपूर्वविकारसम्भावनाप्राप्तिर्नास्ति तथापि हरिचरणार्पिततुलसीमहिमातिशयद्योतनाय मनोविकासलक्षणविकारादानन्दाश्रुधारासंपातस्तदनु संक्षोभाद् रोमाञ्च इति सूचितम् । क्षुभ सञ्चलन इति धातोः ॥ ४३ ॥

मनश्चलनेनेन्द्रियचलनं तस्मात् तनोः सञ्चलनमिति नियमादतोऽयमपि कश्चन संक्षोभ इति ध्वनयन्नाह—**ते वा इति** । यो नित्यं स्वहृदन्तरपरोक्षीक्रियते स एवायमित्यतोऽमुष्येति । षिञ् बन्धन इति धातोः सितं बद्धं मुकुलितम्, असितं नवोत्फुल्लं वदनमेवासितपद्मकोशम् । अन्यथा सितं शुक्लं असितं कृष्णमिति शापप्रदानस्यानभीष्टत्वेन मुखस्य कार्ष्ण्यं जातम् । तदयुक्तम् उत्तरत्र शापानुमतिप्रतीतेः । यद्वा नेत्रयोर्नीलवर्णत्वेन तद्युक्तत्वात् वदनाख्यनीलपद्मकोशमुद्वीक्ष्य स्वयं वामनत्वाद्धरेः प्रांशुत्वादूर्ध्वमुखाः दृष्ट्वा लब्धाशिषः भगवदवयवेषु मुख्यमुखदर्शनात् प्राप्तपुण्योच्चयाः । सुन्दरतराधरश्च कुन्दवल्गुहासश्च[2] यस्मिन् स तथा तम् । पुनर्मुखदर्शनानन्तरं नखा एवारुणा रक्ता मणयस्तेषां श्रयणम् आश्रयणम् आश्रयं तदीयमङ्घ्रिद्वन्द्वमवेक्ष्य अवाङ्मुखा दृष्ट्वा मुखमारभ्य पादाद्यन्तं सर्वाङ्गमवलोक्य नितरां दध्युरित्यन्वयः । हृदि च निदध्युः । आलोकयन्निति वा । बहिष्ठस्य हृद्गतस्य चैकत्वमपश्यन् इत्यर्थः ॥ ४४ ॥

---

[1] कानुपपत्तिः–ग,घ,छ,ङ । [2] कुन्दवद्धवलहासश्च–ग,घ,ङ,च ।

पुंसां गतिं मृगयतामिह योगमार्गै-
ध्यानास्पदं बहुमतं नयनाभिरामम् ।
ते तद्वपु[1]र्दर्शयानमनन्यसिद्धै-
रौत्पत्तिकैः समगृणन् युतमष्टभोगैः ॥ ४५ ॥

कुमारा ऊचुः —
योऽन्तर्हितो हृदि गतोऽपि दुरात्मनां त्व-
मद्यैषि नो नयनमूलमनन्तराद्धः ।
यर्ह्येव कर्णविवरेण गुहां गतो नः
पित्रानुवर्णितरहो भवदुद्भवेन ॥ ४६ ॥

---

मनःसङ्कल्पेन वागिन्द्रियप्रवृत्तिदर्शनादयमपि कश्चन संक्षोभः सञ्जात इत्यभिनयन्तः स्तुवन्तीत्याह—**पुंसामिति** । ध्यानास्पदं उपासनाविषयम् । बहु पूर्णतायाम् इति धातोः, बहुत्वेन पूर्णत्वेन मतं ज्ञातम् । नयनान्यभिरमयति सुखयतीति नयनाभिरामम् । एवंविधं तद्वपुः दर्शयानं दर्शयन्तम्, अनन्यसिद्धैरन्यैरननुभूतैरौत्पत्तिकैः सहजैरष्टभोगैरणिमाद्यष्टैश्वर्यैर्युतं मिश्रितमभिन्नं हरिं समगृणन्नित्यन्वयः । गृण स्तुतौ इति धातुः ॥ ४५ ॥

गुरूपदिष्टगुणानुसङ्कीर्तनरूपत्वादियं स्तुतिः पारमार्थिकी, न लौकिकीत्याशयेनाह—**योऽन्तर्हित इति** । यस्त्वं दुरात्मनामशुभमनस्कानां हृदि गतोऽपि अन्तर्हितोऽसि । अत्यन्तसमीपवर्तिनोऽदर्शनवचनं स्तुतित्वाद् युज्यतां नाम, न परमार्थत इत्यत उक्तम्—**अनन्तराद्ध इति** । अनवसितमाहात्म्यादिदमपि किञ्चन माहात्म्यमित्यर्थः । स त्वमद्य नो नयनमूलमेषि चक्षुर्विषयं गतोऽसि[2] । किंगुणविशिष्टत्वेनेत्यत आह—**यर्हीति** । भवत उद्भवो जननं यस्य स तथा तेन, नः पित्रा, नाम्ना ब्रह्मणा, यर्हि येन लक्षणेनानुवर्णितरहः यथावदुपदिष्टरहस्यः हरिरस्मत्कर्णविवरेण हृदयगुहां गतोऽभूत्, तल्लक्षणविशिष्टत्वेनेति शेषः । अनेन सच्चिदानन्दलक्षणं भगवन्तमद्राक्षन् न तु मायामयमित्युक्तं भवति । एवकारेणोपदिष्टदृष्टयो रूपयोरेकत्वं द्रढयति ॥ ४६ ॥

---

[1] पौंसं वपुः–ग ।

[2] एतदनन्तरं अनेन हृदि ध्यातरूप एव दृष्ट इति ध्वन्यते—इत्यधिकपाठः–घ ।

तं त्वां विदाम भगवन् परमात्मतत्त्वं
सत्त्वेन सम्प्रति रतिं रचयन्तमेषाम् ।
यत् तेऽनुभावविदितैर्दृढभक्तियोगै-
रुद्ग्रन्थयो हृदि विदुर्मुनयोऽनुरागाः[1] ॥ ४७ ॥

नात्यन्तिकं विगणयन्त्यपि ते प्रसादं
किं चान्यदर्पितभयं भ्रुव उन्नयैस्ते ।
येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः
कीर्तन्यतीर्थयशसः कुशला रसज्ञाः ॥ ४८ ॥

---

इतोऽपि नेदं तत्कालोपपन्नमायामयरूपं किन्तु साक्षाज्जगज्जन्मादिकारणमितिभावेन स्तुवन्तीत्याह—**तं त्वामिति** । हे भगवन्, नः पित्रा यो जन्मादिकारणत्वेनोपदिष्टः तथेदानीं चक्षुर्विषयश्च तं त्वां परमात्मनः परब्रह्मणस्तत्त्वमनारोपितं रूपं विदाम विद्मः । कीदृशं त्वाम् ? सम्प्रति इदानीमेषां लोकानां सत्त्वेन गुणेन रतिं सुखं रचयन्तमुत्पादयन्तम् । सृष्ट्यादौ प्रवर्तमानस्यानारोपितरूपत्वे किं प्रमाणमित्याशङ्क्य सम्यज्ज्ञानिज्ञानं मानमित्याहुरित्याह—**यत् त इति** । ते तवानुभावस्य जगत्सृष्ट्यादिमहिम्नोऽनुभावेन[2] निश्चयज्ञानेन विदितैर्लब्धैर्दृढैर्भक्तियोगैर्विरागा विषयेषु शोभनाध्यासबुद्धिविधुराः अत एवोद्ग्रन्थय उन्मूलिताहङ्कारबन्धाः उत्पाटितपुत्रभार्यादिस्नेहरूपहृदयग्रन्थयो वा मुनयः सर्वज्ञाः परमहंसाः यत् तत्त्वं विदुरुपास्यापरोक्षीकुर्वते तादृक् तत्त्वात्मकं त्वां विद्म इत्यन्वयः ॥ ४७ ॥

इतोऽप्युपनिषत्कामिन्या परिष्वक्तं ब्रह्म त्वमेव, यतो भवत्कथारसायनस्वादुज्ञा मुक्तावानन्दसमृद्धिहेतुभूतभक्तिज्ञानमन्तरेण दर्शनमात्रेणापरिपक्वभक्तिज्ञानानां पुंसां योग्यां मुक्तिं नाकाङ्क्षन्त इत्याहुरित्याह—**नात्यन्तिकमिति** । आत्यन्तिकं प्रसादं भगवद्दर्शनमात्रेण लिङ्गशरीरात्ययसमये विद्यमानभक्तिज्ञानपरिपाकाभावात् सम्यगनभिव्यक्तानन्दं मोक्षमपि न विगणयन्ति विशिष्टोऽयमिति न बहुमन्यन्ते 'भक्तिज्ञानपरीपाकात् किञ्चित् पूर्वं च मुच्यते । दर्शनेन हरेस्तत्र नानन्दः पूर्णतां व्रजेत्' इति वचनात् । तव भक्त्या कथामृतपानतृप्तत्वाद् भ्रुव उन्नयैरुज्जृम्भणविशेषैरर्पितभयम् अन्यत् पारमेष्ठ्यादिपदम् । किञ्च किमु वक्तव्यम् । कुशला इत्यनेन 'मुमुक्षोः केवलो भक्तो मुक्तावपि सुखी भवेत्' इत्यतो मोक्षेच्छुभ्योऽनपेक्षकाणां मुक्तावानन्दोद्रेकः स्यादिति भक्त्यापादनमेव साधनीयमिति[3] बुद्धिपाटवं सूचयति । कीर्तन्यं कीर्तनीयं तीर्थं शुद्धं यशो यस्य स तथा तस्य । अत्र मुक्तीनां बाहुविध्यात्

---

[1] मुनयो विरागाः—इति पाठान्तरम् । [2] अनुभाव इति पदस्यावृत्त्या अर्थकथनमेतत् ।
[3] साधीय इति–प्र ।

कामं व्रजेम वृजिनैर्निरयेषु नष्टा-
श्चेतोऽलिवद् यदि नु ते पदयो रमेत ।
वाचश्च नस्तुलसिवद् यदि तेऽङ्घ्रिशोभाः
पूर्येत ते गुणगणैर्यदि कर्णरन्ध्रः ॥ ४९ ॥

प्रादुश्चकर्थ यदिदं पुरूहूत रूपं
तेनेश निर्वृतिमवापुरलं दृशो नः ।
तस्मा इदं[1] भगवते नम उद्विधेम
योऽनात्मनां दुरुदयो भगवान् प्रतीतः ॥ ५० ॥

इति श्रीमद्भागवते तृतीयस्कन्धे षोडशोऽध्यायः ।

---

तदधिकारिणां च तथात्वान्मुक्तावपि भेदः पारमार्थिकः । तद्व्यतिरेकत्वेनाणुरपि स्वगतो भेदो नास्ति । अनेकत्वे मिथो वैषम्येण नाश्यत्वापत्तेः प्रमाणविरोधाच्चेति द्योतितम् ॥ ४८ ॥

वयमपि त्वदङ्घ्र्येकशरणत्वादिदमेवाकाङ्क्षामहे नान्यदिति विज्ञापयन्तीत्याह—**काममिति** । अङ्घ्री शोभयन्तीत्यङ्घ्रिशोभाः । स्तुतिद्वारेणेति शेषः । निरयेषु पश्वादियोनिषु वृजिनैर्दुःखैर्नष्टाः क्लिष्टाः । 'यावत् परमभक्तैस्तु भुज्यते दुःखमुल्बणम् । तावन्मुक्तौ सुखोद्रेकस्तत्र चेद् भक्तिवर्धनम्' इति वचनार्थमभिप्रेत्य निरयप्राप्तिप्रार्थना क्रियत इत्यभिप्रायः ॥ ४९ ॥

सत्यां भक्तौ सर्वत्रानन्दोद्रेकः स्यात् तवापरोक्षसंभवाद् यथेहास्मदपराधमविगणय्येति भावेनाहुरित्याह—**प्रादुरिति** । पुरु विस्तीर्णं हुतं यशो यस्य स तथा हे पुरुहूत ! अलं निर्वृतिमापुरित्यनेनान्तर्दृष्टेः बाह्यदृष्टेः[2] स्पष्टत्वं सूचयति । तस्येयं प्रत्युपक्रियेत्याहुरित्याह—**तस्मा इति**[3] । यो भगवान् प्रतीतः प्रेक्षितो[4] भक्तैरिति शेषः । यश्च दुरात्मनां दुरुदयः दुःप्रकाशस्तस्मै भगवते इदमुत्कृष्टं नमः विधेम कुर्म इत्यर्थः ॥ ५० ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे षोडशोऽध्यायः ।

---

[1] तस्मादिदं—ङ । [2] अन्तर्दृष्टेरिति पञ्चमी बाह्यदृष्टेरिति षष्ठी । [3] तस्मादिति—ङ ।
[4] प्रतीक्षितो—ङ घ ग ।

॥ अथ सप्तदशोऽध्यायः ॥

ब्रह्मोवाच —

इति तद् गृणतां तेषां मुनीनां योगधर्मिणाम् ।
प्रतिनन्द्य जगदेदं विकुण्ठनिलयो विभुः ॥ १ ॥

भगवानुवाच —

एतौ वै पार्षदौ मह्यं जयो विजय एव च ।
कदर्थीकृत्य मां यद् वो [1]बह्वाधत्तामतिक्रमम् ॥ २ ॥

यस्त्वेतयोर्धृतो दण्डो भवद्भिर्मामनुव्रतैः ।
स एवानुमतोऽस्माभिर्मुनयो देवहेलनात् ॥ ३ ॥

तद् वः प्रसादयाम्यद्य ब्रह्म दैवं परं हि मे ।
तध्द्येवात्मकृतं मन्ये यत् स्वपुंभिरसत्कृताः ॥ ४ ॥

---

॥ अथ सप्तदशोऽध्यायः ॥

दुस्तरापत्तिपरिहाराय भक्त्या हरिरेव प्रार्थनीय इत्ययमर्थः प्रतिपाद्यतेऽस्मिन्नध्याये । तत्रादौ भक्तपराधीनोऽहमिति प्रकटयिष्यतो हरेः सनकादीन् प्रति स्नेहवचनप्रकारमाह—**इतीति** । योगः भक्तियोगः स एव धर्मः एषामस्तीति योगधर्मिणः तेषामिदं वक्ष्यमाणं तत् स्तवनं प्रतिनन्द्य । वैकुण्ठनिलय इत्यनेन प्रतीतं परिछिन्नत्वं निवारयति— **विभुरिति** । 'विभुः सर्वगते पत्यौ' इति यादवः ॥ १ ॥

मह्यमिति व्यत्ययेन जयविजययोः पार्षदप्राधान्यं सूचयति । मां कदर्थीकृत्याविगणय्याल्पप्रयोजनीकृत्येति[2] वा । तत्कुत इति तत्राह—**यद् व इति** । बह्विति क्रियाविशेषणम् । यथा बहुः पूर्णो भवति तथातिक्रममपराधमाधत्तामकुर्वातां यत् तस्मादिति शेषः ॥ २ ॥

तर्हि भवताप्येतौ दण्ड्याविति शङ्कित्वा युष्माकमस्माकं चैकमनस्कत्वाद् युष्माभिर्दत्त एव दण्डोऽस्माभिर्दत्त इत्याह—**यस्त्विति** । देवहेलनात् 'यावतीर्वै देवता' इति श्रुत्युक्तदेवापमानादित्यर्थः[3] ॥ ३ ॥

किञ्चात इति तत्राह—**तद् व इति** । तत् तेन दण्डानुज्ञानेन । किमेषां प्रसादनम् ? अत्राह **ब्रह्मेति** । सर्वेषामिति पदमध्याहृत्यान्वेतव्यम् । मे मम भक्तियुक्तं ब्रह्म विप्रकुलं सर्वेषां परदैवं पूज्यं

---

[1] बह्वधत्ताम्— इति पाठान्तरम् । [2] अप्रयोजनीकृत्य-च । [3] ब्रह्मादिदेवानामप्यपराधात्-इति याद्वपत्यम् ।

यन्नामानि च गृह्णाति लोको भृत्ये कृतागसि ।
सोऽसाधुवादस्तत्कीर्तिं हन्ति त्वचमिवामयः ॥ ५ ॥

यस्यामृतामलयशःश्रवणावगाहः
सद्यः पुनाति जगदाश्वपचं विकुण्ठः ।
सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्ति-
श्छिन्द्यां स्वबाहुमपि वः प्रतिकूलवृत्तिम् ॥ ६ ॥

यत्सेवया चरणपद्मपवित्ररेणोः
सद्यः क्षताखिलमलं प्रतिलब्धशीलम् ।
न श्रीर्विरक्तमपि मां विजहाति यस्याः
प्रेक्षालवार्थमितरे नियमोऽर्हते मत् ॥ ७ ॥

---

हि प्रसिद्धम् । मे परं मत्तात्पर्ययुक्तमिति वा । अन्यकृतापराधस्य स्वात्मन्यारोपणं कथम् ? अत्राह —**तद्धीति** ॥ ४ ॥

एतदेवोपपादयति—**यन्नामानीति** । ततः का हानिरित्यत आह—**स इति** । आमयः कुष्ठलक्षणः । अम रोग इत्यस्माद्धातोः स्वार्थे यञ् प्रत्ययः । [1]रोगमङ्गभङ्गं यापयतीत्यस्मिन्नर्थे णिचि वा ॥ ५ ॥

लोके पूज्यत्वाय हरिः ब्राह्मणेषु परमप्रियत्वं प्रतिपादयति—**यस्येत्यादिना** । यस्य ममामलामृतत्वप्रदयशःश्रवणादिलक्षणोऽवगाहः स्नानरूपप्रवेशः सद्यस्तत्क्षणादेव आश्वपचं जगत् पुनाति । भवद्भ्य उपलब्धा विस्तृता सुतीर्था सुपावनी कीर्तिर्यस्य स तथा सोऽहं विकुण्ठः वो युष्माकं प्रतिकूलवृत्तिं स्वबाहुमपि छिन्द्यामित्यन्वयः । 'सर्वोत्तमोऽपि भगवान् विप्रादेः पूजनाय च । गुणलब्धिं ततो ब्रूते नित्यपूर्णगुणोऽपि सन् । ब्रूयुश्चान्ये क्वचित् तत्तु तदुक्तेरनुसारतः । उपादत्ते वरांश्चापि लोकानां मोहनाय च' इति वचनेन कथं पूर्णगुणस्य स्वतस्तृप्तस्य हरेरन्यतो गुणलब्धिरिति चोद्यं निरस्तम् ॥ ६ ॥

विप्राणां चरणपद्मपवित्ररेणोः सेवया सेवाविडम्बनेन प्रतिलब्धशीलं विडम्बिततत्स्वभावम् । इदं केवलं विडम्बनार्थं मोहनार्थमुच्यत इति भावेनात्मानं विशिनष्टि—**सद्य इति** । नामसङ्कीर्तनादिना सद्यस्तत्क्षणादेव क्षतं नष्टं अखिलं जनस्य मलम् अघं येन स तथा तम् । 'मलं किट्टाघयोर्न स्त्री' इति यादवः । स्वरतत्वेन विरक्तं तदपेक्षारहितमिव स्थितमपि मां श्रीर्न जहातीति यद् यस्मात् स्वबाहु-

---

[1] अत्र अमम् इत्युपस्कर्तव्यम् ।

नाहं तथाद्मि यजमानहविर्विताने-
श्च्योतद्घृतप्लुतमदन् हुतभुङ्मुखेन ।
यद् ब्राह्मणस्य मुखतश्चरतोऽनुघासं
तुष्टस्य मय्यवहितैर्निजकर्मपाकैः ॥ ८ ॥

येषां बिभर्म्यहमखण्डविकुण्ठयोग-
मायाविभूतिरमलाङ्घ्रिरजः किरीटैः ।

---

मपि च्छिन्द्यामिति पूर्वेणान्वयः । 'अनुक्ताश्च गुणा विष्णोरुक्ता दोषा न तस्य तु । अज्ञानाद् दोषविज्ञानं गुणज्ञानं यथार्थतः' इति श्रुत्या विप्रचरणसेवया हरेर्विनष्टमलत्वं किं न स्यादिति चोद्यं निरस्तम् । संदिग्धवचनं तु मोहार्थत्वादिति[1] ज्ञायते । 'विप्राणां चापि भक्तानां अन्येषां च जनार्दनः । ब्रह्मणः शङ्करादापि देवताभ्यस्तथैव च । आत्मनश्च श्रियश्चैव सकाशात् प्रियतामपि । पूज्यतामत्ययुक्तं च वदेत् क्वापि विमोहयन्' इत्यनेन परिहर्तव्यम् । स्त्रीत्वाविशेषात्[2] मां न जहातीति किं माहात्म्यं विशिष्योच्यत इति तत्राह—**यस्या इति** । मदितरेषां ब्रह्मादीनां नियमः तपोलक्षणो यस्याः श्रियः प्रेक्षालवार्थं कटाक्षनिरीक्षणलेशार्थमर्हत इत्यन्वयः । यद्वा मदितरेषां नियमो यस्याः प्रेक्षालवार्थमर्हते सा श्रीः मम चरणपद्मपवित्ररेणोः सेवया प्रतिलब्धशीलं, निरन्तरं मदुपासनास्वभावमिति क्रियाविशेषणं, मां न जहतीति यत् तस्मादेवंविधमाहात्म्योऽहं युष्मद्विरोधकरं स्वबाहुमपि च्छिन्द्यामिति । विप्रेभ्यः किमपि प्रयोजनमपेक्षमाणं किम्? नेत्याह—**सद्य इति** । सद्य इत्यनेनेतरसेवकेभ्यः स्वसेवकानां कालक्षेपमन्तरेण फलप्राप्तिं ध्वनयति । श्रियो मत्तः प्रयोजनसद्भावेऽपि न मम तस्या अर्थ इत्याह—**विरक्तमिति** । वौ विशिष्टे मयि रक्तं स्वरतमित्यर्थः । स्वरतस्यान्यतः प्रयोजनापेक्षां धिक्करोति—**अपीति** ॥ ७ ॥

वदान्यान् पुरुषान् शिक्षमाण इव पुनरपि विप्रान् स्तौतीत्याह—**नाहमिति** । अहं वितानैः उत्तमकल्पैः यज्ञैः करणैश्च्योतद् गलद् घृतं, तेनाज्येन प्लुतं स्यन्दमानं यजमानस्य हविर्हुतभुङ्मुखेनादन् तथा तृप्तिं न यामि अहं यथा मय्यवहितैरपि तैर्निजकर्मणां पाकैः फलैस्तुष्टस्य चरतो भुञ्जानस्य ब्राह्मणस्य मद्भक्तिलक्षणस्य विप्रस्यानुघासं प्रतिकबलं मुखेनाद्मि अदनेन प्रीतो भवामीति यत् तस्मान्मेऽतिप्रियत्वाद् विप्राः पूज्या इति भावः ॥ ८ ॥

इदानीं स्पष्टमसुरजनमोहकवचनमिदमिति प्रकटयन् विप्रान् स्तौतीत्याह — **येषामिति** । अखण्डा पूर्णा विकुण्ठा विगतभेदा च । योगमाया स्वरूपेच्छा तया विभूतिर्विविधभवनं 'आदित्या-

---

[1] मोहार्थमितीति स्यात् । [2] स्त्रीत्वविशेषात्-क ।

**विप्रांस्तु को न विषहेत यदर्हणांभः**
**सद्यः पुनाति सहचन्द्रललामलोकान् ॥ ९ ॥**
**ये मे तनूर्द्विजवरान् दुदुहुर्मदीयान्**
**भूतान्यलब्धशरणानि च भेदबुध्या ।**
**द्रक्ष्यन्त्यघक्षतदृशो ह्यभिमन्यवस्तान्**
**गृध्रा रुषा मम कृषन्त्यधिदण्डनेतुः ॥ १० ॥**
**ये ब्राह्मणान् मयि धिया क्षिपतोऽर्चयन्ति**
**तुष्यद्धृदः स्मितसुधोक्षितपद्मवक्त्राः ।**
**वाण्यानुरागकलयात्मजवद् गृणन्तः**
**संबोधयन्त्यहमिवाहमुपाकृतस्तैः ॥ ११ ॥**

---

नामहं विष्णुः' इत्यादिरूपं यस्य स तथोक्तः। अहं किरीटैर्येषां विप्राणाममलाङ्घ्रिरजो बिभर्मि को नु पुमान् तान् विप्रान् न विषहेत? सोढा न भवेदित्यन्वयः। एकस्मिन्नवतारेऽपि विप्रावज्ञानं नास्तीति द्योतनाय किरीटैरिति बहुवचनम्। केवलं विप्रबहुमानार्थं तदङ्घ्रिरजोभरणमित्याशयेनात्मानं विशिनष्टि—**यदर्हणेति**। यदर्हणांभः यस्य मम ब्रह्मणा कृतपादप्रक्षालनोदकं गङ्गाख्यमम्भः चन्द्र-ललामेन चन्द्रशेखरेण सह वर्तमानान् लोकान् जनान् पुनाति ॥ ९ ॥

इदमपि महिमान्तरकथनम्। विप्रद्वेषोऽपि मद्द्वेष एव अधःपातहेतुत्वादित्याह—**ये म इति**। ये पुरुषाः मे तनूः प्रतिमास्थानीयान् मदीयान् मद्भक्तान् द्विजवरान् तथा, 'शरणं गृहरक्षित्रोः' इत्यभिधानादलब्धशरणानि रक्षकरहितानि भूतानि भेदबुद्ध्या वैलक्षण्यबुद्ध्या दुद्रुहुः पीडयाञ्चक्रुः ये चाघेन क्षतदृशः अन्धीकृतदृष्टयः अभितो मन्युः येषां ते तथा द्रक्ष्यन्ति तान् ममाधिनेतुः दण्डनायकस्य यमस्य गृध्राः श्येनाः कृषन्ति नेत्राण्युत्पाट्य भक्षयन्तीत्यन्वयः ॥ १० ॥

इदानीं मद्भक्तब्राह्मणसत्कारपरिपाकं वच्मीत्याह—**ये ब्राह्मणानिति**। तुष्यद्धृदः हृष्यन्मनसः स्मिताख्यसुधया उक्षितमासिक्तं पद्मवक्त्रं येषां ते तथा। अनुरागकलया स्नेहबुद्ध्या। कल बन्धन इति धातोः। वाण्या आत्मजवत् गृणन्तः प्रशंसन्तः, अहमिव यथाहं विप्रान् संबोधयामि तथा संबोध-यन्ति, ये मद्भक्ता रुषा क्षिपतः भर्त्सयतः ब्राह्मणानर्चयन्ति[1]। कथम्? मयि धिया हरिरेषु विशेषतः

---

[1] ये क्षिपतोऽपि ब्राह्मणानर्चयन्तीत्यर्थः।

तन्मे स्वभर्तुरवसायमलक्षमाणौ
युष्मद्व्यतिक्रमगतिं प्रतिपद्य सद्यः ।
भूयो ममान्तिकमितां तदनुग्रहो मे
यत् कालतोऽप्यविरमो हृतयोर्विवासः ॥ १२ ॥

ब्रह्मोवाच —

अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम् ।
आस्वाद्य मन्युदष्टानां तेषामात्माप्यतृप्यत ॥ १३ ॥

---

सन्निहित इति बुद्ध्या । अहं तैर्विप्रार्चकैरुपाकृतो वशीकृत इत्यन्वयः ॥ ११ ॥

नन्वेवमुभयेषां[1] युष्माकं शापोऽभिमतश्चेत् कदापि शापमोक्षो नेत्यतस्तन्मोक्षमाह—**तन्मे स्वभर्तुरिति** । विप्राणां ममात्यन्तं प्रियत्वात् तद्विरोधिनो मद्विरोधिन एवेति यस्मात् तस्मात् युष्मद्व्यतिक्रमगतिं युष्मदपराधफलमसुरत्वादिलक्षणं प्रतिपद्य सद्यः भूयो ममान्तिकमितामागच्छतामित्यन्वयः । भगवतोक्तमिदं तात्कालिकं न तु तत्त्वमित्यत्राह—**मे स्वभर्तुरिति** । स्वभर्तुर्मेऽवसायं विप्रानुरागलक्षणं निश्चयम् अलक्षमाणौ विप्रार्चनादिलक्षणैरप्यजानन्तौ । अज्ञानं च ब्रह्मशापनिमित्तं तयोरिति ध्वनयति । न हि वैकुण्ठे अज्ञानादिसंभवोऽस्ति । ननु ममांतिकमितामित्यनेन शापमोक्षलक्षणः कोऽनुग्रहविशेषो ध्वनितः स्यादिति तत्राह—**तदनुग्रह इति** । हृतयोर्युष्मच्छापेन सुरेतरगतिं गमितयोरेतयोर्विवासः वैकुण्ठादसुरादिव्यवस्थापनं कालतः बहुना कालेनाप्यविरमोऽवसानरहितमिति यत् यस्मात् तस्मात् स मेऽनुग्रहः पुनर्मम लोकप्राप्तिलक्षणः शापमोक्ष इत्यर्थः । मदनुग्रहाभावे बलवता ब्राह्मणशापेन कदाप्यसुरयोनिमोक्षो न स्यादिति भावः । हिशब्देन सनकादीनामपि शापमोक्षानुमतिरस्तीति द्योतयति । यतः स्वामिनोऽभिमतं भृत्यैरप्यनुमन्तव्यम् ॥ १२ ॥

कोपाहिदष्टानां तेषां शापमोक्षानुमतिः कथं संगच्छत इति तत्राह—**अथेति** । तस्य हरेः उशतीमभीष्टप्रदाम् ऋषिकुल्यामृषिकुलस्तुतिपराम्, अन्यत्र मुनिकुलप्रियां देवीमभिधेयमणिभिर्द्योतमानाम् अन्यत्र देवादिस्नानक्रीडायोग्यां सरस्वतीं वाचम् अन्यत्र नदीम् । आस्वाद्य श्रवणादिनाऽन्यत्र स्नानादिना । भगवद्दिदृक्षाभङ्गाङ्कुरितेन मन्युना सर्पेण दष्टानां तेषां सनकादीनामात्मा मनः अन्यत्र बाह्याभ्यन्तरविशिष्टो देहः अतृप्यत कोपापगमेन भगवदुक्त्युद्भूतानन्दपूर्णोऽभूत् । अन्यत्र विषापगमेन प्रकृतिस्थितोऽभूदित्यर्थः ॥ १३ ॥

---

[1] उभयोरित्यर्थः ।

सतीं व्यादाय शृण्वन्तो लघ्वीं गुर्वर्थगह्वराम् ।
विगाह्यागाधगम्भीरं न विदुस्तच्चिकीर्षितम् ॥ १४ ॥

ते योगमाययारब्धपारमेष्ठ्यमहोदयम् ।
प्रोचुः प्राञ्जलयो विप्राः प्रहृष्टाः कम्पितत्वचः ॥ १५ ॥

ऋषय ऊचुः —

न वयं भगवन् विद्मस्तव देव चिकीर्षितम् ।
कृतो मेऽनुग्रहश्चेति यदध्यक्षः प्रभाषसे ॥ १६ ॥

ब्रह्मण्यस्य[2] परं दैवं ब्राह्मणाः किल ते प्रभो ।
विप्राणां देवदेवानां भगवानात्मदैवतम्[3] ॥ १७ ॥

---

वचनमाधुर्यास्वादनेन मनसस्तृप्तिर्न त्वर्थज्ञानेन । तस्यानवगाहादिति भावेनाह — **सतीमिति** । मुखं व्यादाय शृण्वन्तः, शब्दतो लघ्वीं मितां गुरुणा महताऽर्थेन गह्वरामप्रवेश्यां वाचं विगाह्य विचार्य गाध प्रतिष्ठायाम् इति धातोः अगाधमतलस्पर्शमत एव गम्भीरमवगाढुमशक्यं तस्य हरेश्चिकीर्षितं किञ्चन कर्तुमिष्टं कञ्चन क्षेप्तुं वेति न विदुः । कृ विक्षेपे इति धातुः ॥ १४ ॥

तर्हि यावज्ज्ञानमपि किञ्चन नोचुः किमिति तत्राह — **ते योगेति** । सनकादयः योगमायया स्वरूपेच्छया जातेन भ्रूभङ्गेनारब्ध उत्पादितः पारमेष्ठ्यमहोदयः ब्रह्मपदसंबन्धिप्रभूतैश्वर्यं यस्य स तथा तं, हरिं प्रोचुरित्यन्वयः । कम्पितत्वचः रोमाञ्चितगात्राः ॥ १५ ॥

किमूचुरित्याशङ्क्य न विदुस्तच्चिकीर्षितमिति हृद्गतं वाचोद्गलयन्तीत्याह — **न वयमिति** । अध्यक्षः सर्वेश्वरस्त्वं 'स एवानुमतो दण्डः' 'तदनुग्रहो मे' इत्यादिना ममानुग्रहः कृत इति प्रभाषस इति यत्[1] तस्मात् तव चिकीर्षितं न विद्म इति ॥ १६ ॥

असदुक्तेरन्यथाकरणासंभवात् कस्मादज्ञानं भवतामित्याशङ्क्यास्मद्वचना[4]दित्याहुरित्याह — **ब्रह्मण्यस्येति** । किलेत्यनेनास्मदितरेषां मोहकं अस्माकं तु स्तुतिपरमिदमिति सूचितम् । तत्कथमित्यत्राहुरित्याह — **विप्राणामिति** । हे देव, आत्मदैवतं कुलदेवता ॥ १७ ॥

---

[1] यत् यस्मात् तस्मात्-प्र । [2] ब्रह्मणस्तु-छ । [3] भगवानेव दैवतं-ग ।
[4] अस्मान् प्रति यद् वचनं तस्माद् इत्यर्थः ।

त्वत्तः सनातनो धर्मो रक्ष्यते तनुभिस्तव ।
धर्मस्य परमो गुह्यो निर्विकारो भवान् मतः ॥ १८ ॥

तरन्ति ह्यञ्जसा मृत्युं निवृत्ता यदनुग्रहात् ।
योगिनः स भवान् किंस्विदनुगृह्येत यत् परैः ॥ १९ ॥

---

कुतो हेतोरित्यत उक्तम्—**त्वत्त इति** । विप्रादिसर्ववर्णैर्ब्रह्मचर्याद्याश्रमिभिश्चानुष्ठेयः सनातनो वेदवेद्यत्वेन नित्यो धर्मस्त्वत्तो भूत्वा वर्तते क्षेत्रादिवत् । कालतो द्रव्यतो नोत्साद्यते । कथं वृत्तिरत्राहुरित्याह—**रक्ष्यत इति** । तनुभिर्मत्स्याद्यवतारैः । 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत' इत्यादेः । लटा सनातनत्वमवधारयति । भवान् क इति तत्राहुरित्याह—**धर्मस्येति** । 'वायुना वै गौतम सूत्रेण' इत्यादिश्रुत्या सर्वधारकत्वेन मतो धर्मो वायुस्तस्य मातृत्वेन परोत्तमा मा श्रीर्यस्य स तथोक्तः[1]। लक्ष्म्यादिमुक्तसमुदायाद् वाय्वाद्यमुक्तजगतोऽपि श्रेष्ठो भवानित्यर्थः । अत्र किं प्रमाणमित्युक्तम्—**गुह्य इति** । धर्मस्येत्यनुवर्तते । अपीतिपदमध्याहृत्य वाक्ययोजना । गुह संवरण इति धातोः वायोरपि गुह्यः संवार्यः दुर्ज्ञेय इत्यर्थः[2] । नीलिम्ना आकाशादिवत् केनापि विकारेण ज्ञेयः किं न स्याद् इत्यत उक्तम्—**निर्विकार इति** । उक्तचोद्यस्य किमुत्तरमित्यत उक्तम्—**मत इति** । भवानिति वर्तते । मनु अवबोधन इति धातोः । 'एष सर्वेश्वरः' इत्यादिना 'निर्विकारः सदा शुद्धः' इत्यादिना च भवानवबुद्धः सम्यक् ज्ञात इत्यादिकं[3] मानमुत्तरमुक्तं भवति । अनेन वायोरपि दुर्ज्ञेयत्वे शशशृंगतुल्यमिदमिति चोद्यं निरस्तम् । तेन तद्विषयज्ञानसाकल्यं निषिध्यते । न तु ज्ञानमात्रम् । अत एव गुह्य इत्युक्तं समाधिना ज्ञातुं शक्यो न घटादिवत् सुज्ञेय इति । यद्वा धर्मस्य मुख्यविषयो भवानेव । न स्वर्गादिरित्याहुरित्याह—**धर्मस्येति** । कुतो न स्वर्गादिरित्यत उक्तम्—**निर्विकार इति** । स्वर्गादेः प्राकृतत्वेनानित्यत्वादस्य तु निर्गुणत्वेन स्वतोऽन्यतो वा तद्धर्मराहित्यात् । धर्मकारयितृत्वेन निरुपाधिस्वातंत्र्यात् तत्फलदत्वस्य च नित्यत्वसंभवादिति भावः ॥ १८ ॥

मुक्तामुक्तप्रपञ्चोत्तमत्वमर्थादुक्तम् । तदिदानीं घटयन्तीत्याह—**तरन्तीति** । निवृत्ता निवृत्तिधर्मनिष्ठा योगिनो ज्ञानिनो यस्यानुग्रहात् मृत्युं संसारमञ्जसा तरन्ति हि । 'यस्य प्रसादात्' इत्यादि श्रुतिसिद्धत्वात् । संसारोन्मूलकत्वेन स मुक्तामुक्तोत्तमो भवान् परैरन्यैर्ब्राह्मणादिभिरनुगृह्येतानुग्रहपात्रीक्रियेतेति यत् तत् किंस्वित् ? विप्रस्तुतिमन्तरेण न किमपीत्यर्थः ॥ १९ ॥

---

[1] धर्मस्य वायोः परा उत्तमा मा श्रीर्यस्य स धर्मस्य परमः । क्वचित् सापेक्षत्वेऽपि समासः ।
[2] धर्मस्य तदभिमानिनो यमस्यापीति यादुपत्यम् । [3] इत्यादि श्रुत्यादिकं—ङ ।

यं वै विभूतिरुपयात्यनुवेलमन्यै-
रर्थार्थिभिः स्वशिरसा धृतपादरेणुः ।
धन्यार्पिताङ्घ्रितुलसीनवदामधाम्नो
लोकं मधुव्रतपतेरिव कामयाना ॥ २० ॥

यस्तां विविक्तचरितैरनुवर्तमानां
नात्याद्रियत् परमभागवतप्रसङ्गः ।
स त्वं द्विजानुपथपुण्यरजःपुनीतिः
श्रीवत्सलक्ष्म किमगा भगभाजनत्वम् ॥ २१ ॥

---

लक्ष्म्या उत्तमत्वं स्पष्टयन्तीत्याह—**यं वा इति** । वा इत्यनेन 'मम योनिरप्स्वन्तः' इत्यादिवाक्यं प्रमाणयति । विभूतिः श्रीः अन्यैर्ब्रह्मादिभिः विरक्तिभक्त्याद्यर्थार्थिभिः । नित्यप्राप्तभगवदनुग्रहायाः नित्यमुक्तायाः प्राप्यप्रयोजनान्तराभावादनुधावनं[1] किमर्थमित्याशङ्क्य सेवायाः आनन्दैकरूपत्वेन स्वभावत्वेऽपि लोकविडम्बनमेव प्रयोजनमिति भावेन विशिंषन्तीत्याह—**धन्येति** । धन्यैर्भक्तिज्ञानादिगुणपूर्णत्वेन स्वर्गादिफलानिच्छुभिरर्पितमङ्घ्रितुलसीनवदाम यत् तस्य धाम्नो धारकस्य तव तुलस्याः लोकं स्थानं चरणयुगलमुच्चोरसि स्थिता स्पर्धयेव कामयमाना ममैतत्स्थानं भूयादिति भावं दर्शयन्ती यं निषेवत[2] इत्यर्थः । न चेदमविज्ञातं हरिणेति भावेनोक्तम्—**मधुव्रतपतेरिति** । मधुनो रसस्य व्रतं भुक्तिर्येषां ते मधुव्रताः सारभोजिनः तेषां पत्युः । 'व्रतं' विष्णुवर्षेज्यातपोमासाग्निभुक्तिषु' इत्यभिधानम् । [3]लब्ध्वापि वक्षसि पदमित्यस्मादुक्त एवार्थः ॥ २० ॥

एवमितरेभ्योऽधिकं निषेवमाणायामस्यां किमपि प्राप्यप्रयोजनान्तराभावात् पूर्वस्मादपरविशेषो नास्ति । किन्तु भागवतानां गुणतारतम्यप्रस्तावे परमभागवतत्वेन प्रशंसाप्रसङ्ग एवेत्याह — **यस्तामिति** । विविक्तचरितैरनन्यसाधारणसेवाकरणैरनुवर्तमानां तां श्रियं यः नात्याद्रियत् गुणानां प्रतीयमानत्वात्तदधिकार्थोक्त्या आदरं नाकरोत् । किन्तु परमभागवतत्वेन प्रसङ्गो यस्य स तथोक्तः[4] । एवंविधमाहात्म्यः

---

[1] उपायनं–क ।

[2] वक्षस्थलस्थानमनन्यसाधारणं लब्ध्वाऽपि लक्ष्मीर्द्वितीयं तदङ्घ्र्याख्यं स्थानमपि तुलसीदेवीं ततो निष्कामयित्वा स्वकीयमेव साधयितुं भगवन्तमुपधावतीवेत्यर्थः—इत्यनन्ततीर्थाः । यादुपत्ये तु स्वरूपार्थो धामशब्द इति विवक्षित्वा नवमालिकास्वरूपाया तुलस्या लोकं स्थानमिति व्याख्यातम् । [3] तात्पर्योदाहृतमेतत् ।

[4] यो भवान् विविक्तचरितैरसाधारणपरिचरणैरनुवर्तमानां तां श्रियं नात्याद्रियत् स्त्रैणवन्न कामितया आदृतवान् । ननु तर्हि रमायां भगवदादरप्रतिपादकवाक्यविरोध इत्यत उक्तम्—परमभागवतेति । परमभागवतत्वेन सर्वोत्तमभगवद्भक्तत्वेन तस्यां प्रसङ्गः प्रकृष्टस्नेहो यस्य स तथोक्तः—इति यादुपत्यम् ।

धर्मस्य ते भगवतस्त्रियुग त्रिभिः स्वैः
पद्भिश्चराचरमिदं द्विजदेवतार्थम् ।
नूनं भृतं तदभिघातिरजस्तमश्च
सत्त्वेन नो वरदया तनुवा निरस्य ॥ २२ ॥

---

स त्वं द्विजानामनुपथेनानुगमनेन तत्पादपुण्यरजसा पुनीतिः शुद्धिर्यस्य स द्विजानुपथपुण्यरजःपुनीतिः । पथ गतौ इति धातुः । श्रीवत्सलक्ष्म श्रीवत्साख्यलाञ्छनमगाः किम् ? भगभाजनत्वं सौभाग्यपात्रत्वं वा अगच्छः किमित्याक्षेपः । अत इदं भगवदुक्तं सर्वं विप्रस्तुतिपरमिति सिद्धम् । यद्ययं शास्त्रतात्पर्यार्थः स्यात् तर्हीदं स्तुतिपरं स्यात् तत्कुत इतीयमाशङ्का 'हरिभक्तिर्हरेः प्रीतिर्ज्ञानानन्दादयो गुणाः। अधिकारे च मुक्तौ च ब्रह्मवाय्वोश्च तत्स्त्रियोः । शेषवींद्रहराणां च तत्स्त्रीणां वासवादिनाम् । यथाक्रमं तु विज्ञेया भूमौ कारणतोऽन्यथा । देहस्य लक्षणं चैव भूमावप्यन्यथा भवेत् । ब्रह्मादिषु क्रमेणैव नित्यं स्याद्देहलक्षणम् । श्रियोऽधिकगुणाः सर्वे सर्वेभ्यो नियमेन तु । उक्ताश्चैवाप्यनुक्ताश्च ततो विष्णोर्न संशयः' इत्यनेन परिहृतेति ॥ २१ ॥

इतोऽपि द्विजकुलस्य गोपनीयत्वाभिप्रायेण भगवता द्विजावनादिकं क्रियत इति विज्ञापयन्तीत्याहुः—**धर्मस्येति** । नूनमन्यत्प्रयोजनमन्तरेण धर्मस्य सर्वधारकस्य । 'धारणाद् भगवान् धर्मः' इत्यादेः । भगवतस्ते तव स्वैः स्वरूपभूतैस्त्रिभिरनन्तासनवैकुण्ठक्षीरसागरशायिभिः पद्भिरंशैर्मूर्तिभिश्चराचरमिदं विश्वं द्विजानां देवतानां प्रयोजनमुद्दिश्य भृतं रक्षितमित्यन्वयः । हे त्रियुग त्रियुगेष्ववतारो यस्य स तथा तस्य सम्बुद्धिः । तत्प्रतिषेधपक्षनिर्मूलनाभावे रक्षणं कथं सङ्गच्छत इत्यत उक्तम्–**तदभिघातीति** । तपआद्यनुष्ठानविरोधिरजस्तमश्च तनुवा मूर्त्या निरस्याभिभूय । कथं मूर्तिरित्यत उक्तम्[1]—**नो वरदयेति** । अस्माकं ज्ञानप्रदाननिरतया । किमाख्ययेत्यस्यापि इदमेवोत्तरं वरदया कपिलाख्यया । 'कपिलो वरदश्चैव विकलश्चेति कथ्यते' इत्यतो गुणवाचकस्य विशेष्याभिधेयत्वं[2] कथमिति निरस्तम् । तापसस्य शान्तस्य कपिलस्य क्षत्रियवदायुधाद्यग्रहणात् कथं विरोधिविनाशकत्वमित्यत उक्तम्—**सत्त्वेनेति** । सत्त्वगुणवर्धनेन । निरास इति शेषः । तृतीयया सत्त्वगुणस्य कारणमात्रत्वम् । न मुख्यत्वम् । कपिलस्यैव मुख्यत्वं ज्ञायते । शरेण राम इतिवत् । एवं विशेषार्थः कस्मादयं कल्प्यत इति चोद्यं 'अनन्तासनवैकुण्ठक्षीरसागरगैस्त्रिभिः । रक्षां करोति भगवान् कपिलः सत्त्ववर्धनात् । असत्त्वोऽपि रजश्चैव तमश्चापि निरस्य तु' इत्यनेन निरस्तम् ॥ २२ ॥

---

[1] केयं मूर्तिरित्यत उक्तम्-प्र । [2] विशेष्यमभिधेयं यस्येति बहुव्रीह्याश्रयणेन विशेष्याभिधायकत्वमित्यर्थः ।

न त्वं द्विजोत्तमकुलं यदिहात्मगोपं
गोप्ता वृष स्वर्हणेन ससूनृतेन ।
तर्ह्येव नङ्क्ष्यति शिवस्तव देव पन्था
लोकोऽग्रहीष्यदृषभस्य हि यत् प्रमाणम् ॥ २३ ॥

तत्तेऽनभीष्टमिव सत्त्वनिधेर्विधित्सोः
क्षेमं जनाय निजशक्तिभिरुद्धृतारेः ।
नैतावता त्र्यधिपतेर्बत[1] विश्वभर्तु-
स्तेजःक्षतिस्त्ववनतस्य स ते विनोदः ॥ २४ ॥

---

हे वृष इन्द्र परमैश्वर्यवारिधे । यो द्विजदेवतारक्षैकनिरतः स त्वं यद् यदीह जगति आत्मैव गोपो गोपको यस्य तदात्मगोपं द्विजोत्तमकुलं सुसूनृतेन शोभना मधुरा वाग् यस्य तत् तथा तेन स्वर्हणेन लोकमान्यसत्कारेण न गोप्ता न रक्षितासि देव क्रीडादिगुणपूर्ण तर्हि तदानीमेव तव शिवः शुद्धः पन्थाः तत्त्वविषयो ज्ञानमार्गः शिष्टाचारश्च नङ्क्ष्यति उत्सन्नो भविष्यति । तत्र हेतुगर्भविशेषणमाह—**लोक इति** । लोक इतरो जनः । ऋषभस्य सद्धर्मप्रवृत्तिसमर्थस्य यत् प्रमाणं तद्ध्येवाग्रहीष्यत् । 'यद्यदाचरति श्रेष्ठः' इत्यादेः ॥ २३ ॥

ततः किमनिष्टं तत्राह—**तत्त इति** । यस्मादसुरा अप्रिया अपि लोकस्य यथा दुःखजनकत्वेन न तथा हरेः । नित्यानन्दपूर्णत्वात् । दुःखप्रवेशानवकाशात् । किन्तु निषेधयोग्यज्ञानविषयमप्रियं भगवतो मतम् । तदुक्तम् 'अप्रिया असुराश्चापि नित्यानन्दान्न लोकवत् । निषेध्यबुद्धिविषयमप्रियं हि हरेर्मतम्' इति । तस्मादनभीष्टमित्युक्तम् । सत्त्वनिधेरित्ययं हेतुः । सुखकरमार्गनाशनं तत्ते तवानभीष्टमिव, न दुःखजनकत्वेन । किन्तु निषेध्यत्वेनैवानभीष्टम् । कुत इति तत्राह—**विधित्सोरिति** । अशक्तस्येच्छया कोऽर्थ इति तत्राह—**निजेति** । नन्वेवंविधस्य तव मानभङ्गहेतुः विप्रप्रणामः किमिति क्रियत इति तत्राह—**नैतावतेति** । विप्रावनतस्य तवावनत इत्येतावता तेजःक्षतिः मानभङ्गलक्षणतेजोभङ्गो नास्ति । तत्र हेतुगर्भविशेषणमाह—**त्र्यधीति** । न केवलं त्रिलोकीमात्रस्याधिपतिस्तत्रत्यानां समस्तानामविशेषेण वोढेत्याह—**विश्वभर्तुरिति** । न चानेन किमपि प्रयोजनमित्याह—**स त इति** । विप्रप्रणामो विनोदो लीलाविलासः । तुशब्देन प्रयोजनान्तरं निवारयति ॥ २४ ॥

---

[1] त्र्यधिपतेस्तव—इति पाठान्तरम् ।

यं वानयोर्दममधीश भवान् विचष्टे
वृत्तिं च वा तद्नु मन्महि निर्व्यलीकम् ।
अस्मासु वा य उचितो ध्रियतां स दण्डो
येऽनागसौ वयमयुङ्क्ष्महि किल्बिषेण ॥ २५ ॥

भगवानुवाच —

एतौ सुरेतरगतिं प्रतिपद्य सद्यः
संरम्भसम्भृतसमाध्यनुबद्धयोगौ ।
भूयः सकाशमुपयास्यत आशु यो वः
शापो मयैव विहितस्तदवैत विप्राः ॥ २६ ॥

ब्रह्मोवाच —

अथ ते मुनयो दृष्ट्वा नयनानन्दभाजनम् ।
वैकुण्ठं तदधिष्ठानं विकुण्ठं च स्वयम्भुवम् ॥ २७ ॥

---

अधीश निरुपमचरिताखंडेश भवाननयोर्यथावत् यं दमं दण्डं विचष्टे पश्यति अथवात्रैव वृत्तिं स्थितिलक्षणां वयं तत् तयोरेकं निर्व्यलीकं मन्महि अनुजानीमहे । पूर्वदंण्डादल्पो[1] दण्डोऽभिमतश्चेत् सोऽस्त्वित्यभिप्रेत्य यं वा दममित्युक्तम् । ये वयमनागसौ स्वतो निष्पापौ किल्बिषेण दोषेणायुङ्क्ष्महि योजितवन्तस्तेष्वस्मासु य उचितो दण्डः स वा ध्रियतामित्यनेनापि हरेः विप्रप्रियत्वमुक्तम् । दण्डाबलत्वं[2] च ध्वनितम् । किलेर्बुक्चेति सूत्रात् किल श्वैत्यक्रीडनयोरित्यस्माद्धातोः टिषच्[3] प्रत्ययो भवति बुगागमश्च । दोषेऽभिधेयेऽनेन किल्बिषमिति भवतीति । अनेन स्वत एतौ निर्दोषौ निमित्तात् सदोषाविति सूचितम् ॥ २५ ॥

सनकाद्युक्तेरुत्तरत्वेन पुनरुक्तिं करोति—**एताविति** । संरम्भो द्वेषोत्कर्षः । तेन सम्भृतः सम्पादितो यः समाधिर्मनसः एकाग्रतारूपस्तेनानुबद्धो योगो भक्तियोगो ययोस्तौ तथा । उपयास्यतः उपयातमिति । व्यत्ययः, तत्क्रियायाः 'अन्तर्भक्ता बहिः क्रुद्धा हिरण्याद्या हरिं प्रति । सर्वक्रुद्धाः शम्बराद्या अन्तःक्रोधवशास्तथा' इति विशेषं सूचयति[4] तयोः ॥ २६ ॥

अथोत्तरकथाप्रसङ्गः क इति तत्राह—**अथेति** । शापमोक्षानन्तरम् ॥ २७ ॥

---

[1] पूर्वदण्डादन्यो–ङ छ ग घ । [2] दण्डाचलत्वं–छ ग । [3] टिषच्—अयं छपाठः । अन्यत्र—ष्विच् इति इलच् इति च । [4] व्यत्ययः विशेषं सूचयतीत्यन्वयः ।

भगवन्तं परिक्रम्य प्रणिपत्यानुमान्य च ।
प्रतिजग्मुः प्रमुदिताः शंसन्तो वैष्णवीं श्रियम् ॥ २८ ॥

भगवाननुगावाह यातं मा भैष्टमस्तु शम् ।
ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छे मतं तु मे ॥ २९ ॥

एतत् पुरैव निर्दिष्टं रमया क्रुद्धया यदा ।
तदापवारिता द्वारि विशन्ती मय्युपारते ॥ ३० ॥

मयि संरम्भयोगेन निस्तीर्य ब्रह्महेलनम् ।
प्रत्येष्यतं निकाशं मे कालेनाल्पीयसा पुनः ॥ ३१ ॥

द्वाःस्थावादिश्य भगवान् विमानश्रेणिभूषणम् ।
सर्वातिशयया लक्ष्म्या जुष्टं स्वं धिष्ण्यमाविशत् ॥ ३२ ॥

तौ तु गीर्वाणऋषभौ दुस्तराद्धरिलोकतः[2] ।
हतश्रियौ ब्रह्मशापादभूतां विगतस्मयौ ॥ ३३ ॥

---

अनुमान्यानुज्ञाय । श्रियं स्वरूपभूताम् । 'स्वरूपश्रीस्तथा भार्या द्वेधा श्रीस्तु हरेर्मता' इति[1] ॥२८॥

मा भैष्टं भयं न कुरुतम् । शं सुखमस्तु । इच्छे इच्छामि । अपराधान्तरसद्भावान्मतमित्युक्तम् । ॥ २९ ॥

कोऽसावपराध इति तत्राह—**एतदिति** । अपवारिता निवारिता । योगनिद्रामुपगते ॥ ३० ॥

ब्रह्मशापसन्ताराय संरम्भ एव भक्तियोगवरमुपदिशन्निवाह—**संरम्भेति** । एतयोर्भक्तियोगोऽस्तीति कस्मादवगतमितीदं चोद्यम् 'अन्तर्भक्ता बहिर्वैराः हिरण्याद्याः हरेर्मताः । तत्र भक्त्याभवन पूता द्वेष आवेशकान् गतः । ब्रह्मजा असुरा ये तु विष्णोः पार्षदतां गताः । कल्याद्याश्च हरेर्द्वेषमन्तः कृत्वा तमो गताः' इत्यनेन निरस्तम् । अनेन संरम्भो नीचफलो भक्तियोग एव ब्रह्मशापनिस्तारक इत्युक्तं भवति । पुनः शापाद् व्यावृत्तौ स्वरूपावाप्तौ कालक्षेपो नास्तीत्याशयेनोक्तम्—**कालेनेति** ॥ ३१ ॥

द्वाःस्थौ द्वारपालौ ॥ ३२ ॥

दुर्मदानां दण्ड एव मदशान्तिहेतुरिति भावेनाह—**तौ त्विति** । गीर्वाणऋषभौ इति सन्धि-

---

[1] वचनादिति शेषः । [2] हरिलोकतः हरिलोक एवेति यादुपत्यम् ।

तदा विकुण्ठधिषणात् तयोर्निपतमानयोः ।
हाहाकारो महानासीद् विमानाग्र्येषु पुत्रकाः ॥ ३४ ॥

तावेव ह्यधुना प्राप्तौ पार्षदावृषभौ हरेः
दितेर्जठरमाविष्टं काश्यपं तेज उल्बणम् ॥ ३५ ॥

तयोरसुरयोरद्य तेजसा यमयोर्हि वः ।
आक्षिप्तं तेज एतर्हि भगवांस्तद् विधित्सति ॥ ३६ ॥

विश्वस्य यः स्थितिलयोद्भवहेतुराद्यो
योगेश्वरैरपि दुरत्यययोगमार्गः ।
क्षेमं विधास्यति स नो भगवांस्त्र्यधीश-
स्त्रातास्मदीयविमृशेन कियानिहार्थः ॥ ३७ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे सप्तदशोऽध्यायः ॥

---

कार्याभावादेव श्रैष्ठ्य[1]मौपचारिकमिति दर्शयति । दुस्तराद् ब्रह्मशापतः विगतस्मयौ नष्टमदावभूतामित्यन्वयः ॥ ३३ ॥

मदाभावात् तत्रैवावस्थानमभूत् किम् ? नेत्याह—**तदेति** । विकुण्ठधिषणात् वैकुण्ठलोकात् । विमानाग्र्येषु स्थितानामिति शेषः ॥ ३४ ॥

कथाप्रसङ्गं प्रकृते सङ्गमयति—**तावेवेति** । दितेरुदरं प्रविष्टं कश्यपस्य विद्यमानं काश्यपं तेजो वीर्यं प्राप्तौ ॥ ३५ ॥

असुरयोरसुराविष्टयोः आक्षिप्तमभिभूतम् । तस्य प्रतीकारमुपदिशति—**एतर्हीति** । एतर्हि इदानीम् । तत् तस्य प्रतीकारं विधित्सति कर्तुमिच्छति । कालान्तरे क्रियमाणत्वादपराभ्रपूरणस्य चापेक्षितत्वादिदानीमिच्छैवेत्यतो विधित्सतीति ॥ ३६ ॥

अधुनैव भवता कश्चिदुपायो निरूपणीय इत्याशङ्क्योक्तमेव विवृणोति—**विश्वस्येति** । विश्वस्य स्थित्यादिहेतुरित्यनेनास्य तत्कर्तृकत्वं सूचयति । योगेश्वरैर्ब्रह्मादिभिरपि दुरत्ययो दुर्ज्ञेयो योगमार्ग उपायप्रकारो यस्य स तथा । क्षेमं प्राप्तरक्षां विधास्यतीत्यनेन नेदानीं काल इति सूचयति । उत्तरकाले को निश्चय इत्यत उक्तम्—**त्रातेति** । त्राणशीलत्वात् करिष्यत्येवेति निश्चयोपपत्तेः । हेत्वन्तरं

---

[1] देवश्रैष्ठ्यम्–प्र

॥ अथ अष्टादशोऽध्यायः ॥

**मैत्रेय उवाच —**

**निशम्यात्मभुवा गीतं कारणं शङ्कयोज्झिताः ।**
**ततः सर्वे न्यवर्तन्त त्रिदिवाय दिवौकसः ॥ १ ॥**

**दितिस्तु भर्तुरादेशादपत्यपरिशङ्किनी ।**
**पूर्णे वर्षशते साध्वी पुत्रौ प्रसुषुवे यमौ ॥ २ ॥**

**उत्पाता बहवस्तत्र निपेतुर्जायमानयोः ।**
**दिवि भुव्यन्तरिक्षे च लोकस्य च भयावहाः[3] ॥ ३ ॥**

**सहाचला भुवश्चेलुर्दिशः सर्वाः प्रजज्वलुः ।**
**सोल्काश्चाशनयः पेतुः केतवश्चार्तिहेतवः ॥ ४ ॥**

---

चाह—**त्र्यधीश इति** । त्रयाणां लोकानामीश्वराः इन्द्रादयस्तेषामीश्वरः[1] ऐश्वर्यकर्तृत्वेन स्वामी । त्राणोपेक्षायामिन्द्राद्यैश्वर्यमपि न स्यादिति । फलितमाह—**अस्मदीयेति** । अस्मदीयेन विमर्शेनोपाय-निर्मार्गणेन कियानर्थः ? न कोऽपीत्यर्थः । 'स्यादध्यधिक ईश्वरे' इति यादवः ॥ ३७ ॥

इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे सप्तदशोऽध्यायः ॥

॥ अथाष्टादशोऽध्यायः ॥

अनन्यवध्ययोर्हिरण्यकशिपुहिरण्याक्षयोर्निहन्तुर्हरेरमितमहिम्नो[2]ऽवगतत्वादस्मिन् भगवति भक्तिः कर्तव्येति तन्महिमा प्रतिपाद्यतेऽस्मिन्नध्यायद्वये । तत्रादौ देवानां त्रिदिवगमनं वक्ति—**निशम्येति** । आत्मभुवा ब्रह्मणा । गीतं कथितम् ॥ १ ॥

अपत्यपरिशङ्किनी अपत्ययोर्हरेर्नाशशङ्कावती । यमौ यमलौ ॥ २ ॥

आभ्यां दैत्याभ्यां यथा जनोपद्रवा भवन्ति तथा सूचकानुत्पातानाह—**उत्पाता इति** ॥ ३ ॥

सहाचलाः सपर्वताः । प्रदेशबहुलत्वाद् भुव इति बहुवचनम् । सोल्का उल्कापातसहिताः । अशनयः निर्घाताः, केतवश्चोदयं चक्रुः ॥ ४ ॥

---

[1] त्रयाणां लोकानामधय ईश्वराः, तेषामीश इति त्र्यधीशः । [2] अमितमहितमहिम्नो–ग ।
[3] लयावहाः–ग ।

ववौ वायुः सुदुस्पर्शः फट्काराराववान्[1] मुहुः ।
उन्मूलयन् नगपतीन् वात्यानीको रजोध्वजः ॥ ५ ॥

उल्लसत्तडिदम्भोदघटया नष्टभागणे ।
व्योम्नि प्रविष्टतमसा न स्म व्यादृश्यते पदम् ॥ ६ ॥

चुक्रोश विमना वार्धिरुदूर्मिक्षुभितोदरः[3]
सोदपानाश्च सरितश्चुक्षुभुः शुष्कपङ्कजाः ॥ ७ ॥

मुहुः परिधयोऽभूवन् सराह्वोः शशिसूर्ययोः ।
निर्घातरवनिर्ह्रादा विवरेभ्यः प्रजज्ञिरे ॥ ८ ॥

अन्तर्ग्रामेषु मुखतो वमन्त्यो[4] वह्निमुल्बणम् ।
सृगाला अपि टङ्कारैः प्रणेदुरशिवाः शिवाः ॥ ९ ॥

---

'फट्कारश्चैव फूत्कारस्तथा किलकिलादयः । अनुकारशब्दा विज्ञेया ये चान्ये तादृशा मताः' इत्यभिधानात् फट्कारोऽनुकारशब्दः । तद्वान् फट्कारारावावान् । तादृशा इति टङ्कारादयः[2] । वात्यानां मण्डलवायूनामनीकं समूहो यस्य स तथा । रज एव ध्वजो यस्य स रजोध्वजः ॥ ५ ॥

उल्लसन्त्यस्तडितो येषु ते तथा उल्लसत्तडिदम्भोदाः मेघाः । तेषां घटया मालया नष्टो भानां नक्षत्राणां गणो यस्मिंस्तत् तथा तस्मिन् । 'तारकं तारका' इतिवत् 'भं भा' इति नामद्वयम् ॥ ६ ॥

वार्धिः समुद्रः । सोदपानाः वापीकूपादिभिः सहिताः । शुष्काणि म्लानानि पङ्कजानि यासु तास्तथा ॥ ७ ॥

परिधयः परिवेषाः । निर्घातरवो निर्मेघगर्जनशब्दः तस्य निर्ह्रादाः प्रतिध्वनयः । विवरेभ्यः पर्वतगुहादिभ्यः ॥ ८ ॥

सृगालाः पुमांसः । शिवाः सृगालस्त्रियः । अपि टङ्कारैः निन्दिता[5]नुकारस्वरैः । प्रणेदुरित्यनेन नाशं सूचयति । तदुक्तम्—'अपि सम्भावनाप्रश्नगर्हाशङ्कासमुच्चये' । 'नाशस्तत्र सृगालानां शिवानां चान्यथा स्वरे' इति ॥ ९ ॥

---

[1] फट्कारानीरयन्-प्र । [2] उदाहृताभिधानगततादृशशब्दार्थकथनमेतत् । [3] ऊर्मिभिः क्षुभितोदरः-ग घ ङ । [4] वमन्तो-ग ङ । [5] निन्दितेत्यपेरर्थः ।

संगीतवद् रोदनवदुन्नमय्य शिरोधरान् ।
व्यमुञ्चन् विविधा वाचो ग्रामसिंहास्ततस्ततः ॥ १० ॥

खरोष्ट्राः कर्कशैः क्षत्तः खुरैर्घ्नन्तो धरातलम् ।
खात्काररभसा मत्ताः पर्यधावन् वरूथशः ॥ ११ ॥

रुदन्तो रासभत्रस्ता नीडादुदपतन् खगाः ।
घोषेऽरण्ये च पशवः शकृन्मूत्रमकुर्वत ॥ १२ ॥

गावोऽत्रसन्नसृग्दोहास्तोयदाः पूयवर्षिणः ।
व्यरुदन् देवलिङ्गानि द्रुमाः पेतुर्विनानिलम् ॥ १३ ॥

ग्रहान् पुण्यतमानन्ये भगणाश्चापि दीपिताः ।
अतिचेरुर्वक्रगत्या युयुधुश्च परस्परम् ॥ १४ ॥

दृष्ट्वान्यांश्च महोत्पातान् नतत्तत्त्वविदः प्रजाः ।
ब्रह्मपुत्रानृते भीताः मेनिरे विश्वसम्प्लवम् ॥ १५ ॥

तावादिदैत्यौ सहसा व्यज्यमानात्मपौरुषौ ।
ववृधातेऽश्मसारेण कायेनाद्रिपती इव ॥ १६ ॥

---

ग्रामसिंहाः सारमेयाः । शिरोधराः कण्ठाः । तानुन्नमय्य ऊर्ध्वीकृत्य । संगीतवन्नाट्यगानवत् ॥ १० ॥

खराः क्रूरा उष्ट्राः खरोष्ट्राः । खात्कारोऽप्यनुकारशब्दः । तस्य रभसा वेगेन ॥ ११ ॥

रासभा गर्दभाः । गर्दभादिध्वनित्रस्ताः खगाः पक्षिणो नीडादुदपतन् ॥ १२ ॥

गावः सौरभेय्यः । अत्रसन् भीताः । देवलिङ्गानि प्रतिमाः ॥ १३ ॥

अन्ये दुष्टग्रहाः ॥ १४ ॥

अन्यान् भूकम्पादीन् । न तयोः जयविजययोः तत्त्वं शापादिनिमित्तं विदन्ति जानन्ति । न तेषामुत्पातादीनां तत्त्वं जयविजयनिमित्तं विदन्तीति वा ॥ १५ ॥

इदानीं दैत्ययोर्भावं वक्ति—**ताविति** । सहसा बलेन । पौरुषं पराक्रमः । अश्मवत् सारेण दृढेन ॥ १६ ॥

दिविस्पृशौ हेमकिरीटकोटिभि-
निरुद्धकाष्ठौ स्फुरदङ्गदैर्भुजैः ।
गां कम्पयन्तौ चरणैः पदे पदे
कट्या सुकाञ्च्यार्कमतीत्य तस्थतुः ॥ १७ ॥

प्रजापतिर्नाम तयोरकार्षीद्
यः प्राक् स्वदेहाद् यमयोरजायत ।
तं वै हिरण्यकशिपुं विदुः प्रजाः
यं तं हिरण्याक्षमसूत सा ततः ॥ १८ ॥

चक्रे हिरण्यकशिपुर्दोर्भ्यां ब्रह्मवरेण च ।
वशे सपालान् लोकांस्त्रीनकुतोमृत्युरुद्धतः ॥ १९ ॥

हिरण्याक्षोऽनुजस्तस्य प्रियः प्रीतिकृदन्वहम् ।
गदापाणिर्दिवं यातो युयुत्सुर्मृगयन् रणम् ॥ २० ॥

तं वीक्ष्य दुःसहजवं रणत्काञ्चननूपुरम् ।
वैजयन्त्या स्रजा जुष्टमसंन्यस्तमहागदम् ॥ २१ ॥

मनोवीर्यमहोत्सिक्तमधृष्यमकुतोभयम् ।
भीता निलिल्यिरे देवास्तार्क्ष्यत्रस्ता इवाहयः ॥ २२ ॥

---

कोटिभिरिति बहुवचनं चतुरस्रापेक्षया । काष्ठाः दिशः ॥ १७ ॥

तयोर्नामकरणं वक्ति—**प्रजापतिरिति** । प्रजापतिः कश्यपः तयोर्नामाकार्षीदित्यन्वयः । कथम् ? अत्राह–**य इति** । यमयोस्तयोर्मध्ये यः स्वदेहात् प्रागजायत जातस्तं हिरण्यकशिपुं विदुर्वै । तयोर्माता सा ततः पश्चाद् यमसूत प्रजास्तं हिरण्याक्षं विदुरित्यर्थः ॥ १८ ॥

पूर्वजस्य जयस्य दिग्विजयं वक्ति—**चक्र इति** । न कुतोऽपि बहिरन्तः शुष्कादेरपि मृत्युर्यस्य सोऽकुतोमृत्युः ॥ १९ ॥

अनुजस्य दिशां जयं विस्तृत्याह—**हिरण्याक्ष इति** । युयुत्सुर्योद्धुकामः ॥ २० ॥

रणत्काञ्चननूपुरं क्वणत्कनकपादवलयम् । 'पुष्पैश्चतुर्गुणां मालां वैजयन्तीं विदुर्बुधाः' इत्यभिधानाच्चतुर्गुणिता वैजयन्ती नाम ॥ २१ ॥

मनोभिमतवीर्यमदेनोत्सिक्तमुद्रिक्तम् । निलिल्यिरे निलीनाः । तार्क्ष्यो गरुडस्तेन ॥ २२ ॥

स वै तिरोहितान् दृष्ट्वा सहसा स्वेन दैत्यराट् ।
सेन्द्रान् देवगणान् क्षीबानपश्यद् व्यनदद् भृशम् ॥ २३ ॥

ततो निवृत्तः क्रीडिष्यन् गम्भीरं भीमनिस्वनः[1] ।
विजगाहे महासत्त्वो वार्धिं मत्त इव द्विपः ॥ २४ ॥

तस्मिन् प्रविष्टे वरुणस्य सैनिका
याद‍ोगणाः सन्नधियः ससाध्वसाः ।
अहन्यमाना अपि तस्य वर्चसा ।
प्रधर्षिता दूरतरं प्रदुद्रुवुः[2] ॥ २५ ॥

स वर्षपूगानुदधौ महाबल-
श्चरन् महोर्मीः श्वसनेरिता मुहुः ।
गुर्व्याभिजघ्ने गदया विभावरी-
मासेदिवांस्तात पुरं प्रचेतसः ॥ २६ ॥

तत्रोपलभ्यासुरलोकपालको
यादोगणानामृषभं प्रचेतसम् ।
स्मयन् प्रलब्धुं प्रणिपत्य नीचव-
ज्जगाद मे देह्यधिराज सङ्गरम् ॥ २७ ॥

त्वं लोकपालाधिपतिर्बृहच्छ्रवा
वीर्यावहो दुर्मदवीरमानिनाम् ।

---

सहसा बलेन ॥ २३ ॥ सन्नधियः नष्टबुद्धयः । प्रधर्षिताः अभिभूताः ॥ २५ ॥

तात विदुर । प्रचेतसो वरुणस्य नाम्ना विभावरीं पुरमासेदिवान् प्राप्तः, महत्या गदयाभिजघ्न इत्यन्वयः ॥ २६ ॥

प्रलब्धुं विप्रलब्धुम् । स्मयन् माद्यन् । नीचवत् म्लेच्छवदेकहस्तेन नत्वा ॥ २७ ॥

बृहच्छ्रवाः लोकव्याप्तकीर्तिः । दुष्टो मदो दुर्मदः तेन वीराः वयमित्यात्मानं मन्तुं शीलमेषामस्तीति दुर्मदवीरमानिनः । तेषां वीर्यमात्मन्यावहति सन्निधापयतीति वीर्यरहितान् करोतीति वीर्या-

---

[1] भीमनिस्वनम्-ग घ ङ । [2] विदुद्रुवुः-ग ।

विजित्य लोकेऽखिल दैत्यदानवान्
यद् राजसूयेन पुराऽयजत् प्रभो ॥ २८ ॥
स एवमुत्सिक्तमदेन विद्विषा
दृढं प्रलब्धो भगवानपां पतिः ।
रोषं समुत्थं शमयन् स्वया धिया
व्यवोचदङ्गोपशमं गता वयम् ॥ २९ ॥
पश्यामि नान्यं पुरुषात् पुरातनाद्
यः संयुगे त्वां रणरङ्ग[2]कोविदम् ।
आवारयिष्यत्यसुरर्षभेहितं[3]
मनस्विनो यं वृणुते[4] भवादृशाः[5] ॥ ३० ॥
तं वीरमारादभिपद्य विस्मयः
शयिष्यसे वीरशये श्वभिर्वृत्तः ।
यस्त्वद्विधानामसतां प्रशान्तये
रूपाणि धत्ते सदनुग्रहेच्छया ॥ ३१ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे अष्टादशोऽध्यायः ।

---

वहः । एतदेव विवृणोति—**विजित्येति** । राजसूयेन यज्ञेनायजदिति यदतो दुर्मदवीरमानिनां वीर्यावहत्वादधिराजत्वाच्च मे युद्धं देहीति गतेनान्वयः ॥ २८ ॥

वि निषेधमेवावोचत् । कथमित्यत उक्तम्–**अङ्गेति** । यद् वा वि पृथग्भूतं पुरुषमेवावोचत् ॥२९॥

स क इति तत्राह—**पश्यामीति** । आवारयिष्यति आवृणोति सम्यक् निगेत्स्यतीति वा । तत्र रुचिं जनयति—**मनस्विन इति** ॥ ३० ॥

स कुत्रेति विचारो मा भूदित्याह—**तमिति** । वीरं शूरम् । आरात् निकटमधुनैव । वीराः शेरतेऽस्मिन्निति बाहुलकाधिकरणे[6] अच् । यद्वा पुंसि संज्ञायां घः प्रायेणेत्यधिकरणे घः । वीरशयो रणाङ्गणस्तस्मिन् । मम विरूपेण[7] तेन सङ्गमः कथं घटत इति शङ्का मा भूदित्याह—**यस्त्वद्विधानामिति** । प्रशान्तये विनाशाय । वराहादिरूपाणि । यत्तु औत्पत्तिकजयभाजनानां देवादीनां

---

[1] किल–ङ । [2] रणमार्गे–ग ङ । [3] असुरर्षभाहितः–ग घ । [4] गृणते–ङ । [5] भवादृशः–ङ । [6] बाहुलकोऽधिकरणे इति स्यात् । [7] नीरूपेण–प्र ।

॥ अथ एकोनविंशोऽध्यायः ॥

**मैत्रेय उवाच —**

**तदेवमाकर्ण्य जलेशभाषितं**
**महामनास्तद् विगणय्य दुर्मदः ।**
**हरेर्विदित्वा गतिमङ्ग नारदाद्**
**रसातलं संविविशे त्वरान्वितः ॥ १ ॥**

**ददर्श तत्राविजितं धराधरं**
**प्रोन्नीयमानावनिमग्रदंष्ट्रया ।**
**मुष्णन्तमक्ष्णाम्बुरुहारुणश्रियं**
**जहास चाहो वनगोचरो मृगः ॥ २ ॥**

**आहैनमेह्यज्ञ महीं विमुञ्च नो**
**रसौकसां विश्वसृजेयमर्पिता ।**

---

जयोऽनयोः कथमिति शङ्का इयं ' न देवानां प्रजापानां विजेता वरतो विना । बलेन विद्यया वापि न समस्तत्पतीन् विना । वरोऽपि तादृशो यावच्छरीरं नान्यदेहगः ' इत्यनेन परिहर्तव्येति ॥ ३१ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे अष्टादशोऽध्यायः ।

॥ अथ एकोनविंशोऽध्यायः ॥

एकमर्थमनेकधा प्रतिपद्यमानो महामनाः । तद् वरुणोक्तं विगणय्यावगणय्य[1] । विचार्य वा । आगच्छेति[2] । यद्यपि विशतेः संपूर्वस्य स्वापार्थत्वं तथाप्यत्र जले नेत्रे निमील्य प्रवेशाभिप्रायेणोक्तम् ॥ १ ॥

अग्रदंष्ट्रया दंष्ट्राग्रेण प्रकर्षेणोर्ध्वं नीयमानावनिर्येन स तथा तं धराधरम्[3] । पर्वतं किम् ? नेत्याह— **अविजितमिति** । अक्ष्णा अम्बुरुहारुणश्रियं रक्तपद्मदलकान्तिं मुष्णन्तं चोरयन्तं वने जले गवि च भूमौ चरतीति वनगोचरो मृगो वराहः ॥ २ ॥

ननु भुवि यतमानो वने जले च दृग्विषयोऽभूदहो इति प्रहस्य तिरश्चीनो गतः किम् ? नेत्याह

---

[1] अवज्ञाय–प्र । [2] अस्यान्वयश्छिन्नस्यः । [3] भूवराहमित्यर्थः ।

न स्वस्ति यास्यस्यमुया ममेक्षितः
सुराधमासादितसूकराकृते ॥ ३ ॥
त्वं नः सपत्नैरभयाय किं वृतो
यो मायया हंस्यसुरान् परोक्षजित् ।
त्वां योगमायाबलमल्पपौरुषं
संस्थाप्य मूढं प्रमृजे सुहृच्छुचः ॥ ४ ॥
त्वयि स्थिते गदया शीर्णशीर्ष-
ण्यस्मद्भुजच्युतया ये च तुभ्यम् ।
बलिं हरन्त्यृषयो ये च देवाः
स्वयं सर्वे न भविष्यन्त्यमूलाः ॥ ५ ॥
स तुद्यमानोऽरिदुरुक्ततोमरैर्दंष्ट्राग्रगां गामुपलभ्य भीताम् ।
तोदं मृषन् निरगादम्बुमध्याद् ग्राहाहतः सकरेणुर्यथेभः ॥ ६ ॥

---

—**आहेति** । विश्वसृजा ब्रह्मणा रसौकसां दैत्यानामर्पिता दत्ता । अमुया भूम्या । सुरा अधमा यस्मात् स सुराधम इति तात्पर्यार्थः । अनेन हिरण्याक्षस्यान्तर्भक्तिं ध्वनयति । प्रातीतिकेन द्वेषं प्रकटयति । यथासम्भवमुत्तरत्राप्येवमूहनीयम् ॥ ३ ॥

अस्माकं शत्रुभूतैर्देवैरभयाय वृतत्वान्मायया सूकरादिव्याजेनासुरान् नो हंसि मारयसि । अन्यत्र नोऽभयाय[1] सपत्नैर्वृतः किं यस्त्वं मायया असुरान् हंसीति । कीदृशस्त्वम् ? परोक्षजित् परोक्षेणा-प्रत्यक्षतया चौर्येण जयतीति । [2]अक्षाणीन्द्रियाणि जयतीत्यक्षजित् अत एव परः । योगमायाबलं कपटोपायबलम् अत एवाल्पपौरुषं त्वां संस्थाप्य हत्वा सुहृदां शुचः प्रमृज इत्यन्वयः । [3]स्वरूपेच्छाबलं स्वसमपुरुषसमूहरहितम् एकचित्ते[4] सम्यक् स्थापयितुं योग्यम् ऊढं भक्त्या हृतं कृत्वा सर्वत्र सुहृदहं[5] संसारशुचः प्रमृज इत्यन्वयः ॥ ४ ॥

इदानीं बाह्यद्वेषमुद्गलयति—**त्वयीति** । अमूला मूलाश्रयरहिताः ॥ ५ ॥

तस्यान्तरभक्तिं विदधान इव बाह्यद्वेषं सहमानो यदर्थं जलमज्जनं तत् करोमीति मन्यमान उद-मज्जदित्याह—**स इति** । उपलभ्य दृष्ट्वा । करेणुर्हस्तिनी ॥ ६ ॥

---

[1] नो भयाय–प्र । [2] अन्यत्रेत्युपस्कर्तव्यम् । [3] अन्यत्रेत्युपस्कर्तव्यम् । [4] रहितमेव चित्ते–प्र ।
[5] द्वितीययोजनायां तु–संस्थाप्यम् ऊढं प्रमृजे सुहृत् शुचः—इति च्छेदः । सुहृदिति कर्तृ ।

तं निःसरन्तं सलिलादनुद्रुतो
हिरण्यकेशो द्विरदं यथा झषः ।
करालदंष्ट्रोऽशनिनिःस्वनोऽब्रवीद्
गतह्रियां किं त्वसतां विगर्हितम्[1] ॥ ७ ॥

स गामुदस्तात् सलिलस्य गोचरे
विन्यस्य तस्यामदधात् स्वसत्त्वम् ।
अभिष्टुतो विश्वसृजां प्रसूनै-
रापूर्यमाणो विबुधैः पश्यतोऽरेः ॥ ८ ॥

परानुषक्तं तपनीयोपकल्प-
महागदं काञ्चनचित्रिताङ्गम् ।
मर्माण्य[2]भीक्ष्णं प्रतुदन्तं दुरुक्तैः
प्रचण्डमन्युः प्रहसंस्तं बभाषे ॥ ९ ॥

भगवानुवाच —
सत्यं वयं भो वनगोचरा मृगा
युष्मद्विधान् मृगये ग्रामसिंहान् ।

---

हरेरभीष्टकार्यमध्ये हिरण्याक्षेण किमकारीत्याह—**तमिति** । अनुद्रुतोऽनुयातः । हिरण्यकेशो हिरण्याक्षः ॥ ७ ॥

त्रिलोक्यामेकीभूयागतायामप्यबिभ्यतो हरेः किमेकेन हिरण्याक्षेणानुयातेनेति भावेन भूमेः प्रतिष्ठापनप्रकारं वक्ति—**स गामिति** । गां भूमिम् । उदस्तादुपरि । गोचरे अदूरप्रदेशे । स्वसत्त्वं स्थैर्यलक्षणं स्वबलम् ॥ ८ ॥

अथ जले भूमिं प्रतिष्ठाप्य पृष्ठतोऽनुद्रुतं[3]रिपुमविगणय्य हरिणा किं कृतम् ? अत्राह—**परानुषक्तमिति** । परानुषक्तं पृष्ठतोऽनुगतम् । तपनीयोपकल्पा सुवर्णाभरणभूषिता महती गदा यस्य तथा तम् । काञ्चनैराभरणैश्चित्रितान्यलङ्कृतान्यङ्गान्यवयवा यस्य स तथा तम् । प्रहसन्नित्यनेन बाह्यकोपलक्षणं निरुणद्धि । इदं महतां लक्षणम् ॥ ९ ॥

किमाहेत्यत आह—**सत्यमिति** । जलशायित्वाद् वनगोचरा जलविषयाः ज्ञानिभिर्मृग्यत्वात् मार्गणाच्च मृगा इत्येतत् सत्यम् । तत्र केषां मार्गणं क्रियत इत्यत उक्तम्—**युष्मद्विधानिति** ।

---

[1] प्रकृते युद्धे तव पलायनं निन्दितमिति भाव इति यादुपत्यम् । [2] मर्मण्यभीक्ष्णं-ङ ।
[3] जलमध्ये रिपुमविगणय्य-घ ।

न मृत्युपाशैः प्रतियुक्तस्य वीराः
विकत्थनं तव गृह्णन्त्यभद्र ॥ १० ॥
एते वयं न्यासहरा रसौकसां
गतह्रियो गदया द्राविितास्ते ।
तिष्ठामहेऽथापि कथञ्चिदाजौ
स्थेयं क्व यामो बलिनोत्पाद्य वैरम् ॥ ११ ॥
त्वं यद् रथानां किल यूथपाधिपो
घटस्व नोऽस्वस्तय आश्वदुद्रुहः ।
संस्थाप्य चास्मान् प्रमृजाश्रु स्वकानां
यः स्वां प्रतिज्ञां नातिपिपर्त्यसभ्यः[1] ॥ १२ ॥
सोऽधिक्षिप्तो भगवता प्रलब्धश्च रुषा भृशम् ।
आजहारोल्बणं क्रोधं क्रीड्यमानोऽहिराडिव ॥ १३ ॥

---

ग्रामसिंहान् शुनः । मृत्युपाशैः प्रतियुक्तस्य बद्धस्य पुंसो विकत्थनमसम्बद्धभाषणम् ॥ १० ॥

न्यासहरा निक्षेपहारिणः । रसौकःसु स्थितेषु कथं निक्षेपहरणमित्यत उक्तम्—**गतह्रिय इति** । तद्वद् गतह्रीत्वेन भवानपि द्रवति चेत् तुल्यः समाधिरित्यत उक्तम्—**तिष्ठामह इति** । बलिना रिपुणा वैरमुत्पाद्य कथञ्चिदाजौ स्थेयं स्थातव्यम् । क्व कुत्र यामः ? गन्तव्यप्रदेशाभावात् । अथ तस्मात् तिष्ठामहे आत्मानं प्रकाश्य स्थितिं कुर्मः । प्रकाशनस्थेयाख्ययोश्चेति सूत्रादात्मनेपद-प्रयोगः ॥ ११ ॥

नाहं बलीति नेत्याह—**त्वमिति** । रथानामिति रथिनो लक्ष्यन्ते । रथानां रथिनां यूथपाधि-पस्त्वं नोऽस्मान् अस्वस्तये नाशाख्यामङ्गलायादुद्रुहः द्रोहमकार्षीरिति यत् तत् किल क्रीडनम्[2] । असुराणां हिंसनं विहारस्वभावो हि । अतो युद्धाय घटस्वेत्यन्वयः । किल श्वैत्यक्रीडनयोः इति धातुः । ततः किं फलम् ? अत्राह—**संस्थाप्येति** । इयं तव प्रतिज्ञा । अस्या अपालने तवा-प्रशस्तकर्मत्वं स्यादित्याह—**यः स्वामिति** । अतिपिपर्ति प्रशस्य पालयति । पॄ पालनपूरणयोः । ‘अतिः स्यादधिकार्थोक्तौ प्रशंसायामतिक्रमे’ इति ॥ १२ ॥

आविष्टासुरभावनिमित्तं बाह्यक्रोधभावमाह—**स इति** । प्रलब्धः वाचा वञ्चितः क्रीड्यमानोऽ-निष्टक्रीडाविषयं क्रियमाणः पीड्यमान इति ॥ १३ ॥

---

[1] असन् सः—घ ङ छ । [2] किलेत्यस्य क्रीडनमित्यर्थः ।

विसृजन्नहिवच्छ्वासं मन्युप्रचलितेन्द्रियः ।
आसाद्य तरसा दैत्यो गदयाभ्यहनद्धरिम् ॥ १४ ॥

भगवांस्तु गदावेगं विसृष्टं रिपुणोरसि ।
अवञ्चयत् तिरश्चीनो योगारूढ इवान्तकम् ॥ १५ ॥

पुनर्गदां स्वामादाय[1] भ्रामयन्तमभीक्ष्णशः ।
अभ्यधावद्धरिः क्रुद्धः संरम्भाद् दष्टदच्छदः ॥ १६ ॥

ततः स्वगदयारातिं दक्षिणांसभुवि प्रभुः ।
आजघ्ने स तु तां[2] सौम्य गदया कोविदोऽहनत् ॥ १७ ॥

एवं गदाभ्यां गुर्वीभ्यां हर्यक्षो हरिरेव च ।
जिगीषया सुसंरब्धावन्योन्यमभिजघ्नतुः ॥ १८ ॥

तयोः स्पृधोः स्निग्ध[4]गदाहताङ्गयोः
क्षतस्रवाघ्राणविवृद्धयुद्धयोः ।
विचित्रमार्गांश्चरतोर्जिगीषया
व्यभादिलायामिव शुष्मिणोर्मृधः ॥ १९ ॥

---

मन्युना प्रचलितानि स्वस्थानच्युतानीन्द्रियाणि यस्य सः ॥ १४ ॥

योगारूढो योगाविष्टः ॥ १५ ॥

दष्टो दच्छदोऽधरोष्ठो येन स तथा ॥ १६ ॥

आजघ्न इत्यस्य सकर्मकत्वस्य[3] द्योतनाय दक्षिणांसभुवीत्युक्तम् । आङो यमहन इत्यात्मनेपदम् । कोविदो गदायुद्धमार्गप्रभेदज्ञानपटुः ॥ १७ ॥

हर्यक्षो हिरण्याक्षः । हरिरच्युतः ॥ १८ ॥

स्पृधोः स्पर्धमानयोः । क्षतस्रवस्य रुधिरस्याघ्राणेन विवृद्धं युद्धं ययोस्तौ तयोः । इलायां भुवि शुष्मिणोः मत्तवृषभयोः ॥ १९ ॥

---

[1] समादाय–ग । [2] तं–ग । [3] प्रपाठ एवम् । अन्यत्राकर्मकत्वस्य इति । [4] तिग्म–ग ।

दैत्यस्य यज्ञावयवस्य मायया
गृहीतवाराहतनोर्महात्मनः
कौरव्य मह्यां द्विषतोर्विमर्दनं
दिदृक्षुरागाद् ऋषिभिर्वृतः स्वराट् ॥ २० ॥

आसन्नशौण्डीरमपेतसाध्वसं
कृतप्रतीकारमहार्यविक्रमम्
विलक्ष्य दैत्यं भगवान् सहस्रणी-
र्जगाद नारायणमादिसूकरम् ॥ २१ ॥

ब्रह्मोवाच —

एष ते देव देवानामङ्घ्रिमूलमुपेयुषाम् ।
विप्राणां सौरभेयीणां भूतानामप्यनागसाम् ॥ २२ ॥

आगस्कृद् भयकृद् दुष्कृदस्मल्लब्धवरोऽसुरः ।
अन्वेषयन्नप्रतिरथो लोकानटति कण्टकः ॥ २३ ॥

---

इदं युद्धं काकग्राम्यकर्मवदविज्ञातं न, किन्तु ब्रह्मादिदेवैर्दृष्टमिति भावेन ब्रह्मागमनं वक्ति— **दैत्यस्येति** । यज्ञास्तत्साधनानि चावयवेषु यस्य स तथा तस्य । मायया स्वेच्छया । स्वं स्वतन्त्रं परमात्मानं राजयति दीपयति प्रकाशयतीति स्वराट् ब्रह्मा । तदुपदिष्टब्रह्मज्ञानेन हि सर्वेषां मुक्तिरिति ॥ २० ॥

न केवलं युद्धदर्शनाय ब्रह्मण आगमनम् । किन्तु दैत्यवधोपायनिवेदनलक्षणकार्यान्तरज्ञापनाय[1] चेत्यनेनाशयेन हरिं प्रति ब्रह्मविज्ञापनप्रकारं वक्ति—**आसन्नेति** । अनेन कोविदेनापदि तत्परिहार-प्रकारो वक्तव्य इति न्यायदर्शनार्थमुक्तं न तु हरेरुपायाज्ञानादिति तात्पर्यम् । आसन्नशौण्डीरं प्राप्त-पाटवम् । अहार्यं आहर्तुमशक्यो विक्रमो यस्य स तथा तम् । विलक्ष्य दृष्ट्वा । सहस्रणीः अनेक-कल्पजननेतृत्वात् ब्रह्मणो योगनाम[2] ॥ २१ ॥

प्रथमतो दैत्यस्य वध्यत्वे दोषानाह—**एष इति** ॥ २२ ॥

द्रव्यदाराद्यपहारेणागस्कृत् । 'आगो मन्तुश्च विप्रियम्' इति । वधादिना भयकृत् । अग्नि-होत्रादिदूषणेन दुष्कृत् । तत्र निमित्तमाह—**अस्मल्लब्धेति** ।

---

[1] कार्यान्तरायेत्यर्थः । ज्ञापनायेत्यधिकं स्यात् । [2] इदमित्युपस्कर्तव्यम् ।

मैनं[1] मायाविनं दृप्तं निरङ्कुशमसत्तमम् ।
आक्रीड[2] बालवद् देव यदाशीविषमुत्थितम् ॥ २४ ॥

न यावदेष वर्धेत स्वां वेलां प्राप्य दारुणः ।
स्वां देवमायामास्थाय तावज्जह्येनमच्युत ॥ २५ ॥

एषा घोरतमा सन्ध्या लोकशम्बट्करी प्रभो ।
उपसर्पति सर्वात्मन्[4] सुराणां जयमावह ॥ २६ ॥

अधुनैवाभिजिन्नाम योगो मौहूर्तिकोऽभ्यगात् ।
शिवाय नस्त्वं सुहृदामाशु निस्तर दुस्तरम् ॥ २७ ॥

दिष्ट्या त्वा विहितं मृत्युमयमासादितः स्वयम् ।
विक्रम्यैनं मृधे हत्वा लोकानाधेहि शर्मणि ॥ २८ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे एकोनविंशोऽध्यायः ।

---

क्रीडाया अकरणे कारणमाह—**यदिति** । आशीविषं कृष्णसर्पविषम् । उत्थितम् उज्ज्वलितम् । यत्[3] तस्मादिति ॥ २४ ॥

स्वां वेलामासुरीमपराह्णम् । तावत् ततः पूर्वमेव । स्वां मायां महिमानम् । त्वदन्येन न हन्यत इत्यर्थः । ब्रह्मा अच्युतेत्यनेन ‘अक्षतः क्षतवद् विष्णुरसमः समवत् तथा । सर्वरूपेष्वनन्तोऽपि ब्रह्माद्याश्चैव तन्मतेः । अनुसारितया ब्रूयुः कुर्युश्च न स दुःखभाग्’ इति वाक्यं द्योतयति ॥ २५ ॥

कीदृश्यासुरी वेलेति तत्राह—**एषेति** । ‘आदरं तु मुखं विद्याच्छम्बट्कारं तु भक्षणम्’ इत्यभिधानात् लोकशम्बट्करी सर्वजनभक्षिणी ॥ २६ ॥

इदानीं समीचीनो योगः क इति तत्राह—**अधुनेति** । ‘मध्याह्नस्त्वभिजित् प्रोक्त आषाढोत्तर एव च । श्रवणस्यापि पूर्वार्धो विषुवच्चाभिजित्[5] स्मृतम्’ इत्यतोऽभिजिद्योगो मध्यन्दिनमुहूर्तम् ॥ २७ ॥

अस्यानन्यवध्यत्वं स्पष्टं ध्वनयति—**दिष्ट्येति** । मृत्युं मारकं त्वा त्वां शर्मणि सुखे आधेहि स्थापय ॥ २८ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे एकोनविंशोऽध्यायः ।

---

[1] एनं–ग । [2] मा क्रीड–ग । [3] यद् यस्मात् तस्मादिति–प्र । [4] सर्वेषाम् । [5] विषुवं चाभिजित्–क ।

॥ अथ विंशोऽध्यायः ॥

**मैत्रेय उवाच —**

**अवधार्य विरिञ्चस्य निर्व्यलीकमृतं वचः ।**
**प्रहस्य प्रेमगर्भेण तदपाङ्गेन सोऽग्रहीत् ॥ १ ॥**

**ततः सपत्नं मुखतश्चरन्तमकुतोभयम् ।**
**जघानोत्पत्य गदया हनावसुरमक्षतः ॥ २ ॥**

**सा हता तेन गदया विहिता[1] भगवत्करात् ।**
**विघूर्णिता भृशं रेजे[2] तदद्भुतमिवाभवत् ॥ ३ ॥**

**स तदा लब्धवीर्योऽपि न बबाधे निरायुधम् ।**
**मानयन् स मृधे धर्मं विष्वक्सेनं प्रकोपयन् ॥ ४ ॥**

**गदायामपविद्धायां हाहाकारे च निर्गते ।**
**मानयामास तं धर्मं सुनाभं चास्मरद् विभुः ॥ ५ ॥**

---

॥ अथ विंशोऽध्यायः ॥

ब्रह्मवचनं हरिणावधृतं किम् ? अत्राह—**अवधार्येति** । अपाङ्गेन कटाक्षेण ॥ १ ॥

विरिञ्चवाक्यग्रहणं हरिणा कृतमिति कथं ज्ञायत इति तत्राह—**तत इति** । मुखतः पुरतः । हनौ कपोले । ह्रस्वेन वराहेण उन्नतस्यासुरस्य कपोले हननं कथमित्यत उक्तम्—**उत्पत्येति** ॥ २ ॥

दुष्टजनमोहनाय सा हतेति । विघूर्णिता विभ्राम्य त्यक्ता रेजे । उल्कावदिति शेषः ॥ ३ ॥

तदा जनं प्रति असुरोऽपि स्वस्य धर्मयुद्धवित्त्वं प्रकाशयति—**स इति** । लब्धवीर्यः प्राप्तावकाशः । मृधे धर्मप्रत्ययार्थम् । निरायुधे सायुधेनेतरेण न प्रतिप्रहर्तव्यमिति लौकिकम् ॥ ४ ॥

अथान्यत् हरिप्रियम् । तदुक्तम् ' धर्मः सत्यमिति प्रोक्तो धर्मश्चापि हरेः प्रियः ' इति । अनेन यो हरेः प्रियः स धर्मः अन्यो लौकिक इत्युक्तं भवति । अत एव मानयामासेत्युक्तम् । न तु प्रियमिति । अपविद्धगदाप्रत्यादानं योधानां जुगुप्सितम् । किमुत हरेः ? अतो हरिणा किमकारीति तत्राह—**सुनाभम् इति** । सुनाभं सुदर्शनम् ॥ ५ ॥

---

[1] अयं छ पाठः । विगता–ग । अन्यत्र विहतेति । [2] अयं ग घ छ ङ पाठः । पतद्रेज इति प्रचलितपाठः ।

तं व्यग्रचक्रं दितिपुत्राधमेन
स्वपार्षदमुख्येन विषज्जमानम् ।
चित्रा वाचस्तद्विदां खेचराणां
तत्र स्मासन् स्वस्ति तेऽमुं जहीति ॥ ६ ॥

स तन्निशम्यात्तरथाङ्गमग्रतो
व्यवस्थितं पद्मपलाशलोचनम् ।
विलोक्य चामर्षपरिप्लुतेन्द्रियो
रुषा स्वदन्तच्छदमादशच्छ्वसन् ॥ ७ ॥

करालदंष्ट्रश्चक्षुर्भ्यां संचक्षाणो दहन्निव ।
अभिद्रुत्य स्वगदया हतोऽसीत्यहनद्धरिम् ॥ ८ ॥

पदा सव्येन तां साधो भगवान् यज्ञसूकरः ।
लीलया मिषतः शत्रोः प्राहरद् वातरंहसा ॥ ९ ॥

आह चायुधमादत्स्व[1] घटस्व त्वं जिगीषसि ।
इत्युक्तः स तया भूयस्ताडयन् व्यनदद् भृशम् ॥ १० ॥

---

महानपीतरप्रेरित एव स्वकर्तव्यं करोति न तु स्वयमिति भावज्ञाः खेचरा अस्य वधाय प्रेरयन्तीत्याह—**तमिति** । व्यग्रं शत्रुहननाय विभ्रमच्चक्रं यस्य स तथा तम् । तद्विदां तस्य हरेः स्वरूपज्ञानाम् ॥ ६ ॥

दैत्यस्य वीरस्वभावं दर्शयति— **स इति** । खेचराणां तद्वचनं निशम्यामर्षेण दुःसहद्वेषेण परिप्लुतानि स्वस्थानच्युतानि इंद्रियाणि यस्य स तथा स्वदंतच्छदं स्वाधरोष्ठमादशद् दष्टवान् ॥ ७ ॥

वीरत्वादधरोष्ठदशनफलमाह-**करालेति** । संचक्षाणः पश्यन् । हतोऽसीत्याभाष्येति ॥ ८ ॥

हरेर्युद्धलाघवं वक्ति—**पदेति** । शत्रोस्तां गदाम् । वातरंहसा वायुवेगेन । अनेन प्रतिवीरस्य परिहारायोग्यत्वप्रकाशेन हरेरतिमाहात्म्यं प्रकाशितम् ॥ ९ ॥

एतदेव ध्वनयति—**आहेति** । चः समुच्चये । न ह्यल्पमाहात्म्यस्यायुधमादत्स्वेत्यादिप्रतिवचनं युज्यते, भीत्या वागनुद्गलनात् । गूढमाक्षिपतीत्याह—**त्वमिति** । उक्तं सत्यमिति मन्वानः स्वपाटवं व्यनक्ति—**इतीति** ।

---

[1] अयं गपाठः । अन्यत्र—' आधत्स्व ' ।

तां स आपततीं वीक्ष्य भगवान् समवस्थितः ।
जग्राह लीलया प्राप्तां गरुत्मानिव पन्नगीम् ॥ ११ ॥

स्वपौरुषे प्रतिहते हतमानो महासुरः ।
नैच्छद् गदां दीयमानां हरिणा विगतप्रभः ॥ १२ ॥

जग्राह त्रिशिखं शूलं ज्वलज्ज्वलनलोलुपम्[1] ।
यज्ञाय धृतरूपाय विप्रायाभिचरन् यथा ॥ १३ ॥

तदोजसा दैत्यमहाभटार्पितं
चकासदन्तः ख उदीर्णदीधिति ।
चक्रेण चिच्छेद निशातनेमिना
हरिर्यथा तार्क्ष्यपतत्रमुज्झितम् ॥ १४ ॥

वृक्णे च शूले बहुधारिणा हरेः
प्रत्येत्य विस्तीर्णमुरो विभूतिमत् ।

---

हरिरपि युद्धलाघवं दर्शयतीत्याह—**तां स इति** ॥ ११ ॥

दैत्यस्याभिमानमुद्गलयति—**स्वपौरुष इति** ॥ १२ ॥

ततः किं चकारेति तत्राह—**जग्राहेति** । अभिचरन् कृत्यां प्रयुञ्जानः ॥ १३ ॥

स्मरणादागतं मां वैरिवधाय किमिति न प्रायुङ्क्त भगवानिति सुदर्शनचैत्त्यं जानन्निव तेन शूलमच्छिनदित्याह—**तदेति** । यदौजसा बलेन दैत्येन महाभटेनार्पितं मुक्तं तदा भगवान् निशातनेमिना उत्तेजितधारेण । अनेनानेकसंख्यारिच्छेदनेऽप्यस्य नैशित्यनाशो नास्तीति सूचनेन हरिचक्रस्य हरेरिवातिमाहात्म्यमुक्तम् । चक्रेण शूलं चिच्छेदेत्यन्वयः । आत्मस्पर्शात् पूर्वमेवाच्छिनदिति द्योतनायोक्तम्—**अन्तः ख इति** । अन्तः खे आकाशमध्ये उदीर्णा दीधितिर्यस्य तत् तथोक्तम् । अनेन हरिचक्रादन्येनाच्छेद्यत्वमुद्द्योतितम् । मन्दबुध्यवतारार्थं निकृष्टमपि दृष्टान्तयति—**हरिरिति** । दधीचेर्महामुनेरस्थ्ना विरचितवज्रस्यामोघत्वेन तदच्छेदे मुनेरवज्ञानिमित्तकोपभयात् गरुडेनोज्झितं त्यक्तं पतत्रमिन्द्रोऽच्छिनदिति तदिहोच्यते—**हरिरित्यादिना** ॥ १४ ॥

किं दैत्य आयुधाभावादधावत् इति तत्राह—**वृक्ण इति** । वृक्णे छिन्ने । विभूतिर्लक्ष्मीरस्यास्तीति विभूतिमत् । प्रहृत्य प्रहारं कृत्वा । असुरः मायया असनशीलः । असेरुरदितिसूत्रात् असु क्षेपण इति धातोस्ताच्छील्यार्थे उरत् प्रत्ययो भवति ॥ १५ ॥

---

[1] ज्वलन्तं ज्वलनोपमं-ग । ज्वलितं ज्वलनोपमम्-घ ।

प्रवृद्धरोषः सकठोरमुष्टिना
नदन् प्रहृत्यान्तरधीयतासुरः ॥ १५ ॥

तेनेत्थमाहते क्षत्तर्भगवानादिसूकरः ।
नाकम्पत मनाग् वापि स्रजाहत इव द्विपः ॥ १६ ॥

अथोरुधा[2]ऽसृजन्मायां योगमायेश्वरे हरौ ।
यां विलोक्य प्रजास्त्रस्ता मेनिरेऽस्योपसंयमम् ॥ १७ ॥

प्रववुर्वायवश्चण्डास्तमः पांसवमैरयन्[3] ।
दिग्भ्यो निपेतुर्ग्रावाणः क्षेपणैः प्रहिता इव ॥ १८ ॥

द्यौर्नष्टभगणाभ्रौघैः सविद्युत्स्तनयित्नुभिः ।
वर्षद्भिः पूयकेशासृग्विण्मूत्रास्थीनि चासकृत् ॥ १९ ॥

गिरयः प्रत्यदृश्यन्त नानायुधमुचोऽनघ ।
दिग्वाससो यातुधान्यः शूलिन्यो मुक्तमूर्धजाः ॥ २० ॥

बहुभिर्यक्षरक्षोभिः पत्त्यश्वरथकुञ्जरैः ।
आततायिभिरुत्सृष्टा हिंस्रा वाचोऽतिवैशसाः ॥ २१ ॥

---

दैत्यमुष्टिप्रहारेण किं हरिणा पतितं मूर्च्छितं पलायितमिति[1] विदुरस्य मानसीं शङ्कां परिहरति—**तेनेति** । द्वाभ्यां पिबतीति द्विपो गजः ॥ १६ ॥

अन्तर्धाय दैत्येन किमकारीति तत्राह—**अथेति** । योगमायेश्वरे स्वरूपभूतानामणिमादिमहिम्नामधिपतावित्यनेनासुर्यो मायाः हरेर्बाधिका न स्युरिति सूचितम् । अस्य विश्वस्योपसंयमं प्रलयम् ॥ १७ ॥

पांसवं धूलिमयम् । क्षेपणैः पाषाणक्षेपणयन्त्रैः ॥ १८ ॥

द्यौर्व्योम अभ्रौघैर्मेघजालैः विद्युत् तडित् स्तनयित्नवो गर्जन्मेघाः विद्युत्स्तनयित्नवः तैः सह वर्तन्त इति तैः ॥ १९ ॥

युध संप्रहार इति धातोः नानायुधानि नानाविधसंप्रहारान् मुञ्चन्तीति । दिग्वाससो नग्नाः ॥२०॥

अतिवैशसाः अतिक्रूराः । यक्षादिभिरुत्सृष्टाः उच्चरिताः । हिंस्राः वाचोऽश्रूयन्तेति शेषः ॥२१॥

---

[1] पलायितं वेति—इति स्यात् । [2] अथो रुषा–घ । [3] अयं घ छ च पाठः । अन्यत्र—पांसवमीरयन् ।

प्रादुष्कृतानां मायानामासुरीणां विनाशनम् ।
सुदर्शनास्त्रं भगवान् प्रायुङ्क्त च ततस्त्रिपात् ॥ २२ ॥

तदा दितेः समभवत् सहसा हृदि वेपथुः ।
स्मरन्त्या भर्तुरादेशं स्तनाच्चासृक् प्रसुस्रुवे ॥ २३ ॥

व्युदस्तासु स्वमायासु भूयश्चाव्रज्य केशवम् ।
उपोपगूहमानोऽमुं ददृशेऽवस्थितं बहिः ॥ २४ ॥

तं मुष्टिभिर्विनिघ्नन्तं वज्रसारैरधोक्षजः ।
करेण कर्णमूलेऽहन् यथा त्वाष्ट्रं मरुत्पतिः ॥ २५ ॥

समाहतो विश्वसृजा ह्यवज्ञया परिभ्रमद्गात्र उदस्तलोचनः
विकीर्ण[1]बाह्वङ्घ्रिशिरोधरोऽपतद् यथा नगेन्द्रो लुलितो नभस्वता ॥ २६ ॥

---

'यथेच्छयैव सर्वं तु मनसा देहतोऽपि वा । कर्तुं शक्तोऽपि शस्त्राद्या लीलैवानन्तशक्तितः' इति वचनात् मनआदिना असुरमायाविनाशे समर्थोऽपि भगवान् लीलयैव तन्नाशाय सुदर्शनं प्रायुङ्क्तेत्याह—**प्रादुष्कृतानामिति** । विनाशनं विनाशकारणम् । 'अमृतं क्षेममभयम्' इति त्रयः पादाः यस्य सः त्रिपात् ॥ २२ ॥

सुदर्शनप्रयोगेण भगवान् दितेः पुत्रमरणं संज्ञापयति—**तदेति** ॥ २३ ॥

प्रभाते नक्तंचरवत् स्वमायानाशे पराद्रवत् किम् ? नेत्याह—**व्युदस्तास्विति** । शस्त्राद्यभावात् कथं युद्धाय प्राप्त इत्याशङ्क्य द्विमुखाहिवत् पदावेष्ट्य निष्पीड्य हन्मीति भावोऽप्यप्रयोजक इत्याशयेनाह—**उपेति** । उपोप अत्यन्तसमीपे वर्तमानममुं भगवन्तं गूहमानः स्वहस्तवलयात् बहिरवस्थितं हरिं ददर्श इत्यन्वयः ॥ २४ ॥

मम शत्रुहननादावायुधग्रहणं मन्दजनानुकरणार्थम् । नत्वशक्यत्वतः[2] । स्वहस्तादिनैव, शक्तिरस्तीति ज्ञापयन्, शत्रुं हन्तीत्याह—**तमिति** । अहन् प्राहरत् । त्वाष्ट्रं त्वष्टुः पुत्रं वृत्रम् । मरुत्पतिरिन्द्रः ॥ २५ ॥

हरेरयं प्रहारो रिपोर्दीर्घनिद्राहेतुरित्याह—**समाहत इति** । विश्वसृजा हरिणा । अवज्ञया निरायासेन समाहतः । लुलितः उन्मूलितः । नभस्वता वायुना ॥ २६ ॥

---

[1] विकर्ण—घ । [2] न त्वशक्तत्वत इति स्यात् ।

क्षितौ शयानं तमकुण्ठवर्चसं
करालदंष्ट्रं परिदष्टदच्छदम् ।
अजादयो वीक्ष्य शशंसुरागता
अहो इमां को नु लभेत संस्थितिम् ॥ २७ ॥

यं योगिनो योगसमाधिना हरे-
र्ध्यायन्ति लिङ्गादसतो मुमुक्षवः ।
तस्यैष दैत्यऋषभः पदा हतो
मुखं प्रपश्यंस्तनुमुत्ससर्ज ह ॥ २८ ॥

एतौ हि पार्षदावस्य शापाद् यातावसद्गतिम् ।
पुनः कतिपयैः स्थानं प्रपत्स्येते ह जन्मनि ॥ २९ ॥

[1]नमो नमस्तेऽखिलयज्ञतन्तवे
स्थितौ गृहीतामलसत्त्वमूर्तये ।
दिष्ट्या हतोऽयं जगतामरुन्तुद-
स्त्वत्पादभक्त्या वयमीश निर्वृताः ॥ ३० ॥

---

वीराणां रणरङ्गे मरणं शस्तम् । किं पुनर्भगवन्निमित्तमितिभावेन ब्रह्मादयोऽस्यासुरस्य मरणं स्तुवन्तीत्याह—**क्षिताविति** । संस्थितिं मरणम् ॥ २७ ॥

इतरमरणादस्य मरणस्य वैशिष्ट्ये किं कारणम् ? अत्राह—**यमिति** । असतोऽमङ्गलात् सूक्ष्मशरीरात् मुमुक्षवः । करपादयोरैक्यादन्योन्यक्रियाशक्तिमत्त्वाच्च पदाहत इत्युक्तम् । योगिनामस्य दैत्यस्य महान् विशेषोऽस्तीति द्योतितं च । हेत्यनेन एतद्देहत्यागेऽपि देहान्तरारम्भोऽस्तीति सूचनात् । अतोऽस्य सुकृताधिक्यं हरिमुखं दृष्ट्वा मरणेन स्यात् । तदपि पार्षदस्यैव । न तदाविष्टस्यासुरस्य ॥ २८ ॥

पार्षदत्वं स्मारयति—**एताविति** । असद्गतिं आसुरीं योनिम् । जन्मभिरिति बहुवचनेन शापमोक्षानन्तरं जन्मान्तरं प्राप्य ज्ञानमापद्य[2] वैकुण्ठे मुक्तिस्थानप्राप्तिरिति सूचयति ॥ २९ ॥

इदानीमपरोक्षं[3] स्तुवन्तीत्याह—**नम इति** । अखिलयज्ञतन्तवे अखिलयज्ञानां प्रवर्तने सन्तानभूताय । स्थितौ निमित्तभूताय । अरुन्तुदो व्यथकः । अयं विक्रमोऽस्माकमपि परमानन्दहेतुरभूदि-

---

[1] इतः पूर्वं 'देवा ऊचुः' इति अधिकपाठः ग घ च कोशेषु ।

[2] अयं ग घ पाठः । अन्यत्र आपाद्य । [3] अयं ग घ च पाठः । अन्यत्र 'आपरोक्षतः' ।

मैत्रेय उवाच —

एवं हिरण्याक्षमसह्यविक्रमं
संसादयित्वा हरिरादिसूकरः ।
जगाम लोकं स्वमखण्डितोत्सवं
समीडितः पुष्करविष्टरादिभिः ॥ ३१ ॥

मया यथानूक्तमथादितो हरेः
कृतावतारस्य सुमित्र चेष्टितम् ।
यथा हिरण्याक्ष उदारविक्रमो
महामृधे क्रीडनवन्निराकृतः ॥ ३२ ॥

शुक उवाच —

इति कौशारवाख्यातामाश्रुत्य भगवत्कथाम् ।
क्षत्तानन्दं परं लेभे महाभागवतो नृप[1] ॥ ३३ ॥

अन्येषां पुण्यश्लोकानामुद्दामयशसां सताम् ।
उपश्रुत्य भवेन्मोदः श्रीवत्साङ्कस्य किं पुनः ॥ ३४ ॥

---

त्याहुरित्याह—त्वत्पादेति ॥ ३० ॥

हिरण्याक्षहननानन्तरं हरिणा को विक्रमोऽकारि ? सोऽस्तिचेत् तमाख्याहीति मानसीं विदुरशङ्कां प्रत्याह—**एवमिति** । संसादयित्वा निहत्य । नितरां हनने स्वातन्त्र्यं दर्शयति । पुष्करविष्टरादिभि-र्ब्रह्मादिभिः ॥ ३१ ॥

हरेर्वराहावतारस्य चरितमुपसंहरति—**मयेति** । यथा येन प्रकारेण हिरण्याक्षो हतः निरा-कृतस्तथा तेन विधिना कृतवराहावतारस्य हरेश्चेष्टितं मयानूक्तं श्रुतवत् कथितम् । आदित अथ आरभ्य । 'अथातोऽनन्तराप्यर्थविकल्पारम्भमङ्गले' इति यादवः ॥ ३२ ॥

शुकोऽप्येतां कथां श्रोतृशेमुषीमनुकूलयति—**इतीति** । यथा मम परमानन्दोऽभूत् तथा विदुर-स्यापि किमिति परीक्षितो मनःशङ्कां परिहरति शुक इत्यतो वाह—**इतीति** ॥ ३३ ॥

अत्र कैमुत्येन परमानन्दं सम्पादयति—**अन्येषामिति** ॥ ३४ ॥

---

[1] द्विजाः-छ ङ च ।

यो गजेन्द्रं झषग्रस्तं ध्यायन्तं चरणाम्बुजम् ।
क्रोशन्तीनां करेणूनां कृच्छ्रतोऽमोचयद् द्रुतम् ॥ ३५ ॥

तं सुखाराध्यमृजुभिरनन्यशरणैर्नृभिः ।
कृतज्ञः को न सेवेत दुराराध्यमसाधुभिः ॥ ३६ ॥

यो वै हिरण्याक्षवधं महाद्भुतं
विक्रीडितं कारणसूकरात्मनः ।
शृणोति गायत्यनुमोदतेऽञ्जसा
विमुच्यते ब्रह्मवधादपि द्विजः ॥ ३७ ॥

एतन्महापुण्यफलं पवित्रं
धन्यं यशस्यं पदमायुराशिषाम् ।
प्राणेन्द्रियाणां युधि शौर्यवर्धनं
नारायणोऽन्ते गतिरङ्ग शृण्वताम् ॥ ३८ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे विंशोऽध्यायः ।

---

इतोऽपि हरेः कथाश्रवणात् परमानन्दावाप्तिः स्यादित्याह—**य इति** । करेणूनां करिणीनाम् । क्रोशन्तीनां रुदन्तीनाम् । कृच्छ्रादासन्नमरणात् द्रुतं स्मरणानन्तरं कालक्षेपमन्तरेण ॥ ३५ ॥

एवंविधो हरिर्भक्त्यैकसाध्य इत्याह—**तमिति** । अन्ययोगव्यवच्छेदार्थमाह— **दुराराध्यमिति** ॥ ३६ ॥

फलश्रवणे क्षिप्रं प्रवृत्तिः स्यादिति तद् वक्ति—**यो वा इति** । अपिशब्देनान्यदुष्कृतानां संग्रहात् । ब्रह्मपरमात्मतत्त्वं तज्ज्ञानेन[1] वध्यत इति ब्रह्मवधः संसारः तस्मात् । उक्तफलेऽधिकारिणमाह—**द्विज इति** । तस्यैव हरौ निरतिशयभक्तिसम्भवात् ॥ ३७ ॥

गानाद्यशक्तानां श्रवणैकरतानां किं फलम् ? अत्राह—**एतदिति** । अन्त इति विशेषणात् श्रवणाभ्यासेन मननादिशक्तिसम्भवाद् अपरोक्षज्ञानसामग्र्यां लिङ्गशरीरविनाशे नारायणो गम्यत इति गतिर्भवतीति ध्वनयति ॥ ३८ ॥

इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे विंशोऽध्यायः ।

---

[1] अज्ञजनेन-क । तद्वजनेन-ग्र ।

॥ अथ एकविंशोऽध्यायः ॥

**राजोवाच —**

**महीं प्रतिष्ठामध्यास्य योऽसौ स्वायम्भुवो मनुः ।**
**कान्यध्यतिष्ठद् द्वाराणि मार्गायावरजन्मनाम् ॥ १ ॥**

**क्षत्ता महाभागवतः कृष्णस्यैकान्तिकः सुहृत् ।**
**यस्तत्याजाग्रजं कृष्णे सापत्यमघवानिति ॥ २ ॥**

**द्वैपायनादनवरो महित्वे तस्य देहजः ।**
**सर्वात्मना श्रितः कृष्णं तत्परांश्चाप्यनुव्रतः ॥ ३ ॥**

**किमन्वपृच्छन्मैत्रेयं विरजास्तीर्थसेवया[2] ।**
**उपगम्य[3] कुशावर्त आसीनं तत्त्ववित्तमम् ॥ ४ ॥**

---

सृष्टिप्रलयाभ्यां स्फुटं विज्ञेयस्य देवादीनां तारतम्यज्ञानस्य हरिप्रीतिजनकत्वेन पुरुषार्थहेतुत्वादनुक्तसमुच्चयार्थं च पूर्वोक्तसृष्टिं प्रपञ्चयत्यस्मिन्नध्याये । 'सृष्टौ लये तारतम्यं देवानां ज्ञायते स्फुटम् । तारतम्यपरिज्ञाने महातात्पर्यमिष्यते । अतस्तद् बहुशस्सूक्तमन्यच्चैतत्प्रकाशकम्' इति वचनात् । प्रवक्ता श्रोतुरभीष्टमर्थं ब्रूते किमन्यद् वेति ज्ञातुं न शक्यते । तस्मात् तन्निरासार्थं[1] तत्रादौ राजा शुकं पृच्छति —**महीमिति** । महीमध्यास्य मह्यां स्थित्वा । अधिशीङ्स्थासां कर्म इति सूत्रात् सप्तम्यर्थे द्वितीया । अवरजन्मनां पश्चात्तनकाले जातानां प्राणिनां मार्गाय वर्णाश्रमस्वरूपभेदज्ञानाय कानि द्वाराणि सृष्टिसाधनानि अध्यतिष्ठत् तत्र स्थित्वाऽसृजदित्यर्थः ॥ १ ॥

विदुरप्रश्नवचनानुसारेण मम वक्तव्यमिति भावेन पृच्छति —**क्षत्तेति** । सन्निकृष्टमृत्योस्तव विदुरप्रश्नो ग्राम्यविषयत्वेन कथं संगच्छत इत्याशङ्क्य न मादृशोऽसाविति तद्गुणानाह— **क्षत्ता महाभागवत इत्यादिना** । अत्रैतानि विशेषणानि मिथो हेतुहेतुमद्भावसूचकानीति ज्ञायते । क्षद संचूर्णन इति धातोः संसारगिरिसंचूर्णनात् क्षत्ता । एकः प्रधानः सर्वोत्तमो हरिरन्तो निर्णयोऽस्यास्तीत्यस्मिन्नर्थे यथाविहितप्रत्ययः । अघवानपराधवान् ॥ २ ॥

सर्वात्मनेति प्रोक्तहेतुनिगमनरूपम् ॥ ३ ॥

किमन्वपृच्छन्मया पृष्टमन्यद् वेति । कुशावर्ते गङ्गाद्वारे ॥ ४ ॥

---

[1] तादृशसंशयनिवृत्त्यर्थमित्यर्थः । [2] विदुरस्तीर्थसेवकः-ग । [3] उपागम्य-ग ।

तयोः संवदतोः सूत प्रवृत्ता ह्यमलाः कथाः ।
आपो गाङ्ग्य इवाघघ्न्यो हरेः पादाम्बुजाश्रयाः ॥ ५ ॥

ता नः कीर्तय भद्रं ते कीर्तन्योदारकर्मणः ।
रसज्ञः को नु तृप्येत हरिलीलामृतं पिबन् ॥ ६ ॥

सूत उवाच—
एवं परीक्षिता पृष्टो भगवान् बादरायणिः ।
भगवत्यर्पिताध्यात्मस्तमाह श्रूयतामिति ॥ ७ ॥

शुक उवाच—
हरेर्धृतक्रोडतनोः स्वमायया
निशम्य गोरुद्धरणं रसातलात् ।
लीलां हिरण्याक्षमवज्ञया हतं
सञ्जातहर्षो मुनिमाह भारत ॥ ८ ॥

विदुर उवाच—
प्रजापतिपतिः सृष्ट्वा प्रजासर्गे प्रजापतीन् ।
किमारभत मे ब्रह्मन् प्रब्रूह्यव्यक्तमार्गवित् ॥ ९ ॥

ये मरीच्यादयो विप्राः यस्तु स्वायम्भुवो मनुः ।
ते वै ब्रह्मण आदेशात् कथमेतदभावयन् ॥ १० ॥

---

तत्रान्यप्रसङ्गा दूरीभूता एवेति भावेनाह—**तयोरिति** ॥ ५ ॥

बहुशः श्रुतत्वात् तव तन्द्या निद्रालुत्वं स्यादिति तत्राह—**रसज्ञ इति** ॥ ६ ॥

एतमर्थं सूतः शौनकादिभ्यः कथयति—**एवमिति** । अर्पिताध्यात्मः अर्पितं शरीरमधिकृत्य वर्तमानं मनआदीन्द्रियजातं[1] येन सोऽर्पिताध्यात्मः ॥ ७ ॥

शुकोऽपि त्वत्पृष्टमर्थं प्रष्टुं विदुरो मैत्रेयं वक्तीत्याह—**हरेरिति** ॥ ८ ॥

किमाहेति तत्राह—**प्रजापतीति** । अव्यक्तानां परमात्मादितत्त्वानां मार्गं प्रकारं वेत्तीति ॥९॥

राजविदुरप्रश्नयोरेकविषयत्वं वक्ति—**य इति** । अभावयन् प्रावर्धयन् ॥ १० ॥

---

[1] आत्मशब्दार्थकथनमेतत् ।

सद्वितीयाः किमसृजन् स्वतन्त्रा उत कर्मभिः ।
आहोस्वित् संहताः सर्व इदं स्म समकल्पयन् ॥ ११ ॥

मैत्रेय उवाच—
दैवेन दुर्वितर्क्येण[1] परेणानिमिषेण च ।
जातक्षोभाद् भगवतो महानासीद् गुणत्रयात् ॥ १२ ॥

रजः प्रधानान्महतस्त्रिलिङ्गो दैवचोदितात् ।
जातःससर्ज भूतादिर्वियदादीनि पञ्च च[2] ॥ १३ ॥

---

द्वितीया भार्या । स्वतन्त्राः अन्यापेक्षारहिताः । कर्मभिः, प्रेरिता इति शेषः संहताः संमिलिताः । स्मेत्यनेन संहत्य सर्जनं प्रधानं स्मारयति ॥ ११ ॥

किमारभतेति यत् पृष्टं तस्योत्तरं वक्तुं पूर्वोक्तसृष्टिमविस्मरणायादितोऽनुवदति––**दैवेनेति** । दुर्वितर्क्येण प्राण्यदृष्टानां बहुत्वादनुमातुमशक्येन दैवेनादृष्टेन । 'नैषा तर्केण मतिरापनेया' इति श्रुतेरदृष्टान्तर्यामिणा हरिणा वा । दुर्विकल्पेनेति पाठे इदमदो वेति संशयाविषयेण । अनिमिषेण सर्वतो विलक्षणेन सृष्टिकालेन तदन्तर्यामिणा हरिणा वा । सर्वेषां मूलकारणस्य प्रलयसमुद्रे लक्ष्मीपर्यङ्के शयानस्य भगवतः प्रेरणया जातक्षोभात् कार्याभिमुखोत्पन्नविकाराद् विषमावस्थामुपगताद् गुणत्रयाद् यथासंख्यंसंयुक्तसत्त्वादिगुणत्रयात् महान् महत्तत्त्वाभिमानी ब्रह्मासीत् । तदभिमन्यमानमहत्तत्त्वं चाभूत् । किंच भगवतो वीर्याधानेन जातक्षोभादुत्पन्नसिसृक्षत्वविशेषात् । 'त्वं जीवशक्त्यां गुणकर्मयोनौ' इत्यतो गुणत्रयाभिमानिनोऽजाभिधानादक्षरान्महत्तत्त्वाभिमानी वायुश्च सरस्वती भारती च जाता इत्यर्थः । 'महतो ब्रह्मवायू च तद्भार्ये चाभिमानिनः' इति वाक्यादयमर्थः कल्प्यत इति ॥ १२ ॥

महत्तत्त्वादहंकारस्योत्पत्तिमाह—**रजःप्रधानादिति** । साम्यावस्थायां मूले रजसि यद् रजो मूले तमसि मिश्रितं यद् रजः मूले सत्त्वे यद् रज इति त्रिधा विभक्तेन समस्तेन रजसा युक्तत्वाद् रजःप्रधानत्वं महत्तत्वस्य । तस्मान्महतो महत्तत्त्वाद् दैवचोदिताद् विकुर्वाणाज्जातो वैकारिकतैजसाभ्यां सहितः त्रिलिङ्गस्त्रिरूपो भूतादिस्तामसाहङ्कारो वियदादीनि पञ्चभूतानि ससर्जेत्यन्वयः । अनेनैतच्च सिद्धं तैजसाहङ्कारः श्रोत्रादिदशेन्द्रियाणि वैकारिकाहङ्कारो मनोदिगाद्यभिमानिदेवान् ससर्ज[3] । मूलाहङ्कारादनन्तगरुडरुद्राद्याः

---

[1] दुर्विकल्पेन—इति पाठान्तरम् । [2] पञ्चशः–ङ घ । [3] अत्र इतीत्युपस्कर्तव्यम् ।

तानि चैकैकशः स्रष्टुमसमर्थानि भौतिकम् ।
संहत्य दैवयोगेन हैममण्डमवासृजन् ॥ १४ ॥

सोशयिष्टाधिसलिल आण्डकोशो निरात्मकः ।
साग्रं वै वर्षसाहस्रमन्ववात्सीत् तमीश्वरः ॥ १५ ॥

तस्य नाभेरभूत् पद्मं सहस्रार्कोरुदीधिति ।
सर्वजीवनिकायौको यत् तत् स्वयमभूत् स्वराट् ॥ १६ ॥

सोऽनुविष्टो भगवता यः शेते सलिलाशये ।
लोकसंस्थां यथापूर्वं निर्ममे संस्थया स्वया ॥ १७ ॥

---

स्वभार्याभिः सह जाताः । मनोऽभिमानिनावनिरुद्धचन्द्रौ वैकारिकाभिमानिदेवविशेषाज्जातौ । तदुक्तम्– 'अहमः शेषवीन्द्रौ च रुद्रेन्द्रौ कामतस्त्रियः । मनसस्त्वनिरुद्धश्च चन्द्रश्चान्ये यथोदितम् । एवं क्रमो व्यत्ययस्तु सूक्ष्मस्थूलादिभेदतः । सृष्टौ गुणे च ज्ञानादौ मुक्तिस्थेष्वप्ययं क्रमः । नियमेनान्यथोक्तिस्तु मोहायासुरजन्मनाम्' इति ।। १३ ।।

सूक्ष्मसृष्टिमनूद्य स्थूलसृष्टिं वक्तुमारभते—**तानीति** । यद्वा सद्वितीया इत्यादिप्रश्नं परिहरति —**तानीति** । तानि त्रयोविंशतितत्त्वानि भौतिकं हैमं ब्रह्माण्डं देवस्य क्रीडादिगुणसंपन्नस्य हरेर्योगेन चेष्टकलक्षणप्रवेशसंबन्धेन संहत्य संयुज्यावगम्य वाऽसृजन् ॥ १४ ॥

सृज्यवस्तूनि विमृश्य स्रष्टव्यानि, न सहसेति न्यायमनुसंदधतो हरेरण्डोत्पत्त्यनन्तरं तदन्तः सर्जनं क्रमेण स्यादित्यभिमतत्वेनजलावगाहेन दार्ढ्यादिकं च स्यादित्यण्डस्य जलावस्थानं वक्ति— **सोशयिष्टेति** । निरात्मकः अप्रकाशितपरमात्मस्वरूपः । परमात्मा तत्र नास्तीति किं न स्याद् ? अत्राह—**अन्ववात्सीदिति** । अव्यक्ततया स्थितः ॥ १५ ॥

यो ब्रह्माण्डगर्भोदके श्रीमयपर्यङ्के कालनाम्ना ब्रह्मणा सह शयानस्तस्य हरेर्नाभौ पद्ममभूदित्यन्वयः । इदमितरपद्माद् विशिनष्टि—**सहस्रेति** । सहस्रधा संख्यया संख्यातेभ्योऽर्केभ्य उर्वी दीधितिर्दीप्तिर्यस्य तत् तथोक्तम् । अनेन सर्वप्रकाशकसूर्याद्युत्पत्तेः पूर्वं तमसावगूढाकाशे कथं प्रवृत्तिरिति निरस्तम् । सर्वजीवनिकायस्यौको गृहस्थानीयं यतो यस्मात् तस्मात् स्वयं सर्वजीवप्रधानः स्वराट् ब्रह्माभूदित्यन्वयः ॥ १६ ॥

यदर्थं ब्रह्मोत्पन्नस्तत्प्रयोजनमाह —**सोऽनुविष्ट इति** । यो हरिः सलिलाशये गर्भोदकलक्षणे

ससर्ज च्छाययाऽविद्यां पञ्चपर्वाणमग्रतः ।
तामिस्रमन्धतामिस्रं तमो मोहो महातमः ॥ १८ ॥

विससर्जात्मनः कायं नाभ्यनन्दत् तमोमयम् ।
जगृहुर्यक्षरक्षांसि रात्रिं क्षुत्तृट्समुद्भवाम् ॥ १९ ॥

क्षुत्तृड्भ्यामुपसृष्टास्ते तं जग्धुमभिदुद्रुवुः ।
मा रक्षतैनं जक्षध्वमित्युच्चैः क्षुत्तृडर्दिताः ॥ २० ॥

देवस्तानाह संविग्नो मा मा जक्षत रक्षत ।
अहो मे यक्षरक्षांसि प्रजा यूयं भविष्यथ ॥ २१ ॥

---

वारिधौ श्रीसन्निहितशेषपर्यङ्के शेते तेन भगवतानुविष्टः स ब्रह्मा स्वया संस्थया[1] परमात्मनि स्थितसामर्थ्येन यथापूर्वं लोकसंस्थानेन पद्मेन चतुर्दशलोकव्यवस्थां निर्ममे इत्यन्वयः ॥ १७ ॥

विद्यैकापनोद्यत्वादविद्यायास्तज्ज्ञापनार्थं तत्सृष्टिं प्रथमतो वक्ति—**ससर्जेति** । छायया रात्र्यपरपर्यायया तन्वा । पर्वाण्याह—**तामिस्रमिति** । अनेनोक्तवक्ष्यमाणेन कान्यध्यतिष्ठद् द्वाराणीत्यस्योत्तरमुक्तं भवति ॥ १८ ॥

अधिष्ठात्रभावेन विसृष्टो देहो नष्टोऽभूत् किम् ? नेत्याह—**जगृहुरिति** । क्षुत्तृषोः समुद्भवो यस्याः सा तथोक्ता ताम् ॥ १९ ॥

क्षुत्तृषौ ज्ञानविरोधिन्यौ यतो ब्रह्मणः स्वोत्पादकत्वेन गुरुत्वमविज्ञाय यक्षादिभिस्तद्भक्षणार्थमद्रावीति भावेनाह—**क्षुत्तृड्भ्यामिति** । उपसृष्टाः उपद्रुताः । अस्य विवरणं क्षुत्तृडर्दिता इति । इत्युच्चैर्वदन्तोऽभिदुद्रुवुः । एनं ब्राह्मणं मा रक्षत । किंतु जक्षध्वं भक्षयतेति ॥ २० ॥

तत्र ब्रह्मणा किं कृतम् ? अत्राह—**देव इति** । यूयं मा मां मा जक्षत । किन्तु रक्षत । आपदि मित्रजनो बोधनीय इति भावेनाह—**अहो इति** । अहो युष्माकमज्ञानम् । यूयं मे प्रजाः पुत्राः भविष्यथ । तस्माद् जक्षणमयुक्तम् । किन्तु रक्षणमेव । कीदृश्यः[2] ? युष्माकं मध्ये ये यूयं मा जक्षत किन्तु रक्षतेत्यूचिध्वं ते यक्षा भविष्यथ । ये केचिद् यूयं मा रक्षत किन्तु जक्षतेत्यूचिध्वं तानि रक्षांसि भविष्यथ ॥ २१ ॥

---

[1] स्वया संस्थया स्वस्मिन्ननुप्रविष्टभगवत्स्थितिसामर्थ्येनेति यावदिति यादुपत्यम् । [2] प्रजा इति शेषः ।

देवताः प्रभया या या दिव्याः प्रमुखतोऽसृजत् ।
तेऽहार्षुर्देवयन्तोऽपि विसृष्टां तां प्रभामहः ॥ २२ ॥

देवोऽदेवान् जघनतः सृजति स्मातिलोलुपान् ।
त एनं लोलुपतया मैथुनायाभिपेदिरे ॥ २३ ॥

ततो हसन् स भगवानसुरैर्निरपत्रपैः ।
अन्वीयमानस्तरसा क्रुद्धो भीतः परापतत् ॥ २५ ॥

स उपव्रज्य वरदं प्रपन्नार्तिहरं हरिम् ।
अनुग्रहाय भक्तानामनुरूपात्मदर्शनम् ॥ २५ ॥

पाहि मां परमात्मंस्ते प्रेषणेनासृजं प्रजाः ।
ता इमा यभितुं पापा उपक्रामन्ति मां प्रभो ॥ २६ ॥

त्वमेकः किल लोकानां क्लिष्टानां क्लेशनाशनः ।
त्वमेकः क्लेशदस्तेषामनासन्नपदां तव ॥ २७ ॥

---

देवानां विद्यायोग्यत्वेन तद्विरोध्यविद्यासृष्ट्यनन्तरं देवसृष्टिमाह—**देवता इति** । या या दिव्या क्रीडादिगुणयुक्तास्तास्ता देवताः प्रभया भा दीप्ताविति धातोः सर्वप्रकाशकलक्षणया विद्यापरपर्यायया तन्वासृजदित्यन्वयः । सर्वसृष्टिभ्यः प्रधानत्वात् प्रमुखत[1] इति । देवयन्तः क्रीडादिगुणान् द्योतयन्तो देवास्तां प्रभाख्यां तनुमहार्षुरङ्गीकृतवन्तः तदहरभवच्च ॥ २२ ॥

अदेवानसुरान् जघनतः[2] जघननाम्ना देहेन ॥ २३ ॥

क्रुद्धो भीत इति विडम्बनम् । परापतत् पलायितवान् ॥ २४ ॥

पलायनस्यावधिमाह—**स इति** । हरिं प्राप्य जगादेति शेषः । अनुरूपमुपासकानां योग्यतानुकूलमात्मनो दर्शनं, यस्य स तथा तम् ॥ २५ ॥

ते तव । यभितुं यभ मैथुन इति धातुः मैथुनं कर्तुम् ॥ २६ ॥

नित्यं भगवत्प्रीतिकृता प्रेष्येण आपदि हरिरेव स्तोतव्य इति भावेनाह—**त्वमिति** । अनासन्नो न प्राप्तौ[3] पादौ यैस्ते तथा तेषामनासन्नपदाम् ॥ २७ ॥

---

[1] प्रमुखतोऽग्रभागेनेति यादुपत्यम् ।

[2] जघनतः प्रभाख्यतनोश्चरमभागात्, छायाप्रभासन्धिदेशादिति यावदिति यादुपत्यम् । [3] अप्राप्तौ—च ।

सोऽवधार्यास्य कार्पण्यं विविक्ताध्यात्मदर्शनः ।
विमुञ्चात्मतनुं घोरामित्युक्तो विमुमोच ह ॥ २८ ॥

तां क्वणच्चरणाम्भोजां मदविह्वललोचनाम् ।
काञ्चीकलापविलसद्दुकूलच्छन्नरोधसम् ॥ २९ ॥

अन्योन्याश्लेषयोत्तुङ्गनिरन्तरपयोधराम् ।
सुनासां सुद्विजां स्निग्धहासलीलावलोकनाम् ॥ ३० ॥

---

स्वानिष्टनिवारणे समर्थस्यापि भगवान् स्वप्रियार्थं शरणंगतस्य ब्रह्मणस्तन्निवारणोपायमाह—**स इति** । सर्वज्ञस्यापि विरिञ्चस्याज्ञवदशक्तवत् कार्पण्यमवधार्य । तदुक्तम्—'जानन्नपि समर्थोऽपि क्वचिद् ब्रह्मा हरेः प्रियम् । ज्ञात्वा करोति कर्माणि ह्यज्ञवच्चाप्यशक्तवत्' इति । अनेन स्वापदं परिहर्तुं समर्थस्य तत्प्राप्तौ हरिशरणगतौ हरिप्रीतिः स्यादिति न्यायो दर्शितः । विविक्तमनन्याधीनं अध्यात्मदर्शनं शरीरादिकमधिकृत्य वर्तमानं ज्ञानं यस्य स विविक्ताध्यात्मदर्शनः । अशेषविशेषज्ञानवानित्यर्थः । चेतनाचेतनराशेर्विविक्तो भिन्नः अत एवाध्यात्मा सर्वजीवराशेरधिक[1] ईश्वर इति दर्शनमपरोक्षज्ञानं यस्य स तथोक्तः 'तद् ब्रह्मावेदहं ब्रह्मास्मि' इति श्रुतेरिति वा । 'स्यादध्यधिक ईश्वरे' इति यादवः । हेत्यनेन स्वाज्ञा[2]करणाद्धरेरभ्यधिका प्रीतिरभूदिति सूचयति । अत एव—**विमुञ्चेति** । भवतश्चेन्मदनुग्रहपात्रज्ञानसाधनयोग्या तनुरस्ति किमनया घोरयेति[3] ॥ २८ ॥

निश्चेतना सा तनुः किमभूदिति तत्राह—**तामिति** । असुरास्तां तनुं स्त्रियं स्त्रीभूतामुपलभ्य दृष्ट्वा । कीदृशीम् ? शरीरपूर्वोत्तरयोः संधौ जघने जातत्वान्नाम्ना संध्याम् । सर्वैरसुरैरितां परिवृताम् । 'कलापो भूषणे बर्हे' इत्यभिधानात् काञ्चीकलापेन काञ्चीभूषणेन विलसता दुकूलेन च्छन्नं पिहितं रोधः कटितटं यस्या सा तथा ताम् ॥ २९ ॥

अन्योन्याश्लेषया[4] परस्परसंबन्धेन उत्तुङ्गौ उन्नतौ निरन्तरावनवकाशौ च पयोधरौ स्तनौ यस्याः सा तथा ताम् ॥ ३० ॥

---

[1] अविचासावात्मा चेति । [2] हेत्यनेनास्याज्ञा–घ ।

[3] मूले विमुमोच हेत्यनन्तरं सा सायन्तनी सन्ध्याभवत्, ब्रह्मणः पीडाभावसिध्द्यै भगवानसुरमोहनाय तां सन्ध्यां प्रमदाकृतिं दर्शयामासेत्यपि ग्राह्यमिति यादुपत्यम् ।

[4] आश्लेषणेन–क ।

गूहन्तीं व्रीडयात्मानं नीलालकवरूथिनीम् ।
उपलभ्यासुराः सन्ध्यां सर्वे तां मुमुहुः स्त्रियम् ॥ ३१ ॥

अहो रूपमहो धैर्यमहो अस्या नवं वयः ।
मध्ये कामयमानानामकामेव विसर्पति ॥ ३२ ॥

वितर्कयन्तो बहुधा तां सन्ध्यां प्रमदायतीम्[1] ।
अभिसम्भाव्य विस्रम्भात् पर्यपृच्छन् कुमेधसः ॥ ३३ ॥

कासि कस्यासि रम्भोरु को वार्थस्तेऽत्र भामिनि ।
रूपद्रविणपण्येन दुर्भगान् नो विबाधसे ॥ ३४ ॥

या वा कासि त्वमबले दिष्ट्या सन्दर्शनं तव ।
उद्धुनोषीक्षमाणानां कन्दुकक्रीडया मनः ॥ ३५ ॥

नैकत्र ते जयति शालिनि पादपद्मं
घ्नन्त्या मुहुः करतलेन पतत्पतङ्गम् ।

---

नीलालकानां वरूथः समूहोऽस्या अस्तीति नीलालकवरूथिनी । तामुपलभ्य प्राप्य । स्त्रियं जातां तां तनुमुद्दिश्य मुमुहुरिति वा ॥ ३१ ॥

अत्र मोहो नाम न मूर्छा । किन्तु वैक्लव्यहेतुको वितर्क[2] इति भावेनाह—**अहो रूपमिति** । ॥ ३२ ॥

ततः किं चक्रुरिति तत्राह—**वितर्कयन्त इति** ॥ ३३ ॥

भामिनि कान्तिमति । रूपमेव द्रविणं द्रव्यं तदेव पण्यं क्रययोग्यं तेन दुर्भगान् त्वत्सङ्गोपभोगभाग्यरहितान् ॥ ३४ ॥

त्वत्सन्दर्शनमेवास्माकं सुरतक्रियेति भावेनाहुः—**या वेति** । एवमपि तवेयं कन्दुकक्रीडासन्मनः खेदयतीत्याहुः—**उद्धुनोषीति** ॥ ३५ ॥

इतरकन्दुकक्रीडाया इयं वैशेषिकीत्याह—**नैकत्रेति** । हे शालिनि भार्ये । पततपतङ्गं उन्नमदवनमत् कन्दुकम् । जयति ते पादपद्मं प्राप्नोति[3] । विषीदति भङ्गं प्राप्नोति । जटावरूथः वेणी-

---

[1] प्रमदाकृतिम्–ग । [2] विकल्पः–च । [3] (पादपद्मं) एकत्र न जयति न स्थिरीभवति । यद्वा नैकत्र अनेकगतिविलासेषु जयत्युत्कर्षेण वर्तेत इति यादुपत्यम् ।

मध्यं विषीदति बृहत्स्तनभारभीतं
श्रान्ता[1] च दृष्टिरमलः सुजटावरूथः ॥ ३६ ॥

इति सायन्तनीं सन्ध्यामसुराः प्रमदायतीम् ।
प्रलोभयन्तीं जगृहुर्मत्वा मूढधियः स्त्रियम् ॥ ३७ ॥

प्रहस्य भावगम्भीरं जिघ्रन्त्यात्मानमात्मना ।
कान्त्या ससर्ज भगवान् गन्धर्वाप्सरसां गणान् ॥ ३८ ॥

विससर्ज तनुं तां वै ज्योत्स्नां कान्तिमतीं प्रियाम् ।
तामेव चाददुः प्रीत्या विश्वावसुपुरोगमाः ॥ ३९ ॥

सृष्ट्वा भूतपिशाचांश्च भगवानात्मतन्द्रिणा ।
दिग्वाससो मुक्तकेशान् वीक्ष्य चामीलयद् दृशौ ॥ ४० ॥

जगृहुस्तद्विसृष्टां तां जृम्भणाख्यां तनुं प्रभोः[2] ।
निद्रादीन्द्रियविक्लेदो यया भूतेषु दृश्यते । ॥ ४१ ॥

---

भारः । अमलः मुक्तश्च मल बन्धन इति धातोः ॥ ३६ ॥

सर्वभावैः स्त्रियो बन्धहेतव इति भावेन असुराणां तद्ग्रहणमाह—**इतीति** । प्रातःसन्ध्यां व्यावर्तयति — सायन्तनीमिति । प्रातःकालीनायाः पुण्यहेतुत्वात् । प्रलोभयन्तीमात्मनीच्छां कुर्वन्तीम् ॥ ३७ ॥

देवासुरसर्गयोरनन्तरं गन्धर्वादिसर्गस्याभ्यर्हितत्वात् तमाह—**प्रहस्येति** । भावगम्भीरमिति क्रियाविशेषणम् । भावः शृङ्गारचेष्टा । स कथं ज्ञातुं शक्यत इति तमभिनयति—**जिघ्रन्त्यात्मानमात्मनेति** । नाम्ना कान्त्या तन्वा ॥ ३८ ॥

ज्योत्स्नां चन्द्रिकावदाह्लादकरीम् । सञ्ज्ञान्तरं वा । प्रियां मनोदृष्टिसुखकरीम् ॥ ३९ ॥

भूतादीनां देवयोनित्वाद् गन्धर्वादिसृष्ट्यनन्तरं भूतादिसृष्टिमाह—**सृष्ट्वेति** । आत्मनो देहिनः तन्द्रीं मुखव्यादानादिलक्षणामुत्पादयतीत्यात्मतन्द्री । तेन जृम्भणाख्येन देहेन ॥ ४० ॥

तस्याः स्वभावलक्षणमाह—**निद्रादीति** । विक्लेदो वैक्लव्यम् । तन्वोच्छिष्टान् प्रस्तात् देहिनो धर्षयन्ति स्वचेष्टादिविशेषान् कारयन्ति तं चेष्टाविशेषमुन्मादं प्रचक्षते, तज्ज्ञा इति शेषः । 'व्यसृ-

---

[1] शान्ता इति पाठान्तरम् । श्लाघितेत्यर्थः । [2] प्रभो—क ।

तयोच्छिष्टान् धर्षयन्ति तमुन्मादं प्रचक्षते ॥ ४१ ॥
ऊर्जस्वन्तं मन्यमान आत्मानं भगवानजः ।
साध्यान् गणान् पितृगणान् परोक्षेणासृजत् प्रभुः ॥ ४२ ॥
त आत्मसर्गं तं कायं पितरः प्रतिपेदिरे ।
साध्येभ्यश्च पितृभ्यश्च कवयो यद् वितन्वते ॥ ४३ ॥
सिद्धान् विद्याधरांश्चैव तिरोधानेन सोऽसृजत् ।
तेभ्यो ददौ तमात्मानमन्तर्धानाख्यमद्भुतम् ॥ ४४ ॥
स किन्नरान् किंपुरुषानात्मना चासृजत् प्रभुः ।
मानयन्नात्मनात्मानमात्माभासं विलोकयन् ॥ ४५ ॥

---

जन्मलवद् देहं बाह्यं न तु निजं पुरा । ब्रह्मा तच्चाहरादित्वं प्राप देवादिदैवतम्' इति वचनात् बाह्यमेव प्रभादिशरीरं त्यजति ब्रह्मा, न तु निजं देहमिति ज्ञायते । पुरा सृष्टिसमये ॥ ४१ ॥

स्वयोग्यान्नदानेन तृप्ताः साध्यादिगणाः पितृ[1]पिशाचादिग्रहदोषं निवारयन्ति । अतस्तत्सर्गानन्तरं साध्यादिगणसृष्टिं वक्ति — **ऊर्जस्वन्तमिति** । अनेन प्रेतादिग्रहाणां मुख्यचिकित्सेयमिति दर्शितम् । ऊर्जस्वन्तं सारान्नवन्तम् । 'ऊर्जं सारान्नमुद्दिष्टं तदेव पितृभक्षणम्' इति वचनाच्च । नाम्ना परोक्षेण देहेन । अत एवाद्यापि मांसदृष्ट्यगोचरेभ्यः पित्रादिभ्यः तत्तुष्ट्यै पिण्डादिकं प्रयच्छन्ति ॥ ४२ ॥

आत्मनः सर्गः सृष्टिर्यस्मात् स आत्मसर्गस्तम् । यत् सारान्नं वितन्वते बलिहरणादिना वितरन्ति[2] ॥ ४३ ॥

सिद्धादीनां साध्याद्यवरत्वादनन्तरं तत्सर्गमाह—**सिद्धानिति** । नाम्ना तिरोधानेन कायेन । अन्तर्धानाख्यमन्तर्धानापरपर्यायमात्मानं देहमितरस्माद् अद्भुतमदृश्यहेतुत्वात्[3] । इतरेषां वरादिना अदृश्यत्वमेतेषां स्वत एवेति विशेषः । हरिशक्तेरचिन्त्यत्वादिति भावः ॥ ४४ ॥

स्वबोधनविडम्बनाय स्वसन्निकृष्टपुरुषसृष्टेः प्राशस्त्यबुद्धिजननाय च पुरुषाभाससृष्टिमाह— **स किन्नरानिति** । 'किं प्रश्नाक्षेपकुत्सायां वितर्काभासगोचरे' इति वचनात् किन्नरान् नराभासान् किंपुरुषान् पुरुषाभासान् आत्मना रूपेण कायेनासृजदित्यन्वयः । येन भावेन ब्रह्मा पदार्थान् सृजति

---

[1] पितृपदमधिकमिति भाति । [2] विस्तृत्य वितरन्ति–प्र । [3] अदृश्यत्वहेतुत्वादित्यर्थः ।

ते तु तज्जगृहू रूपं त्यक्तं यत् परमेष्ठिना ।
मिथुनीभूय गायन्तस्तमेवोषसि कर्मभिः ॥ ४६ ॥

देहेन वै भोगवता शयानो बहुचिन्तया ।
सर्गेऽनुपचिते क्रोधादुत्ससर्ज हि तद् वपुः ॥ ४७ ॥

येऽहीयन्तामुतः केशा अहयस्तेऽङ्ग जज्ञिरे ।
सर्पा विसर्पतः क्रूरा नागा भोगोरुकन्धराः ॥ ४८ ॥

---

स चेष्टादिलक्षणो भावस्तेषामौत्पत्तिकतया यावच्छरीरं वर्तत इत्यतस्तं भावं दर्शयतीत्याह—**मानयन्निति** । आत्मना मनआदिना आत्मानं स्वशरीरं गन्धपुष्पादिभिर्मानयन् पूजयन् दर्पणादिना आत्माभासं स्वच्छायां विलोकयन् असृजदिति पूर्वेणान्वयः । अयं न्यायः पूर्वत्रोत्तरत्र चानुसन्धेयः ॥ ४५ ॥

परमेष्ठिना त्यक्तम् । ते किन्नराः । तद् रूपं स्वभावलक्षणकमाकारं जगृहुरित्यन्वयः । 'रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ हितादिषु । सौन्दर्ये च स्वभावे च' इत्यभिधानम् । तेषां कृत्यमाह—**मिथुनीभूयेति**[1] । तं ब्रह्माणं कर्मभिश्चरितैः पद्यादिना ग्रथितैः । अनेन पक्षिणां सृष्टिरपि व्याख्याता । किन्नरादीनां मुखस्यैव नराकारत्वादण्डजत्वाविशेषात ॥ ४६ ॥

सर्पादिसृष्टिप्रकारं वक्ति—**देहेनेति** । भोगवता सर्पशरीराकारवता देहेन शयानो ब्रह्मा प्रजासर्गे अनुपचिते अलम्भावरहिते बहुचिन्तया जातात् क्रोधात् तद् वपुरुत्ससर्ज । हिशब्दो हेत्वर्थः । यस्मात् क्रोधादस्राक्षीत्[2] तस्मादीषदुपद्रुताः क्रुद्धाः सर्वान् लोकानुपद्रवन्तीति ॥ ४७ ॥

एकस्माद् देहादुत्पन्नानामवान्तरभेदमाह—**य इति** । अमुतः अमुष्माच्छरीराद् ये केश अहीयन्त त्यक्ता आसन् तेऽहयो जज्ञिर इत्यन्वयः । क्रियापदस्य सुबन्तत्वं 'यदश्वत् तस्मादश्वः[3]' इति वेदे दृष्टत्वाद् युक्तम् । विसर्पतः विविधसर्पणात् सर्पाः । तत्स्वभावमाह क्रूराः क्षिप्रं क्रोधशीलत्वात् । न गच्छन्तीत्यगाः । अगा न संभवन्तीति नागाः क्षिप्रगन्तृत्वात् । तल्लक्षणमाह—**भोगोरुकन्धरा इति** । भोगवदुर्व्यो बृहत्यः कन्धरा येषां ते तथा । यद्वा भित्तिप्रदीपन्यायेनोरुशब्द उभयत्रान्वेतव्यः । उरुभोगाश्चोरुकन्धराश्चोरुभोगोरुकन्धराः । 'उरुभोगाय विद्महे महाकण्ठाय धीमहि । तन्नो नागः प्रचोदयात्' इति जाङ्गलिकतन्त्रे ॥ ४८ ॥

---

[1] स्वात्ममानस्वप्रतिबिम्बावलोकनलक्षणव्यापारद्वयजन्यत्वान्मिथुनीभूयेत्युक्तमिति यादुपत्यम् ।

[2] अत्याक्षीत्–प्र । [3] 'ततोऽश्वः समभवद् यदश्वत्'—बृ.उ. (३-२-७)

स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः ।
तदा मनून् ससर्जान्ते मनसा लोकभावनान्     ॥ ४९ ॥

तेभ्यः स व्यसृजद् देहं परः पुरुष आत्मनः ।
तां दृष्ट्वा ये पुरा सृष्टाः प्रशशंसुः प्रजापतिम्     ॥ ५० ॥

अहो एतज्जगत्स्रष्टः सुकृतं बत ते कृतम् ।
प्रतिष्ठिताः क्रिया यस्मिन् साकमन्नमदामहे     ॥ ५१ ॥

तपसा विद्यया युक्तो योगेन सुसमाधिना ।
आदावृषीन् हृषीकेशः ससर्जाभिमताः प्रजाः     ॥ ५२ ॥

---

सृष्टानां सर्वेषां सर्वकर्माधिकारित्वेनोपकारकत्वेन मनुसृष्टिमाह—**स आत्मानमिति** । यदाऽऽत्मभूर्ब्रह्मात्मानं देहं कृतकृत्यमिव मन्यमानोऽभूत् तदन्तेऽवसाने मनःपूर्वकं लोकभावनान् लोकवृद्धिकरान् मनून् ससर्ज । स परः पुरुषः ब्रह्मात्मनस्तं देहं तेभ्यो व्यसृजदित्यन्वयः[1] । सर्वस्याः सृष्टेरियं सृष्टिः प्रशस्तेति भावेनाह—**तां दृष्ट्वेति** । ये पुरा सृष्टाः देवास्ते तां मनुसृष्टिं दृष्ट्वा अहो इति प्रजापतिं प्रशशंसुः ॥ ४९, ५० ॥

एतदेव विवृणोति—**एतदिति** । हे जगतः स्रष्टः ते तवैतत् कृतं कर्म सुष्ठु कृतं पर्याप्तम् । इतोऽधिकं नास्तीत्यर्थः । बतेत्यनेन 'ता अब्रुवन् सुकृतं बत' इति श्रुतिर्मानमिति । किंच यस्मिन् मनुसर्गे यागादिक्रियाः प्रतिष्ठिताः । ततः प्रयोजनमाह—**साकमिति** । तैर्दत्तमन्नं भवता साकमदामहे । तेनास्मत्प्रसादात् तेषामपि महती प्रजावृद्धिः स्यादित्यदामहे इति व्यत्ययेन[2] प्रयोजनमसूचि । 'दृष्ट्वा तु पौरुषीं सृष्टिं देवाः सुकृतमूचिरे[3]' इत्यनेन ये पुरा सृष्टा असुरास्ते तां सृष्टिं दृष्ट्वा प्रजापतिं प्रशशंसुरित्यपव्याख्यानं प्रत्युक्तम् । देवसृष्ट्यनन्तरत्वाच्च ॥ ५१ ॥

सुरसृष्टेः प्रथमतः कृतमप्यृषिसर्गं देवासुरादिसाधारणत्वप्रकटनाय[4] तत्सर्गं[5] पश्चाद् वक्ति—**तपसेति** । हृषीकेशो ब्रह्मान्तर्यामी तपआदिना युक्तः सर्वस्मादादौ सर्वाभिमताः प्रजा ऋषीन् ससर्जेत्यन्वयः । सर्वत्रापि श्रीनारायण एव ब्रह्मान्तर्यामित्वेन स्रष्टा नान्य इति प्रकाशनाय हृषीकेश इति भगवत्येव रूढं नाम प्रायोजीति ज्ञातव्यम् । अभेदाभिप्रायेण किं न स्यादिति चेन्न । दैत्योपद्रवे

---

[1] आत्मनः स्वस्य देहं बाह्यं पुरुषदेहं त्यक्त्वाऽदादिति यादुपत्यम् ।   [2] विकरणपदव्यत्ययेन– प्र । परस्मैपदिनः अद धातोः आत्मनेपदतया प्रयोगेणेत्यर्थः ।   [3] तात्पर्योदाहृतब्राह्मवचनमेतत् ।
[4] देवासुरादिसाधारणत्वं नाम पूज्यत्वेन देवासुराद्यभिमतत्वं स्यात् ।   [5] तत्सर्गमित्यधिकमिति भाति ।

तेभ्यश्चैकैकशस्तस्य देहस्यांशमदादजः ।
यत् तत् समाधियोगर्धितपो विद्याविरक्तिमत् । ॥ ५३ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे एकविंशोऽध्यायः ।

। अथ द्वाविंशोऽध्यायः ।

विदुर उवाच—
स्वायम्भुवस्य च मनोर्वंशः परमसम्मतः ।
कथ्यतां भगवन् यत्र मैथुनेनैधिरे प्रजाः ॥ १ ॥

प्रियव्रतोत्तानपादौ[2] सुतौ स्वायम्भुवस्य वै ।
यथाधर्मं जुगुपतुः सप्तद्वीपवतीं महीम् ॥ २ ॥

---

तत्परिहाराय ब्रह्मणा विष्णुशरणोपगतेरुक्तत्वात् । 'यत्रापि तु हरेर्नाम तदन्यत्र प्रयुज्यते । तदान्तरहरेस्तत्र गृहीतिर्नान्यथा भवेत् । स्वातंत्र्यादवरत्वं च परस्यापि प्रयुज्यते । स्थितस्यापि यथा राज्ञः स्वानां जयपराजयौ' इत्यनेन मुख्यार्थानुपपत्तावमुख्यार्थोपपत्तेः सिद्धत्वात् ॥ ५२ ॥

अजो ब्रह्मा यत् तत् स्वशरीरं समाधियोगपूर्तिमत् तपोविद्याविरक्तिमच्च तस्य शरीरस्यैकैकांशं[1] समाध्याधिकं तेभ्य ऋषिभ्यः प्रादादित्यन्वयः ॥ ५३ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां तृतीयस्कन्धे एकविंशोऽध्यायः ।

। अथ द्वाविंशोऽध्यायः ।

'अकामः सर्वकामो वा मोक्षकामो हरिं भजेत्[3]' इति यदुक्तं पूर्वत्र तदिह कर्दमचरितव्याजेन प्रपञ्चयतेऽध्यायत्रयेण । तत्र मैत्रेयं विदुरः पृच्छति—**स्वायम्भुवस्येति** । परमत्वेनोत्तमत्वेन सम्मतः सम्प्रतिपन्नः । तस्मात् कथ्यतामिति हेत्वर्थे चशब्दः । एधिरे एधाञ्चक्रिरे ॥ १ ॥

देवहूत्याः कथाया अवश्यश्रोतव्यत्वेऽपि प्रथमतस्तत्कथने मनोः कन्यैव न तु पुत्राविति प्रतीतायास्तस्या अभ्रातृमतीत्वेन परिणेतुः प्राशस्त्यबुद्धिर्नस्यादिति तत्प्रीत्यै[4] तत्पुत्रावाह—**प्रियव्रतेति** । वा इत्यनेनौरसत्वमवधारयति । एतच्चरितं वक्तव्यमित्यस्मिन्नर्थे वा ॥ २ ॥

---

[1] यो देहः समाध्यादिमान् तस्योक्तविशेषणविशिष्टस्य देहस्यैकदेशं प्राधान्येनैकैकविशेषणविशिष्टस्वरूपस्वभावमदादित्यर्थः—इति यादुपत्यम् । [2] पदौ–क ङ । [3] २-३-१० भागवतश्लोकस्यार्थतोऽनुवादो ऽयम् । [4] तत्प्रतीतये–प्र ।

तस्य वै दुहिता ब्रह्मन् देवहूतीति विश्रुता ।
पत्नी प्रजापतेरुक्ता कर्दमस्य त्वयानघ ॥ ३ ॥

तस्यां स वै महायोगी युक्तायां योगलक्षणैः ।
ससर्ज कतिधा वीर्यं तन्मे शुश्रूषवे वद ॥ ४ ॥

रुचिर्यो भगवान् ब्रह्मन् दक्षो वा ब्रह्मणः सुतः ।
यथा ससर्ज भूतानि लब्ध्वा भार्यां च मानवीम् ॥ ५ ॥

मैत्रेय उवाच—

प्रजाः सृजेति भगवान् कर्दमो ब्रह्मणोदितः ।
सरस्वत्यां तपस्तेपे सहस्राणां समा दश ॥ ६ ॥

ततः समाधियुक्तेन क्रियायोगेन कर्दमः ।
संप्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम्[1] ॥ ७ ॥

तावत् प्रसन्नो भगवान् पुष्कराक्षः कृते युगे ।
दर्शयामास तं क्षत्तः शाब्दं ब्रह्म दधद् वपुः ॥ ८ ॥

---

देवहूत्याः भ्रातृमतीत्वमुक्त्वा तच्चरितं श्रोतुमुक्तमनूद्य शेषं पृच्छति—**तस्य वा इति**। अस्तु मनोः पुत्री ततः किमित्यत आह—**प्रजापतेरिति**। त्वया या कर्दमस्य प्रजापतेर्जायेत्युक्ता ॥ ३ ॥

स कर्दमस्तस्यां कतिधा वीर्यं ससर्ज। तत् वीर्यसर्जनलक्षणं चरितम्। यमनियमादियोगलक्षणैः ॥ ४ ॥

अनन्तरं रुचिदक्षयोश्चरितं वक्तव्यमित्याह—**रुचिरिति** ॥ ५ ॥

मैत्रेयः प्रथमतो मनुपुत्रयोः कथाया वक्तव्यत्वेऽपि सूचीकटाहन्यायेन रुचिदक्षयोश्चरितयोरनन्तरं पृष्टत्वाच्च देवहूती[2]चरिताविनाभूतं कर्दमचरितं वक्तुमुपक्रमते—**प्रजा इत्यादिना**। सहस्राणां दश समाः ॥ ६ ॥

किंविषयमिदं तप इति तत्राह—**तत इति**। समाधियुक्तेन क्रियायोगेन वैदिकतान्त्रिकलक्षणोपायेन। दाशुषं, दाशृ दाने, वरदम् ॥ ७ ॥

साधनसामग्रीफलमाह—**तावदिति**। यः स्वयं चित्तीकृतस्तमात्मानं शाब्दं वेदैकवेद्यं ब्रह्म सर्व-

---

[1] दायिनम्–घ। [2] देवहूति–ङ।

स तं विरजमर्काभं सितपद्मोज्ज्वलत्स्रजम् ।
स्निग्धनीलालकव्रातवक्त्राब्जविरजाम्बरम् ॥ ९ ॥

किरीटिनं कुण्डलिनं शङ्खचक्रगदाधरम्
श्वेतोत्पलक्रीडनकं मनःस्पर्शस्मितेक्षणम् ॥ १० ॥

विन्यस्तचरणाम्भोजमंसदेशे गरुत्मतः ।
दृष्ट्वा खेऽवस्थित वक्षःश्रियं कौस्तुभकन्धरम् ॥ ११ ॥

जातहर्षोऽपतन्मूर्ध्ना क्षितौ लब्धमनोरथः ।
गीर्भिस्त्वभ्यगृणात् प्रीतः स्वभावात्मा कृताञ्जलिः ॥ १२ ॥

कर्दम उवाच—
जुष्टं बताद्याखिलसत्त्वराशेः संसिद्धमक्ष्णोस्तव दर्शनान्नः ।
यद् दर्शनं जन्मभिरीड्य सद्भिराशासते योगिनो रूढयोगाः ॥ १३ ॥

---

गुणपरिपूर्णम् । 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः' इति श्रुतिवेद्यत्वदर्शनाय ब्रह्मपद-प्रयोगः । वपुः शुभाकारम् । 'शुभाकारे तनौ वपुः' इति[1] । न मायामयम्[2] ॥ ८ ॥

शुभाकारत्वं विवृणोति—**स तमिति** ॥ ९ ॥

क्रीडनकं क्रीडासाधनम् । द्रष्टॄणां मनःस्पर्शे मनोविषये स्मितेक्षणे यस्य स तथा तम् ॥ १० ॥

स्वभावात्मा अव्यग्रमनाः । स्वतन्त्रो भावो यस्य स स्वभावो हरिः स आत्मनि मनसि यस्य स तथेति वा[3] ॥ १२ ॥

स्तुतिरपि स्तुत्यस्य हरेः क्षिप्रप्रीतिकरी यथार्थत्वेनानुकम्पाहेतुत्वादुत्तरत्र फलोदयाच्चेति भावे-नाह—**जुष्टमिति** । हे ईड्य सतात्पर्यं वेदादिभिः स्तुत्य । अद्य अखिलसत्त्वराशेः पूर्णज्ञानबल-समुद्रस्य तव दर्शनात् साक्षात्कारात् नोऽस्माकमक्ष्णोः जुष्टं निषेवणं त्वत्क्षेत्रलिङ्गादिविषयं संसिद्धं सम्यक् फलितम् अभूत् । बताश्चर्यमिदं दुर्भगेष्वस्मासु अनुकम्पेति । उपलक्षणमेतत् । श्रोत्रादेः

---

[1] इति रत्नमालायाम्—च । [2] वपुःशब्देन शुभाकारस्योक्तत्वान्न मायामयम् । मायाया अशुभत्वादि-त्यभिप्रायः स्यात् । [3] स्वभावे आत्मा यस्येति वा—इत्यधिकं प्र पाठे ।

ये मायया ते हतचेतसस्त्वत्पादारविन्दं भवसिन्धुपोतम् ।
उपासते कामलवाय तेषां रासीश कामान् निरयेऽपि ये स्युः ॥ १४ ॥

तथा स चाहं परिवोढुकामः समानशीलां गृहमेधिधेनुम् ।
उपेयिवान् मूलमशेषमूलं दुराशयः कामदुघाङ्घ्रिपस्य ॥ १५ ॥

प्रजापतेस्ते वचसाऽधीश तन्त्या
लोकः किलायं कामहेतोर्निबद्धः ।
अहं च लोकानुगतो वहामि
बलिं च शुक्लानिमिषाय तुभ्यम् ॥ १६ ॥

---

कथाश्रवणादिनिषेवणम् । 'अक्षण्वन्तः' इत्यादि श्रुतेः । तवानुग्रह एव मुख्यं निमित्तं तत्र नास्मत्प्रयत्न इति भावेनाह—**यद् दर्शनमिति** । रूढयोगा निरन्तरानुवृत्तध्यानयोगिनो यमादिमन्तः पुरुषा यद् दर्शनं आशासते वाञ्छन्ति तादृशमिति भावः । महता कालेन प्रयतमानानां योगिनामाकाङ्क्षामात्रम् । अस्माकं त्वल्पेनैव कालेनाभूदित्यतो बतेति ॥ १३ ।

इदानीमनुग्रहकातरं भगवद्भावं पश्यन् कर्दमः स्वमनोरथं गर्हयन् विज्ञापयति—**य इति** । ईश ऐश्वर्यवारिधे । तव मायया बन्धकशक्त्या हतचेतसः नष्टज्ञानान्तःकरणाः पुरुषाः भवसिन्धुपोतं संसारसमुद्रस्योत्तरणे तरीभूतं त्वत्पादारविन्दं कामलवाय उपासते सेवन्ते । ये कामा निरयेऽपि स्युः सुलभास्तान् तेषां रासि । रा दान इति धातुः । निरयः सूकरादियोनिः । अतिकृच्छ्रत्वद्योतनायेदमुदितम् । अनेनेदृशमपि भगवत्कटाक्षोपाक्षिप्तम् । किमुत स्वाराज्यादीति सूचितम् ॥ १४ ॥

किमनेन प्रकृते इत्याशङ्क्याहमप्येष्वेको लम्पट इत्याह—**तथेति** । तथा पूर्वोक्तकामोपासकवत् सोऽहं च कामदुघाङ्घ्रिपस्याभीष्टवर्षणशीलकल्पतरोस्तवाशेषमूलं अपेक्षितसमस्तपुरुषार्थकारणं पादमूलमुपेयिवान् इत्यन्वयः । किंकामस्त्वमित्यत उक्तम्—**परिवोढुकाम इति** । समानशीलां गृहमेधिधेनुं गृहस्थयज्ञाङ्गभूतां भार्यां[1] परिवोढुकामः परिणेतुकामः । तत्र निमित्तमाह—**दुराशय इति** । दुर् अशोभने विषये आशयो यस्य स तथा 'दुरशोभनदुःखयोः' इति यादवः ॥ १५ ॥

अघटितघटकमहिमा भगवान् यतः सकामोपास्तिं निकृष्टां जानन्तोऽपि मादृशास्तव वेदाख्यवचनमायया नियताः संसरन्तीत्याह—**प्रजापतेरिति** । अधीशेति सम्बुद्धेः प्रजापतिर्हरिरेव, न विरिञ्चिः तस्य तत्र मुख्यार्थानुपपत्तेः इन्द्रादिशब्दवत् । अधय ईश्वरा ब्रह्मादयस्तेषामपीश । जगत्

---

[1] **समानशीलां तुल्यस्वभावां गृहमेधिधेनुं गृहस्थाश्रमकामपूरणसमर्थाम् । स्त्रियमिति शेषः—ङ ।**

**लोकांश्च लोकानुगतानसूंश्च**
**हित्वा श्रितास्ते चरणातपत्रम् ।**
**परस्परं त्वद्गुणवादसीधु-[1]**
**पीयूषनिर्यापितदेहधर्माः　　　　॥ १७ ॥**

**न तेऽजराक्षभ्रमिरायुरेषां**
**त्रयोदशारं त्रिशतंषष्टिपर्व ।**
**षण्णेम्यनन्तच्छिदि यत् त्रिनाभि**
**करालस्रोतो जगदाच्छिद्य धावत्　　　　॥ १८ ॥**

---

सृष्ट्यादिविभूतिप्रवर्तकत्वात् । प्रजापतेस्तव वचसा वेदलक्षणतन्त्या । 'तस्य वाक् तन्तिर्नामानि दामानि' इति श्रुतेः । अयं जनः स्वर्गादिकामहेतोर्निबद्धः किल त्वत्पूजालक्षणं बलिं वहतीति शेषः । हे शुक्र संसारशुचं विलाप्य कं सुखं आदाय ददातीति । लोकानुगतत्वात्, अहमप्यनिमिषाय प्राणिचीर्णपुण्यपापनिरीक्षणार्थमुन्मीलितनेत्रत्वात् तच्छब्दवाच्याय कालान्तर्यामिणे तुभ्यं बलिं वहामि । उत्तरत्र सभार्यो वहेयमिति चार्थः ॥ १६ ॥

अयमेव बलिर्भगवदर्पणबुद्ध्या चिकीर्षतो [2]भक्तिहेतुरपि भवतीति भावेनाह—**लोकांश्चेति** । 'अस्माल्लोकात्प्रेत्य' इति श्रुतेः लोकान् जडशरीराणि च लोकानुगतानसून् प्राकृतेन्द्रियाणि च हित्वा ते तव चरणातपत्रं श्रिताः पुनश्च परस्परं तव गुणवाद एव सीधु[3] पीयूषं सुखजनकनवसूतगवीदुग्धं यत् तेन निर्यापिताः प्रवर्तिताः देहधर्माः सच्चिदानन्दात्मकदेहधर्माः येषां ते तथा । यद्वा निर्यापिता निवारिता जननमरणादिलक्षणा देहधर्मा येषां ते तथा ॥ १७ ॥

लक्षणदर्शनाल्लक्ष्यमध्याहृत्यान्वेतव्यम् । ते तव चक्रम् एषामायुर्न, च्छिनत्तीति शेषः । सुदर्शनाद् व्यावर्तयति—**अजरेति** । अजरे कदापि जरादोषरहिते अक्षे[4] नाभिद्वारे भ्रमतीत्यजराक्षभ्रमिः । नियतलिङ्गत्वाद् गिरिशब्दवत् । अधिमासैः सह त्रयोदशमासाः अराणि दलानि यस्य तत् तथा । त्रीणि शतानि षष्ठिसंख्यासहितानि अहोरात्रलक्षणानि दिनान्येव पर्वाणि यस्य तत् तथा त्रिशतंषष्ठि-पर्व । छान्दसत्वादनुस्वारलक्षणबिन्दुलोपो नास्ति । षड् ऋतवो नेमयश्चक्रप्रान्तदेशाः यस्य तत् षण्णेमि । अनन्ताः परमाणुद्व्यणुकादिलक्षणाः छिदाः छिद्राः अतिशयितछिद्रा अवयवा यस्य सन्तीति

---

[1],[3] साधु–घ ।　[2] मुक्ति–ग ।　[4] परब्रह्मरूपेऽक्षे इति यादुपत्यम् ।

एकः स्वयं सन् जगतः सिसृक्षया
द्वितीययात्मन्नधि[1]योगमायया ।
सृजस्यदः पासि पुनर्ग्रहीष्यसे[2]
यथोर्णनाभिर्भगवन् स्वशक्तिभिः ॥ १९ ॥

नैतद् बताधीश पदं तवेप्सितम्
यन्मायया जगृहे भूतसूक्ष्मम् ।

---

अनन्तच्छिदि । 'तृतीयोऽतिशये' इति सूत्रादिकारो लोकवैलक्षण्यलक्षणातिशयार्थः । यद्वा छद इत्येतस्मिन्नर्थे छिदीति निपातनम् । मथनान्मिथिलो जात इतिवद्युक्तं च । त्रीणि चातुर्मास्यानि नाभिर्यस्य तत् त्रिनाभि करालस्रोत अतिक्रूरवेगं, जगदाछिद्य कवलीकृत्य, धावत् गच्छत्, पुनःपुनरावर्तमानमित्यर्थः । यदेवंविधं कालचक्रं तदिति शेषः । यद्वा एषामायुराच्छिद्य न धावत् । जगदाच्छिद्य धावदित्यनेन गृहाश्रमं गृहीत्वा पामरवन्न संसरामि । किन्तु त्वदनुग्रहकरं कर्म कारंकारं जरसं गच्छन् अन्ते निवृत्तिमार्गमनुतिष्ठामीति ध्वनितम् ॥ १८ ॥

भक्तजनविषये स्वेच्छानियतसंसारोन्मूलनं कैमुत्येन सिद्धमिति भावेनाह— **एक इति** । निर्गुणस्य गुणेषु सत्सु तदमृतपानेन निर्यापितदेहधर्मत्वं संभवति तत्तु[3] चिन्त्यमित्यतो वाह—**एक इति** । ब्रह्माद्यन्यतमासाध्यजगत्सर्जनादेस्त्वत्कटाक्षलेशनियतत्वेन बन्धध्वंसनं किमु वक्तव्यम् । सार्वज्ञादिगुणाभावे सृष्ट्यादिकमनुपपन्नमतोऽन्यथानुपपत्त्या गुणानामानन्त्यं सिद्धमत उक्तं युक्तमिति । आत्मनि स्वोदरे स्थितस्य जगतः सिसृक्षया स्वाधीनया योगमायया चित्प्रकृत्या जडप्रकृत्या च । लोकविडम्बनार्थं —**द्वितीययेत्युक्तम्** । द्वितीय आत्मन्निति पाठे पुरुषरूपो भूत्वेत्यर्थः । स्वशक्तिभिः स्वरूपसामर्थ्योपेतमत्स्याद्यवतारैः पालनादिकं करोषीति । सृष्ट्यादिलक्षणं वास्तवमिति ज्ञापनायोर्णनाभिनिदर्शनमुक्तम् । 'यथोर्णनाभिः सृजते गृह्णते च' इति श्रुतेः ॥ १९ ॥

यथा सृष्ट्यादिलक्षणज्ञानं पुरुषार्थसाधनमित्याशयेन सृष्ट्यादिकमुक्तम् एवं स्रष्टृसृज्ययोर्भेदज्ञानं तत्साधनमित्यभिप्रायेणाह—**नैतदिति** । अधीश यत् भूतसूक्ष्मं ब्रह्माण्डं मायया स्वेच्छयानन्यप्रेरणया[4]

---

[1] द्वितीय आत्मन्—इति पाठान्तरम् । [2] ग्रसिष्यसे–क । [3] त्वयि गुणेषु सत्सु तदमृतपानेन जरामरणादि यापनं सम्भवेत् । तव निर्गुणस्य सतः तत् चिन्त्यमेव अशक्यमेव भवेदित्यर्थः ।

[4] स्वेच्छया नान्यप्रेरणया–घ ।

अनुग्रहाय त्वयि यर्हि मालया
लसत्तुलस्या भगवान् विलक्षितः ॥ २० ॥

तं त्वानुभूत्योपरतक्रियार्थं स्वमायया वर्तितलोकतन्त्रम् ।
नमाम्यभीक्ष्णं नमनीयपादसरोजमल्पीयसि कामवर्षम् ॥ २१ ॥

---

रूपत्वेन जगृहे अङ्गीकृतवान् भूतसूक्ष्मैर्निर्मितमपि मृद्घटवदित्युच्यते[1] तवैतत् रूपमीप्सितं 'सत्यं ज्ञानमनन्तं ब्रह्म' इति उपनिषदभीष्टं पदं रूपं न भवति बत । एवंज्ञातमेव तोषलक्षणपुरुषार्थकरम् अभेदेन ज्ञातं खेदलक्षणदुःखकरमित्यर्थः । तर्हि किमित्यग्रहीदित्यत उक्तम्—**अनुग्रहायेति** । त्वयि भक्तिभाजां मन्दाधिकारिणां भगवति भक्त्युत्पादकानुग्रहायाग्रहीदित्यर्थः । त्वयैतत् कुतो ज्ञातमित्यत उक्तम् -**यर्हीति** । विलक्षित इति पदमध्याहृत्य योजनीयम् । स भगवान् यर्हि यदा । लसन्ती तुलसी यस्यां सा लसत्तुलसी तया मालया । उपलक्षणमेतत् । मकरकुण्डलाद्यलङ्कारैश्च । मया विशिष्टत्वेन लक्षितोऽङ्कितोऽन्यवस्तुवैलक्षण्येन लक्षितो ध्यानपदं गमितस्तथेदानीमपि लक्षितो दृष्ट इति यर्हि यस्मात् तस्मादिदमेवाभीष्टमिति ज्ञातम् । यद्वा नृ नय इति धातोर्न उपायवान् भगवान् भूतानां सूक्ष्मं द्रष्टुमशक्यं यद् रूपं जगृहे एतत् तवेप्सितं पदम् । तर्हि कथं दृष्टमिति तत्राह—**अनुग्रहायेति** । तर्ह्यनुग्रहोऽपि तथाविशिष्टः किमिति नाभूद् ? अत्राह—**यर्हीति** । यथा यादृशलक्षणवत्तया लक्षितो ध्यातस्तथा मया विलक्षितो दृष्ट इति यस्मात् तस्मात् भक्त्यनुकम्पितत्वात् त्वत्स्वामित्वज्ञानं श्रेयःसाधनमिति सूचितम् ॥२०॥

मदनुग्रहाय सच्चिदानन्दलक्षणं वपुर्दर्शयतो भवतो नमनोपायनदानेन नित्यतृप्तस्य प्रत्युपकरोमीति भावेनाह—**तं त्वेति** । यस्त्वमनायासेन जगत्सृष्ट्यादिकं करोषि अहं तं त्वा त्वां नमामीत्यन्वयः । ननु यदि नन्तुर्नम्यो विशिष्टः स्यात् तर्हि स तत्क्रियाविषयः स्यादित्यतस्तं विशिनष्टि —**अनुभूत्येति** । अनुभूत्या स्वरूपानुभवेनोपरतो नित्यनिवृत्तः क्रियार्थः देहादिनिमित्तकर्मफलविशेषो[2] यस्य स तथा स्वरूपानन्दानुभवेन निवृत्तविषयसुखो वा तम् । स्वमायया स्वेच्छया वर्तितं लोकतन्त्रं देहादिलक्षणलोकप्रवृत्तिसाधनं येन स तथा तम् । अभीक्ष्णशः पुनःपुनरित्यनेन तात्पर्यातिशयद्योतकेनेदमेवत्वत्प्रीतिसाधनमिति सूचयति । भवानौषधपानवत् बलात् कर्मण्यरुचिविषयो[3] न, किन्तु स्वत एवेति भावेनाह—**नमनीयेति** । इतोऽपि त्वमेव नन्तव्य इत्याह—**अल्पीयसीति** । अल्पीयसि जात्या गुणेन वाल्पतरभक्ते कीटे व्यासमिवा[4]भीष्टं वर्षन्तम् । कामस्याभीष्टस्य वर्षो यस्मात् स तथोक्तः

---

[1] भूत .... .... घटवदित्युच्यते—अस्याभिप्रायो न व्यक्तः ।

[2] विषयः-क । [3] बलात्काररुचिविषयी-प्र । [4] व्यास इवेति स्यात् ।

ऋषिरुवाच—

इत्यव्यलीकं प्रणतोऽब्जनाभस्तमाबभाषे वचसामृतेन ।
सुपर्णपक्षोपरि रोचमानः प्रेमस्मितोद्वीक्षणविभ्रमद्भ्रूः ॥ २२ ॥

भगवानुवाच—

विदित्वा तव चैत्यं मे पुरैव समयोजितम् ।
यदर्थमात्मनियमैस्त्वयैवाहं समर्चितः ॥ २३ ॥

न वै जातु मृषेदं स्यात् प्रजाध्यक्ष मदर्हणम् ।
भवद्विधेष्वतितरां मयि संगृहितात्मनाम् ॥ २४ ॥

प्रजापतिपतिः सम्राट् मनुर्विख्यातमङ्गलः ।
ब्रह्मावर्तं योऽधिवसञ्छास्ति सप्तार्णवां महीम् ॥ २५ ॥

---

तमित्यक्षरयोजना । यद्वा महदहङ्कारादिजगत्स्रष्टृ यद् रूपं तन्निजं न भवतीति यन्मतं तद् दूषयितुमेवाह—**तं त्वेति**। उक्तार्थोऽयं श्लोकः। आवर्तितलोकाख्यराज्यव्यापारो येन स तथा तम् ॥ २१ ॥

कर्दमेन प्रणतं रूपं सत्यज्ञानानन्दलक्षणमेव न मायाशबलमिति भावेनाह—**इतीति** । प्रेम्णा युक्तेन स्मितेन सह यदुत्कृष्टं वीक्षणं तेन विलोकनेन विभ्रमन्ती विस्फुरन्ती भ्रूर्यस्य स तथोक्तः ॥ २२ ॥

पुरा मे मया तव चैत्यं चित्तस्थमभिप्रायं विदित्वैव समयोजितम् प्रेरितम् । तदेवाह—**यदर्थमिति** ॥ २३ ॥

पूजाकर्मणः क्षणभङ्गुरत्वेन तस्मादिदं फलमभूदिति निश्चेतुं न शक्यत इति शङ्का मा भूत् । मदर्पितत्वेनाक्षीणफलत्वादित्यभिप्रेत्याह—**न वा इति** । जातु वै कदाचिदपि पाशुपतशास्त्रोक्तवत्[1] मयि संगृहीतात्मनां समाहितमनआदीन्द्रियाणां युष्माकं यन्मदर्हणं तदिदं भवद्विधेषु पुरुषेषु मृषा क्षणभङ्गुरत्वेन निष्फलं न स्यात् । मदर्पणचिकित्सायुक्तत्वात् । अभक्तव्यावृत्त्यर्थम् अतितरामिति । संगृहीतात्मनामिति षष्ठी सप्तम्यर्थे वा । संनिकृष्टत्वादुभयोः स्वस्वामित्वसंबन्धो नित्यमनुसन्धेय इति तात्पर्यद्योतनाय प्रायोजि । अन्यथा मयि संगृहीतात्मस्विति प्रयोक्तुं शक्यते । अनेन श्रेयोऽर्थिभिरभेदवार्तां दूरादेव परिहृत्य भेदज्ञानमेवापाद्यमिति सूचितम् ॥ २४ ॥

कर्दमं प्रशस्य प्रकृतमनुसरति—**प्रजापतीति** । प्रजापतयो मरीच्यादयस्तेषां पतिः । सप्ता-

---

[1] व्यतिरेकदृष्टान्तोऽयम्। पाशुपतशास्त्रोक्तं यथा निष्फलं भवति तथेदं नेति ।

स चेह विप्र राजर्षिर्महिष्या शतरूपया ।
आयास्यति दिदृक्षुस्त्वां परश्वो धर्मकोविदम् ॥ २६ ॥
आत्मजामसितापाङ्गीं वयःशीलगुणान्विताम् ।
मृगयन्तीं पतिं दास्यत्यनुरूपाय ते प्रभुः ॥ २७ ॥
समाहितं ते हृदयं यत्रेमान् परिवत्सरान् ।
सा त्वां ब्रह्मन् नृपवधूः काममाशु भजिष्यति ॥ २८ ॥
या त आत्मभृतं वीर्यं नवधा प्रसविष्यति ।
वीर्ये त्वदीय ऋषय आधास्यंस्तेज आत्मनः ॥ २९ ॥
त्वं च सम्यगनुष्ठाय[1] निदेशं म उशत्तर[2] ।
मयि तीर्थीकृताशेषक्रियार्थो मां प्रपत्स्यते ॥ ३० ॥

र्णवामित्यनेन सम्राट्त्वं विवृतम् ! ब्रह्मावर्तं क्षेत्रमधिवसन् । अधिशीङ्स्थासां कर्मेत्यतः सप्तम्यर्थे द्वितीया ॥ २५ ॥

ततः किमस्माकम् ? अत्राह—**स चेति** । हे प्रिय ॥ २६ ॥

वनवासिनो मम सम्राजा किम् ? तत्राह—**आत्मजामिति** । असितापाङ्गीं नीलद्युतिनेत्रान्ताम् । नीलाञ्जनाञ्जितत्वेनापि तत्स्वभावः स्यादिति गुणान्तराण्याह—**वय इति** । कियद् वय इति प्रश्नमन्तरेण वयो लक्षयति—**मृगयन्तीमिति** । आसन्नरजःकामुकत्वेन पाणिग्रहणयोग्यामित्यर्थः ॥ २७ ॥

राजपुत्र्यास्तापसोऽहं कथमनुरूपः स्यामिति तत्राह—**समाहितमिति** । राजपुत्रीत्वादिविशेषमन्तरेण यत्र यस्यां वध्वाम् इमानतीतान् परिवत्सरान् ते हृदयं समाहितं ममानुकूला भार्या स्यादिति संक्लृप्तम् ॥ २८ ॥

इदं च त्वत्संकल्पान्तर्भूतं सत्यं भवतीति भावेन कन्यां विशिनष्टि—**येति** । या चात्मभृतं ते वीर्यं रेतोलक्षणं गर्भं नवधा प्रसविष्यति । नवधा विभक्ततया प्रसूतं च तव वीर्यं वंशवृद्धिकरं चेत्याह—**वीर्य इति** । मरीच्याद्यृषयोऽपि त्वदीये वीर्ये नवधा विभज्य पुत्रीभूते आत्मनस्तेजो गर्भलक्षणमाधास्यन् । यदि भवान् मदुक्तमकरिष्यत् तर्हीति शेषः । सा नृपस्य वधूः कन्या त्वां कामं भजिष्यति संसेविष्यत इत्यन्वयः । आशु कालक्षेपो नैवेति ॥ २९ ॥

मदर्पणबुद्ध्या चिकित्सितस्य स्वधर्मानुष्ठानस्य मत्प्राप्तिरेव फलमित्याह—**त्वं चेति** ॥ ३० ॥

[1] अनुष्ठीय–क । [2] मुनिसत्तम–ग । उषत्तरः–क ।

कृत्वा दयां च जीवेषु दत्वा चाभयमात्मवान् ।
मय्यात्मानं सहजगद् द्रक्ष्यस्यात्मनि चापि माम्[1] ॥ ३१ ॥
संभूय स्वांशकलया त्वद्वीर्येण महामते[3] ।
तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम् ॥ ३२ ॥
एवं तमनुभाष्याथ भगवान् प्रत्यगक्षगः ।
जगाम बिन्दुसरसः सरस्वत्या परिश्रितात् ॥ ३३ ॥
निरीक्षतस्तस्य यथावशेषसिद्धेश्वराभिष्टुतसिद्धमार्गः ।
आकर्णयन् पत्ररथेन्द्रपत्रैरुच्चारितं स्तोमसुदीर्णसाम ॥ ३४ ॥

---

गार्हस्थ्यानन्तरं चतुर्थाश्रमोऽप्यवश्यमनुष्ठेय इत्याशयेनाह—**कृत्वेति** । अभयं दत्वा । भूतेभ्य इति शेषः । आत्मवान् मदेकशरणः । संन्यासाश्रमानुष्ठानफलमाह—**मयीति** । सहजगदिति क्रियाविशेषणम् । यथा जगता सह वर्तमानस्तथात्मानं त्वां मयि द्रक्ष्यसि मदाधारं पश्यसीत्यर्थः । आत्मनि त्वयि स्थितं मां च पश्यसि । अनेनाधाराधेयभावेनोपास्तिं कुर्वत एवंविधज्ञानेन मत्प्राप्ति[2]-रुक्तेत्यतो भेदज्ञानमेव परमपुरुषार्थसाधनमित्युक्तं भवति ॥ ३१ ॥

पिण्डविच्छेदात् पितृशापः स्यादित्यातङ्को[4] मा भूदिति भावेनाह—**संभूयेति** । तव क्षेत्रे भार्यायाम् । 'क्षेत्रं पुरे गृहे देहे केदारे योनिभार्ययोः । पुण्यस्थाने समूहे च' इति यादवः । त्वद्वीर्येण सह गर्भं प्रविश्येति शेषः । स्वांशकलया [5]शुक्ररक्तसंबन्धरहितया सच्चिदानन्दलक्षणया संभूय सम्यगभिव्यज्य तत्त्वसंहितां तत्त्वसंख्यानलक्षणं सांख्यशास्त्रं प्रणेष्ये करिष्य इत्यन्वयः ॥ ३२ ॥

कर्दमायाशेषपुरुषार्थसाधनमभीष्टं हरिरुपदिश्य पुनः किमकार्षीदिति तत्राह—**एवं तमिति** । प्रत्यगक्षम् अंतर्यामिविषयमिन्द्रियं विषयत्वेन गच्छत्येनं प्रतीति प्रत्यगक्षगः, अपरोक्षज्ञानविषय इत्यर्थः । प्रत्यक् स्थितोऽपीदानीं इन्द्रियविषयगतो[6] वा ॥ ३३ ॥

अशेषसिद्धेश्वरैः समस्तब्रह्मादिभिरभिष्टुतः सिद्धैः सनकादिभिर्मृग्यत इति सिद्धमार्गश्च । 'मार्गो मृगपदे मासि सौम्यर्क्षेऽन्वेषणेऽध्वनि' इति । पत्ररथाः पक्षिणः तेषामिन्द्रः गरुडस्तस्य पत्रैः पक्षैः[7], उदीर्ण-

---

[1] चात्मवान्—इति पाठान्तरम् । आत्मवान् जितमनस्क इति यादुपत्यम् । [2] भगवत्प्राप्तिरिति स्वरसम् ।
[3] महामुने–ग घ ङ । [4] आशङ्का–ग । [5] शुक्र–क । [6] विषयं गतः–प्र । विषयत्वं गत इत्यर्थः । अस्यां योजनायां प्रत्यक् अक्षगः इति च्छेदः । [7] पत्रैरुच्चारितमभिव्यक्तं सामाधारभूतऋक्समुदायरूपं स्तुति-विशेषं तदारूढमुदीर्णमुत्कृष्टं साम चाकर्णयन्निति यादुपत्यम् ।

एवं संप्रस्थिते शुक्ले कर्दमो भगवान् ऋषिः ।
आस्ते स्म बिन्दुसरसि तं कालं प्रतिपालयन् ॥ ३५ ॥

मनुः स्यन्दनमास्थाय शातकौम्भपरिच्छदम् ।
आरोप्य स्वां दुहितरं सभार्यः पर्यटन् महीम् ॥ ३६ ॥

तस्मिन् सुधन्वन्नहनि भगवान् यत् समादिशत् ।
उपायादाश्रमपदं मनुः शान्तव्रतस्य तत् ॥ ३७ ॥

यस्मिन् भगवतो नेत्रादपतन् हर्षबिन्दवः ।
कृपया संपरीतस्य प्रपन्नेऽर्पितया भृशम् ॥ ३८ ॥

तद् वै बिन्दुसरो नाम सरस्वत्या परिप्लुतम् ।
पुण्यं शिवामृतजलं महर्षिगणसेवितम् ॥ ३९ ॥

पुण्यद्रुमलताजालैः कूजत्पुण्यमृगद्विजैः ।
सर्वर्तुफलपुष्पाढ्यं वनराजिश्रियान्वितम् ॥ ४० ॥

---

मुत्कृष्टं साम यस्मिन् स तथा तं स्तोमं स्तुतिविशेषम् ॥ ३४ ॥

अनन्तरं कर्दमोऽपि 'तपश्चेत् संपन्नं, किमत्रेत्यन्यत्र नागमत् किम्? तत्राह—**एवमिति**। प्रतिपालयन् प्रतीक्षमाणः ॥ ३५ ॥

ऋष्याद्युक्तमपि न मृषा भवति। किमुतेश्वरभाषितमिति भावेन मनोरागमनं वक्ति—**मनुरिति**। पर्यटन् महीमित्यनेन पित्रा दुहित्रर्थं वरानुगमनं न लौकिकमिति राज्यपरीक्षाव्याजेन यदृच्छया प्राप्त इति भावं सूचयति ॥ ३६ ॥

हे सुधन्वन् विदुर। शान्तव्रतस्य पूर्णव्रतस्य ॥ ३७ ॥

कर्दमाश्रमस्य बिन्दुसर इति नाम कस्मादिति तत्राह—**यस्मिन्निति**। बिन्दूनां सरणं प्रसरणं यत्र तद् बिन्दुसर इति ॥ ३८ ॥

कन्यादानकार्यमन्तरेणापि श्रेयोऽर्थिना गन्तुं योग्यमित्याशयेन तदाश्रमगुणानाह—**पुण्यमिति**। शिवं चामृतमयाचितं च जलं यस्मिन् तत् तथा। अमृतं व्योम्नि देवान्ने यज्ञशेषे रसायने। अयाचिते च दुग्धाब्धौ' इत्यभिधानम् ॥ ३९ ॥

पुण्यद्रुमा अश्वत्थादयः। लता माधव्यादयः। तेषां जालैः समूहैः। मुकुलैश्च युक्तमिति शेषः। पुण्यमृगाः कृष्णसारङ्गादयः। द्विजा जरितार्यादिपक्षिणः ॥ ४० ॥

मत्तद्विजगणोद्घुष्टं मत्तभ्रमरविभ्रमम् ।
मत्तबर्हिंनटाटोपमाह्वयन्मत्तकोकिलम् ॥ ४१ ॥

कदम्बचम्पकाशोककरञ्जबकुलासनैः ।
कुन्दमन्दारकुटजैश्चूतपोतैरलंकृतम् ॥ ४२ ॥

कारण्डवैर्बकैर्हंसैः कुररैर्जलकुक्कुटैः ।
सारसैश्चक्रवाकैश्च चकोरैर्वल्गुकूजितम् ॥ ४३ ॥

शशकैर्हरिणैः क्रोडैः श्वविड्गवयकुञ्जरैः ।
गोपुच्छैर्हरिभिर्मर्कैर्नकुलैर्नाभिभिर्वृतम् ॥ ४४ ॥

प्रविश्य तत् तीर्थवरमादिराजः सहानुगः ।
ददर्श मुनिमासीनं तस्मिन् हुतहुताशनम् ॥ ४५ ॥

विद्योतमानं वपुषा तपस्युग्रयुजा चिरम् ।
नातिक्षामं भगवतः स्निग्धापाङ्गविलोकनात् ॥ ४६ ॥

---

मत्तेन द्विजगणेन विशिष्टपक्षिसमूहेन उद्घुष्टमाघोषितं, मत्तानां भ्रमराणां विभ्रमः शृङ्गारविशेषो यस्मिंस्तत् तथा । बर्हाणि एषां सन्तीति बर्हिणो मयूराः । त एव नटास्तेषामाटोपो नृत्त[1]संभ्रमो यस्मिंस्तत् तथा । मिथः आह्वयन्तो मत्ताः कोकिलाः यस्मिंस्तत् तथा ॥ ४१ ॥

न केवलमश्वत्थादयो यत्र[2] । अन्येऽपि सन्तीत्याह—**कदम्बेत्यादिना** ॥ ४२ ॥

सामान्येनोक्तान् पक्षिणो विशेषनाम्ना निर्दिशति—**कारण्डवैरित्यादिना** । कारण्डवाख्य-महापक्षिभिः ॥ ४३ ॥

श्वविशो वृकाः[3] गवयाः वन्याः[4] । गोपुच्छाश्चमर्यः । हरिभिः सिंहैः । मर्कैर्वनमार्जारैः । नाभिभिर्मृगनाभिभिः ॥ ४४ ॥

तपसि विषये । उग्रं युज्यत इति उग्रयुक् । तीव्रवेगवतेत्यर्थः । उग्रयोगतपस्त्वे वपुःकार्श्येन दृष्टिसुखाजनके कन्यादाने वैराग्यं स्यादिति तत्राह—**नातिक्षाममिति** । तत्र हेतुद्वयमाह—**भगवत इति** ॥ ४६ ॥

---

[1] नृत्य संभ्रमः–क । [2] अश्वत्थादयस्तत्रान्येऽपि–प्र । [3] एतदनन्तरं 'श्वाविद्गवय इति पाठे श्वावित् शल्यः । श्वावित्तु शल्य इत्यमरः' इत्यधिकपाठः–घ । [4] अरण्यगावः–घ ।

तद्व्याहृतामृतकलापीयूषश्रवणेन च ।
प्रांशुं पद्मपलाशाक्षं जटिलं चीरवाससम् ॥ ४७ ॥

उपसंसृत्य मलिनं यथार्हणमसंस्कृतम् ।
अथोटजमुपायान्तं नृदेवं प्रणतं पुरः ।
सपर्यया प्रत्यगृह्णात् प्रतिनन्द्यानुरूपया ॥ ४८ ॥

गृहीतार्हणमासीनं संयतं प्रीणयन् मुनिः ।
स्मरन् भगवदादेशमित्याह श्लक्ष्णया गिरा ॥ ४९ ॥

नूनं चङ्क्रमणं देव सतां संरक्षणाय ते ।
वधाय चासतां यस्त्वं हरेः शक्तिर्हि पालिनी[1] ॥ ५० ॥

योऽर्केन्द्वग्नीन्द्रवायूनां यमधर्मप्रचेतसाम् ।
रूपाणि स्थान आधत्से तस्मै शुक्लात्मने नमः ॥ ५१ ॥

---

पुरुषलक्षणाभावे[2] नातिक्षामत्वमप्रयोजकमिति तत्राह—**प्रांशुमिति** । प्रांशुमुन्नतम् । तपोवेष-गूढत्वेनान्यल्लक्षणं कुत्र[3] न दृश्यत इति भावेनाह—**जटिलमिति** ॥ ४७ ॥

असंस्कृतमनलंकृतम् । उटजं पर्णशालाम् । अनुरूपया राजयोग्यया ॥ ४८ ॥

'तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता' इत्यस्यार्थमनुसंदधानो मुनिर्वाचापि तं मानयतीत्याह—**गृहीतेति** । श्लक्ष्णया मधुरया ॥ ४९ ॥

किमर्थां सरसां वाणीमाहेत्यत्राह—**नूनमिति** । मुकुरे मुखस्येवास्मिन् राज्ञि हरेर्विशेषसन्निधानस्य प्रतीयमानत्वाद् देवेति वक्ति । हिशब्दो हेत्वर्थः । सप्तसु प्रथमेति सूत्रात् त्वमिति सप्तम्यर्थे । त्वयि हरेः पालिनी सात्त्विकी शक्तिः सन्निहिता हि यस्मात् तस्मात् ते तव चङ्क्रमणं सम्यक् पर्यटनं सतामस्मादृशानां संरक्षणायासतामस्मद्विरोधिनां च वधाय नूनं निश्चय इत्यन्वयः ॥ ५० ॥

एतदेव विवृणोति—**य इति** । अर्कस्य रूपं प्रकाशकत्वम् । चन्द्रस्याह्लादकत्वम् । अग्नेरधृष्यत्वम् । इन्द्रस्यैश्वर्यकरत्वम् । वायोः श्रेष्ठत्वम् । यमस्य दुष्टजनदमने निर्घृणत्वम् । धर्मस्य पुण्यापुण्यविवेकवैशद्यम् । प्रचेतसो वरुणस्य गाम्भीर्यम् । यस्त्वमेतानि रूपाणि स्थाने तत्तद्विनियोग-

---

[1] पालनी—प्र । [2] पुरुषलक्षणभावेन—प्र ।

[3] कुत्रेत्यस्य त्यागेऽन्वयः सुलभः । कुतश्चन—इति प्र पाठः । अत्र न दृश्यत इति पाठान्तरम् ।

न यदा रथमास्थाय जैत्रं मणिगणार्पितम् ।
विस्फुरच्चण्डकोदण्डो रथेन त्रासयन्नघान् ॥ ५२ ॥

स्वसैन्यचरणक्षुण्णं वेपयन् मण्डलं भुवः ।
विकर्षन् बृहतीं सेनां पर्यटस्यंशुमानिव ॥ ५३ ॥

तदैव सेतवः सर्वे वर्णाश्रमनिबन्धनाः ।
भगवद्रचिता राजन् भिद्येरन् बत दस्युभिः ॥ ५४ ॥

अधर्मश्च समेधेत लोलुपैर्व्यङ्कुशैर्नृभिः ।
शयाने त्वयि लोकोऽयं दस्युग्रस्तो विनङ्क्ष्यति ॥ ५५ ॥

अथापि पृच्छे त्वां वीर यदर्थं त्वमिहागतः ।
तद् वयं निर्व्यलीकेन प्रतिपद्यामहे हृदा ॥ ५६ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे द्वाविंशोऽध्यायः ।

---

काले प्राप्ते आधत्से धारयसि तस्मै शुक्लस्य हरेरात्मने प्रतिमारूपाय[1] विशेषावेशसन्निधानस्थानाय नम इत्यन्वयः । प्रतीयमानं तादात्म्यं विहाय तत्प्रतिमात्वकल्पना नाप्रामाणिकी । 'स्वायम्भुवो मनुश्चैव पृथुरैलार्जुनावपि । ब्रह्मशेषविपा रुद्र इन्द्र ऋष्यादयस्तथा । विष्ण्वावेशयुताः सर्वे न तु विष्णुस्वरूपकाः' इति वचनात् युक्तमुक्तम् ॥ ५१ ॥

जगद्रक्षणार्थमुत्पन्नत्वात् तव हरेर्विशेषावेशो युक्त इत्यभिप्रेत्य व्यतिरेकमुखेन राजानं प्रशंसति—**न यदेति** । जैत्रं जयशीलं, अघान् पापपुरुषान् त्रासयन्, कम्पयन् ॥ ५२ ॥

अंशुमानादित्यः ॥ ५३ ॥

दस्युभिर्हिंसाशीलैः पुरुषैः सेतुभेदः स्यात् ॥ ५४ ॥

ततः किम् ? अत्राह—**अधर्मश्चेति** । व्यङ्कुशैः निरङ्कुशैः । अतोऽपि किम् ? अत्राह—**शयान इति** । शयाने न्यायान्यायविचारशून्ये ॥ ५५ ॥

ऋषित्वाभिमानभङ्गभयात् किञ्चिज्जानन्निव कर्दमः कार्यविशेषं पृच्छति—**अथापीति** । अनेन राज्ञोऽर्थिताशा[2]भङ्गभयं निवृत्तमिति ध्वनयति ॥ ५६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां तृतीयस्कन्धे द्वाविंशोऽध्यायः ।

---

[1] प्रतिमायै–ग । [2] अर्थनाश–क । अर्थनाशमान–ग । अभ्यर्थिताभङ्गभयम्–प्र ।

॥ अथ त्रयोविंशोऽध्यायः ॥

मैत्रेय उवाच —

एवमाविष्कृताशेषगुणकर्मोदयं मुनिम् ।
सव्रीड इव तं सम्राट् उपारतमुवाच ह ॥ १ ॥

मनुरुवाच —

ब्रह्मासृजत् स्वमुखतो युष्मानस्मत्परीप्सया ।
छन्दोमयांस्तपोविद्यायोगयुक्तानलम्पटान् ॥ २ ॥

तत्त्राणायासृजच्चास्मान् दोःसहस्रात् सहस्रपात् ।
हृदयं तस्य हि ब्रह्म क्षत्रमङ्गं प्रचक्षते ॥ ३ ॥

अतो ह्यन्योन्यमात्मानं ब्रह्म क्षत्रं च रक्षतः ।
रक्षत्यस्मान् द्वयं[4] देवः सदा सदसदात्मकः ॥ ४ ॥

---

॥ अथ त्रयोविंशोऽध्यायः ॥

राज्ञा कर्दमपृष्टं श्रुत्वा स्मित्वा च तूष्णीमास्थायि, कश्चन वाग्व्यवहारो वाकारि इति तत्राह —**एवमिति** । सव्रीड इवेति विनयगुणं भूषयति । उपारतं यावदपेक्षितमुक्त्वा तूष्णीं स्थितम् । यद्वा उपाधिके[1] सर्वेश्वरे हराव[2]कारशब्दवाच्ये रतं निरतं[3] श्रीनारायणध्यानोपेतमित्यर्थः । 'अआ-अंअः पुराणर्षिः' इति पाद्मे ॥ १ ॥

हेत्यनेन विप्रक्षत्रिययोः सूचितां समानसंबन्धप्रसिद्धिं प्रपञ्चयति—**ब्रह्मेति** । अस्मत्परीप्सयाऽस्मद्रक्षणेच्छया । छन्दोमयान् वेदप्रधानान् । तपः कायक्लेशः । विद्या शास्त्रज्ञानम् । योगो भगवद्भक्तिलक्षणः । अनेन क्षत्ररक्षासामर्थ्यमुक्तं भवति । अलम्पटान् विरक्तान् शमदमादिगुणसंपन्नानित्यर्थः ॥२॥

विप्राणां त्राणाय रक्षणाय । अनन्तत्वद्योतनाय दोः सहस्रादिति । उभयोर्हरेः किं प्रियतममिति तत्राह—**हृदयमिति** । तस्य हरेर्ब्रह्मकुलं हृदयमतिप्रियं हि । 'छिन्द्यां स्वबाहुमपि' इत्युक्तं हि । तर्हि किं क्षत्रेणेत्यत उक्तम्—**क्षत्रमिति** । अङ्गाङ्गिभावेन तारतम्येनातिप्रियत्वम् ॥ ३ ॥

यत एवाङ्गाङ्गित्वमत एव ब्रह्म क्षत्रं रक्षति[5] । आत्मानं चोपदेशादिना रक्षति । यः सदसदात्मकः कार्यकारणव्यापी देवो द्वयमपि[6] रक्षतीत्यन्वयः ॥ ४ ॥

---

[1] उं रुद्रं पातीति उपः । तदुपलक्षितसर्वेश्वरे आकारशब्दवाच्ये रतमिति भावः । [2] हरावाकार-घ ।
[3] निरन्तरं-च । [4] रक्षति स्मान्वयो-क । [5] एतदनन्तरं—क्षत्रं च ब्रह्म रक्षति इत्यधिकः पाठः -ङ ।
[6] द्वयानपि-च ।

तव सन्दर्शनादेव च्छिन्ना मे संशया हृदः[1] ।
यत् स्वयं भगवान् प्रीत्या धर्ममाह रिरक्षिषोः ॥ ५ ॥

दिष्ट्या मे भगवान् दृष्टो दुर्दर्शो योऽकृतात्मनाम् ।
दिष्ट्या पादरजः स्पृष्टं शीर्ष्णा ये भवतः शिवम् ॥ ६ ॥

दिष्ट्या त्वयानुशिष्टोऽहं कृतश्चानुग्रहो महान् ।
अपावृतैः कर्णरन्ध्रैर्जुष्टा दिष्ट्योशतीर्गिरः ॥ ७ ॥

स भवान् दुहितुः स्नेहपरिक्लिष्टात्मनो मम ।
श्रोतुमर्हसि दीनस्य श्रावितं कृपया मुने ॥ ८ ॥

प्रियव्रतोत्तानपदोः स्वसेयं दुहिता मम ।
अन्विच्छन्ती[2] पतिं युक्तं वयःशीलगुणादिभिः ॥ ९ ॥

यदा तु भवतः शीलश्रुतरूपवयोगुणान् ।
अशृणोन्नारदात् सैषा त्वय्यासीत् कृतनिश्चया ॥ १० ॥

---

स्वप्रार्थनां ग्राहयितुं कर्दमं प्रशंसति—**तवेति** । दर्शनादित्यनेन चक्षुःसन्निकर्षः शास्त्रीयवचनं चेति द्वयं विवक्षितम् । धर्मं राज्यपालनादिकम् ॥ ५ ॥

भगवद्दर्शनं सुपूतानामेव लभ्यते नापुण्यानामित्याह—**दिष्ट्येति** । अङ्गसङ्गस्तु ततोऽभ्यधिकपुण्याल्लभ्यत इति भावेनाह—**दिष्ट्येति** ॥ ६ ॥ अपावृतैर्विवृतैः उशतीरुशत्यः निर्मलाः ॥ ७ ॥

अलमनुलापेन । किमिच्छुरागतोऽसि तद् ब्रूहि इति तत्राह—**स भवानिति** ॥ ८ ॥

भ्रातृमतीत्वेन ग्राह्यत्वे हेतुं पुत्रिकापुत्रधर्मराहित्यं ध्वनयन्नाह—**प्रियव्रतेति** । सामान्यविशेषाभ्यां व्यवहारः संभवति । स एव कथमस्या[3] इति तत्राह—**अन्विच्छन्तीति** । यदा वयःशीलगुणादिभिर्युक्तं पतिमन्विच्छन्ती, संभोगवयः प्राप्तासीत्[4] । न हि कन्या पतिं स्वयं मृगयते । प्रत्युत बान्धवा एव । अतोऽन्विच्छन्तीत्यनेन वय एव लक्ष्यते ॥ ९ ॥

यदा तु नारदात् भवतः शीलादिगुणानशृणोत् । ततः किम् ? अत्राह—**सैषेति** । या श्रुतवती सैषा स एव मम पतिः स्यादिति कृतनिश्चयासीत् ॥ १० ॥

---

1 सर्वे संशयाः—ग । 2 अन्विच्छति—छ । 3 कथं स्यादिति—ङ । कथमस्या वरविचार इति—छ ।
4 यदेत्यादिना प्रदर्शितस्यान्वयस्य भावविवरणमिदम् ।

तत् प्रतीच्छ द्विजाग्र्येमां श्रद्धयोपहृतां मया ।
सर्वात्मनानुरूपां ते गृहमेधेषु कर्मसु ॥ ११ ॥

उद्यतस्य हि कामस्य प्रतिवादो न शस्यते ।
अपि निर्मुक्तसङ्गस्य कामरक्तस्य किं पुनः ॥ १२ ॥

य उद्यतमनादृत्य कीनाशमभियाचते ।
क्षीयते तद् यशः स्फीतं मानश्चावज्ञया हतः ॥ १३ ॥

अहं त्वाशृणवं विद्वन्नुद्वाहार्थं समुद्यतम् ।
अतस्त्वमुपकुर्वाणः प्रत्तां[5] प्रतिगृहाण मे ॥ १४ ॥

---

अत्रापि कीदृशोऽसौ कुत्रास्त इत्यादिविशेषप्रश्नादिना निश्चयो लभ्यत इत्यत एकोंऽशो निरणायि अतो द्वितीयोऽपि निर्धार्य इति भावेनाह—**तत् प्रतीच्छेति** । कन्येच्छायाः [1]प्रतिनिधित्वेनेच्छां कुरु गृहाणेत्यर्थः । अत्रान्योऽपि गुणोऽस्तीत्याह—**श्रद्धयेति** । उपहृतां दत्ताम् । अतोऽपि गुणात् गृहाणेत्याशयेनाह—**सर्वात्मनेति** । गृहमेधेषु गृहस्थाश्रमयोग्ययज्ञाख्येषु कर्मसु तव सर्वात्मना युक्तायुक्तविचारमन्तरेण स्वत एवानुरूपामनुकूलशब्दादिगुणाम् । 'रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ हितादिषु । सौन्दर्ये च स्वभावे च ' इति[2] ॥ ११ ॥

किञ्च नेदानीमिति प्रवादेन[3] 'न काञ्चन परिहरेत् तद् व्रतम् ' इति श्रुतिविरोधोऽपि स्यादिति भावेनाह—**उद्यतस्येति** । निर्मुक्तसङ्गस्य विषयसङ्गमनिच्छतोऽपि । न तु सर्वात्मना मुक्तसङ्गस्य । निषिद्धत्वादनर्थहेतुत्वाच्च । तदुक्तम्—'यस्तु प्रव्रजितो भूत्वा पुनः सेवेत मैथुनम् । षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ' इति । कामरक्तस्य योग्यस्य प्रतिवादः प्रत्याख्यानं, निषेध इत्यर्थः ॥ १२ ॥

भवन्तमन्तरेणान्यः कश्चित् प्रत्याख्याति[4] चेद् बाधकं चास्तीत्याह—**य उद्यतमिति** । कीनाशं कदर्यं कर्षकं वा ॥ १३ ॥

अनापृच्छ्यागमनमात्मदोषं परिहरति—**अहं चेति** । अनेन बहिर्मुखेष्वयं दोषो न पण्डितेष्विति दर्शितम् । उपकुर्वाणो विवाहकामः । 'वेदानधीत्य यो वर्णी विवाहार्थं गुरोः कुलात् । कृतानुज्ञो निवर्तेत उपकुर्वाण उच्यते ' ॥ १४ ॥

---

[1] प्रतिनिधित्वेनेत्यस्यानुकूलतयेत्यर्थः । [2] अभिधानादिति शेषः । [3] वादे-प्र ।
[4] अन्यः कश्चिदभ्यर्थितः प्रत्याख्याति चेत् इत्यभिप्रायः स्यात् । [5] पुत्रीं-ग ।

ऋषिरुवाच —

बाढमुद्वोढुकामोऽहमप्रमत्ता[1] तवात्मजा ।
आवयोरनुरूपोऽसावाद्यो वैवाहिको विधिः ॥ १५ ॥

कामः स भूयान्नरदेव तेऽस्याः
पुत्र्याः समाम्नायविधौ प्रतीतः ।
क एव ते तनयां नाद्रियेत स्वयैव
कान्त्या क्षिपतीमिव श्रियम् ॥ १६ ॥

---

प्रतिबुद्धप्रत्युत्तरो मुनिः किमकार्षीदिति राज्ञोऽन्तःशङ्कां निवारयति— **बाढमिति ।** बाढमित्युक्तं विवृणोति—**उद्वोढुकाम इति ।** 'बाढं त्वभिमते भृशे' इति च । तव पुत्री वोढुं योग्येत्याह—**अप्रमत्तेति ।** 'पतिशुश्रूषणे यत्ता विषयासक्तिनिःस्पृहा । धर्मार्थकामहेतुर्या त्वप्रमत्तेति तां विदुः' इति । त्वप्रत्तेति पाठेऽर्थितायान्यस्मै वाचाप्यदत्तत्वात् परामृष्टशङ्काभावादुपयन्तुं योग्येत्याह —**अप्रमत्तेति ।** चशब्दो हेत्वर्थः । किं नामायं विवाह इति तत्राह—**आवयोरिति ।** चतुर्णां विवाहविधीनामयं वैवाहिको विधिराद्यः ब्राह्मः । शक्त्या कन्यामलंकृत्याहूय यत्र प्रदीयते स ब्राह्म इति स्मार्तः[2] । मुहूर्तं प्रतीक्ष्य न स्थेयमित्यतो वाह—**आवयोरिति ।** अद्यो[3] अद्यतनो दिवस एव विवाहयोग्यः, विधीयत इति विधिः । 'विभक्तिप्रतिरूपकं चाव्ययं भवति' इति वचनादद्येत्यव्ययं सुबन्तरूपमपि विवक्षावशाद् भवति, 'प्रतिः प्रतिनिधिप्रतिदानयोः' इति सूत्राच्च ॥ १५ ॥

सन्तानलक्षणः स्त्रीणां मुख्यकामः । स विधिना[4] स्यात् तादृशो भूयादिति राज्ञोऽभिप्रायं जानन्निव कर्दमो नियुङ्क्ते—**काम इति ।** यः कामः समाम्नायविधौ वेदवाक्ये 'दशास्यां पुत्राना-धेहि पतिमेकादशं कृधि' इति प्रतीतः ख्यातः, हे नरदेव स कामस्ते तवास्याः पुत्र्याः स्यादि-त्यन्वयः । अनन्तरमपि भवता मत्पुत्री लालनीयेति न प्रार्थनीयमिति भावेनाह—**क एवेति ।** स्वया औत्पत्तिक्या कान्त्या अन्याः स्त्रियः क्षिपन्तीं निरस्यन्तीं श्रियं लक्ष्मीमिव स्थिताम् । अनादरहेतुरूप-लावण्याद्यभावाभावादित्यर्थः ॥ १६ ॥

---

[1] अप्रत्ता च–क । [2] स्मार्ताः–ग ङ च छ । [3] आद्यः–क । मूल अद्य इत्यपि पाठोऽङ्गीकृतः स्यादिति च भाति । [4] स येन विधिना–प्र ।

यां हर्म्यपृष्ठे क्वणदङ्घ्रिशोभां
विक्रीडतीं कन्दुकविह्वलाक्षीम् ।
विश्वावसुर्न्यपतत् स्वाद् विमानाद्-
विलोक्य संमोहविमूढचेताः ॥ १७ ॥

तां प्रार्थयन्तीं ललनाललामामसेवितश्रीचरणैरदृष्टाम् ।
सुतां मनोरुच्चपदः स्वसारं को नानुमन्येत बुधोऽभिजातः ॥ १८ ॥

अतो भजिष्ये समयेन साध्वीं
यावत् तेजो बिभृयादात्मनो मे ।
अतो धर्मान् पारमहंस्यमुख्यान्
शुक्लोपदिष्टान् बहुमन्येऽविहिंस्रान् ॥ १९ ॥

---

यथा पुरास्या नारदवाक्यादस्मद्गुणविषयाभिरुचिरभूत् तथास्माकमपि केनचित् पथिकेन श्रावितायामस्यां श्रृङ्गारादिगुणपङ्क्तिमाकर्ण्याकाङ्क्षा समुत्पन्नेति भावेन तल्लावण्यं स्तौति—**यामित्यादिश्लोकद्वयेन** । विश्वावसुर्गन्धर्वः । समीचीनो मोहो यस्मात् सौन्दर्यात् तत् तथा तेन संमोहेन सौन्दर्येण विमूढं कृत्याकृत्यविवेकशून्यं चेतो यस्य स तथा । यद्वा संमोहो दर्शनाज्जातं पारवश्यं तेन मूढचेताः । अनेन कर्दमस्य ऋषित्वमन्वर्थमिति दर्शितम् । यद्वा संमोहो नाम वस्तुनि स्नेहविशेषस्तेन ॥ १७ ॥

प्रार्थयन्तीमित्यादि पञ्चविशेषणानि स्वीकारे कारणानि । ललनानां विलासिनीनां स्त्रीणां ललामां तिलकभूताम् । न सेवितौ श्रियो लक्ष्म्याश्चरणौ यैस्ते तथा तैः पुरुषैरदृष्टामित्यनेन दृष्टिविषयीकारयोग्यतापि न, किं पुनः स्वीकार इति सूचयति । मनोः सुतामिति कुलम् । उच्चपद उत्तानपादस्य स्वसारं भगिनीमिति भ्रातृमतीत्वम्, कोऽप्यस्थाने जातोऽपि बुधः स्यादतोऽभिजात इति । अनेनात्मनो योग्यतातिशयं ध्वनयति ॥ १८ ॥

किमनुलापेन ? उक्तं सर्वं सत्यं प्रत्यक्षं च । परं किं क्रियत इति तत्राह—**अत इति** । यत एवंविधगुणा अत इति । समयेन[1] कालेन । कालं च वक्ति—**यावदिति** । इयं तव पुत्री यावद् यदा मे आत्मनः शरीरस्य भुक्तान्नविकारकृतरेतोलक्षणं[2] तेजो बिभृयात् बिभर्ति, अहमपि तावदेव बिभर्मीति शेषः । ततः परं किम् ? अत्राह—**अत इति** । अतः अत्रापत्योत्पत्त्यनन्तरं

---

[1] समयेन कालविशेषावधिकेन संकेतेनेति याथार्थ्यम् । [2] भुक्तान्नविकृतरेतोलक्षणं—प्र ।

यतोऽभवद् विश्वमिदं विचित्रं संस्थाप्यते यत्र च वावतिष्ठते ।
प्रजापतीनां पतिरेष मह्यं परं प्रमाणं भगवाननन्तः ॥ २० ॥

मैत्रेय उवाच—

स उग्रधन्वन्नियदेवाबभाष आसीच्च तूष्णीमरविन्दनाभम् ।
धियोपगृह्णन् स्मितशोभितेन मुखेन चेतो लुलुभे देवहूत्याः ॥ २१ ॥

सोऽनुज्ञात्वा व्यवसितं महिष्या दुहितुः स्फुटम् ।
तस्मै गुणगणाढ्याय ददौ तुल्यां[1] प्रहर्षितः ॥ २२ ॥

शतरूपा महाराज्ञी पारिबर्हान् महाधनान् ।
दम्पत्योः पर्यदात् प्रीत्या गृहवासःपरिच्छदान् ॥ २३ ॥

---

पारमहंस्यमुख्यान् परमहंससंबन्धिनोऽतएव मुख्यान् शुक्लेन नित्यशुद्धेन हरिणोपदिष्टान् अविहिंस्रान् पश्वाद्यालम्भनविधुरान् धर्मान् बहुमन्ये अनुतिष्ठामि संप्राप्स्यामीत्यर्थः ॥ १९ ॥

अस्मिन्नर्थे हरिरेवावयोः साक्षीत्याह—**यत इति** । येन संस्थाप्यते स्वसेतौ निधाय रक्ष्यते । प्रलये यत्र यस्योदरे । स च प्रमाणं साक्षी । अनन्त इति साक्षिणः कालत्रयेऽप्यवस्थानमाह ॥ २० ॥

मैत्रेयो विदुरं प्रति कर्दमस्य मितभाषित्वगुणं वक्ति—**स उग्रधन्वन्निति** । इयदेव एतावदेव । 'स्वमनीषितं चेदभूदतो हरिणा किम् ?' इति हरावनादरबुद्धिर्नाभूत् । तत्प्रसादादेव समस्तं कार्यजातमभूदिति सततं श्रीनारायणस्मृतिमानित्यत[2] उक्तम्—**अरविन्दनाभमिति** । नवोद्वाहयोग्यायाः कन्यायाः प्रथमः कर्षणमन्त्रः पत्युः स्मितशोभिमुखम् अन्यथा इदानीमङ्गारलिप्तमिव, उत्तरत्र किमुत इति वैमुख्यादिकं स्यादित्यत इदमौत्पत्तिकं, न नैमित्तिकमितिभावेनायमेव पतिः स्यान्नान्य इति स्मितशोभिना मुखेन देवहूत्या मन आकर्षितमित्याह—**स्मितशोभितेनेति** । लुभ गार्द्ध्ये । गृधु अभिकाङ्क्षायामित्याकाङ्क्षणमप्याकर्षणविशेषः ॥ २१ ॥

महिषीदुहित्रोः पूर्वसंवाद इदानीमपि सन्नेतद्दर्शनेनान्यथाभूदिति[3] विविदिषुरिव राजा तन्निश्चयज्ञानपूर्वकं कन्यामस्मा अदादित्याह—**स इति** । अनु अनन्तरम् ॥ २२ ॥

तत्र राज्ञा किमदायीति तत्राह—**शतरूपेति** । पारिबर्हान् वरवध्वोर्दीयमानद्रव्याणि । तानि लोकविलक्षणानि किम् ? नेत्याह—**गृहेति** ॥ २३ ॥

---

[1] कन्याम्—ग । [2] श्रीनारायणस्मृतिमानभूदित्युक्तम्—इति स्यात् । [3] अन्यथाऽभूत् किमिति विविदिषुरित्यर्थः ।

प्रत्वा[1] दुहितरं सम्राट् सदृक्षाय गतव्यथः ।
उपगुह्य च बाहुभ्यामौत्कण्ठ्योन्मथिताशयः ॥ २४ ॥

अशक्नुवंस्तद्विरहं मुञ्चन् बाष्पकलां मुहुः ।
आसिञ्चन्नम्ब वत्सेति नेत्रोदैर्दुहितुः शिखाः ॥ २५ ॥

आमन्त्र्य तं मुनिवरमनुज्ञातः सहानुगः ।
प्रतस्थे रथमास्थाय सभार्यः स्वपुरं नृपः ॥ २६ ॥

उभयोर्ऋषिकुल्यायाः सरस्वत्याः सुरोधसोः ।
ऋषीणामुपशान्तानां पश्यन्नाश्रमसम्पदः ॥ २७ ॥

तमायान्तमभिप्रेत्य ब्रह्मावर्तं प्रजाः पतिम् ।
गीतसंस्तुतिवादित्रैः प्रत्युदीयुः प्रहर्षिताः ॥ २८ ॥

बर्हिष्मती नाम पुरी सर्वसम्पत्समन्विता ।
न्यपतन् यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः ॥ २९ ॥

---

पुत्रीं दत्वा कञ्चित् कालमत्रैव तत्स्नेहादवात्सीत् किम् ? नेत्याह—**प्रत्वेति** । सदृक्षाय समानाय । अनेन मनुः स्वकुमारीं राजकुमाराभावाच्छन्दसाय दत्तवानित्यपवादमपाकरोति ॥ २४ ॥

बाष्पकलाः अश्रुबिन्दून् । नेत्रोदैर्नेत्रजलैः । शिखाः केशभारान् ॥ २५ ॥

राजा महति गहने कक्षे स्थिताय कस्मैचिन्मूलफलाशनाय तापसाय पुत्रीं दत्वा याम्यहमित्यनुशोकानुत्पादकं स्वराजधानीविशिष्टसंपत्समृद्धमृषीणामाश्रममण्डलं[2] पश्यन् स्वपुरीमयादि[3]त्याह—**उभयोरिति** । ऋषिकुल्यायाः ऋषिकुलप्रियायाः । रोधसोस्तीरयोः स्थितानामुपशान्तानामतिशयितभगवन्निष्ठानाम् ॥ २७ ॥

मनोः राजेति शब्दार्थं लक्षयति—**तमायान्तमिति** । अनेन प्रजानुरागेण रञ्जनाद् राजेति शब्दोऽपि निरुक्त इति ध्वनयति ॥ २८ ॥

इयमपि नगरी इतरक्षेत्रेभ्योऽपि पुण्यतमेति श्रैष्ठ्यमाह—**न्यपतन्निति** । जलार्द्रमङ्गं विधुन्वतो यज्ञवराहस्याङ्गाद् रोमाणि ज्ञानानन्दलक्षणानि यत्र बर्हिष्मत्यां न्यपतन् सहस्रशोऽवतारा अभिव्यक्ता अभूवन्नित्यर्थः ॥ २९ ॥

---

[1] दत्वा–ङ । [2] स्वराजधानीतोऽपि विशिष्टसम्पत्समृद्धमाश्रममण्डलमित्यर्थः । [3] अयासीत्–छ ।

कुशकाशास्त एवासल्लसद्धरितवर्चसः ।
ऋषयो यैः पराभाव्य यज्ञघ्नान् यज्ञमीजिरे ॥ ३० ॥

कुशकाशमयं बर्हिरास्तीर्य भगवान् मनुः ।
अयजद् यज्ञपुरुषं लब्धं स्थानं यतो दृढम् ॥ ३१ ॥

बर्हिष्मतीं नाम पुरीं निर्विश्य सुखमावसत्
तस्यां प्रविष्टो भवनं तापत्रयविनाशनम् ।
सभार्यः सप्रजः कामान् बुभुजेऽन्याविरोधतः ॥ ३२ ॥

---

रोम्णामवतारत्वे कुशकाशात्मकत्वं कथमिति तत्राह—**त इति**। सप्तसु प्रथमेति सूत्रात् ते तेभ्यो ज्ञानानन्दलक्षणेभ्योऽवतीर्णेभ्यो रोमभ्य एव कुशकाशा आसन्नित्यन्वयः। प्रथमप्राप्तपरित्यागे[1] किं कारणमिति चेन्न। हरेर्हेयोपादेयराहित्यात्। न्यपतन्नित्युक्त्या किं न स्यादिति चेन्न। 'ज्ञानानन्दस्वरूपेभ्यो रोमभ्योऽस्य कुशादयः। विधुन्वतः प्रयागे तु वाराहवपुषोऽभवन्। तानि रोमाणि देवस्य रूपाण्यासन् सहस्रशः' इति वाक्यविरोधात्। रोम्णां कर्कशत्वात् कुशकाशानामकर्कशत्वेन सुकुमारकान्तिमत्त्वात् न रोमत्वं युक्तमिति भावेनाह—**लसदिति**। लसद्धरितवर्चसः भास्वद्दूर्वाङ्कुरश्यामरोचिषः। यथायोदाहकत्वमन्यनियतमेवं कुशादीनामवध्यराक्षसपरिभावकत्वं भगवद्रोमशक्तिनियुक्तमतः[2] त एवासन्निति व्यपदेश इति भावेनाह— **ऋषय इति**। पराभाव्य पराभूय यज्ञं भगवन्तम् ॥ ३० ॥

इतोऽपि कुशादीनां रोमत्वव्यपदेशो युज्यते यज्ञाङ्गत्वेन विष्णुपदप्राप्तिहेतुत्वादित्याशयेनाह—**कुशेति**। कुशकाशमयं कुशकाशनिर्मितम्। कुशकाशाकरे पुरे स्थित्वा मनुर्यज्ञपुरुषमयजत्। तेन मनुना यतो यस्य बर्हिषो गुणात् स्थानगुणाद् वा दृढमक्षयं स्थानं विष्णुपदं लब्धम्। अनेन बर्हिष्मतीशब्दार्थो निरुक्त इति ज्ञायते ॥ ३१ ॥

स मनुरेवं बर्हिष्मतीं नाम पुरीं निर्विश्य सुखमावसदित्यन्वयः। तस्य विषयभोगाभावे शून्यागारस्थवत् किं सुखम्? अत्राह—**तस्यामिति**। तस्यां पुर्यां विद्यमानं भवनं प्रविष्टः, कामान् भोगान्। विषयभोगो धर्मादिपुरुषार्थविरोधेन[3] दुःखहेतुरित्यत उक्तम्—**अन्याविरोधत इति**। अन्यस्य धर्मादेरविरोधेन ॥ ३२ ॥

---

[1] ते इत्यत्र प्रथमप्राप्तप्रथमाविभक्त्यर्थं परित्यज्य तेभ्य इति पञ्चम्यर्थस्वीकारे इत्यर्थः

[2] नियतमित्यर्थः। [3] विरोधित्वेन—च।

संगीयमानसत्कीर्तिः सस्त्रीभिः सुरगायकैः ।
प्रत्यूषेष्वनुबद्धेन हृदा शृण्वन् हरेः कथाः ॥ ३३ ॥

निष्णातं योगमायासु मुनिं स्वायम्भुवं मनुम् ।
यदा स्रंसयितुं[1] भोगा न शेकुर्भगवत्परम् ॥ ३४ ॥

अयातयामास्तस्यासन् यामाः स्वान्तरयापनाः ।
शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ॥ ३५ ॥

स एवं स्वान्तरं निन्ये युगानामेकसप्ततिम् ।
वासुदेवप्रसङ्गेन परिभूतगतित्रयः ॥ ३६ ॥

शारीरा मानसा दिव्याः पर्यासे ये च मानुषाः ।
भौतिकाश्च कथं क्लेशा बाधन्ते हरिसंश्रयम् ॥ ३७ ॥

---

धर्माद्यविरोधेन विषयभोगः कथम् ? अत्राह— **सङ्गीयमानेति** । अनुबद्धेन स्निग्धेन ॥ ३३ ॥

ग्राहग्रस्तस्येव विषयासक्तस्य हरिकथाश्रवणेन किं फलम् ? अत्राह—**निष्णातमिति** । योगमायासु योगसमर्थ्येष्वणिमादिषु । मुनिं सर्वज्ञम् । 'वेत्ता वेद्यस्य सर्वस्य मुनिः सद्भिरुदाहृतः' इत्यभिधानम् । स्रंसयितुं[2] हरिकथाश्रवणात् श्लथयितुम् ॥ ३४ ॥

विषयसेवायाः प्राबल्ये कथं न शेकुरितिवचनमित्याशङ्क्य हरिकथाश्रवणादेर्निरन्तरत्वेन संवलितोपचयत्वेन[3] ततोऽपि प्राबल्यातिशयादिति भावेनाह — **अयातयामा इति** । यातयामं गतरसम् । 'गतसारं यातयामं यामः सार इहोच्यते' इति वचनात् । अयातयामा अगतसारा, न निष्फला इत्यर्थः । यामाः कालावयवाः स्वान्तरयापनाः[4] स्वावसानकारिणः ॥ ३५ ॥

स्वकालावधिः कियानित्यत्राह— **स एवमिति** । स्वान्तरं स्वकालावधिम् । परिभूतं निरस्तं गतीनां तिर्यग्यातनातमसां त्रयं येन स तथा ॥ ३६ ॥

शारीरादिक्लेशोपद्रुतत्वेन[5] यामानामगतसारत्वं कथम् ? अत्राह—**शारीरा इति** । पर्यासे मानुषत्वेनावस्थानेऽपि । मानुषा मनुष्येभ्यो जाताः भौतिका भूतप्रेतादिभ्यो जाताः ॥ ३७ ॥

---

[1]-[2] भ्रंशयितुं–च । [3] संवर्धितोपचयत्वेन–क ।

[4] तस्य मनोः स्वान्तरं स्वस्वामिकं मन्वन्तरं यापयन्ति समापयन्तीति स्वान्तरयापना इति यादुपत्यम् ।

[5] क्लेशोपहतत्वेन–ङ ।

यः पृष्टो मुनिभिः प्राह धर्मान् नानाविधान् शुभान् ।
नृणां वर्णाश्रमाणां च सर्वभूतहितः सदा ॥ ३८ ॥
एतत् त आदिराजस्य मनोश्चरितमद्भुतम् ।
वर्णितं वर्णनीयस्य तदपत्योदयं श्रुणु ॥ ३९ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे त्रयोविंशोऽध्यायः ।

। अथ चतुर्विंशोऽध्यायः ।

मैत्रेय उवाच—
पितृभ्यां प्रस्थिते साध्वी पतिमिङ्गितकोविदा ।
नित्यं पर्यचरत् प्रीत्या भवानीव भवं प्रभुम् ॥ १ ॥
विस्रम्भेणात्मशौचेन गौरवेण दमेन च ।
शुश्रूषया सौहृदेन वाचा मधुरया प्रभो[1] ॥ २ ॥
विसृज्य कामं दम्भं च द्वेषं लोभमघं मदम् ।
अप्रमत्तोद्यता नित्यं तेजीयांसमतोषयत् ॥ ३ ॥

---

धर्मशास्त्रप्रणेतृत्वाच्च लोकहितस्य न कोऽप्युपद्रव इत्याशयेनाह—**यः पृष्ट इति** ॥ ३८ ॥

मनुचरितमुपसंहृत्य वक्तव्यांशं प्रतिजानीते—**एतत् त इति** । तस्य मनोरपत्यस्य देवहूत्या उदयं समृद्धिं श्रुण्विति ॥ ३९ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां तृतीयस्कन्धे त्रयोविंशोऽध्यायः ।

॥ अथ चतुर्विंशोऽध्यायः ॥

पितृभ्यां मातापितृभ्याम् । 'मातापितरौ पितरौ' इत्यभिधानम् । इङ्गितकोविदा चित्तस्थविज्ञाननिपुणा । भवानी पार्वती ॥ १ ॥

विस्रम्भेण पत्युरेवाभीष्टसिद्धिः स्यादिति निश्चयलक्षणेन विश्वासेन । आत्मशौचं मनश्शुद्धिः । शुश्रूषया हितश्रवणेच्छया । सौहृदमनिमित्तस्नेहः ॥ २ ॥

कामो विषयेच्छा । दम्भः आत्मन्यविद्यमानमाहात्म्यप्रकटनम् । अघं पापव्यसनम् । तेजीयांसमतीन्द्रियकरणशक्तिमन्तम् ॥ ३ ॥

---

[1] विभो—ग ।

स वै देवर्षिवर्यस्तां मानवीं समनुव्रताम् ।
दैवाद् गरीयसः पत्युराशासानां महाशिषः ॥ ४ ॥

कालेन भूयसा क्षामां कर्शितां व्रतचर्यया ।
प्रेमगद्गदया वाचा व्रीडितः[1] कृपयाऽब्रवीत् ॥ ५ ॥

तुष्टोऽहमद्य तव[2] मानिनि मानदायाः
शुश्रूषया परमया परया च भक्त्या ।
यो देहिनामयमतीव सुहृत् स्वदेहो
नापेक्षितः समुचितं क्षयितुं यदर्थे ॥ ६ ॥

या मे स्वधर्मनिरतस्य तपःसमाधि-
विद्यात्मयोगविजिता भगवत्प्रसादात् ।
तामेव ते [5]तदनुभावनयावरुद्धां
दृष्टिं प्रपश्य वितराम्यभयामशोकाम् ॥ ७ ॥

---

संतोषलक्षणमादिमं सम्भाषणं तदभूदित्याह—**स वा इति** । पुत्रादिमहाशिष आशासाना-मिच्छन्तीम् ॥ ४ ॥

क्षामां म्लानाम् । अत एव कर्शितां लघ्वीभूतशरीरयष्टिम् ॥ ५ ॥

परमभक्त्यादिकमस्तीति कुतो लक्ष्यत[3] इति तत्राह—**य इति** । यो देहिनामत्यन्तसुहृत्, अयं स्वदेहः, समुचितं स्नानालङ्कारभोजनादिलक्षणं प्रति, नापेक्षितः । किमिति[4] तत्राह—**क्षयितु-मिति** । यदर्थे यस्य मम प्रीत्यर्थं क्षयितुं कृशीकर्तुम् । मम कृशदेहदर्शनेनैवायं तुष्टः स्यादिति यदतोऽहं तव तुष्ट इत्यन्वयः ॥ ६ ॥

किमनया गुडजिह्विकया मधुरया वाण्या पुरुषार्थानुपयोगिन्येत्याशङ्क्य तुष्टिफलं प्रत्यक्षयति—**या म इति** । स्वधर्मनिरतस्य मे मम तपआदिसाधनैर्विजितोपार्जिता तस्य हरेरनुभावनया निरन्तरोपा-सनया उत्पन्नभगवत्प्रसादादवरुद्धा वशीकृता या तां मे मम विद्यमानां दृष्टिं प्रपश्य सन्निकृष्टफलत्वात्, तुभ्यं वितरामि[6] । तया किम् ? तत्राह—**अभयामिति** । अभयप्रदामशोकां दुःखविनाशिनीम् ।

---

[1] पीडितः—क । [2] बत—क । [3] वक्ष्यते—घ । [4] कुत इतीत्यर्थः । [5] मदनुभावनया—क ।
[6] वितरामि उपदिशामि—ग ।

अन्ये पुनर्भगवतो भ्रुव उद्विजृम्भ-
विभ्रंशितार्थरचनाः किमुरुक्रमस्य ।
सिद्धासि भुङ्क्ष्व विभवान् निजधर्मदेहान्[2]
दिव्यान् नरैर्दुरधिगान् नृपविक्रियाभिः ॥ ८ ॥

मैत्रेय उवाच—

एवं ब्रुवाणमबलाखिलयोगमाया-
विद्याविचक्षणमवेत्य गताधिरासीत् ।
सम्प्रश्रयप्रणयविह्वलया गिरैषा
व्रीडावलोकविलसद्धसिताननाह ॥ ९ ॥

---

मदनुभावनयेति पाठे[1] तु मम नित्यशुश्रूषालक्षणयोपासनया त्वयाऽवरुद्धा उपदेशयोग्यता कारितेत्यर्थः । आत्मयोगश्चित्तनिरोधलक्षणः ॥ ७ ॥

मोक्षव्यतिरिक्तपुरुषार्थानां क्षणभङ्गुरत्वेन तत्साधनमायासेन न पृथगनुष्ठेयम्, एतदविनाभूतत्वाच्चेत्यभिप्रेत्याह—**अन्य इति** । स्वर्गाद्यवाप्तिसाधनोपदेशं विहाय चतुर्थपुरुषार्थप्राप्त्युपायोपदेशः कस्मादित्यतो वाह—**अन्ये पुनरिति** । उरुक्रमस्य भगवतो भ्रुव उद्विजृम्भतो विनाशकलक्षणस्फुरणेन विभ्रंशिताः विनाशिताः अर्थरचना विषयभोगचमत्कारा येषां ते तथोक्ताः इति यस्मात् तस्मात् तदुपदेशेन किम् ? न किमपीत्यर्थः । स्वर्गादीनां भगवद्विजृम्भानुगृहीतावस्थानत्वात् तदनुग्रहेण तत्प्राप्तिः किं वाच्येति ध्वनितं कण्ठोक्तीकरोति—**सिद्धासीति** । न केवलं चतुर्थपुरुषार्थेन त्वं सिद्धासि, किंत्वपेक्षिताशेषपुरुषार्थेनापि । तत् कथम् ? अत्राह—**भुङ्क्ष्वेति** । निजधर्मस्य देहो येषां ते तथा तान्[3] नृपाणामश्वमेधादिविशिष्टक्रियाभिः साधनैरपि नरैर्दुरधिगान् अधिगन्तुं अवाप्तुं अशक्यान् । अनेन भगवदनुग्रह एवालमेतदवाप्तये न कर्मादिकमित्युक्तं भवति ॥ ८ ॥

एवमुपदिष्टाया देवहूत्या मनसि किमभूदिति तत्राह—**एवमिति** । अखिलासु योगमायाविद्यासु अणिमाद्यष्टाङ्गयोगसामर्थ्यसिद्धिकरीषु विचक्षणं निपुणम् । भर्तुः प्रसन्नतामवेत्य अवेक्ष्य । अन्यदा तु शुश्रूषानिरतत्वेन तदवसरोऽपि नास्तीति । गताधिः निरस्तमनःपीडा । एतत्

---

[1] मदनुभावनया मत्सेवया अवरूद्धां फलदानाय स्वाभिमुखीकृतां दृष्टिमपरोक्षज्ञानसामर्थ्यं प्रपश्य । फलस्य सन्निकृष्टत्वाभिप्रायेणैवमुक्तम् । वितरामि प्रकटीकरोमि इति यादुपत्यम् । [2] दोहान्-ग ।

[3] निजधर्माणां गार्हस्थ्योचितधर्माणां दोहो (देहो) येभ्यस्तमिति यादुपत्यम् ।

देवहूतिरुवाच—

राद्धं तव द्विजवृषैतदमोघयोग-
मायाधिपे त्वयि विभो तदवैमि भर्तः ।
यस्तेऽभ्यधायि समयः सकृदङ्गसङ्गो
भूयाद् वरीयसि गुणप्रसवः सतीनाम् ॥ १० ॥

तत्रेतिकृत्यमुपशिक्ष यथोपदेशं
येनैष मे कर्शितोऽतिरिरंसयात्मा ।
सिध्येत ते कृतमनोभवधर्षितायाः
कामस्तदीश भवनं सदृशं विचक्ष्व ॥ ११ ॥

---

कथमवगतम् ? अत्राह —**सप्रश्रयेति** । प्रश्रयेण विनयगुणेन सह वर्तत इति सप्रश्रयः स चासौ प्रणयः स्नेहप्रसरः तेन विह्वला स्खलन्ती गीः तया । व्रीडया अवलोकेन विलसत् शृङ्गारविशेषं कुर्वद् हसितं मन्दस्मितं यस्य तत् तथा । व्रीडावलोकविलसद्धसितमाननं यस्याः सा तथा ॥ ९ ॥

स्वयं प्रसन्नेन्द्रियत्वात् श्रोतुश्च प्रसादजनकवाक्यमाहेत्याह—**राद्धमिति** । हे द्विजवृष ब्राह्मणश्रेष्ठ यद् ब्रवीष्येतत् तव राद्धं सिद्धम् । हे भर्तः अमोघयोगमायाधिपे त्वयि यद् योगसामर्थ्यं तदहमवैमीति । अथ किं तवापेक्षितम् ? अत्राह—**यस्त इति** । ते तव सकृदङ्गसङ्गः शरीरस्पर्शलक्षणो ग्राम्यधर्मः समयोऽभ्यधायि स भूयादिति प्रार्थय इति शेषः । सकृदङ्गसङ्गेन किं फलं स्यादिति तत्राह—**वरीयसीति** । सतीनां पतिव्रतानां स्त्रीणां वरीयसि गुणोत्तमे पत्यौ सकृदङ्गसङ्गो गुणप्रसवः गुणाढ्यं पुत्रं प्रसूत इति सफल एवेत्यर्थः ॥ १० ॥

तर्हि तथास्त्वित्याशङ्क्य कृत्यं किञ्चिदस्तीत्याह—**तत्रेति** । तत्र सकृदङ्गसङ्गविषये यथोपदेशं शास्त्रोपदेशमनतिक्रम्य कृत्यमितिकर्तव्यतामुपशिक्ष विद्यामुपादत्स्व । कुतो विद्योपादानम् ? अत्राह—**येनेति** । अतिरिरंसया ग्राम्यधर्म्येच्छया कर्शित एष मे मम आत्मा देहो येन[1] विद्योपादानेन सिध्येत सफलो भूयात् । स कामोऽस्तु, किमुद्दिश्येत्यत उक्तम्—**ते कृत इति** । त्वत्कृतमनोभवेन त्वन्निमित्तकामेन धर्षितायाः अभिभूतायाः । कीदृग्विद्योपादानकाम इति तत्राह—**तदीशेति** । यत्सार्वभौमपुत्र्या मम सदृशं योग्यं तद् भवनं विद्यासामर्थ्येन विचक्ष्व दृष्ट्वा कुर्वित्यन्वयः । अतितरां

---

[1] येन साधनेनाभ्यङ्गभोजनपानादिना मे कर्शित एष आत्मा सिध्येत रतिसमर्थो भवेदिति यादुपत्यम् ।

मैत्रेय उवाच—

प्रियायाः प्रियमन्विच्छन् कर्दमो योगमास्थितः ।
विमानं कामगं क्षत्तस्तर्ह्येवाविरचीकरत् ॥ १२ ॥

सर्वकामदुघं दिव्यं सर्वरत्नसमन्वितम् ।
सर्वर्द्ध्युपचयोदर्कं मणिस्तम्भैरुपस्कृतम् ॥ १३ ॥

दिव्योपस्करणोपेतं सर्वकालसुखावहम् ।
पट्टिकाभिर्विचित्राभिः पताकाभिरलंकृतम् ॥ १४ ॥

स्रग्भिर्विचित्रमालाभिर्मञ्जुसिञ्जत्षडङ्घ्रिभिः ।
दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् ॥ १५ ॥

उपर्युपरि विन्यस्तनिलयेषु पृथक् पृथक् ।
क्लृप्तैः कशिपुभिः कान्तं पर्यङ्कव्यजनासनैः ॥ १६ ॥

---

रिरंसया रन्तुमिच्छया ते तव मनोभवधर्षितायाः मे एष कामः कमनीय आत्मा कायो येन विद्याबलेन रचितेन गृहादिना सिध्येत तादृशं भवनं विचक्ष्वेति वा ॥ ११ ॥

विषयेभ्य आहृत्यात्मन्येवाधिष्ठापितसर्वेन्द्रियग्रामोऽपि कर्दमः 'आश्रितवत्सला महान्तः' इति भावं दर्शयन् प्रियावचनं पालयन् योगविद्याबलेन तत्क्षण एव गृहं निर्मम इत्याह—**प्रियाया इति** । यादृशेन भगवद्ध्यानाभीष्टं[1] स्यात् तादृशं योगमनुतिष्ठन् आविरचीकरत् प्रकाशयामास ॥ १२ ॥

श्रोतॄणां भगवद्ध्यानमाहात्म्ये श्रद्धातिशयजननायाप्राकृतं प्राकृतमिव वर्णयति—**सर्वकामेत्यादिना** । सर्वासां समृद्धीनाम् उपचयेन समाहारेण उदर्कमुत्कृष्टम् । एतदेव विशिनष्टि—**मणिस्तम्भैरिति** । उपस्कृतमलङ्कृतम् ॥ १३ ॥

दिव्यानि कुलालादिरचनारहितानि उपस्कराणि भाण्डादिगृहसाधनानि तैर्युक्तम् । पट्टिकाभिः पट्टवस्त्रकृताभिः ॥ १४ ॥

विचित्रमालाभिः नानाविधपुष्परचिताभिः स्रग्भिर्मालाभिः मञ्जु मधुरं, सिञ्जन्तः शब्दं कुर्वन्तः षडङ्घ्रयो भ्रमराः यासु तास्तथोक्तास्ताभिः ॥ १५ ॥

कशिपुभिः शय्याभिः । पर्यङ्कैः मञ्चैः ॥ १६ ॥

---

[1] यादृशेन भगवद्ध्यानेनाभीष्टं स्यात् तादृशमित्यर्थः ।

तत्र तत्र विनिक्षिप्तनानाशिल्पोपशोभितम् ।
महामरकतस्थल्या जुष्टं विद्रुमवेदिभिः ॥ १७ ॥

द्वास्सु विद्रुमदेहल्या भातं वज्रकपाटिमत् ।
शिखरेष्विन्द्रनीलेषु हेमकुम्भैरधिष्ठितम् ॥ १८ ॥

चक्षुष्मत्पद्मरागाद्यैर्वज्रभित्तिषु निर्मितैः ।
जुष्टं विचित्रवैतानैर्महार्हैर्हेमतोरणैः ॥ १९ ॥

हंसपारावतव्रातैस्तत्र तत्र निकूजितम् ।
कृत्रिमान् मन्यमानैः स्वानधिरुह्याधिरुह्य[1] च ॥ २० ॥

विहारस्थानशयनसंवेशप्राङ्गणाजिरैः ।
यथोपजोषं रचितैर्विस्मापनमिवात्मनः ॥ २१ ॥

ईदृग् गृहं तत् पश्यन्तीं नातिप्रीतेन चेतसा ।
सर्वभूताशयाभिज्ञः प्रावोचत् कर्दमः स्वयम् ॥ २२ ॥

---

द्वास्सु द्वारेषु । विद्रुमदेहल्या विद्रुमरत्ननिर्मितद्वारबन्धेन ' देहली द्वारबन्धः स्यात्' इति च । वज्ररत्नकृताः कपाटयो यस्मिन् सन्तीति वज्रकपाटिमत् ॥ १८ ॥

चक्षुष्मन्तो दीप्तिमन्तः पद्मरागाद्या मणयः तैः । विचित्राणां वितानानां समूहैः ॥ १९ ॥

कृत्रिमान् शोभार्थं कृतान् स्वान् अकृत्रिमान् मन्यमानैः[2] ॥ २० ॥

शयननिवेशनं संवेशः । प्राङ्गणं गृहपूर्वभूमिः । अजिरं गृहबाह्यसंस्कृतभूमिः । यथोपजोषं यथासुखम्[3] ॥ २१ ॥

परिचारिकाभावान्नातिप्रीतेन[4] । सर्वभूतानामाशयमभिप्रायम् अभितो जानातीति सर्वभूताशयाभिज्ञः ॥ २२ ॥

---

[1] अधिरुह्यावरूह्य । [2] कृत्रिमान् शोभार्थं कृतान् हंसादीन् स्वान् ज्ञातीन् मन्यमानैः (हंसादिभिः स्वान् अधिरुह्यावरूह्य च निकूजितम्) इति यादुपत्यम् ।

[3] विहारस्थानं क्रीडाप्रदेशः, विश्रामः शयनगृहं, संवेश उपभोगस्थानं, प्राङ्गणं गृहाद् बहिः, अजिरं प्राकाराद् बहिरिति यादुपत्यम् ।

[4] मलिनदेहत्वात् परिचारिकाभावाच्च नातिप्रीतेनेति यादुपत्यम् ।

निमज्जास्मिन्[1] ह्रदे भीरु विमानमिदमारुह ।
इदं शुक्लकृतं तीर्थमाशिषामाप्तये नृणाम् ॥ २३ ॥

सा तद् भर्तुः समादाय वचः कुवलयेक्षणा ।
सरजं बिभ्रती वासो वेणीभूतांश्च मूर्धजान् ॥ २४ ॥

अङ्गं च मलपङ्केन संच्छन्नं शबलस्तनम् ।
आविवेश सरस्वत्याः सरः शिवजलाशयम् ॥ २५ ॥

सान्तःसरसि वेश्मस्थाः शतानि दश कन्यकाः ।
सर्वाः कैशोरवयसो[2] ददर्शोत्पलगन्धयः ॥ २६ ॥

तां दृष्ट्वा सहसोत्थाय प्रोचुः प्राञ्जलयः स्त्रियः ।
वयं कर्मकरीस्तुभ्यं शाधि नः करवाम किम् ॥ २७ ॥

स्नानेन तां महार्हेण स्नापयित्वा मनस्विनीम् ।
दुकूले निर्मले नूत्ने ददुरस्यै च मानद ॥ २८ ॥

---

आशिषां शुभानामाप्तये प्राप्तये । एवंविधे ह्रदे तीर्थे ॥ २३ ॥

सरजं धूलिधूसरम् ॥ २४ ॥

मलेन किट्टेन दृढबद्धेन पङ्केन कर्दमेन कल्मषेण वा । शबलौ कृष्णपाण्डुरौ स्तनौ यस्मिंस्तत् तथा तत् । सरस्वत्याः सरो ह्रदम् । शिवानां जलानाम् आशयं स्थानम् ॥ २५ ॥

ह्रदं प्रविश्य किमकरोदित्यत्राह — **सान्तः सरसीति** । वेश्म गृहं तत्र स्थिताः दश शतानि सहस्रम् । कैशोरवयसः षोडशवर्षवयसः । उत्पलगन्धवत् गन्धो यासां ता उत्पलगन्धयः ॥ २६ ॥

पथि तृणदर्शनवदेतद्दर्शनेन किमस्याः प्रयोजनमिति तत्राह— **तां दृष्ट्वेति** । अनेनाभ्युत्थान-प्रणामसंभाषणादि प्रयोजनमुक्तं भवति । कर्मकरीः कर्मकर्यः । शाधि अनुशासनं कुरु ॥ २७ ॥

कीदृशं परिचारकर्माकुर्वन्निति तत्राह— **स्नानेनेति** । महत्या राज्या अर्हेण योग्येन । मनस्विनीं प्रसन्नमनसाम् । नूत्ने नूतने ॥ २८ ॥

---

[1] निमज्ज्यास्मिन्-क । [2] किशोरवयसः-प्र क ।

भूषणानि पराध्यानि वरीयांसि द्युमन्ति च ।
अन्नं सर्वगुणोपेतं पानं चैवामृतासवम् ॥ २९ ॥
अथादर्शे स्वमात्मानं स्रग्विणं विरजाम्बरम् ।
विरजं कृतस्वस्त्ययनं कन्याभिर्बहुमानितम् ॥ ३० ॥
स्नातं कृतशिरःस्नानं सर्वाभरणभूषितम् ।
निष्कग्रीवं वलयिनं कूजत्काञ्चननूपुरम् ॥ ३१ ॥
श्रोण्योरध्य[2]स्तया काञ्च्या काञ्चन्या बहुरत्नया ।
हारेण च महार्हेण रुचकेन च भूषितम् ॥ ३२ ॥
सुभ्रुवा सुदता श्लक्ष्णस्निग्धापाङ्गेन चक्षुषा ।
पद्मकोशस्पृधा नीलैरलकैश्च लसन्मुखम् ॥ ३३ ॥
यदा सस्मार ऋषभमृषीणां दयितं पतिम् ।
तत्र चास्ते सह स्त्रीभिर्यत्रास्ते स प्रजापतिः ॥ ३४ ॥

---

वरीयांसि वरणीयतमानि । द्युमन्ति कान्तिमन्ति । सर्वगुणैः भक्ष्यभोज्यचोष्यलेह्यलक्षणैरुपेतं मधुरादिषड्गणोपेतं वा । अमृतवत् स्वादु मद्यं यस्मिंस्तदमृतासवम् ॥ २९ ॥

भर्तृसान्निध्याभावे शरीरशृङ्गारेण किम्? तत्र वक्ति—**अथेति** । आदर्शे दर्पणे[1] । आत्मानं शरीरम् । विरजं निर्मलम् । कृतस्वस्त्ययनं दासीभिः कृताशीर्वचनम् ॥ ३० ॥

'कुलस्त्री तु शिरःस्नानमुत्सवे स्नातु तैलतः । वारे वा पैतृके कर्मण्यन्यदा कण्ठसंप्लवा' इति स्मार्ताः ॥ ३१ ॥

पूर्वपश्चिमभागापेक्षया श्रोण्योरिति । रुचकेन वृत्ताकारेण कण्ठाभरणेन ॥ ३२ ॥

सुभ्रुवादिभिश्च लसत् चकासत् मुखं यस्मिंस्तत् तथोक्तम् । पद्मकोशं स्पर्धत इति पद्मकोशस्पृत् तेन ॥ ३३ ॥

एवंविधमात्मानं दृष्ट्वा यदा ऋषीणाम् ऋषभं दयितं प्रेष्ठं पतिं पतिसमीप इदं सर्वं शोभत इति सस्मार ततस्तदा स प्रजपतिर्यत्रास्ते स्वयं च ताभिः स्त्रीभिः सह तत्रैवास्त इत्यन्वयः ॥ ३४ ॥

---

[1] अत्र 'आदर्शे ददर्श' इति तात्पर्यम् । तत्र आदर्शे इत्यस्य दर्पण इति व्याख्याने ददर्शेति क्रियापदाध्याहारः । आदर्श इति न सप्तम्यन्तं दर्पणवाचि किन्तु छान्दसं रूपमित्यभिप्रेत्य ददर्शेति तद्व्याख्यानमित्यप्याहुः इति यादुपत्यम् । [2] अधस्तया–क ।

भर्तुः पुरस्तादात्मानं स्त्रीसहस्रवृतं तदा ।
निशाम्य[1] तद्योगगतिं संशयं प्रत्यपद्यत ॥ ३५ ॥

स तां कृतमलस्नानां विभ्राजन्तीमपूर्ववत् ।
आत्मनो बिभ्रतीं रूपं संवीतरुचिरस्तनम् ॥ ३६ ॥

विद्याधरीसहस्रेण सेव्यमानां सुवाससम् ।
जातभावो विमानं तदारोहयदमित्रहन् ॥ ३७ ॥

तस्मिन्नलुप्तमहिमा प्रियया-
नुषक्तो विद्याधरीभिरुपचीर्णवपुर्विमाने ।
बभ्राज उत्कचक उद्गुणपान-
वीच्यस्ताराभिरावृत इवोडुपतिर्नभस्स्थः ॥ ३८ ॥

---

यदा सा भर्तुः पुरस्तात् स्थितं स्त्रीसहस्रैश्च वृतमात्मानमद्राक्षीत् तदा तस्य कर्दमस्य योगगतिं भगवद्ध्यानफलं निशाम्य किमिदं चित्रमिति संशयं विस्मयं प्रत्यपद्यत ; न तु कोटिद्वयावलम्बिविकल्पम् । प्रागेव[2] निश्चायकधर्मदर्शनादित्यर्थः ॥ ३५ ॥

अर्थक्रियायोग्यत्वान्नविकल्पापरपर्यायः संशयोऽभूत् । किन्तु विस्मय एवेति भावेन व्यवाययज्ञोपक्रमं वक्ति—**स तामिति** । स्तनपट्टिकया संवीतौ प्रावृतौ रुचिरौ च स्तनौ यस्य तत् तथा ॥ ३६ ॥

जातभावः प्रादुर्भूतव्यवायलीलारम्भः ॥ ३७ ॥

जातभाव इत्युक्तं विवृणोति—**तस्मिन्निति** । स तस्मिन् विमाने बिभ्राजे चकास इत्यन्वयः । प्रकाशयोग्यगुणानाह—**अलुप्तेत्यादिना** । अलुप्तमहिमा अपरिच्छिन्नमाहात्म्यः । ग्राम्यकर्मासक्तस्यापि सामर्थ्यलोपो नास्तीत्यर्थः । 'सर्वेन्द्रियाणां जरयन्ति तेजः' इति श्रुतेरितरेषां स स्यादिति माहात्म्य लोपशङ्काकारणमाह—**प्रिययेति** । 'आलिङ्गने चुम्बने वाप्यनुषङ्गोऽनुवर्तते' इति । अङ्गमर्दनादिना उपचीर्णं शुश्रूषितं वपुर्यस्य स तथा । अनेन सुरतालये स्त्रिय एव परिचारिका इति सूचितम् । 'कचः कलङ्के दोषे च कुन्तले भ्रमरे तथा' इत्यभिधानादुत्कचक उद्धृतदोषः । उत्कृष्टो गुणो यस्य तदुद्गुणं तच्च पानं पातुं योग्यमधरामृतं तदुद्गुणपानम् । तस्य वीचिः परम्पराऽस्यास्तीत्युद्गुणपानवीच्यः । मत्वर्थे यत्प्रत्ययः । यद्वा उद्गुणपानः उत्तमाधरामृतश्च वीच्य एवावीच्यः प्राप्तषोडशवर्षः ।

---

[1] निशम्य–ग । [2] प्रागेव योगित्वेन–घ ।

तेनाष्टलोकपविहारकुलाचलेन्द्र-
द्रोणीष्वनङ्गसखमारुतसौभगासु ।
सिद्धैर्नुतो द्युधुनिपातशिवस्वनासु
रेमे चिरं धनदवल्ललनावरूथी ॥ ३९ ॥

वैस्रम्भके सुरवने नन्दने पुष्पभद्रके ।
मानसे चैत्ररथ्ये च स रेमे रामया सह ॥ ४० ॥

भ्राजिष्णुना विमानेन कामगेन महीयसा ।
वैमानिकानत्यशेत चरन् लोकान् यथानिलः ॥ ४१ ॥

किं दुरापादनं तेषां पुंसामुद्दामचेतसाम् ।
यैराश्रितस्तीर्थपदश्चरणो व्यसनात्ययः[2] ॥ ४२ ॥

---

प्राप्तषोडशवर्षः सन्नावीच्य इति कथ्यते' इति च । बुद्ध्यवतारार्थं दृष्टान्तमाह—**ताराभिरिति** । उडुपतिश्चन्द्रः । उक्तविशेषणानि यथासम्भवं चन्द्रेऽपि घटनीयानि ॥ ३८ ॥

वनजलक्रीडादीनां सुरताङ्गत्वात् तदप्यनेनानुष्ठितमिति भावेन कामगमित्युक्तं विवृणोति श्लोकद्वयेन—**तेनेति** । तेन विमानेनाष्टानां लोकपालानामिन्द्रादीनां विहारः क्रीडा यासु तास्तथोक्ताः, कुलाचलेन्द्राणां सप्तकुलपर्वतानां द्रोण्यो नितम्बगुहा यास्तासु[1] अष्टलोकपविहारकुलाचलेन्द्रद्रोणीषु वैश्रवणवच्चिरं रेम इत्यन्वयः । पाषाणसन्धिषु सूर्यकिरणसन्तापसम्भूतनिदाघेषु स्वतः कामाग्निना तप्तस्य सुरतोत्सवानुभवः कथं घटत इत्यत उक्तम्—**अनङ्गेति** । अनङ्गसखः कामसखः मारुतो वायुस्तेन सौभगासु सुन्दरसुखासु । द्युधुनी आकाशगङ्गा तस्याः पातेन प्रस्रवणेन शिवः कर्णसुखः स्वनः शब्दो यासु तास्तथा, तासु । अनेन विशेषणद्वयेन मान्द्यं शैत्यमिति गुणद्वयमुक्तम् । ललनाः स्त्रियः वरूथः समूहः । उभयत्र समम् ॥ ३९ ॥

इदानीं सौरभ्यं ध्वनयति—**वैस्रम्भके सुरवन इति** ॥ ४० ॥

इतरेषां वैमानिकानां विमानानां स्वाधिकृतेष्वेव प्रदेशेषु सञ्चारादस्य विमानस्य तथा विशेषाभावादयं सर्वातिशयीत्याह—**भ्राजिष्णुनेति** । विमानेन चरन्तीति वैमानिकाः तान् ॥ ४१ ॥

एतदैश्वर्यं न स्वनियतं किन्तु श्रीनारायणप्रसादायत्तमित्याशयेनाह—**किं दुरापादनमिति** । उद्दामचेतसामगाधबुद्धीनाम् । तीर्थं शुद्धजलं गङ्गा पदोर्यस्य स तीर्थपात् तस्य ॥ ४२ ॥

---

[1] द्रोण्यो नितम्बगुहास्तासु—इत्येव स्वरसम् । [2] व्यसनार्दनः-घ ।

प्रेक्षयित्वा भुवो गोलं पत्न्यै यावान् स्वसंस्थया ।
बह्वाश्चर्यं महायोगी स्वाश्रमाय न्यवर्तत ॥ ४३ ॥

विभज्य नवधात्मानं मानवीं सुरतोत्सुकाम् ।
रामां निरमयन् रेमे वर्षपूगान् मुहूर्तवत् ॥ ४४ ॥

तस्मिन् विमान उत्कृष्टां शय्यां रतिकरीं श्रिता ।
न चाबुद्ध्यत तं कालं पत्यापीच्येन[3] सङ्गता ॥ ४५ ॥

एवं योगानुभावेन दम्पत्यो रममाणयोः ।
शतं व्यतीयुः शरदः कामलालसयोर्मनाक् ॥ ४६ ॥

तस्यामाधत्त रेतस्तां भावयन्नात्मनात्मवित्[4] ।
नवधा विधाय रूपं स्वं सत्यसंकल्पविद् विभुः ॥ ४७ ॥

---

बह्वाश्चर्यात् भूगोलकादधिकैश्वर्यातिशयः स्वाश्रम इति भावेन ततस्तस्य निवृत्तिं वक्ति—**प्रेक्षयित्वेति** । स्वसंस्थया स्वसमाध्या यावांस्तावत्प्रदेशोपेतं भूगोलकं[1] भूमण्डलम् ॥ ४३ ॥

बिन्दुसरः स्वाश्रमं प्राप्य किमकार्षीत् कर्दम इति तत्राह—**विभज्येति** । महायोगित्वाद् बहुशरीरग्रहणसमर्थः स कर्दम आत्मानं स्वं नवधा विभज्य योगशक्त्या नवसंख्याविशिष्टानि शरीराणि गृहीत्वा सुरतोत्सुकां मानुषरतिकामुकीं मानवीं मनुपुत्रीं रामामपि[2] तावद्रूपवतीं नितरां रमयन् वात्स्यायनोक्तविधिना वर्षपूगान् मुहूर्तवत् रेम इत्यन्वयः ॥ ४४ ॥

तृतीयपुरुषार्थानुभव ईदृगिति व्यनक्ति—**तस्मिन्निति** । मसृणत्वाद् रतिकरीम् । यो बहुतिथः तं कालम् ॥ ४५ ॥

इदानीं कालं संख्याति—**एवमिति** । शरदो वत्सराः । व्यतीयुरतिक्रान्ताः । कामलालसयोश्चन्द्रोदये वर्धमानसमुद्रतरङ्गवद् विषयभोगाभिलाषयोः ॥ ४६ ॥

सुरतफलितमाह—**तस्यामिति** । आत्मवित्त्वं विवृणोति—**सत्येति** । सत्यसङ्कल्पो हरिः । तं सत्यसंकल्पत्वादिगुणविशिष्टत्वेन वेत्तीति । येन येन यो यो गुणो हरावुपसंह्रियते स तद्गुणविशिष्टो

---

[1] गोलं मण्डलं स्वसंस्थया द्वीपवर्षादिरचनया यावांस्तावन्तमिति यादुपत्यम् ।

[2] अपीत्यस्य स्वारस्यं न व्यक्तम् ।

[3] पत्यावीच्येन—इति पाठान्तरम् । [4] भावयन्नर्धमात्मनः—इति पाठान्तरम् ।

ततस्ताः सुषुवे सद्यो देवहूतिः स्त्रियः प्रजाः ।
सर्वास्ताश्चारुसर्वाङ्ग्यो लोहितोत्पलगन्धयः ॥ ४८ ॥

पतिं सा प्रव्रजिष्यन्तं तदालक्ष्योशती सती ।
स्मयमाना विक्लवेन हृदयेन विदूयता ॥ ४९ ॥

लिखन्त्यधोमुखी भूमिं पदा नखमणिश्रिया ।
उवाच ललितां वाचं निरुध्याश्रुकलां शनैः ॥ ५० ॥

सर्वं तद् भगवान् मह्यमुपोवाह प्रतिश्रुतम् ।
अथापि मे प्रपन्नाया अभयं दातुमर्हसि ॥ ५१ ॥

---

भवतीति न्यायात् स्वयमपि सत्यसङ्कल्पः । स्वं स्वरूपं नवधा विधाय तामप्यात्मना मनसा नवधा भावयन् तस्यां गर्भलक्षणं रेत आधत्तेत्यन्वयः । योगशक्त्या नवसु स्वस्य व्याप्तिसामर्थ्यं सूचयति—**विभुरिति** । अर्धमात्मन इति पाठे आत्मनोऽर्धं पत्नीं भावयन्नित्यर्थः । 'अर्धो वा एष आत्मनो यत् पत्नी' इति श्रुतेः ॥ ४७ ॥

शुक्लेन हरिणा 'ऋषय आधास्यंस्तेज आत्मनः' इत्यादावभिहितत्वादाहितः स गर्भः स्त्रीलिंग इति निश्चितेऽपि कतिषु कालावयवेषु गतेषु सा किमसूतेति तत्राह—**तत इति** । सद्य इत्यनेन निरस्यति कतिष्विति शङ्काम् ॥ ४८ ॥

महतां यदुत्तरं[1] कार्यं तत् प्रार्थनापूर्वकं कर्तव्यमित्यतो देवहूतिः पुत्रीणां दानं पुत्रं च पतिं प्रार्थयते—**पतिमिति** । प्रव्रजिष्यन्तं संन्यासं कर्तुमिच्छन्तम् आलक्ष्य विषयारागादिलक्षणेन ज्ञात्वा उशती पुत्रं कामयमानाऽत एव स्मयमाना विषयाभिलाषिणीवात्मानं दर्शयन्ती उत्पत्स्यमानभर्तृविरहजेन विक्लवेन[2] ॥ ४९ ॥

विषयाभिलाषं व्यनक्ति—**लिखन्तीति** । नखा एव मणयः नखमणयस्तेषां श्रीर्यस्य स तथा तेन । अनेन कामार्ताः पादाङ्गुष्ठेन भूमिमुल्लिखन्तीति वात्स्यायनप्रसिद्धमिति सूचयति ॥ ५० ॥

किमाहेति वृत्तमनुवदति–**सर्वमिति** । उपोवाह उपचकार । अथ किम् ? तत्राह–**अथापीति** । अभयमभयलक्षणं पुत्रम् ॥ ५१ ॥

---

[1] भविष्यदित्यर्थः । [2] उशती पुत्रेच्छावती पतिव्रता स्मयमाना बहिः, अन्तस्तु विक्लवेन व्याकुलेन विदूयता सन्तप्यमानेन (हृदयेन) इति यादुपत्यम् ।

ब्रह्मन् दुहितृभिस्तुभ्यं विमृग्याः पतयः समाः ।
अपि स्यान्मे[1] विशोकाय त्वयि प्रव्रजिते वनम् ॥ ५२ ॥

एतावतालं कालेन व्यतिक्रान्तेन मे प्रभो ।
इन्द्रियार्थप्रसङ्गेन परित्यक्तपरात्मनः ॥ ५३ ॥

इन्द्रियार्थेषु सज्जन्त्या प्रसङ्गस्त्वयि मे कृतः ।
अजानन्त्या परं भावं तथाप्यस्त्वभवाय मे ॥ ५४ ॥

संयोगः संसृतेर्हेतुरसत्सु विहितो धिया ।
स एव साधुषु कृतो निःसङ्गत्वाय कल्पते ॥ ५५ ॥

---

किञ्च तुभ्यं तव । दुहितृभिः समाः । अभयमिति सामान्यत उक्तं स्पष्टयति—**अपीति**[2] । त्वयि वनं प्रव्रजिते संन्यस्य वनं गते सति मम विशोकाय संसारदुःखप्रहाणाय पुत्रः स्यादपि, सम्भवेत् किम् ? तत्सम्भवाय भवदनुग्रहो भूयादिति शेषः । सच्चिदिति पाठे सच्चिदानन्दलक्षणः परमात्मेति ध्वनयति । कश्चिदितिपाठेऽप्ययमेवार्थः[3] ॥ ५२ ॥

अथापि पुत्रप्रार्थनव्याजेनेयं विषयाभिलाषुरितिशङ्का मा भूदित्याह—**एतावतेति** । इन्द्रियार्थेषु शब्दादिषु प्रसङ्गो गुणबुद्ध्यातिस्नेहलक्षणो यस्तेन परित्यक्तो विस्मृतः परमात्मा सर्वोत्तमो हरिर्यया सा तथोक्ता तस्याः ॥ ५३ ॥

मम गतकालोऽपि पुरुषार्थहेतुः स्यादिति प्रार्थयत इत्याह—**इन्द्रियार्थेष्विति** । यद्यपि इन्द्रियार्थेषु सज्जन्त्या भवतः परमितरविलक्षणं भावं योगैश्वर्यमजानन्त्या मे त्वयि कृतो यः प्रसङ्गः सः । तथापि परमभागवतत्वेन तत्सङ्गत्वात् मे अभवाय अपुनर्भवायास्त्वित्यन्वयः ॥ ५४ ॥

ज्ञानं विना सङ्गस्य पुरुषार्थहेतुत्वं कथमित्यतस्तं विशिनष्टि—**संयोग इति** । साधुषु भागवतेषु । निःसङ्गत्वाय संसारविरागाय । अनेन वैराग्यभक्तिज्ञानद्वारा सत्सङ्गः पुरुषार्थहेतुरित्युक्तं भवति ॥ ५५ ॥

---

[1] सच्चित् स्यान्मे, कश्चित् स्यान्मे—इति च पाठान्तरे । [2] त्वयीति–च ।
[3] कशब्दस्य सुखरूपब्रह्मवाचित्वस्योपनिषत्सु प्रसिद्धेः ।

**नेह यत् कर्म धर्माय न विरागाय कल्पते ।**
**न तीर्थपदसेवायै जीवन्नपि मृतो हि सः ॥ ५६ ॥**

**साहं भगवतो नूनं वञ्चिता मायया दृढम् ।**
**या त्वां विमुक्तिदं प्राप्य न मुमुक्षे ह बन्धनात् ॥ ५७ ॥**

इति श्रीमद्भागवते तृतीयस्कन्धे चतुर्विंशोऽध्यायः ।

॥ अथ पञ्चविंशोऽध्यायः ॥

**मैत्रेय उवाच—**
**निर्वेदवादिनीमेवं मनोर्दुहितरं मुनिः ।**
**दयालुः शालिनीमाह शुक्लाभिव्याहृतं स्मरन् ॥ १ ॥**

---

सत्सङ्गत्योत्पन्नब्रह्मार्पणबुद्ध्या चिकित्सितस्य कर्मणो द्वारद्वारिकया परमपुरुषार्थहेतुत्वं, न केवलस्य । क्षणिकत्वेन चाचेतनत्वेन च स्वाभीष्टफलदानसामर्थ्याभावादित्याह—**नेहेति** । इह कर्मभूमौ येन पुरुषेण यत् क्रियमाणं कर्म धर्माय धर्माख्यपुरुषार्थप्राप्तये न स्याद् विरागाय च न कल्पते वैराग्योत्पत्तौ न समर्थं स्यात् तीर्थपदस्य हरेः सेवायै च न स्यात् तादृशकेवलस्य कर्मणः कर्ता स पुरुषो जीवन्मृत इत्युच्यते । अपिशब्देन तस्य जन्म गर्हयति । यस्मात् तस्मात् भागवतसङ्गत्या शिक्षितं कर्मैव कर्तव्यमित्यर्थः ॥ ५६ ॥

तर्हि किमर्थं सकृदङ्गसङ्गो भूयादिति विषयाभिलाषः प्रार्थित इति तत्राह—**साहमिति** । सा तादृश्यहं भगवतो हरेर्मायया बन्धकशक्त्या वञ्चिता । नूनं तर्कयामि । 'तर्कनिश्चययोर्नूनम्' इति च[1] । तत्र हेतुमाह—**या त्वामिति** । संसारविमुक्तिदं त्वां प्राप्य संसारबन्धनान्न मुमुक्षे मुक्तिं नेच्छामीति यस्मादत इति । हेत्यनेन संसारप्रवृत्त्यारम्भमेवेच्छामीति सूचयति ॥ ५७ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां तृतीयस्कन्धे चतुर्विंशोऽध्यायः ।

॥ अथ पञ्चविंशोऽध्यायः ॥

हरेरवतारा अपि सच्चिदानन्ददेहत्वाच्छुक्रशोणितसम्पर्कप्रारब्धशरीरा न भवन्तीत्याद्यर्थतात्पर्याव-बोधायास्याध्यायस्यारम्भः । तत्रादौ कर्दमेन देवहूत्युक्तस्य किमुत्तरत्वेनाभाणीति तत्राह—**निर्वेद-वादिनीमिति** । निर्वेदं वैराग्यं वदितुं प्रतिपादयितुं शीलमस्य अस्तीति निर्वेदवादिनी तां शालिनीं

---

[1] अभिधानमिति शेषः ।

ऋषिरुवाच—

मा खिदो राजपुत्रीत्थमात्मानं प्रत्यनिन्दिते ।
भगवांस्तेऽक्षरो गर्भमदूरात् संप्रपत्स्यते ॥ २ ॥

धृतव्रता सुभद्रं ते दमेन नियमेन च ।
तपोद्रविणदानैश्च श्रद्धया चेश्वरं भज ॥ ३ ॥

स त्वयाराधितः शुक्लो वितन्वन् मामकं यशः ।
छेत्ता ते हृदयग्रन्थिमौदर्यो ब्रह्मभावनः ॥ ४ ॥

मैत्रेय उवाच—

देवहूत्यपि संदेशं गौरवेण प्रजापतेः ।
सम्यक् श्रद्धाय पुरुषं कूटस्थमभजद् गुरुम् ॥ ५ ॥

तस्यां बहुतिथे काले भगवान् मधुसूदनः ।
कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि ॥ ६ ॥

---

भार्याम् । 'शालिनी मालिनी माल्या चार्या भार्येति चोच्यते' इत्यभिधानात् । शुक्लनाम्नो हरेरभिव्याहृतं वचनम् ॥ १ ॥

आत्मानं त्वां च मां च प्रति । पितुः शुक्ररूपेण मातृयोनौ न क्षरतीत्यक्षरः । तत्र हेतुर्भगवानिति ॥ २ ॥

कदा प्रतिपत्स्यत इत्याशङ्क्य मदुक्तनियमानन्तरमाविर्भविष्यतीति भावेन नियममाह—**धृतव्रतेति** ॥ ३ ॥

अपि स्यान्मे विशोकायेति प्रश्नं प्रत्याह—**स त्वयेति** । ब्रह्माणं चतुर्मुखं भावयत्युत्पादयतीति, ब्रह्म परमात्मतत्त्वं ग्राहयतीति वा, तपश्चर्याबुद्धिमुत्पादयतीति वा ब्रह्मभावनः । औदर्यः पुत्रतयावतीर्णः । हृदयग्रन्थिमहंकारबन्धं संसारम् ॥ ४ ॥

देवहूत्यपि 'दमादीनां दुःसहत्वात् नेदानीं तत्करणं, प्रकारान्तरं चेदुपदिश्यताम्' इति भावेन भर्तृवचनं नोदास्ते, किन्तु श्रद्धयान्वतिष्ठदित्याह—**देवहूतीति** । संसारिचेतनव्यावृत्तये कूटस्थमिति । सर्वव्यापिरूपवन्नोदासीनम् । ब्रह्मादिज्ञानोपदेष्टारमिति भावेनोक्तं गुरुमिति ॥ ५ ॥

बह्व्यामपि साधनसामग्र्यां कार्यानुत्पत्तिवदत्रापि तथा किम् ? नेत्याह—**तस्यामिति** । बहूनां तिथिविशेषाणां कालावयवानां पूरणे काले गते सति कार्दमं कर्दमभुक्तान्नविकारमणीयांसं वीर्यं रेत

अवादयंस्तदा व्योम्नि वादित्राणि घनाघनाः ।
गायन्ति तं स्म गन्धर्वा नृत्यन्त्यप्सरसो मुदा ॥ ७ ॥

पेतुः सुमनसो दिव्याः खेचरैरपवर्जिताः ।
प्रसेदुश्च दिशः सर्वा अम्भांसि च मनांसि च ॥ ८ ॥

तत् कर्दमाश्रमपदं सरस्वत्या परिप्लुतम् ।
स्वयम्भूः सार्धमृषिभिर्मरीच्यादिभिरभ्यगात् ॥ ९ ॥

भगवन्तं परं ब्रह्म सत्त्वेनांशेन शत्रुहन् ।
तत्त्वसंख्यानविज्ञप्त्यै जातं विद्वानजः स्वराट् ॥ १० ॥

---

आपन्नः प्रविष्टः तस्य रेतसः आपदं विलापनलक्षणां नयतीति आपन्नो वा तस्यां देवहूत्यां जज्ञे प्रादुर्बभूव । अस्यायमेवार्थ इत्यत्र तादृशं दृष्टान्तमाह—**अग्निरिवेति** । यथाग्निर्दारुणि स्थितो दारुतश्चाभिव्यक्तो भवति । अत एव तस्यामित्युक्तम् । पूर्वमपि तत्र सत्त्वात् । एतत् सर्वं 'नावतारेष्वपि हरेर्देहः शुक्रादिसंभवः । तथापि शुक्रसंस्थः सन् मातृदेहं प्रविश्य च । विलाप्य शुक्रं तत्रैव केवलज्ञानरूपतः । उदेति भगवान् विष्णुः काले लोकं विडम्बयन्' इत्यादि ग्रन्थान्तरसिद्धम् । काले दशमे मासे ॥ ६ ॥

तत्र साक्षान्नारायण एव रूपान्तरेणाभिव्यक्तो लोकविलक्षणोत्सवदर्शनादिति भावेन तं कालं विशिनष्टि—**अवादयन्नित्यादिना** । घनाघनाः गर्जन्तो मेघाः, जगर्जुरिति शेषः ॥ ७ ॥

तस्मिन् हरौ व्यज्यमाने, अपवर्जिता अधःपातिताः ॥ ८ ॥

इतोऽपि हरिरेवाभिव्यक्तः । इतरथा ब्रह्माद्यागमनासंभवादित्याशयेनाह —**तत् कर्दमेति** ॥९॥

सरस्वत्या परिप्लुतमिति विशेषितत्वात् तीर्थस्नानार्थं तेषामागमनं किम् ? तत्राह—**भगवन्तमिति** । आद्र् विष्णोर्जात इत्यजस्य चतुर्मुखत्वे सिद्धेऽपि तस्य भक्त्याद्यतिशयत्वद्योतनाय—**स्वराडिति** । मनोवाक्कायकर्मभिः स्वतन्त्रे राजत इति । स्वेन राजत इति वा । 'न भारती मेऽङ्ग-मृषा' इत्यादेः । सत्त्वेन सर्वगुणपरिपूर्णत्वेन सिद्धेनांशेन । किम्प्रयोजनोऽयमवतार इत्यत उक्तम् —**तत्त्वेति** । चतुर्विंशतितत्त्वानां संख्यानं सम्यग्ज्ञानं तस्य विज्ञप्त्यै विज्ञापनाय । सत्त्वस्य प्रकृतिगुणेष्वेकत्वात् तेन प्राकृतदेहेन जात इत्येवार्थ इतीदं चोद्यं 'महागुणाभिपूर्णत्वं सत्त्वमित्युच्यते बुधैः' इत्यनेन परिहर्तव्यम् । 'केवलो निर्गुणश्च' इति श्रुतेश्च । अत्र संख्यानमित्यनेन सम्यग्ज्ञानमेव कथ्यते । न तु दुष्टकपिलोक्तं शास्त्रम् । कुतः ? 'सम्यग्ज्ञानं तु सांख्यं स्यात् तदर्थो योग उच्यते' इति वचनात् ॥ १० ॥

सभाजयन् विशुद्धेन चेतसा तच्चिकीर्षितम् ।
प्रहृष्यमाणैरसुभिः कर्दमं चेदमभ्यधात्[1] ॥ ११ ॥

ब्रह्मोवाच—

त्वया मेऽपचितिस्तात कल्पिता निर्व्यलीकतः ।
यन्मे सञ्जगृहे वाक्यं भवान् मानद मानयन् ॥ १२ ॥

एतावत्येव शुश्रूषा कार्या पितरि पुत्रकैः ।
बाढमित्यनुमन्येत गौरवेण गुरोर्वचः ॥ १३ ॥

इमा दुहितरः सत्यस्तव वत्स सुमध्यमाः ।
सर्गमेताः प्रभावैः स्वैर्बृंहयिष्यन्ति नैकधा ॥ १४ ॥

अतस्त्वमृषिमुख्येभ्यो यथाशीलं यथारुचि ।
आत्मजाः परिदेह्यद्य विस्तृणीहि यशो भुवि ॥ १५ ॥

---

ब्रह्मणाऽऽगत्य किं वचनमुक्तम् ? तत्राह—**सभाजयन्निति** । तस्य हरेश्चिकीर्षितं सम्यग्ज्ञान-साधनशास्त्रनिर्माणेच्छां सभाजयन् साध्विति बहुमानयन् हरेर्भक्तानुकम्पित्वेन प्रहृष्यमाणैरसुभिरिन्द्रियै-रुपलक्षितः । चशब्देन हरेश्चिकीर्षा सभाजनं कर्दमसंभाषणं च समुच्चिनोति ॥ ११ ॥

सामान्येनोक्तं विशिनष्टि—**त्वयेति** । अपचितिः पूजा । केयमपचितिः ? अत्राह—**यन्मे सञ्जगृह इति** ॥ १२ ॥

एतावता कथमपचितिरभूदित्यत्राह—**एतावतीति** । बाढमभिमतम् अनुमन्येत करोमीति यावत् एतावत्येव ॥ १३ ॥

किमनया स्तुत्या ? अथापि प्रजाः सृजेति भवदाज्ञा न निस्तीर्णेति तत्राह—**इमा इति** । सत्यः सन्त्विति शेषः । सतीगुणेन किं फलम् ? तत्राह—**सर्गमिति**[2] । सर्गमवशिष्टमिति शेषः । अनेन मदाज्ञा च कृता स्यादित्युक्तं भवति ॥ १४ ॥

मानुषसर्गस्तु मिथुनेन भाव्यत इति यस्मादत आसां योग्येभ्यो वरेभ्यो यथारुचि देहीत्याह — **अत इति** । अनेनोभौ लोकौ च प्राप्नोषीत्याशयेनाह—**विस्तृणीहीति** । विस्तृणीहि विस्तृतं कुरु ॥ १५ ॥

---

[1] अब्रवीत्–घ । [2] वत्सेति–ग ।

वेदाहमाद्यं पुरुषमवतीर्णं स्वमायया ।
भूतानां शेवधिं देहं बिभ्राणं कपिलं मुनिम् ॥ १६ ॥

ज्ञानविज्ञानयोगेन कर्मणामुद्धरंश्च यः ।
हिरण्यकेशः पद्माक्षः पद्ममुद्रापदाम्बुजः ॥ १७ ॥

एष मानवि ते गर्भं प्रविष्टः कैटभार्दनः ।
अविद्यासंशयग्रन्थिं च्छित्त्वा गां विचरिष्यति ॥ १८ ॥

अयं सिद्धगणाधीशः साङ्ख्याचार्यैः सुसम्मतः ।
लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्धनः ॥ १९ ॥

---

अयं तव गृहेऽवतीर्णः साक्षान्नारायण एव नान्यस्तल्लक्षणसद्भावादित्यहं वेद्मि । त्वमपि तथा विद्धीत्यभिप्रेत्याह—**वेदाहमिति** । भूतानां जीवानां शेवधिं पुरुषार्थसाधननिधिं देहं बिभ्राणं, कं पिबति लाति चेति कपिलं नाम्नाऽहं वेदेत्यन्वयः ॥ १६ ॥

यो ज्ञानविज्ञानयोगेन कर्मणां स्वरूपमुद्धरन् प्रकाशयन् उन्मूलयन् वा, यश्च हिरण्यकेशादि-स्वलक्षणलक्षितस्तमिति शेषः । 'हिरण्यश्मश्रुर्हिरण्यकेशः' इत्यादिश्रुतेः ॥ १७ ॥

स्वस्य जगद्गुरुत्वादिसिद्धये देवहूत्या अपि स्वविज्ञानमुपदिशति—**एष मानवीति** । तव तत्त्वविज्ञापनेनाविद्यासंशयग्रन्थिं, अज्ञानमविद्या विकल्पः संशयः, ताभ्यामुत्पन्नग्रन्थिं बन्धनं पाशलक्षणं च्छित्त्वा गां भूमिं विचरिष्यति । स्वपादैकशरणानां तत्त्वज्ञापनायेति शेषः ॥ १८ ॥

न केवलं तवाविद्यासंशयग्रन्थिं च्छिनत्ति । किन्त्वन्येषामपीति भावेनाह—**अयमिति** । अयं भगवान् लोके कपिल इत्याख्यां गन्ता इत्यन्वयः । संसारकम्प[1]लयहेतुत्वात् कपिल इत्यस्मिन्नर्थे विप्रतिपत्तिर्नास्तीत्याह—**साङ्ख्येति** । साङ्ख्यशास्त्रं कृत्वा प्रवर्तकत्वेन तदाचार्याणां पुरुषाणां परमगुरुत्वेन तैः सुसम्मतोऽविप्रतिपन्नः । कुतर्कबृंहितसाङ्ख्यकर्ता नायमित्याह—**सिद्धेति** । सिद्धा मुक्तास्तेषां गणस्याधीशः । अन्यकपिलस्यैतदभावात् । इतोऽपि न दुष्टकपिलोऽयमित्याह—**ते कीर्ति-वर्धन इति** ॥ १९ ॥

---

[1] कपेः-क ।

मैत्रय उवाच—

तावाश्वास्य[1] जगत्स्रष्टा कुमारैः सहनारदः ।
हंसो हंसेन यानेन स्वधाम प्रत्यपद्यत ॥ २० ॥

गते शतधृतौ क्षत्तः कर्दमस्तेन चोदितः ।
यथोदितं स्वदुहितॄः प्रादाद् विश्वसृजां ततः ॥ २१ ॥

मरीचये कलां प्रादादनसूयामथात्रये ।
श्रद्धामङ्गिरसेऽयच्छत् पुलस्त्याय हविर्भुवम् ॥ २२ ॥

पुलहाय गतिं युक्तां क्रतवे च क्रियां सतीम् ।
ख्यातिं च[3] भृगवेऽयच्छद् वसिष्ठायाप्यरुन्धतीम् ॥ २३ ॥

अथर्वणेऽददाच्छान्तिं यया यज्ञो वितन्यते ।
विप्रर्षभान् कृतोद्वाहान् सदारान् समलालयत् ॥ २४ ॥

ततस्त ऋषयः क्षत्तः कृतदारा निमन्त्र्य तम् ।
प्रातिष्ठन् नन्दमापन्नाः स्वं स्वमाश्रमण्डलम् ॥ २५ ॥

---

मानुषैः सह बहुलं संभाषणं न न्याय्यमिति भावेन जगत्स्रष्टुः स्वधामाभिगमनं वक्ति—**ताविति**[2] । हंसो निर्मलः ॥ २० ॥

कर्दमेन पुत्राननदर्शनेन धातुर्वचनं न विस्मृतमिति भावेन तदुक्तं करोतीत्याह—**गत इति** । शतधृतौ शतानन्दे चतुर्मुखे । तत इत्यनेन न विलम्बः कृत इति ध्वनयति ॥ २१ ॥

मन्दमतीनां सम्यगवबोधाय वरान् व्यनक्ति—**मरीचय इति** ॥ २२ ॥

कर्दमो जामातॄणां दुहितृषु प्रीत्यर्थं किमकार्षीदिति तत्राह—**विप्रर्षभानिति** । समलालयत्, धनमानाभ्यामिति शेषः ॥ २४ ॥

तल्लालिता जामातरस्तत्प्रीत्यर्थे तदाश्रम एव किमवसन् उत स्वाश्रममयासिषुः उभयमपि सम्भावितमिति तत्राह—**तत इति** । कृतदारा विहितभार्या भार्यान्तरप्राप्तीच्छारहिता वा । 'युगेऽक्षपाते पर्याप्ते कृतं क्लीबे हितेऽर्थवत्' इति यादवः । नन्दं धनमानाभ्यां समृद्धिमापन्नाः प्राप्ताः ॥ २५ ॥

---

[1] अथाश्वास्य–च । [2] अथेति–च । [3] स–क ।

स चावतीर्णं त्रियुगमाज्ञाय विबुधर्षभम् ।
विविक्त उपसङ्गम्य प्रणम्य समभाषत ॥ २६ ॥

अहो पापच्यमानानां निरये स्वैरमङ्गलैः ।
कालेन भूयसा नूनं प्रसीदन्तीह देवताः ॥ २७ ॥

बहुजन्मविपाकेन सम्यग् योगसमाधिना ।
द्रष्टुं यतन्ते यतयः शून्यागारेषु यत्पदम् ॥ २८ ॥

स एव भगवानद्य हेलनं नगणय्य नः ।
गृहेषु जातो ग्राम्याणां यः स्वानां पक्षपोषणः ॥ २९ ॥

---

सूचीकटाहन्यायेन कर्दमजामातॄणामनवसरा[1]दुक्तं कथाप्रसङ्गं विश्राव्य[2] पुनरपि कर्दमचरितशेषं वक्ति—**स चेति** । कृतादिषु त्रिषु युगेषु प्रादुर्भावो यस्य स त्रियुगस्तम् । 'युगत्रयावतारेण त्रियुगश्चेति कथ्यते' इति च । आत्मना ब्रह्मवचनेन च सम्यग् ज्ञात्वा । विविक्त एकान्ते ॥ २६ ॥

स्वाभीष्टश्रवणायोपोद्घातं रचयति—**अहो इति** । निरये नरकतुल्ये संसारे देवतास्तात्त्विका इन्द्रियाभिमानिदेवताः ॥ २७ ॥

भगवत्प्रसादं विना देवताप्रसादेन किं स्यादित्याशङ्क्य तत्प्रसादाविनाभूतः, अन्यथा तत्प्रसाद एव न स्यात्[3], अतस्तस्य श्रीनारायणस्य प्रसादो नैकेन जन्मना, किन्तु बहुभिर्जन्मभिः योग्यानामेवोपासकानां स्यादित्याह—**बहुजन्मेति** । यतयो निर्जितेन्द्रियग्रामाः । शून्यागारेषु एकान्तस्थानेषु मठवनादिषु । समीचीनेन निर्दोषेण भक्तियोगेनाष्टाङ्गयोगेन वा युक्तेन समाधिनाऽसंप्रज्ञातसंज्ञेन । यस्य पदं स्वरूपम् ॥ २८ ॥

यश्च स्वानां स्वभक्तानां पक्षं पुष्णातीति पक्षपोषणः स एव भगवानद्य ग्राम्याणां विषयलोलानां नो हेलनमवज्ञां न गणय्यानादृत्य केवलानुग्रहलक्षणबुद्ध्या गृहेषु जातः प्रादुर्भूत इत्यन्वयः । न इत्युक्त्यनुसारेण[4] गृहेष्विति बहुवचनम् । नोऽस्मादृशानामिति वा ॥ २९ ॥

---

[1] अवसरात्–प्र । [2] विश्राम्येत्यर्थः ।

[3] नारायणप्रसादाविनाभूतः देवताप्रसादः, नारायणप्रसादाभावे देवताप्रसाद एव न स्यादित्यर्थः ।

[4] इत्युक्त्या–क ।

स्वीयं वाक्यमृतं कर्तुमवतीर्णोऽसि मे गृहे ।
चिकीर्षुर्भगवञ्छर्म भक्तानामभिवर्धनः ॥ ३० ॥

तान्येव तेऽभिरूपाणि रूपाणि भगवंस्तव ।
यानि यानीह रोचन्ते स्वजनानामरूपिणः ॥ ३१ ॥

त्वां सूरिभिस्तत्त्वबुभुत्सयाद्धा सदाभिवादार्हणपादपीठम् ।
ऐश्वर्यवैराग्ययशोऽवबोधवीर्यश्रिया पूर्णमहं प्रपद्ये ॥ ३२ ॥

---

किञ्च भक्तानामभिवर्धनस्तेषामेव शर्म सुखं चिकीर्षुस्त्वं तव पुत्रत्वेनावतरिष्यामीति स्वीयं वाक्यम् ऋतं सत्यं कर्तुं मे गृहे भार्यायामवतीर्णोऽसीत्यन्वयः । भक्तशर्मकरणाय तदभिमानवर्धनाय स्ववाक्यसत्यत्वकरणाय चेत्यवतार[1] इति गम्यते ॥ ३० ॥

अर्थान्तरं चास्तीति कथयति—**तान्येवेति** । स्वजनानां स्वभक्तानां यानि यानि वसुदेवदेवक्यादिरूपाणि अभिव्यक्त्यर्थं रोचन्ते अभीष्टानि भवन्ति । तान्येव, न रूपं प्राकृतमस्यास्तीति अरूपी तस्य तवाभिरूपाणि प्रियाणि । अत इदानीं ब्रह्मादिभक्तानामस्मद्गृहेऽवतारस्येष्टत्वात् अस्मत्पुत्रत्वेनावतीर्णोऽसीति पूर्वेणान्वयः । रुच्यर्थानां प्रीयमाण इति सूत्रात् स्वजनेभ्य इति वक्तव्ये स्वजनानामिति षष्ठी स्वस्वामित्वसम्बन्धज्ञापनायेति ज्ञातव्यम् । यत्तु ब्रह्मादिरूपाणीति श्रीमद्भगवत्पादाचार्यवचनं[2] तत् प्रतिमात्वेन तद्योग्यानां [3]भगवदुपासनादिसंग्रहार्थत्वद्योतनाय, 'सत्त्वं विशुद्धं वसुदेवशब्दितम्' इत्यादिनैव तत्सिद्धेश्चेति सन्तोष्टव्यम् । यद् भक्तानामभीष्टं[4] तत्र तवावतार इत्यत्र किं प्रमाणमवलम्ब्यावध्रियत इत्यत एवकारेण 'व्यक्तो भवेद्धरिस्तत्र यत् स्थानं रुचितं सताम्' इति सूचितम्[5] ॥ ३१ ॥

कर्दम आत्मनः पुत्रत्वाभिमानं विहायापरोक्षज्ञानी तं विजानन् अनन्यसाधारणलक्षणैस्तं स्तौतीत्याह—**त्वां सूरिभिरिति** । ब्रह्मादिसूरिभिः । 'अद्धा प्रत्यक्षसत्ययोः' इति च । श्रियेत्येकवचनमेषामन्योन्यमभेदद्योतनाय । अत्र हरेर्वैराग्यं नाम स्वेतरस्य समस्तस्यासारतादर्शनम्[6] ॥ ३२ ॥

---

[1] चावतार इति स्यात् । [2] यानि यानि ब्रह्मादिरूपाणि रोचन्ते स्वजनानां तान्येव ते व्यक्त्यर्थमभिरूपाणीति तात्पर्यवचनम् । [3] भवेदुपासनादि-क । [4] अभीष्टं रूपं-क ।

[5] अरूपिणः प्राकृतशरीररहितस्य तवावताराय प्रवेष्टुं स्वजनानां ब्रह्मादीनां भक्तानमिह भूमौ यानि यानि रूपाण्यत्रिपराशरादि ब्राह्मणशरीराणि वा दशरथवसुदेवक्षत्रियशरीराणि वा रोचन्तेऽभीष्टानि भवन्ति तान्येव तेऽभिरूपाणि प्रियाणि भवन्तीति यादुपत्यम् । [6] ऐश्वर्यमीश्वरत्वं, श्रीः सम्पदिति यादुपत्यम् ।

**परं प्रधानं पुरुषं महान्तं कालं कविं त्रिवृतं लोकपालम् ।**
**आत्मानुभूत्यानुगतप्रपञ्चं स्वच्छन्दशक्तिं कपिलं प्रपद्ये ॥ ३३ ॥**

**तं त्वाभिपृच्छेऽद्य पतिं प्रजानां त्वयावतीर्णेन उताप्तकामः ।**
**परिव्राजां पदवीमास्थितोऽहं चरिष्ये त्वां हृदि युञ्जन् विशोकः ॥३४॥**

---

प्रधानं, पुरुषं, प्रकृतिपुरुषयोः[1] परमुत्तमम् । यद्वा पिपर्ति पूरयति जनं संपदेति परः तम् । सृष्ट्या पूरकत्वं ब्रह्मादेरप्यस्तीत्यतः—**प्रधानम्** । प्रकर्षेण धीयते जगदिति प्रधानम् । 'भर्ता सन् भ्रियमाणो बिभर्ति' इति श्रुतेः । कार्यानुविष्टतया प्रकृतेरपि प्रधानत्वमस्तीत्यतः—**पुरुषमिति** । पुरु गताविति धातोर्गमनशीलत्वात् पुरुषस्तम् । ताच्छील्येऽर्थे उषन् प्रत्ययः[2] । प्रकृतेरचेतनत्वेन गमनशक्त्यभावात् 'तत् सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेरनुविश्य मुख्यधारकत्वं हरेरेव । 'द्वाविमौ पुरुषौ लोके' इति पुरुषशब्दवाच्यत्वात् चित्प्रकृतेरपि कथंचिदुक्तलक्षणयोग्यतेत्यत उक्तम् —**महान्तमिति** । त्रिविधानन्त्ययुक्तम् । त्रिधानन्त्यं कालगुणादिनेति भावेनाह—**कालं कविं त्रिवृतमिति** । न हि कालस्य क्वाप्यन्तो दृष्टः । कविशब्दस्यातिक्रान्तदर्शित्वार्थत्वेन गुणानन्त्यमप्रतिहतम् । त्रीणि पृथिव्यप्तेजांसि आवृत्य व्याप्य तिष्ठतीति स्वरूपानन्त्यमपि । अथवानेनोक्तार्थे प्रमाणमुच्यते त्रिभिर्वेदैर्व्रियत इति । 'वेदैर्वृतत्वाद् भगवांस्त्रिवृदित्युच्यते बुधैः' इति । तथाच 'सर्वे वेदा यत्पदमामनन्ति' इत्यादि श्रुतिः । न चेदं लोकविलक्षणम् ? अत्राह—**लोकपालमिति** । लोकपालत्वमिन्द्रादीनामप्यस्त्यतः—**आत्मानुभूत्येति** । आत्मानुभूत्या स्वरूपज्ञानेनैव सम्यगशेषविशेषतया ज्ञातः प्रपञ्चो येन स तथा तम् । इदमपि लक्षणं तस्यैव युक्तमित्याह—**स्वच्छन्दशक्तिमिति** । स्वेच्छानुसारिजगत्सृष्ट्यादिशक्तियुक्तम् । कं ब्रह्माणं पिं पिनाकिनं रुद्रं च लालयतीति कपिलस्तम् । 'यस्मादुत्पद्यते ब्रह्मा पद्मयोनिः पितामहः । ब्रह्मादिषु प्रलीनेषु' इति मोक्षधर्मवचनात् । अत एतानि लक्षणानि बहुज्ञैरेव ज्ञातव्यानि, नास्मादृशैरिति स्थितम्[3] ॥ ३३ ॥

एवं स्तुत्या भगवन्तं प्रसाद्य स्वाभीष्टानुज्ञां प्रार्थयत इत्याह—**तं त्वेति** । 'उताप्यर्थविकल्पयोः' इत्युक्तेरत्राप्यर्थः । अवतीर्णेन त्वयाप्तकामोऽपि तथापि[4] य एवंविधलक्षणस्तं त्वानुपृच्छे अनुज्ञां

---

[1] 'सप्तसु प्रथमा' इति सूत्रात् प्रथमायाः षष्ठ्यर्थत्वमुपेत्येदम् । [2] उषन् प्रत्ययः—प्र ।

[3] परं सर्वतो विलक्षणम्, अत एव प्रधानं सर्वोत्तमम्, पुरि शरीरे शेत इति पुरुषम्, महान्तं त्रिविधानन्त्ययुक्तम्, कालं सर्वसंहारकम्, कविमतीतदर्शिनम्, त्रिभिर्वेदैर्वृतं प्रतिपाद्यम्, सर्वमुक्तामुक्तलोकपालकम्, आत्मानुभूत्या स्वरूपज्ञानेन यथावदवगतसकलप्रपञ्चम्, स्वच्छन्दशक्तिं स्वेच्छयैव सर्वसृष्ट्यादिशक्तियुक्तम्, कपिलं कं सुखं पिबत्यनुभवति भक्तानां लाति ददाति चेति कपिलस्तं प्रपद्ये—इत्यनन्ततीर्थाः ।

[4] तथापीत्यधिकमिति भाति ।

भगवानुवाच —

**मया प्रोक्तं हि लोकस्य प्रमाणं सत्यलौकिके ।**
**अथाजनि मया तुभ्यं यदवोचमृतं मुने ॥ ३५ ॥**

**एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात् ।**
**प्रसंख्यानाय तत्त्वानां समत्वायात्मदर्शिनाम् ॥ ३६ ॥**

**एष आत्मपथोऽव्यक्तो नष्टः कालेन भूयसा ।**
**तं प्रवर्तयितुं देहमिमं विद्धि मया भृतम् ॥ ३७ ॥**

---

प्रार्थये । किमर्थम् ? तत्राह—**परिव्राजामिति** । परिव्राजां संन्यासिनां पदवीमास्थितः संन्यस्तो हृदि त्वां युञ्जन् त्वामुद्दिश्य मनोयोगं कुर्वन् , अत एव विशोकः त्वद्वियोगनिमित्तशोकरहितो ग्रामैकरात्रविधिना चरिष्ये अटिष्यामीत्यन्वयः ॥ ३४ ॥

कर्दमस्तुत्या प्रसन्नो भगवांस्तस्मै ज्ञानमुपदिशति—**मयेति** । 'आभासो ज्ञानमालोको लोको भासश्च कथ्यते' इत्यभिधानादत्र लोकशब्देन ज्ञानं विवक्षितम् । सत्यलौकिके यथार्थज्ञानविषये यन्मया प्रोक्तं तदेव लोकस्य जनस्य प्रमाणं प्रमाकरणम् । हिशब्देनाप्ततमत्वादिहेतुं सूचयति । 'ब्रह्मा विष्णुर्हि लोकस्य' इति स्मृतेः द्वितीयं ब्रह्मणोक्तमपि प्रमाणमिति ध्वनयति । अज्ञानविप्रलम्भादिदोषराहित्यमाप्तत्वम् । तदस्माकमस्तीति तव सिद्धमिति भावेनाह—**अथेति** । अहं च तुभ्यमवोचं 'तव पुत्रत्वेनावतरिष्ये' इति । यद् यस्मात् अथ तस्मात् तद् ऋतं कर्तुं मयाऽजनि, त्वत्कृत इति शेषः । अतोऽहमपि न विप्रलम्भक इति तव सिद्धमित्यतोऽहमाप्ततम इत्यर्थः ॥ ३५ ॥

स्वानां पक्षपोषण इति यदुक्तं तत्राह—**एतन्म इति** । 'स्थानेऽभिप्राय आशयः' इत्यभिधानाद् दुराशयात् दुःस्थानात् संसारात् मुमुक्षूणां पुंसां देहमधिकृत्य वर्तमानानां परमात्मादितत्त्वानां प्रसंख्यानाय सम्यक् ज्ञापनायाप्तकामस्यापि मे एतस्मिन् भूलोके जन्म अवतार इति ज्ञातव्यम् । तर्हि परोक्षज्ञानिनां नानेनार्थ इति तत्राह—**समत्वायेति** । आत्मदर्शिनामात्मज्ञानिनां समत्वाय यथार्थज्ञानस्थिरीकरणाय चेति ॥ ३६ ॥

लोके सांख्यशास्त्रप्रवृत्तिदर्शनात् पुनस्तत्करणेन किं कार्यमिति तत्राह—**एष इति** । सम्यग्ज्ञानप्रवर्तकशून्येन भूयसा महता कालेनाव्यक्तः सूक्ष्म एव वक्ष्यमाणात्मपथः परमात्मतत्त्वविषयो मार्गो नष्टस्तिरोहितोऽभूत् । यथार्थज्ञानसाधनसांख्यशास्त्रनिर्माणेन तमात्ममार्गं प्रवर्तयितुं मया भृतमिमं देहं विद्धीत्यन्वयः ॥ ३७ ॥

गच्छ कामं मयाऽऽपृष्टो मयि संन्यस्तकर्मणा ।
जित्वा सुदुर्जयं मृत्युममृतत्वाय मां भज ॥ ३८ ॥

मामात्मानं स्वयंज्योतिः सर्वभूतगुहाशयम् ।
आत्मन्येवात्मना वीक्ष्य विशोकोऽभयमृच्छसि ॥ ३९ ॥

विश्वमेतद्धि शास्त्रेण विज्ञायात्मानमीश्वरम् ।
मुनिः शान्तमनोवाक्यस्तदा नाख्यात्युपप्लवः ॥ ४० ॥

मात्र आध्यात्मिकीं विद्यां शमनीं सर्वकर्मणाम् ।
वितरिष्ये यया चासौ भयं चातितरिष्यति ॥ ४१ ॥

---

अवतारप्रयोजनमुक्त्वा 'तं त्वानुपृच्छे' इत्यस्योत्तरमाह—**गच्छेति** । आपृष्टोऽनुज्ञातः । कामं यथासुखं । गत्वाप्येवं कुर्वित्याह—**मयीति** । मयि संन्यस्तेनार्पितेन कर्मणा सुदुर्जयं मृत्युमिन्द्रियग्रामं जित्वा अमृतत्वाय मां भजेत्यन्वयः ॥ ३८ ॥

भजनप्रकारमुपदिशति—**मामात्मानमिति** । सर्वभूतानां हृदयगुहायां शेत इति सर्वभूतगुहाशयस्तम्, स्वयंज्योतिः स्वप्रकाशम् आत्मानमादानादिकर्तारम् आत्मनि चिद्रूपे त्वय्येव आत्मना लिङ्गशरीरव्यतिरिक्तत्वेन नित्यकैङ्कर्यलक्षणेन चिदानन्दस्वरूपेण वीक्ष्य विशोको विनष्टसंसारक्लेशः त्वमभयममृतम् ऋच्छसि मुक्तो भविष्यसीत्यन्वयः ॥ ३९ ॥

भयरहितं मुक्तत्वमीदृशमित्याह—**विश्वमेतदिति** । विश्वमेतद् एतादृशमनित्यमसारमिति तव सिद्धं हि यस्मादतः शास्त्राचार्योपदेशेन आत्मानमन्तर्यामिणमीश्वरमखण्डैश्वर्यगुणाकरं विज्ञाय मुनिरपरोक्षज्ञानी शान्तमनोवाक्यः निवृत्तलिङ्गशरीररूपमनआदीन्द्रियो यर्हि तदोपप्लवः दुःखाज्ञानभयशोकादिलक्षण उपद्रवो नाख्याति न प्रकाशते । एतादृशं मुक्तत्वमित्यर्थः ॥ ४० ॥

मातुः का गतिरिति शङ्का मा भूदित्याह—**मात्र आध्यात्मिकीमिति** । अहमाध्यात्मिकीं परमात्मादितत्त्वविषयां सर्वकर्मणां शमनीं विद्यां मात्रे वितरिष्ये उपदेक्ष्यामि यया विद्ययाऽसौ माता भयमतितरिष्यति । चशब्दात् संसारं तीर्त्वा नित्याभयं हरिं प्लवति गच्छतीति सूचयति । तॄ प्लवनतरणयोरिति धातुः । प्लु गताविति धातुश्च ॥ ४१ ॥

मैत्रेय उवाच —
एवं समुदितस्तेन कपिलेन प्रजापतिः ।
दक्षिणीकृत्य तं प्रीतो वनमेव जगाम ह ॥ ४२ ॥
व्रतं स आस्थितो मौनमात्मैकशरणो मुनिः ।
निःसङ्गो व्यचरत् क्षोणीमनग्निरनिकेतनः ॥ ४३ ॥
मनो ब्रह्मणि युञ्जानो यत् तत् सदसतः परम् ।
गुणावभासे विगुण एकभक्त्यानुभाविते ॥ ४४ ॥

---

मैत्रेयः 'तत्रैवमुपदिष्टः कर्दमः पुत्रस्नेहात् किमकार्षीत्' इति विदुरस्य हार्दं चोद्यं परिहरति —**एवमिति** । एवं समुदित उपदिष्टः । दक्षिणीकृत्य प्रदक्षिणीकृत्य । भिक्षार्थं ग्रामप्रवेशं विना अन्यदा नास्तीत्येवकारार्थः ॥ ४२ ॥

वनमित्यनेनैकत्रावस्थानं प्रतीयते, न भूवलयभ्रमणम्, तथा च संन्यासाचारभङ्ग इति तत्राह— **व्रतमिति** । मौनं वागिन्द्रियनिग्रहलक्षणम् । तेन हि प्रियाप्रियव्यवहारेण स्नेहद्वेषसम्भवेन स्वतो दुःस्थस्य मनसः कालुष्येण तयोः प्रियाप्रिययोर्निवृत्तिः न स्यात् । अयमेव संसार इति प्रथमतस्तन्निग्रहः कर्तव्यः । मुनिः मननशीलः । निःसङ्गोऽद्वितीयः । अग्नीनामात्मसमारोपणादनग्निः । गृहाद्याश्रमरहितः[1] । आत्मा हरिरेकः शरणं रक्षिता गृहं च यस्य स तथा ॥ ४३ ॥

एवं विचरन् किं मनुते ? तत्राह—**मन इति** । यत् सदसतो मूर्तामूर्तलक्षणात् प्रपञ्चात् परं विलक्षणं तस्मिन् ब्रह्मणि मनो युञ्जानः । अनेन भ्रमेण पर्यटतश्चित्तविक्षेपेण तदुपासनानुपपत्तिः परिहृता । नन्वेवमपि स्वरूपमात्रप्रतिपत्तावपि विशिष्टगुणोपसंहारः सर्वोत्तमत्वविरोधिगुणपर्युदासश्च न स्त इति तत्राह-- **गुणावभासे विगुण इति** । ज्ञानादिगुणानामवभासः प्रकाशो यस्मिन् स तथा, ज्ञानादिगुणात्मत्वेन प्रकाशमान इत्यर्थः, तस्मिन् । यद्वा गुणेषु सृष्टावुपकारकेषु महदादिषु नियामकत्वेनावभासो यस्य स तथा दृश्यमान इत्यर्थः, तस्मिन् । अनेनाधिष्ठानविशिष्टत्वेनापि तदुपास्तिरस्तीति द्योतितम् । विगताः निषिद्धाः सत्त्वादिगुणा येन स तथोक्तस्तस्मिन् अनेन रागद्वेषादिदोषराहित्यं ध्वनयति । दुर्निग्रहस्य मनसोऽन्यत्रागमने कारणमाह—**एकभक्त्येति** । एको मुख्यः सर्वोत्तमो हरिर्नान्य इति सम्यग् ज्ञानपूर्विकया भक्त्याऽनुभावितेऽधिवासिते । अनेकजन्मभिः प्रचितसंस्कारेण

---

[1] गृहाद्याश्रयरहित इति स्यात् । अनिकेतनशब्दार्थकथनमेतत् । मठादिनिकेतनरहित इति यादुपत्यम् ।

निरहङ्कृतिर्निर्ममश्च निर्द्वन्द्वः समदृक् स्वदृक् ।
प्रत्यग्रः शान्तधीर्धीरः प्रशान्तोर्मिरिवोदधिः ॥ ४५ ॥

आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् ।
अपश्यत् सर्वभूतानि भगवत्यपि चात्मनि ॥ ४६ ॥

वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि ।
परेण भक्तिभावेन लब्धात्मा मुक्तबन्धनः ॥ ४७ ॥

---

द्रढीयस्तया[1] शृङ्खलितत्वादन्यत्र न यातीत्यर्थः । किमत्र प्रमाणमित्यतो वाह—**एकभक्त्येति** । एकभक्त्या एकया केवलया अनीशत्वादिदोषलेशशून्यया भक्त्या अनुभाविते सम्यक् ध्याते । सतां भावनात्र प्रमाणमित्यर्थः ॥ ४४ ॥

एवमटित्वाऽस्य कर्दमस्य देहावसानमथवा कश्चन विशेषोऽभूदिति मन्दाशङ्कां परिहरन् कपिलोपदिष्टानुष्ठानान्मुक्तियोग्यापरोक्षज्ञानोदयं वक्ति—**निरहङ्कृतिरिति** । सः कर्दमः सर्वभूतेषु अवस्थितं सदैवाप्तगुणत्वादात्मानं भगवन्तं सर्वसौभाग्यगुणाकरं भूतगर्भं नारायणमपश्यद् अपरोक्षीचकार । सर्वभूतानि चात्मनि सर्वगते हरौ तदाधारतया स्थितान्यपश्यदित्यन्वयः । अनेन भूतगर्भो भूतस्थ इति रूपद्वयमात्मशब्दोक्तमिति ज्ञायते । 'भूतगर्भश्च भूतस्थः पूर्ण एव द्विरूपवान् । अत आत्मेति तं प्राहुः सदैवाप्तगुणो यतः' इति वचनात् निर्द्वन्द्वः । शीतोष्णादिद्वन्द्वसहिष्णुः । समदृक् यथास्थितवस्तुदर्शी यथार्थज्ञानीत्यर्थः । स्वं स्वतन्त्रं दृष्टवान् इति स्वदृक् । तदुक्तम्—'अनन्याधीनशक्तित्वाद्धरिः स्व इति चोच्यते' इति । प्रत्यग्रः प्रत्यग्रतिः स्वान्तर्यामिणि रतिमान् । अयं निरहङ्कारादौ हेतुः । अत एव शान्तधीः क्रोधग्रहाविष्टबुद्धिरहितः । धीरः संपदि विपदि च निश्चलः । अत्र दृष्टान्तः प्रशान्तोर्मिरिति ॥ ४५ ॥

फलितमाह—**वासुदेव इति** । वासुदेवे सर्वत्र स्थित्वा क्रीडति सर्वज्ञे अशेषविशेषाकारेण सर्वं जानति प्रत्यगात्मनि स्वान्तर्यामिणि भगवति परेण पूर्णेन भक्तिभावेन लब्धात्मा लब्धमनाः । अत एव मुक्तबन्धनः मुक्तदेहाभिमानः । यद्वा प्रथमं वासुदेवे श्रीकृष्णे भगवति लब्धात्मा । समनन्तरं सर्वज्ञे सर्वज्ञत्वात् सृष्ट्यादिकर्तरि भगवति लब्धात्मा । क्रमेण प्रत्यगात्मनि सूक्ष्मे स्वबिम्बभूते भगवति लब्धात्मा ॥ ४७ ॥

---

[1] द्रढीयो मनः, तया भक्त्या ।

**इच्छाद्वेषविहीनेन सर्वत्र समचेतसा ।**
**भगवद्भक्तियोगेन प्राप्तो भागवतीं गतिम् ॥ ४८ ॥**

इति श्रीमद्भागवते तृतीयस्कन्धे पञ्चविंशोऽध्यायः ।

। अथ षड्विंशोऽध्यायः ।

**राजोवाच—**

**कपिलस्तत्त्वसंख्याता भगवानात्ममायया ।**
**जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम् ॥ १ ॥**
**अर्हस्य धर्मिणां पुंसां गरिम्णः सर्वयोगिनाम् ।**
**विश्रुतौ श्रुतदेवस्य भूरि तृप्यन्ति मेऽसवः ॥ २ ॥**

---

एवं हरौ लब्धात्मनः तस्य कर्दमस्य संसारापत्तिर्नास्ति, किन्तु पुनरनावृत्तिरूपा श्रीनारायणावाप्तिलक्षणा मुक्तिरेवेति दर्शयति—**इच्छाद्वेषेति** । इच्छाद्वेषाभ्यां निषिद्धेच्छावैष्णवद्वेषाभ्यां विहीनेन सर्वत्र सर्वपदार्थेषु स्थितभगवद्रूपेषु निर्दोषत्वसर्वगुणपरिपूर्णत्वादिसमत्वज्ञानयुक्तेन चेतसा ज्ञानेन भागवतीं गतिं भगवत्प्राप्तिरूपां मुक्तिं प्राप्त इत्यन्वयः ॥ ४८ ॥

इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे पञ्चविंशोऽध्यायः ।

॥ अथ षड्विंशोऽध्यायः ॥

आत्यन्तिकभक्तियोगस्य हरौ मनोयोगप्रकारस्य भक्त्यधिकारिणस्तत्साधनस्य च प्रतिपादनायास्याध्यायस्य प्रारम्भः । अत्रादौ कपिलदेवहूतीसंल्लापसंहितां श्रोतुकामः परीक्षित् श्रुतमनूद्य प्रशस्य वक्तव्यशेषं प्रार्थयत इत्याह—**कपिल इति** । 'अजा विष्णुहरच्छागाः' इत्यभिधानात् कोऽत्राभिधीयत इति संशयनिरासाय साक्षादिति विशेषणम् । 'साक्षात् प्रत्यक्षतुर्ययोः' इत्यतस्तुर्योऽजः श्रीनारायणः स्वयमावेशं विना आत्ममायया स्वेच्छयैव नृणामात्मप्रज्ञप्तये स्वस्वरूपज्ञानाय तदर्थं तत्त्वसंख्याता अव्यक्तादितत्त्वविषयं सम्यग्ज्ञानं करिष्यन् कपिलनामा जात, इति भवतोक्तं श्रुतं चेति शेषः ॥ १ ॥

श्रीनारायणसच्चरितश्रवणादौ प्रवर्तमानस्य अशनादीच्छारहितस्यापि लोकस्य चित्तनिरोधेनालम्बुद्धिर्जायते, न मम तथा, प्रत्युत रसायनसेविन इवाशनादिभोगरहितस्यापीन्द्रियाणि हृष्यन्तीत्याह—**अर्हस्येति** । निवृत्तिलक्षणमोक्षधर्मा एषां स्वरूपभूताः सन्तीति धर्मिणः । तेषां पुंसामर्हस्य सम्मान्यस्य ।

यद् यद् विधत्ते भगवान् स्वच्छन्दात्मात्ममायया ।
तानि मे श्रद्धधानस्य कीर्तन्यान्यनुकीर्तय ॥ ३ ॥

शुक उवाच —
द्वैपायनसखश्चैवं मैत्रेयो भगवांस्तथा ।
प्राहैनं विदुरं प्रीत आन्वीक्षिक्यां प्रचोदितः ॥ ४ ॥

पितरि प्रस्थितेऽरण्यं मातुः प्रियचिकीर्षया ।
तस्मिन् बिन्दुसरेऽवात्सीद् भगवान् कपिलः किल ॥ ५ ॥

तमासीनमकर्माणं तत्त्वमार्गाग्रदर्शनम्[5] ।
स्वसुतं देवहूत्याह धातुः संस्मरती वचः ॥ ६ ॥

---

'अर्हन्तौ[1] जिनसम्मान्यौ' इत्यभिधानम् । सनकादिसर्वयोगिनां गरिम्णः गुरुतमस्य शास्त्रेण श्रुता देवाः[2] क्रीडादिगुणाः श्रीनारायणस्य विद्यमाना यस्य स श्रुतदेवः, तस्य कपिलनाम्नो हरेर्महिम्नो विश्रुतौ विशेषेण श्रवणे मे असव इन्द्रियाणि भूरि तृप्यन्ति परमानन्दं प्राप्नुवन्तीत्यन्वयः ॥ २ ॥

इदं चेत् श्रुतं प्रथमतः[3] परं किं नु प्रार्थ्यत इत्यत्राह—**यद् यदिति** । स्वच्छन्दः स्वतन्त्र आत्मा मनो यस्य स तथा । भागवतानां कीर्तन्यानि नित्यं कीर्तनीयानि ॥ ३ ॥

तत्र शुको विदुरमैत्रेयसंवादेन राज्ञः प्रश्नं परिहरतीत्याह—**द्वैपायनसखश्चेति** । यथाहं त्वया आन्वीक्षिक्यां तत्त्वविद्याविषये प्रचोदितस्तथा विदुरेणापि पृष्टो मैत्रेयो मया वक्ष्यमाणमर्थं प्राहेत्यन्वयः ॥ ४ ॥

कोऽयमर्थ इति तत्राह—**पितरीति** ॥ ५ ॥

तत्र देवहूतिरयमवसर इति मत्वा कपिलं वक्तीत्याह—**तमासीनमिति** । आसीनमकर्माणमिति विशेषणद्वयेन सर्वदा निश्चलबुद्धिः, सा च स्वतः, तथापि लोकदृष्ट्यापि तथेति सूचयति । आसीनमित्यनेनाकर्मत्वे सिद्धे पुनस्तद्वचनं[4] कण्डूयनादिविधिर्नास्तीति सूचनेन हरेः सच्चिदानन्दाद्यात्मत्वं विज्ञायते । एवंविधस्य हरेः स्ववक्तव्यत्वे विज्ञानमस्तीति किं वक्तव्यमिति भावेनाह—**तत्त्वेति** । स्वसुतमिति सिद्धमाप्तत्वं धातुः संस्मरती वच इत्यनेन च पोष्यते ॥ ६ ॥

---

1 अर्हतौ-क । 2 श्रुतो देवो हरिर्येन तस्यापि मेऽसव इति यादुपत्यम् । 3 इदं चेत् श्रुतं प्रथममतः परमित्यर्थः । 4 वचनेनेति स्यात् । 5 तत्त्वमार्गोग्रदर्शनम्—इति पाठान्तरम् ।

देवहूतिरुवाच—
निर्विण्णातितरां[1] भूमन्नसदिन्द्रियतर्पणात् ।
येन संभाव्यमानेन प्रपन्नाऽन्धतमः प्रभो ॥ ७ ॥

तस्य त्वं तमसोऽन्धस्य दुष्पारस्याद्य पारगः ।
सच्चक्षुर्जन्मनामन्ते लब्धं मे त्वदनुग्रहात् ॥ ८ ॥

य आद्यो भगवान् पुंसामीश्वरो वै भवान् किल ।
लोकस्य तमसान्धस्य चक्षुः सूर्य इवोदितः ॥ ९ ॥

अथ मे देव संमोहमपाक्रष्टुं त्वमर्हसि ।
योऽवग्रहोऽहंममेतीत्येतस्मिन् योजितस्त्वया ॥ १० ॥

---

श्रोतव्यार्थेऽस्यास्तात्पर्यमस्तीत्युपोद्घातं रचयतीत्याह—**निर्विण्णेति** । भूमन् स्वतः पूर्ण । असताममङ्गलानामिन्द्रियाणां तर्पणादतितरां निर्विण्णा विरक्ता विषयेष्विति[2] शेषः । असत्त्वं कथम् ? अत्राह—**येनेति** । सम्भाव्यमानेन लाल्यमानेन येनेन्द्रियप्रीणनेन अन्धन्तमः तत्त्वाज्ञानं प्रपन्नेत्यन्वयः अनेनाधिकारिगुणौ विरक्ताऽर्थिता चेति दर्शिताविति ज्ञायते ॥ ७ ॥

आत्मनो विरक्तां स्फोरयति—**तस्येति** । अतीतानामनेकेषां जन्मनामन्ते चरमलक्षणे जन्मनि तस्य दुष्पारस्य दूरीकृततीरान्तरस्य अन्धस्य तमसः पारं गमयतीति पारगः त्वं नाम सच्चक्षुस्त्वदनुग्रहात् मया लब्धमित्यन्वयः । एतत् सन्निकृष्टं न दूरस्थमित्यर्थः । अनेन प्रोक्तार्थग्रहणे सामर्थ्यगुणोऽप्यसूचि । प्राचीनाचीर्णपुण्यनिचयेन चक्षुर्लाभात् ॥ ८ ॥

न केवलं ममैवैतदनुग्रहायोदितं चक्षुः, मन्निमित्तं लोकस्यापि । अतोऽहं पुण्यसागरेत्याशयेनाह—**य आद्य इति** । यः पुंसां ब्रह्मादीनां पुरुषाणामाद्यस्तेषामीश्वरः ऐश्वर्यप्रदः भगवानैश्वर्यादिगुणसमुद्रः स वै स एव भवांस्तमसाऽन्धस्य दृष्टिप्रदः सूर्यः इवोदितः किल संभावितमित्यन्वयः । 'वार्तासम्भावयो[3] किल' इति यादवः ॥ ९ ॥

एवं भगवन्तं स्वाभीष्टार्थेऽभिमुखीकृत्य स्वाभिप्रायं विज्ञापयति–**अथेति** । यथा विहितक्रियाऽकरणे महता प्रत्यवायेनानर्थरूपनरकप्राप्तिः तथा ज्ञानस्य ग्राहके त्वादृशे सूर्ये सन्निहिते सति तदग्रहणेऽनुत्थान-

---

[1] निर्विण्णा नितरां—इति पाठान्तरम् । [2] विषयेष्वासमिति–क, विषयेभ्य इति–च ।
[3] वार्तासंभाव्ययोः–प्र ।

तं त्वा गताहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम् ।
जिज्ञासया प्रकृतेः पूरुषस्य नमामि सद्धर्मविदां वरिष्ठम् ॥ ११ ॥

मैत्रेय उवाच —
इति स्वमातुर्निरवद्यमीप्सितं निशम्य पुंसामपवर्गचोदनम् ।
धियाभिनन्द्यात्मवतां सतांगतिर्बभाष ईषत् स्मितशोभिताननः ॥ १२ ॥

भगवानुवाच —
योग आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे ।
अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य वै[1] ॥ १३ ॥

---

तमःप्राप्तिः स्यादिति यस्मादथ तस्मात् त्वया य एतस्मिन् देहगेहादावहंममेत्यवग्रहो ज्ञानदृष्टिप्रतिबन्धको मिथ्याभिमानो योजितः, पूर्वादृष्टानुसारेणेति शेषः । तं संमोहं मिथ्याज्ञानलक्षणं भ्रमं मे विद्यमानमपाकृष्टमुत्कृत्य त्यक्तुमर्हसि, तत्त्वज्ञानोपदेशेनेत्यन्वयः ॥ १० ॥

त्वां शरणं गतेत्यन्वयः । केन हेतुनेत्यत उक्तम्—**जिज्ञासयेति** । 'नारायणो ब्रह्मवायू वीन्द्रशेषौ हरस्तथा । कामः शक्रो गुरुर्दक्षमन्वाद्या भास्करादयः । सर्वजीवाश्च क्रमशः पुरुषाख्याभिशब्दिताः । एतत्पत्न्यो बन्धशक्तिः स्त्रियः सर्वास्तथा जडम् । क्रमात् प्रकृतिशब्दोक्तास्तज्ज्ञानाद् विप्रमुच्यते' इति वचनात् पुरुषस्य नारायणादेः प्रकृतेर्लक्ष्म्यादेश्च विवेकलक्षणतारतम्यजिज्ञासया ज्ञातुकामेन हेतुनेत्यर्थः । त्वं च समग्रानुग्रहं कर्तुं समर्थ इत्याशयेनाह—**स्वभृत्येति** । न केवलमिदमुपासनं वाचिकं, किन्तु कायिकं चेत्याह—**नमामीति** । संसारतरोः कुठारस्य नैशित्याभावे तदुक्तिः स्तोत्रं स्यादित्यत उक्तम्—**सद्धर्मेति** ॥ ११ ॥

अत्र मैत्रेयो मात्रा प्रार्थितः कपिलस्तां प्रति वक्तीति विदुरं प्रत्याह—**इतीति** । ईप्सितं ज्ञातुमिष्टम् । अपवर्गस्य संसारविनाशस्य चोदनं सूचकम् । ईषद् बभाषे मितमाह । महतामल्पभाषित्वगुणमनेन द्योतयति ॥ १२ ॥

नन्वहं भोक्ष्ये किम् ? पितृवत् प्रव्रजिष्यामि किम् ? चरको भवानीति किम् ? तत्राह[2]—**योग इति** । । 'परमात्मादिकं देहे यदध्यात्मकमीरितम्[3]' इति वचनादाध्यात्मिकः देहमधिकृत्य

---

[1] सुखस्य च–क । [2] अस्या अवतारिकाया अभिप्रायो न स्पष्टः । [3] यदध्यात्मं तदीरितम्—इति तात्पर्यवचनस्य पाठान्तरम् । अस्मिन् पक्ष आध्यात्मिक इति रूपसिद्धिः सुलभा ।

तमिमं ते प्रवक्ष्यामि यमवोचं पुरानघे ।
ऋषीणां श्रोतुकामानां योगमुर्वङ्गनैपुणम् ॥ १४ ॥
चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम् ।
गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये ॥ १५ ॥
अहंममाभिमानोत्थैः कामलोभादिभिर्मलैः ।
वीतं यदाऽऽत्मनः[3] शुद्धमदुःखमसुखं समम् ॥ १६ ॥

---

वर्तमानानां परमात्मादितत्त्वानां स्वरूपज्ञानलक्षणो योगो मया पुंसां निःश्रेयसाय मतो निरूपितः, यत्र मोक्षे शरीरभोग्यस्य सुखस्य दुःखस्य च साकल्येनोपरतिर्नाशः, तमिमं योगं तव वक्ष्यामीत्यन्वयः । आप्तत्वायाह—**यमवोचमिति** । ऋषीणां ब्रह्मादिज्ञानिनाम् । उरुभिरङ्गैर्यमनियमादिसाधनैर्नैपुणं पाटवगुणोपेतम् । सुखं नास्ति चेन्मुक्तौ सुखमाप्नवानि न दुःखमित्यात्माशीः कथं जागर्तीत्याशङ्का चशब्दसूचितया 'सुखं शरीरभोग्यं तु दुःखं सर्वं तथैव च । मुक्तौ विलयमायाति नित्यानन्दस्तु भुज्यते' इत्यनया परिहृतेति । मुक्तावतः[1] स्वरूपानन्द एवाशास्यते न भौतिक इति सर्वत्र द्रष्टव्यम् । वैशब्देन स्वरूपानन्दावाप्तिलक्षणं निःश्रेयसं ध्वनयति । न स्वर्गादिकम् । तस्य हेयत्वेनोक्तत्वाद् वक्ष्यमाणत्वाच्च ॥ १४ ॥

प्रतिज्ञातयोगसाफल्यसाधनाय मनोवशीकरणं प्रथमसाधनमित्याह — **चेत इति** । चिनोति आत्मनि मलमिति चेतो मनः । अस्यात्मनो जीवस्य चेतः संसारबन्धाय तस्मान्मुक्तये चात्मनो मम मतम् । एकस्य कार्यद्वयापादनसामग्रीत्वं कथम् ? अत्राह—**गुणेष्विति** । शब्दादिगुणेषु सक्तं बन्धाय । तेषु गुणेष्वसक्तं[2] मुक्तये ॥ १५ ॥

शब्दादिगुणेष्वसक्त्यैवालं किम् इत्याशङ्क्य विशिनष्टि—**अहंममेति** । यदाऽऽत्मनोऽहंममाभिमानोत्थैः कामलोभादिभिर्मलैर्वीतं रहितं शुद्धं चित्स्वरूपं दूरीभूताचिन्मनःसंपर्कं परतत्त्वानुभवेन बाह्ये शब्दादिसुखेऽनासक्तेरिच्छाभावाद् असुखमत एव दुःखास्पर्शाद् अदुःखं समं निश्चलं भक्तिरसायनेनैव नित्यानन्दं भवति तदा पुरुष आत्मानं स्वबिम्बभूतं हरिं पश्यतीत्यन्वयः । परीत्युपसर्गात् प्राणपर्यन्तं परितो वर्तमानाः स्वबिम्बदेवताश्चापरोक्षीकृत्य तत्प्रसादादिति ग्राह्यम् । 'बाह्ये सुखे त्वनासक्तेरसुखं दुःखवर्जनात् । अदुःखं हरिभक्त्यैव नित्यानन्दं यदात्मनः[4] । तदा तं परमात्मानं पश्यत्यात्मप्रसादतः' इति विशेषवचनात् 'अदुःखमसुखं समम्' इति प्रतीतार्थोऽनुपपन्न इति । आत्मप्रसादत इत्यत्रात्मशब्देन

---

[1] अतो मुक्तावित्यन्वयः । [2] पुंसि हरौ सक्तं चेति शेषः । [3],[4] यदा मनः-ग ।

तदा पुरुष आत्मानं केवलं प्रकृतेः परम् ।
निरन्तरं स्वयंज्योतिरणिमानमखण्डितम् ॥ १७ ॥

ज्ञानवैराग्ययुक्तेन भक्तियोगेन चात्मना ।
परिपश्यत्युदासीनां प्रकृतिं च हतौजसम् ॥ १८ ॥

न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥ १९ ॥

प्रसङ्गमजरं पाशमात्मनः कवयो विदुः ।
स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥ २० ॥

---

प्राणादयोऽपि ग्राह्याः । तस्य तेष्वपि वृत्तेः । इयन्तं कालं परोक्षीभूतमात्मानं स्वं पश्यतीति मन्दाशङ्कां परिहरति केवलमित्यादिविशेषणेन । 'अभेदात् स्वावतारेषु निरन्तर उदाहृतः । गुणदेहेन्द्रियाभेदात् केवलोऽसदृशत्वतः । अखण्डः पूर्णशक्तित्वादहमेकः सदा मतः' इत्यनेन व्याख्यातोऽयं ग्रन्थः । उक्तं सुष्ठु स्यात् प्रकृतेः परत्वे । तदेव कथमित्यत उक्तम्—**प्रकृतेः परमिति** । चिज्जडप्रकृत्योः परम् । एतल्लक्षणं न कस्यापीत्यतोऽसाधारणमित्यर्थः । अणिमानमित्यनेन स्वबिम्बरूपमेवोच्यते । 'य आत्मनि तिष्ठन्' इत्यादेः । केनेत्यत उक्तम्—**आत्मना** चिन्मनसेति । अस्य सदातनत्वात् इतः पूर्वं किमिति नापश्यत् ? अत उक्तम्—**ज्ञानेति** । प्रकृतिज्ञानाभावे तत्परत्वदर्शनं कथमित्यत उक्तम्—**उदासीनामिति** । प्रयोजकाभावे परिणामलक्षणकार्यानभिमुखीम् । कुतो-[1]ऽनुदितमिदमित्यत उक्तम्—**हतौजसमिति** । हतमोजो बन्धकशक्तिर्यस्याः सा तथा ताम् । तदुक्तम्—'बन्धशक्तिः प्रकृत्याख्या विष्णुशक्त्या वियुज्यते' इति ॥ १६,१७,१८ ॥

मुक्तेरन्तरङ्गसाधनं भक्तेरन्यन्नास्तीत्याह—**न युज्यमानयेति** ॥ १९ ॥

इदानीं ब्रह्मज्ञानोत्पत्तौ प्रतिबन्धकमाह—**प्रसङ्गमिति** । असद्भार्यादिषु प्रसङ्गमतिस्नेहम् । अजरं पुनर्नवत्वेनाक्षयम् । तद्द्वयमेव सत्सु कृतश्चेत् किंकार्यक्षम इति तत्राह—**स एवेति** । अपावृतम् उद्घाटितं विवृतमित्यर्थः ॥ २० ॥

---

[1] अनुदितमित्यधिकमिति भाति

तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।
अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥ २१ ॥

मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ।
मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥ २२ ॥

मदाश्रयाः कथा मृष्टाः[2] शृण्वन्ति कथयन्ति च ।
तपन्ति विविधास्तापानैकात्म्यगतचेतसः ॥ २३ ॥

त एते साधवः साध्वि सर्वसङ्गविवर्जिताः ।
सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥ २४ ॥

---

किंलक्षणाः साधवो येन तत्सङ्गो भक्तिज्ञानद्वारा मुक्तिसाधनं स्यादिति तत्राह—**तितिक्षव इति** । अजाशब्देन तत्कार्यं देह उपलक्ष्यते । अत सातत्यगमन इति धातोस्तेन सहैव सततं वर्तमानत्वात् तस्मिन् गते गच्छन्ति स्थिते तिष्ठन्ति इत्यतोऽजाताः कामलोभादयस्तेषां शत्रवः । अत्र[1] हेतुरयम्—शान्ताः श्रीनारायणे निष्ठावन्तः, अत एव साधवः निष्ठासाधनशीलाः, साधुरुचिता भगवद्भक्तिः, सैव भूषणं येषां ते साधुभूषणाः । 'साधु त्रिषूचिते सौम्ये' इति यादवः ॥ २१ ॥

एतदेव विशिनष्टि—**मयीति** । अनन्येन भावेन अन्यस्मिन् विष्णोरन्यस्मिन् ब्रह्मादौ तादृशो भावः स्नेहो नास्तीत्यनन्यभावस्तेन । तदुक्तम्—'यादृशी मयि भक्तिः स्यात् तादृशन्यत्र नैव चेत् । अनन्यभक्तिरुद्रेकात् सा ययैव तरेत् सृतिम्' इति । दृढां मरणसद्भावेप्यचलाम् । तदेव विशदयति—**मत्कृत इति** । स्वजनबान्धवाः लौकिकाः, न तु पारलौकिकाः ॥ २२ ॥

एवं निःसङ्गानां कालयापना कथम् अत्राह—**मदाश्रया इति** । तपआदिकर्माभावे विद्यैषु[3] कथं तिष्ठतीति तत्राह—**तपन्तीति** । तापान् तपांसि 'ब्राह्मीं वाव त उपनिषदम मेति तस्यै तपोदमः कर्म प्रतिष्ठा' इत्यादि श्रुतिः । नन्वेवं विविधतपस्सञ्चरणसमये शीतोष्णोपवासादिना इन्द्रियदौर्बल्यहेतुना हरेः सर्वोत्तमत्वादिज्ञानं तिरोहितं भवतीति मन्दाशङ्कां परिहरति—**ऐकात्म्येति** । 'एकः पूर्णो हरिर्नान्यस्तदन्ये तद्वशा मताः । इति ज्ञानं स्थिरं यत् तदैकात्म्यज्ञानमुच्यते' इति स्मृतेः ऐकात्म्ये हरेः सर्वोत्तमत्वपूर्णज्ञाने[4] गतं स्थिरं स्थितं चेतो येषां ते तथोक्ताः ॥ २३ ॥

उपसंहरति—**त एत इति** । त्यक्तस्वजनबान्धवा इत्युक्तं विशदयति—**सर्वसङ्गेति** । दुष्टसर्वसङ्गवर्जिता इत्यर्थः । सन्त्वेवंविधाः साधवः, तत्र किं ममोपदिशसीति तत्राह—**सङ्गस्तेष्विति** ।

---

[1] तत्र–च । [2] हृष्टा इति पाठान्तरम् । [3] विद्यैवैषु–ग । [4] सर्वोत्तमत्वपूर्णत्वज्ञान इत्यर्थः ।

सतां प्रसङ्गान्मम वीर्यसम्पदो भवन्ति हृत्कर्णरसायनाः कथाः ।
तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धावती भक्तिरनुक्रमिष्यति ॥ २५ ॥
भक्त्या पुमान् जातविराग ऐन्द्रियाद् दृष्टश्रुतात्मद्रविणानुचिन्तया ।
चित्तस्य यत्तो ग्रहणे योगयुक्तो यतिष्यते ऋजुभिर्योगमार्गैः ॥ २६ ॥
असेवयाऽयं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृम्भितेन ।
योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुन्धे ॥ २७ ॥

---

अथ तस्मात् । तत्र हेतुमाह—**सङ्गदोषेति** ॥ २४ ॥

त्वच्चरितश्रवणादिना दुष्टसङ्गदोषनाशो दृष्टचरः सत्सङ्गात् कथमित्याशङ्क्य सत्सङ्गे हरिकथाश्रवणादिसम्भवेन तत्सङ्गाद् दुष्टसङ्गदोषविनाशः प्रतिज्ञायते, तेषामन्यप्रसङ्गाभावादिति भावेनाह—**सतां प्रसङ्गादिति** । प्रसङ्गात् प्रकृष्टसङ्गात् । वीर्याणां पराक्रमाणां सम्पदो यासु तास्तथा । हृत्कर्णानां रसमानन्दमायन्तीति[1] हृत्कर्णरसायनाः । अय गताविति धातुः । ततः किम् ? तत्राह—**तज्जोषणादिति** । तच्छब्देनोभये च ग्राह्याः तेभ्यः सद्भ्यः तासां कथानां जोषणान्निषेवणाद् अपवर्गवर्त्मनि हरौ श्रद्धावती आस्तिक्यबुद्ध्युपेता भक्तिः अनुक्रमिष्यति पदं निधास्यतीत्यन्वयः ॥ २५ ॥

भक्त्या किं फलं स्यादिति तत्राह—**भक्त्येति** । पुमानर्थी समर्थो विद्वान् मद्विषयशास्त्रश्रवणादिनोत्पन्नया मद्भक्त्या ऐन्द्रियात् शब्दादिविषयाज्जातविरागः ब्रह्मादिस्तम्बपर्यन्तपदार्थानामसारत्वानित्यत्वसदुःखत्वज्ञानवान् । तथा जातः वौ परमात्मनि रागः स्नेहः सारत्वनित्यत्वनिर्दुःखत्वज्ञानपूर्वको यस्य स तथा । कैश्चिदुत्तमाधिकारिभिः दृष्टस्य कैश्चिदवराधिकारिभिः श्रुतस्यात्मद्रविणस्य परमात्माख्यवस्तुनोऽनुचिन्तया निरन्तरध्यानेन । तथा चित्तस्यानवस्थानस्य मनसो ग्रहणे विषयाद् व्यावर्तने यत्तः प्रयत्नवान् ऋजुभिरक्लेशदैः, योगमार्गैर्यमादिसदुपायप्रकारैर्योगैर्युक्तः सत्सङ्गवान् यतिष्यते, परमात्मापरोक्षायेति शेषः । केषाञ्चिद् दृष्टानां केषाञ्चित् श्रुतानाम् । आत्मद्रविणानां जीवादिपदार्थानामसारत्वादिचिन्तया ऐन्द्रियात् जातविराग इति वा ॥ २६ ॥

अधिकारिणामेवंविधः प्रयत्नो न निष्फलः । किन्तु सफल एव भवतीत्याह—**असेवयेति** । प्रकृतेर्गुणानां सेवा मुमुक्षुणा क्षुरधारावत् तृणपिहितमुखकूपवदलं परिहर्तव्येति पुनर्वचनम् । वैराग्येण विजृम्भितेन प्रवर्धितेन । परमात्मादिनामान्ततत्त्वानां तारतम्यज्ञानेन च । मय्यर्पितया भक्त्या ।

---

[1] अयन्ति–प्र आययन्तीति स्यात् । अन्तर्णीतणिज्वा ।

देवहूतिरुवाच —
का स्वित् त्वय्यर्पिता[3] भक्तिः कीदृशी मम गोचरा ।
यया पदं ते निर्वाणमञ्जसा प्राप्नुयामहम् ॥ २८ ॥

यो योगो भगवत्प्राप्तौ निर्वाणात्मंस्त्वयोदितः ।
कीदृशः कति चाङ्गानि यतस्तत्त्वावबोधनम् ॥ २९ ॥

तदेतन्मे विजानीहि यथाहं मन्दधीर्हरे ।
सुखं बुद्ध्येय दुर्बोधं योषा भवदनुग्रहात् ॥ ३० ॥

मैत्रेय उवाच —
विदित्वार्थं कपिलो मातुरित्थं जातस्नेहो यत्र तन्वाभिजातः ।
तत्त्वाम्नायं यत् प्रवदन्ति साङ्ख्यं प्रावोचद् वै भक्तिवितानयोगम् ॥ ३१ ॥

---

योगेन मयि मनोनिधानलक्षणेन । प्रत्यगात्मानं स्वान्तर्यामिणं मामिह प्रारब्धप्रतिबन्धकाभावेऽस्मिन् जन्मनि अवरुन्धे वशीकृतवत् पश्यतीत्यन्वयः । विरक्तिभक्त्युपास्तिजनितज्ञानमेव पुरुषार्थसाधनं न कर्मेत्यतो वाह—**असेवयेति** । मय्यर्पितया भक्त्या योगेन समुत्पन्नेन योगध्यानोत्पन्नेन[1] ज्ञानेन प्रत्यगात्मानं स्वबिम्बभूतं मां पश्यतीति । कीदृशेन भक्तियोगेन ? प्रकृतेर्गुणानामसेवयोत्पन्नेन, वैराग्यविजृम्भितेन[2] ॥ २७ ॥

देवहूती मय्यर्पितयेति विशेषणेनोत्पन्नोत्कण्ठया दत्तावसरा पृच्छति—**का स्विदिति** । कीदृशी मम गोचरा ज्ञातुं शक्येति । निर्वाणं नित्यनिवृतम् ॥ २८ ॥

ऋजुभिर्योगमार्गैरित्युक्तयोगलक्षणं पृच्छति—**यो योग इति** । निर्वाणात्मन् परमानन्दमूर्ते । यतो यस्माद् योगात् ॥ २९ ॥

तदेतद् योगलक्षणं भक्तिलक्षणं[4] विजानीहि विशेषेण ज्ञापय । योषेति हेतुगर्भविशेषणम् । योषात्वा[5]च्छास्त्रज्ञानाभावादित्यर्थः ॥ ३० ॥

मैत्रेयो विदुरायेमां कथां कथयतीति शुकः परीक्षिते वक्ति—**विदित्वार्थमिति** । यत्र यस्यां सच्चिदानन्दमयकरचरणादिमत्या तन्वा अभिजातः शुक्रशोणितसम्पर्कं दूरीकृत्य प्रकाशितः तस्या मातु-

---

[1] योगेन समुत्पन्नेन योगेन ध्यानेनोत्पन्नेन ज्ञानेन—प्र । [2] च इति शेषः ।
[3] त्वय्युचिता—ग । त्वय्यच्युता—क । [4] भक्तिलक्षणं च इति स्यात् ।
[5] स्त्रीत्वाच्छास्त्र—ग । स्वच्छास्त्र—क ।

भगवानुवाच—
**देवानां गुणलिङ्गानामानुश्राविक[2]कर्मणाम् ।**
**सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥ ३२ ॥**

**अनिमित्ता भगवति भक्तिः सिद्धेर्गरीयसी ।**
**जरयत्याशु या कोशं निगीर्णमनलो यथा ॥ ३३ ॥**

---

रित्थमर्थमभिप्रायं विदित्वा मन्मातुः भगवद्भक्तिश्रवणे तात्पर्यमभून्नान्यत्रेति जातः प्रवृद्धः स्नेहोऽनुग्रह-लक्षणो यस्य स तथा कपिलो भगवान् यत् तत्त्वाम्नायं परमात्मादितत्त्वप्रतिपादकं साङ्ख्यशास्त्रं प्रवदन्ति तद् भक्तियोगवितानं भक्तियोगविस्तारलक्षणं शास्त्रं मात्रे प्रावोचद् व्याख्यातवानित्यन्वयः । हरेरितरवज्जननाङ्गीकारे 'शुक्लेन जनिरन्येषां हरेः स्वतनुवैव तु । नित्योदितज्ञानतनोः कुतः स्यात् शुक्लतो जनिः' इति प्रमाणविरोधो दुर्निरासः । अत एव पुरा सत्यैव[1] तन्वेत्युक्तम् । इतरेषां प्रागशरीरिणां पश्चाच्छरीरित्वेन जन्मदर्शनात् ॥ ३१ ॥

यद्यपि सत्त्वादिगुणभेदेन भक्तिरप्यनेकधा । तथापि सात्विकसंज्ञमुत्तमाधिकारियोग्यं भक्ति-योगं निरूपयति—**देवानामिति** । सत्त्वे एकमनस इत्येतत्पदद्वयं तन्त्रेणोपात्तन्यायेन द्विरावृत्त्या व्याख्येयम् । 'सदा सर्वगुणाढ्यत्वात् सत्त्वो विष्णुरुदीर्यते' इति वचनात् सत्त्वे सर्वगुणाढ्ये एव हरावेव एकमनसः एकाग्रमनसः पुरुषस्य मनुष्याद्यन्यतमस्य गुणलिङ्गानां[3] शब्दादिज्ञापनलक्षणानाम् इन्द्रियाभिमानिनामानुश्राविककर्मणां वेदोक्तकर्मानुष्ठानेन तदुक्तानतिलङ्घिनां 'आनुश्राविककर्मासौ श्रुत्युक्तं यो न लङ्घयेत्' इत्युक्तेः देवानां तात्त्विकसंज्ञानां सत्त्वे भगवति एकमनसः एकाग्रतयान्य-व्यापारमन्तरेण अन्तःकरणस्य या वृत्तिः सा भक्तिरित्युच्यते । कीदृशी ? स्वाभाविकी गङ्गाप्रवाह-लक्षणा[4] ॥ ३२ ॥

अनिमित्ता फलसङ्कल्परहिता । अत्यन्तचित्तनिरोधरूपत्वात् दुःखहेतुशङ्का न कार्या । प्रत्युत पूर्णानन्दरूपत्वात् अपक्वभक्त्यावाप्तमुक्तेरुत्तमेत्याह—**सिद्धेरिति** । यस्मिन् काले पूर्णभक्तयः सब्रह्म-चारिणो मुक्तिमेष्यन्ति तस्मिन्नेव समये मुक्तिप्राप्तियोग्यस्य भक्तिपरिपाकमनवाप्तस्य पुंसो या सिद्धिः

---

[1] स्वयैव–क । [2] आनुश्राविकेति बहुविद्वत्सम्मतः पाठः । आनुस्राविकेति यादुपत्यसम्मतः ।

[3] गुणलिङ्गानां गन्धादिगुणोपलब्धिलक्षणकार्यानुमेयानां, तथा वचनादिक्रियानुमेयानामिति यादुपत्यम् । [4] सर्व-जीवेन्द्रियप्रेरकतया गुणलिङ्गानां शब्दादिगुणगमकानामिन्द्रियाभिमानिनाम्, आनुश्राविककर्मणां वेदोक्तकर्मा-नतिलङ्घिनां तात्त्विकसंज्ञानां ब्रह्मादिदेवानां सत्त्वे साधुगुणाढ्ये भगवति एकाग्रतया स्थितस्य मनसः या वृत्तिर्वर्तनं स्वाभाविकी गङ्गाप्रवाहरूपा, अनिमित्ता फलसङ्कल्परहिता च सा मुख्यभक्तिरित्युच्यते ........इत्यनन्ततीर्थाः ।

**नैकात्म्यतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः ।**
**येऽन्योन्यतो भागवताः प्रसज्य संभाजयन्ते मम पौरुषाणि ॥ ३४ ॥**

---

अपूर्णसुखलक्षणा मुक्तिस्तस्याः सिद्धेर्गरीयसी[1] । तदुक्तम्—'अपूर्णभक्तेर्मुक्तौ तु न सुखं पूर्तिमेष्यति । अतस्तादृशमुक्तेश्च भक्तिः पूर्णा गरीयसी' इति । पूर्णसुखहेतुत्वात् ज्ञानवदन्तरङ्गत्वाच्च गरीयस्त्वं युक्त-मित्याह-**जरयतीति** । कोशं लिङ्गशरीरम् । 'कोशोऽस्त्री कुड्मले दिव्ये शास्त्रेऽर्थेऽथ गृहे तनौ' इति यादवः । समूलतूलनाशस्य[2] विवक्षितत्वात् तस्मिन्नेवार्थे दृष्टान्तमाह-**निगीर्णमिति** । निगीर्णं सर्वतो ग्रस्तम् । देवानामसुरेन्द्रियाभिमानित्वेन[3] पापकर्मणि प्रेरणया तद्दर्शनेन जुगुप्सादिना चित्तविक्षेप-संभवेन भक्तेरात्यन्तिकत्वायोगादन्यत्र अभिमानित्वे[4] उभयेषामपि भगवति मनोवृत्तेर्गङ्गाप्रवाहवत् सिद्धत्वेन तदभावात् 'सत्वे एव एकमनसः पुंसः' 'गुणलिङ्गानाम्' इति विशिष्योक्तेरभिप्रायः[5] । सम्भावना-मात्राभिप्रायेणोक्तमिदमित्येतावता भक्तेर्न्यूनातिरेकभावो न कल्पनीयः । हर्याज्ञाकारित्वेन तत्प्रीतिहेतु-त्वात् । देवजातिमात्रपरिहाराय गुणलिङ्गानामिति । कल्याद्यसुरव्यावृत्तये आनुश्राविककर्मणामिति । तेषां वेदोक्तानुष्ठाननियमाभावात् । उक्तविशेषणवतां देवानां सत्त्वे भगवत्येकमनसो वृत्तिर्भक्तिरित्युक्तेऽ-धमाधिकारिभिः क्रियमाणाया अभक्तित्वमात्यन्तिकत्वाभावश्च स्यात् । तस्मात् 'कीदृशी मम गोचरा' इति पृष्टत्वात् तत्परिहाराय च विभागो वक्तव्यः । देवानां सत्त्व एव एकमनसो वृत्तिरित्येतद् देवसामान्य-भक्तिलक्षणम् । गुणलिङ्गानामिति तद्विशेषभक्तिलक्षणम् । आनुश्राविककर्मणामिति सर्वसामान्य-भक्तिलक्षणम् । स्वाभाविक्यनिमित्तेति सर्वत्र समम् । अधमाधिकारिभिः क्रियमाणा भक्तिरीदृशी[6] । सिद्धेर्मुक्तेर्गरीयसी प्रधानसाधनभूता ॥ ३३ ॥

के ते आत्यन्तिकभक्तिकर्तारः येन[7] तद्भक्तेर्मुक्तेर्गरीयस्त्वं स्यादिति तत्राह—**नैकात्म्यतामिति** । ये भागवताः अन्योन्यतः प्रसज्य मिलित्वा मम पौरुषाणि पराक्रमान् सम्भाजयन्ते संभाव्य वदन्ति शृण्वन्ति च ते मे मया दीयमानामप्यैकात्म्यतां मुक्तिं न स्पृहयन्ति नेच्छन्ति । यदि भक्तिसन्तुष्टो हरिः किमपि ददाति तदपि तदाज्ञात्वेनैव गृह्णन्ति न भक्तिफलत्वेन । 'दीयमानं बालोऽपि गृह्णाति, किमुत प्रेक्षावान् ? अत इदं भगवता स्तूयते, न तु तत्त्वम्' इति मन्दाशङ्का 'नेच्छन्ति सायुज्यमपि

---

[1] साऽनिमित्ता भक्तिः सिद्धेः सकामतया व्यङ्गभक्तिसाध्यायाः परममुक्तेः सकाशाद् गरीयसी । अनिमित्त स्वरूपाङ्गलाभेनेदानीमेव तदपेक्षयाऽधिकसुखहेतुत्वादिति मूलाभिप्राय इति यादुपस्यम् ।

[2] समूलकुलनाशस्य-प्र । [3] असुरादीन्द्रिया-ग । [4] अभिमानित्वे इति नास्ति क्वचित् ।

[5] अस्याभिप्रायो न व्यक्तः । [6] कीदृशी-क । [7] येन तद्भक्तेरित्यस्य यद्भक्तेरित्यर्थः ।

पश्यन्ति मे ते[1] रुचिराण्येव[2] सन्तः प्रसन्नवक्त्रारुणलोचनानि ।
रूपाणि दैत्यासुविनाशनानि साकं वाचं स्पृहणीयां वदन्ति ॥ ३५ ॥

तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः ।
हृतात्मनो हृतप्राणस्य भक्तिमनिच्छतो गतिमण्वीं प्रयुङ्क्ते ॥ ३६ ॥

अथो विभूतिं मम मायया चितामैश्वर्यमष्टाङ्गमनुप्रवृत्तम् ।
श्रियं न देवीं स्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते हि लोके ॥ ३७ ॥

---

फलत्वेन हरिर्यदि । ददाति भक्तिसन्तुष्ट आज्ञात्वेनैव गृह्यते । तादृशानां सुखाधिक्यं पुनर्मुक्तौ भविष्यति ' इत्यनेन परिहृतेति । कुतो नेच्छन्तीति तत्राह—**मत्पादेति** । मम चरणनिषेवायाः पूर्णानन्दहेतुत्वादित्यर्थः । भगवदङ्घ्रिसेवायाः पूर्णानन्दहेतुत्वं कथम् ? तद्व्रतानामप्यन्यत्र **प्रवृत्त्या** दुःखसम्भवादित्यत उक्तम्—**मदीहा इति** । अनेन प्रासङ्गिकान्यप्रवृत्तावप्यन्ते मदर्पणेन साऽपि मत्कर्मवत् मत्प्रीतिजनकत्वेन मदीहैवेत्युक्तं भवति । ते च कियन्त इति तत्राह-**केचिदिति** ॥ ३४ ॥

ऐकात्म्याकाङ्क्षाभावे हेत्वन्तरमाह—**पश्यन्तीति** । भगवद्रूपसल्लापादेः कोऽन्योऽस्ति सुखहेतु-रित्यतो नेच्छन्तीत्यर्थः ॥ ३५ ॥

ननु कालशक्तेर्दुरतिक्रमत्वेन कञ्चित्कालं भगवति भक्तिं कुर्वतोऽन्यथापि संभवेन संसारस्या-निवृत्तिसम्भवेन भक्तेर्न किमपि प्रयोजनमित्याशङ्क्याह—**तैर्दर्शनीयेति** । यैः सह वाचं वदन्ति यानि च पश्यन्ति तै रूपैर्हृतात्मनः अपहृतमनसो हृत[3]प्राणस्य तद्विषयीकृतसर्वेन्द्रियचेष्टस्य भक्तिमेवानिच्छ-तोऽपि पुंसः प्रसन्नोऽहमण्वीं सूक्ष्मां सायुज्यलक्षणां गतिं मुक्तिं प्रयुङ्क्ते ददामीत्यन्वयः । उदारशब्दः प्रत्येकमभिसम्बध्यते । उदाराणि विलासहासेक्षितवामसूक्तानि येषां तानि तथा । वामान्यनुकूलानि सूक्तानि शोभनवचनानि ॥ ३६ ॥

ननु सायुज्यभाजामन्तर्धूमदाहवद् दुःखरूपं स्यादिति तत्राह—**अथो इति** । ये मम मायया चितां निर्मितां ध्वजच्छत्रव्यजनादिलक्षणां विभूतिम् अथो तथा अष्टाङ्गयोगमनुप्रवृत्तमनुप्राप्तमणिमाद्यैश्वर्यं तथा भद्रां सर्वाङ्गसम्पन्नां देवीं द्योतमानां श्रियं गवाश्वादिसम्पदं न स्पृहयन्ति । ते परस्य सर्वोत्तमस्य मे लोके सच्चिदानन्दलक्षणे देहे अश्नुवते व्याप्य सुखमेवानुभूय तिष्ठन्तीत्यन्वयः । हिशब्दो मुक्तेर्वि-लक्षणत्वान्न लोकवदित्यर्थद्योतनार्थः । यद्वा सालोक्यमुक्तिमनेन वक्ति । तथाहि भक्तिज्ञानफलत्वेन

---

[1] ते मे-ग घ च । [2] रुचिराण्यम्ब-ङ । [3] अपहृत-घ

न कर्हिचिन्मत्पराः शान्तरूपा नङ्क्ष्यन्ति मे नोऽनिमिषो लेढि हेतिः ।
येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् ॥ ३८ ॥

इमं लोकं तथैवामुमात्मानमुभयायिनम् ।
आत्मानमनु ये चेमे ये रायः पशवो गृहाः ॥ ३९ ॥

विसृज्य सर्वानन्यांश्च मामेवं विश्वतोमुखम् ।
भजन्त्यनन्यया भक्त्या तान् मृत्योरतिपारये ॥ ४० ॥

नान्यत्र मद् भगवतः प्रधानपुरुषेश्वरात् ।
आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते ॥ ४१ ॥

---

विभूतिं स्वर्ग[1] महर्लोकेऽनुवृत्तमष्टाङ्गैश्वर्यमिह लोके च समृद्धामुत्तुङ्गप्रासादादिसम्पदं च नेच्छन्ति । परिपक्ववैराग्यसमुद्रमग्नत्वात् ते मे लोके वैकुण्ठादावातिसुखमश्नुते इत्यतस्त्वमपि स्वर्गादीच्छां हित्वा सर्वोत्तमः सच्चिदानन्दलक्षणो ममात्यन्तमुपकारकत्वेन सर्वस्मात् प्रेष्ठो हरिरिति कृत्वा भजस्व । त्वयापीदृशो लोकः प्राप्यत इति कीदृशी मम गोचरेत्यस्य परिहार उक्त इति ॥ ३७ ॥

कालस्य सर्वत्र सत्त्वात् स्वतन्त्रत्वात् ततोऽपि केनचिद्धेतुना तान् निवर्तयतीति तत्राह—**न कर्हिचिदिति** । हेत्वभावादित्याह—**मे नो इति** । मे हेतिरायुधमनिमिषः कालचक्रं तान् नो लेढि नास्वादयति[2] नाशलक्षणं कार्यं न करोतीत्यर्थः । अत्रापि हेतुरस्तीत्याह—**येषामिति** । आत्मा स्वामी । ज्ञानवतोऽभिव्यक्तो भवतीति सुतः । चशब्दात् पिता च । अनेकविधव्यसनप्राप्तावहमे[3]-वानिमित्तबन्धुरिति सुहृद इति बहुवचनम् ॥ ३८ ॥

किं बहुना ? वैराग्यविजृम्भितया भक्त्या भजतां संसारतारकोऽहमेवेत्याह—**इमं लोकमिति** । आत्मानं जीवं उभयायिनं लोकद्वयसञ्चारिणम्, विज्ञायेति शेषः । 'ये चेमे' इत्युक्तं विवृणोति—**ये राय इति** । रायो निष्कादयः । यद्वा ये चेमे सुतादयः ॥ ३९ ॥

विश्वतोमुखं सर्वस्मान्मुख्यं सर्वज्ञं वा । मृत्योः संसारादतीत्य पारये पारं मां प्रापयामि । यद्वा पार समाप्ताविति धातोः संसारसमाप्तिं कृत्वा मुक्तान् करोमीति ॥ ४० ॥

मत्तोऽन्यः संसारतारकोऽस्तीति शङ्कां मा कार्षीरित्याह—**नान्यत्रेति** । प्रधानपुरुषयोः प्रकृति-हिरण्यगर्भयोः ईश्वरात् । आत्मनः आदानादिकर्तुः ॥ ४१ ॥

---

[1] स्वर्गे-क । [2] नासादयति-ग । [3] अनेकविधापत्प्राप्तावप्यहमेव-ग ।

मद्भयाद् वाति वातोऽयं सूर्यस्तपति मद्भयात् ।
वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति मद्भयात् ॥ ४२ ॥

ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ।
क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम् ॥ ४३ ॥

एतावानेव लोकेऽस्मिन् पुंसां निःश्रेयसोदयः ।
तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थितम् ॥ ४४ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे षड्विंशोऽध्यायः ।

॥ अथ सप्तविंशोऽध्यायः ॥

भगवानुवाच—
अथ ते सम्प्रवक्ष्यामि तत्त्वानां लक्षणं पृथक् ।
यद् विदित्वा विमुच्येत पुरुषः प्राकृतैर्गुणैः ॥ १ ॥

---

वाय्वादीनां स्वाधिकारप्रवृत्तिर्न स्वनियता, किमुत मुक्तिदानप्रवृत्तिः ? अथ उक्तार्थे तच्छङ्का दूरोत्सारितेत्याशयेनाह—**मद्भयादिति** ॥ ४२ ॥

अहमेव मुक्तिदाने नियतः । अत इदमेवात्र मुख्यसाधनमित्याह—**ज्ञानेति** । योगिनो ज्ञानिनः । वाय्वादिवदन्यनियतत्वे तव मुक्तिदानशक्तिः प्रहता स्यादित्यत उक्तम्—**अकुतोभयमिति** ॥ ४३ ॥

एकग्रामप्रवेशे बहुमार्गवदनेके मार्गाः संभवेयुरित्याशङ्कां परिहरन् अन्ययोग व्यवच्छिनत्ति—**एतावानेवेति** । स्थितं, अचलत्वेनेति शेषः ॥ ४४ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे षड्विंशोऽध्यायः ।

॥ अथ सप्तविंशोऽध्यायः ॥

अस्मिन्नध्याये 'प्रसंख्यानाय तत्त्वानाम्' इति यदुक्तं तत्प्रपञ्चः क्रियत इति प्रतिजानीते—**अथ त इति** । अथ भक्तिनिरूपणानन्तरम् । यत् पुरुषार्थोपयोगि तदेव वक्तव्यं किं तत्त्वानां लक्षणज्ञानेन प्रयोजनमिति तत्राह—**यद् विदित्वेति** । गुणैः सत्त्वादिभिः ॥ १ ॥

ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम् ।
यदाहुर्वर्णये तत् ते हृदयग्रन्थिभेदनम् ॥ २ ॥

अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः
प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम् ॥ ३ ॥

न जातो न म्रियेतात्मा स हि देहाद्युपाधिभिः ।
निमित्तैरात्ततद्धर्मा यथा स्वप्ने तदीक्षिता ॥ ४ ॥

---

परमात्मज्ञानमेव निर्विचारं मुक्तिसाधनं श्रुतम् । तत्त्वलक्षणज्ञानस्य कथं च तत्साधनत्वं स्यादित्याशङ्क्य तत्त्वलक्षणज्ञानं परमात्मज्ञानाविनाभूतं, तेषां मुख्यकारणत्वात् परमात्मन इति तज्ज्ञानमेव वर्णय इति प्रतिजानीते—**ज्ञानमिति** । आत्मानं परमात्मानं दर्शयतीति आत्मदर्शनं यत् ज्ञानं पुरुषस्य श्रेयोऽर्थिनो निश्रेयसार्थाय मोक्षादिसर्वपुरुषार्थायाहुस्तत् हृदयग्रन्थिभेदनं संसारपाशच्छेदकरं ज्ञानं तव वर्णय इत्यन्वयः ॥ २ ॥

यज्ज्ञानं हृदयग्रन्थिभेदनमुक्तं तत् ज्ञानं किंगुणविशिष्टमुदीर्यमाणं संसारसमुच्छेदसमर्थं स्यादिति तत्राह—**अनादिरिति** । योऽनादिराद्यन्तरहितः कारणमात्रशून्यो वात्मा विज्ञानादिगुणराशिः, पुरु पूर्णानन्दं सनोति ददातीति पुरुषः, सर्वान्तर्यामी वा, निर्गुणः गुण[1]संबन्धरहितः, चेतनप्रकृतेः परः, प्रत्यग्धामा[2]स्वाभिमुखपद्माख्यधामा, स्वयंज्योतिः स्वप्रकाशेन दीप्यमानः, विश्वं स्थावरजङ्गमात्मकं जगद् येन समन्वितं व्याप्तम् ॥ ३ ॥

स आत्मा परमात्मा न जातो न म्रियेत । 'अज आत्मा महान् ध्रुवः' 'न जायते म्रियते वा कदाचित्' इत्यादि श्रुतिस्मृतिप्रसिद्धम् । आद्यन्तरहित इत्यनेनापि[3] जन्माद्यभावे सिद्धे न जात इत्यादिपुनर्वचनं प्रमाणप्रसिद्धिद्योतनाय । युक्तिपूर्वश्रुत्यादेः बलीयस्त्वं, न केवलस्येति भावेन कैमुत्यन्यायमाह—**देहाद्युपाधिभिरिति** । देहाद्युपाधिलक्षणैर्निमित्तैः आत्ततद्धर्मा स्वीकृतजननादिधर्मा जीवोऽपि न स्वरूपतो जायते । किन्तु भ्रान्त्याऽभिमानेन जायते म्रियते भ्रान्तत्वाद् देहात्मत्वस्य । अत्र दृष्टान्तमाह—**यथेति** । यथा स्वप्ने तस्य स्वप्नस्येक्षिता द्रष्टा जाग्रति दृष्टश्रुतजननादिसंस्कारवशाज्जातो मृत इति पश्यति । न हि ते जननमरणे सत्ये स्तः । किन्तु भ्रान्त्यात्मनो मन्यते, तथा प्रकृते किमु सर्वज्ञत्व स्वतन्त्रत्वप्राकृतवैकृतदेहरहितत्वदूरीकृताविद्यत्वादिवैलक्षण्ययुत ईश्वरो न जात इति । तदुक्तम्—

---

[1] देहगुण–घ । [2] प्रत्यगन्तःस्थितं जीवस्वरूपं धाम गृहं यस्य । सर्वजीवान्तर्यामीत्यर्थ इति यादुपत्यम् ।
[3] पूर्वश्लोकस्थानादिशब्दस्यार्थकथनमेतत् ।

स एव प्रकृतिं सूक्ष्मां देवीं गुणमयीं विभुः ।
यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥ ५ ॥

गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः ।
विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥ ६ ॥

एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ।
कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥ ७ ॥

---

'परस्य जन्ममृत्याद्याः स्युः स्वतन्त्रस्य किं पुनः । जीवस्यापि यतो भ्रान्तिर्जन्ममृत्यादिसङ्गतिः । इति । निरवयवस्य जीवस्योपाधिसंबन्ध ईशेच्छया घटत इत्यङ्गीकारेण न युक्तिविरोधोऽपि शङ्कनीयः ' ' यद्धि युक्त्या विरुद्धयेत तदीशकृतमेव हि ' इति वचनाच्च ॥ ४ ॥

अधुना जीवेश्वरयोः पारतन्त्र्यापारतन्त्र्यादिवैलक्षण्यज्ञापनाय परस्य जगत्सृष्ट्यादिमाहात्म्यादि-कथनपूर्वकं जीवस्य तदधीनत्वेन प्रकृतिबद्धत्वं वक्तुमाह—**स एवेति** । योऽनादित्वादिगुणविशिष्टो यश्च जन्मादिरहितो जन्मादिमज्जीवविलक्षणः सः सूक्ष्मां देवीं क्रीडादिगुणवतीं देवस्य विष्णोरियमिति वा गुणमयीं सत्त्वादिगुणाभिमानिनीं यदृच्छया हरेरिच्छया उपगतां सदा समीपस्थितां प्रकृतिं श्रियमभ्य-पद्यत । लीलयेति प्रयोजनान्तरं निवारयति । अत्र प्रकृतिशब्देन चिदचिदात्मके उभे ग्राह्ये । विभुः सर्वगत इत्यनेन प्रकृत्यभिपादनं नौपचारिकं, किं तु सृष्ट्यभिमुखीकरणं कार्यं सूचयति । तदपि स्वप्रयोजनं नेत्यत उक्तम्—**लीलयेति** ॥ ५ ॥

अभिपद्य किमभूदिति तत्राह—**गुणैरिति** । स्वप्रेरणया सत्त्वादिगुणैः सात्त्विकादिभेदेन विचित्राः करचरणादिमत्त्वेन समानरूपाः प्रजाः सृजतीं प्रकृतिं विलोक्य स हरिरिह संसारे जीवस्य ज्ञानगूहया ज्ञानगूहेच्छया जीवज्ञानं गूहयंत्या प्रकृत्या वा सद्यः संभावनानन्तरमेव तं जीवं मुमुहे[1] मोहयामास । 'तदेतन्मे विजानीहि', 'कृत्वा विवाहं तु कुरुप्रवीराः' इत्यादाविव अन्तर्गतणिजर्थो वेदितव्यः । अन्यथा सदा निरस्तकुहकमित्यादिकं विरुद्धं स्यात् । प्रकृतिविषयत्वे ज्ञानगूहाशब्दोऽ-जाशब्दवदाकारान्तः । स्वस्वातन्त्र्यप्रकटनार्थं च मुमुह इति । तदुक्तं 'यत्र कारयिताऽतीव स्वतन्त्र-स्तत्र कर्तृता । प्रोच्यते तु यथा ब्रह्म त्वज्ञं संसारभागिति ।' 'लये वाप्यथवा सृष्टावन्तरालेऽपि न क्वचित् । 'प्रकृत्या रहितं ब्रह्म कदाचिदवतिष्ठते ' इति वचनात् समीपस्थत्वं च सिद्धम् ॥ ६ ॥

ज्ञानगूहने फलमाह—**एवमिति** । पराभिध्यानेन परमात्मेच्छयैव मुग्धत्वादेव प्रकृतेः सत्त्वादि-

---

[1] स स्वतन्त्ररूपो हरिरिह संसारे ज्ञानगूहया जीवस्वरूपज्ञानं गूहयत्यावृणोतीति ज्ञानगूहा, तया प्रकृत्या जन्यस्थूलदेहेनेति यावत् , सद्यः स्थूलदेहप्राप्त्यनन्तरमेव मुमुहे तत्र स्थितं जीवं मोहयामासेति यादुपत्यम् ।

तदस्य संसृतिर्बन्धः पारतन्त्र्यं च तत्कृतम् ।
भवत्यकर्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥ ८ ॥
कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ।
भोक्तृत्वे सुखदुःखानां पुरुषः प्रकृतेः परः[2] ॥ ९ ॥

---

गुणैः सात्विकादिकर्मसु क्रियमाणेषु सत्सु पुमान् जीवः प्रकृतेः कर्तृत्वमहं कर्तेत्यात्मनि मन्यते[1] ॥ ७ ॥

अभिमानफलमाह—**तदस्येति** । तस्मादविद्यमानकर्तृत्वाभिमानादस्य जीवस्य संसृतिलक्षणो बन्धस्तत्कृतं पारतन्त्र्यं च स्वाधमाद्यधीनता च भवति । कस्मात् प्रयोजकादिति तत्राह— **अकर्तुरिति** । अक्लिष्टकारित्वान्न क्रियत इति वा अकर्तुः । साक्षिणः पुण्यपापे साक्षादीक्षमाणस्य । निर्वृतात्मनः परमानन्दस्वरूपस्येश्वरस्य, सकाशाद् भवतीत्यर्थः । 'विष्णोः सुराणां गुरूणां नित्या जीवस्य तन्त्रता । यत् तु तस्यान्यतन्त्रत्वं तत् ज्ञानाद् विनिवर्तते' इति वचनेन तत्र तात्पर्यार्थोऽवगन्तव्य इति । 'अक्लिष्टत्वादकर्ता स्यादकार्यत्वादथापि वा' इति वचनान्न क्रियामात्रशून्यार्थोऽत्रेष्यत इति । 'एष कर्ता न क्रियते कारणं च जगत्प्रभुः' इति च ॥ ८ ॥

अत्र कर्तृत्वविशेषं विवेचयति—**कार्यकारणेति** । कार्यं शरीरं कारणमिन्द्रियं कर्तृ मनः । एषां कारणं प्रकृतिं प्रधानाभिमानिनीं श्रियम्[3] । जीवानां सुखादिभोक्तृत्वे कारणं प्रकृतेः परः पुरुषो विष्णुरिति विदुः । परमेष्ठिशक्तिकारणत्वं[4] प्रतीयमानं विहायाप्रसिद्धार्थकथनं कथमितीदं चोद्यं 'ब्रह्मादिभिः सर्गकरी श्रीर्विष्णुबलसंश्रयात् । सुखदुःखप्रदो विष्णुः स्वयमेव सनातनः । कर्तृत्वं सुखदुःखानामन्येषां च तदाज्ञया । भोक्तृत्वं सुखदुःखानां करोत्येको हरिः स्वयम् । भोक्तृत्वमात्रहेतुत्वं जीवे नान्यत्र कुत्रचित्' इत्यनेन परिहृतम् । 'प्रकृतिं पुरुषं चैव विद्ध्यनादी' इति[5] चोक्तार्थे प्रमाणम् ॥ ९ ॥

---

[1] एवमुक्तप्रकारेण पराभिध्यानेन परमात्मेच्छया प्रकृतेः सत्त्वादिगुणैः सात्विकादिकर्मसु प्रकृत्या क्रियमाणेषु सत्सु तस्याः कर्तृत्वं स्वव्यतिरिक्तदेहादावहंममताभिमानेन जीवोऽहं कर्तेत्यात्मनि मन्यते इत्यनन्ततीर्थाः ।

[2] पुरुषं प्रकृतेः परम्–क । [3] विदुरिति योज्यम् । [4] परमेष्ठिशक्तिप्रकारम्-क ।

[5] तात्पर्योदाहृतमेतत् । 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते । इत्यन्तग्रहणस्य विवक्षितत्वात् प्रकृतसिद्धिः । प्रकृतिं पुरुषं चैवेत्येतदादित्वेनोदाहरणं तु प्रकृतिपुरुषयोः प्रसक्तिप्रदर्शनायेति ज्ञातव्यम्'—इति यादुपत्यम् ।

देवहूतिरुवाच —

प्रकृतेः पुरुषस्यापि लक्षणं पुरुषोत्तम ।
ब्रूहि कारणयोरस्य सदसच्च यदात्मकम् ॥ १० ॥

भगवानुवाच—

यत् तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥ ११ ॥

---

अत्र देवहूतिः प्रकृतिपुरुषयोः कारणत्वविशेषं श्रुत्वा लब्धावसरा विवेकविवित्सया लक्षणं पृच्छति—**प्रकृतेरिति** । अस्य जगतः कारणयोः । सदसत् स्थूलसूक्ष्मलक्षणं जगत् यदात्मकं याभ्यां व्याप्तम्[1] ॥ १० ॥

कपिलो भगवान् तत्र हरेरनन्तत्वेन तत्स्वरूपे बुद्ध्यनारोहात् प्रकृतिलक्षणज्ञानेन तल्लक्षणस्य ज्ञातप्रायत्वात् प्रकृतिलक्षणं वक्ति—**यत् तदिति** । यत् तत्त्वं सत्त्वादिगुणत्रयरूपमव्यक्तं सूक्ष्मं नित्यमविनाशि सदसदात्मकं व्यक्ताव्यक्तात्मकं ज्ञानिनस्तत् तत्त्वं प्रधानं नाम्ना प्रकृतिमाहुरित्यन्वयः । अत्र त्रिगुणमित्येतत् इतरव्यावर्तकं लक्षणम् । इतराणि तु स्वरूपाख्यानपराणि । अविशेषमकार्यम् । विशेषवन्महदादिकार्यवत् । अत्रोभयेषाम् अभिमन्यमानाभिमानिनां प्रकृत्यादिशब्दवाच्यत्वमङ्गीकार्यम् । तथा हि सत्त्वादिगुणवतो जगदुपादानत्वम् । सत्त्वादिगुणाभिमानिन्याः श्रीभूदुर्गाभिधायाः श्रियश्च सत्त्वादिगुणप्रवर्तकत्वेन । ततोऽपि प्रकर्षेण जगद्गुरुमहदादिशरीरवद्ब्रह्मादिजनिकर्तृत्वेन तच्छब्दवाच्यत्वं [2]विवक्षितम् । केवला सृतिकर्मोदासीनाऽव्यक्ता, सिसृक्षुत्वविशेषोपेता व्यक्ताव्यक्ता, महदादिकार्यव्यापिनी व्यक्तैवेति विशेषात् त्रिरूपिणी श्रीरुच्यते । एवं जडरूपा प्रकृतिरपि प्रधानरूपाऽव्यक्ता, उपादानरूपा व्यक्ताव्यक्ता, महदादित्वेन परिणीयमाना व्यक्तैव । सर्वकार्येषु प्रधानत्वात् प्रधानम् । न चेदं स्वकपोलकल्पितम् । किन्तु प्रमाणान्तरसिद्धत्वात् । तदुक्तम् 'व्यक्ताव्यक्तात्मकं यत् तद् विद्यात् सदसदात्मकम् । असर्गा केवलाऽव्यक्ता सिसृक्षुरुभयात्मिका । व्यक्तैव कार्यरूपा तु प्रकृतिस्त्रिविधा मता । कार्यतः सा प्रधानत्वात् प्रधानमिति कीर्त्यते । अविशेषा ह्यकार्यत्वात् मा च श्रीर्विष्णुसंश्रया' इति । विशेषं कार्यमुद्दिष्टं विशेषाद् दृश्यते यतः' इति ॥ ११ ॥

---

[1] कारणत्वं चोभयोः किमेकरूपमुतानेकरूपमिति प्रश्नाशय इति यादुपत्यम् ।

[2] प्रकृतिशब्दवाच्यत्वमित्यर्थः ।

पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।
एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥ १२ ॥

महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः ।
तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे ॥ १३ ॥

इन्द्रियाणि दश श्रोत्रं त्वग् दृग् रसननासिकम् ।
वाक् करौ चरणौ मेढ्रं पायुर्दशम उच्यते ॥ १४ ॥

मनो बुद्धिरहङ्कारश्चित्तमित्यन्तरात्मनः ।
चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया ॥ १५ ॥

एतावानेव संख्यातो ब्रह्मणः सगुणस्य हि ।
सन्निवेशो मया प्रोक्तो यः कालः पञ्चविंशकः ॥ १६ ॥

---

तत्त्वानि प्रधानकार्याणीत्याह—**पञ्चभिः पञ्चभिरिति** । चतुर्विंशतितत्त्वैः ब्रह्म[1] पूर्णं नातोऽधिकसंख्यावत् । प्राधानिकं प्रधानकार्यम् ॥ १२ ॥

तानि कानीत्यतो निर्दिशति—**महाभूतानीति** ॥ १३,१४ ॥

अन्तरात्मनोऽन्तःकरणस्य मनसः । 'बुद्धिरध्यवसानाय संशयं कुरुते मनः । अभिमानो[2] ह्यहङ्कारश्चित्तं स्मरणकारणम्' इति लक्षणरूपया वृत्त्या वर्तमानया मनोबुद्धिरहङ्कारश्चित्तमिति चतुर्धा भेदो लक्ष्यते दृश्यत इत्यन्वयः ॥ १५ ॥

तत्त्वसंख्यानमुपसंहरति—**एतावानेवेति** । सगुणस्य ब्रह्मणः प्रधानस्य तदभिमानिन्याः श्रियश्च यः सन्निवेशः संस्थानविशेषः स एतावानेव चतुर्विंश एव संख्यातः, तव मया प्रोक्तः । कालात्मा परमात्मा किमित्येतेषु न गणित इत्याशङ्क्य अनन्याधीनत्वद्योतनायेति भावेनाह—**यः काल इति** । यः कालः इत्याख्यायते स पञ्चविंशक इति ज्ञातव्यम् । ननु श्रियोऽपि हरिं विना अनन्याधीनत्वात् किमिति तत्र गणनं न कृतमित्याशङ्का न कार्या । 'हरिस्तु निर्गुणं ब्रह्म श्रीर्ब्रह्म सगुणं स्मृतम् । तदङ्गजानि तत्त्वानि तस्मात् तद्रूपमुच्यते' इति वचनात् तेषु गणनीयत्वाभिप्रायेणेति ॥ १६ ॥

---

[1] ब्रह्म पूरितम् । एतच्च विंशतिकं गणं प्राधानिकं प्रधानकार्यं विदुरित्यर्थ इति यादुपत्यम् ।
[2] अभिमाने–ग ।

प्रभावं पौरुषं प्राहुः कालमेके यतो भयम् ।
अहङ्कारविमूढस्य कर्तुः प्रकृतिमीयुषः ॥ १७ ॥
प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि ।
चेष्टा यतः स भगवान् काल इत्युपलक्षितः ॥ १८ ॥
अन्तः पुरुषरूपेण कालरूपेण यो बहिः ।
समन्वेत्येष सत्त्वानां भगवानात्ममायया ॥ १९ ॥
दैवात् क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान् ।
आधत्त वीर्यं साऽसूत महत्तत्त्वं हिरण्मयम् ॥ २० ॥

---

अनुत्पन्नस्य पुत्रस्य नामकरणमिव कालः परमात्मेति संज्ञया व्याक्रियत इत्येतत् कथं शोभत इति तत्राह—**प्रभावमिति** । 'पुरुषो हृदिस्थः परमः कालः सर्वगतो हरिः । अथवा रुद्रदेहस्थो हरिः काल इतीरितः' इति वचनात् पौरुषं पुरुषस्य हृदि स्थितस्य हरेर्विद्यमानं प्रकर्षेण भावं व्याप्तरूपं पुरुषाकारं रुद्रदेहस्थं वा कालसंज्ञमाहुः । के इत्यत उक्तम्—**एक इति** । एके सम्यग्ज्ञानिनो, न प्राकृता इत्यर्थः । अहं कर्तेत्यहङ्कारेण ममेदमिति ममकारेण च विमूढस्य मिथ्याज्ञानिनः प्रकृतिमीयुषः प्रकृतिबद्धस्यात एव पराधीनकर्तुर्जीवस्य यतो यस्माद् भयं जननमरणलक्षणं भवति तदिति शेषः ॥ १७ ॥

इतोऽपि हरिरेव कालनामा न त्रुटिलवात्मक इत्याह—**प्रकृतेरिति** । निर्विशेषस्य कार्योदासीनायाः गुणसाम्यस्य ब्रह्मप्रलयावस्थाविशिष्टायाः प्रकृतेः प्रधानाभिमानिन्याः मूललक्ष्म्याः पुनः श्रीभूदुर्गारूपभेदेन सिसृक्षुत्वादिविशेषलक्षणा चेष्टा यतो भवति स भगवान् काल इत्युपलक्षितः इति, इदं लक्षणं लक्ष्यमात्रव्यापकत्वात् नाव्याप्त्यतिव्याप्त्यसम्भवदुष्टमिति ज्ञातव्यम् ॥ १८ ॥

अनेन कालरूपात् पुरुषरूपं न भिन्नमित्याह-**अन्तरिति** । यो भगवानात्ममायया स्वरूपेच्छया सत्त्वानां सर्वप्राणिनामन्तः पुरुषरूपेण बहिः कालरूपेण सर्वान्तर्यामिसर्वव्यापकरूपभेदेन व्याप्नोतीत्यतोऽत्यन्तमेष एक एवेति नात्र दोषाशङ्का[1] कार्या ॥ १९ ॥

प्रकृतेश्चेष्टाप्रदत्वप्रकारं वक्ति —— **दैवादिति** । दैवात् प्रकृतिक्षोभकनारायणाख्यात् क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान् वीर्यमाधत्त इत्यन्वयः । इदमुक्तं भवति । दैवाख्यमूलरूपादभि-

---

[1] भेदशङ्केति स्यात् ।

विश्वमात्मगतं व्यञ्जन् कूटस्थो जगदङ्कुरः ।
स्वतेजसाऽपिबत् तीव्रमात्मप्रस्वापनं तमः ॥ २१ ॥

यत् तत् सत्वगुणं स्वच्छं शान्तं भगवतः पदम् ।
यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम् ॥ २२ ॥

---

व्यक्तो नाम्ना परः पुमान् तस्य नारायणस्य प्रेरणया सिसृक्षुत्वविशेषधर्मवत्याः प्रधानाभिमानिन्या लक्ष्म्य अभिव्यक्तायां नाम्ना श्रियां प्रागुक्तविशेषवत्यां स्वभार्यायां रेतोलक्षणं वीर्यमधादिति । तदुक्तम्— 'प्रकृतेः क्षोभकं रूपं दैवं नारायणाभिधम् । प्रकृतौ महतः स्रष्टा[1] परमः पुरुषोत्तमः' इति । अमोघवीर्यो हरिरिति भावेन तत्फलमाह— **साऽसूतेति** । सा श्रीनाम्नी हिरण्मयं महत्तत्त्वम। सूतेति ॥ २० ॥

प्रकृत्या गूढमिदं जगद् दैवाख्याद्धरेः कथंकारं व्यज्यते 'तमसा गूह्ळमग्रे' इति श्रुतेरिति तत्राह—**विश्वमात्मगतमिति** । ब्रह्मादिसर्वजीवानां कूटस्थ आत्मोदरगतं विश्वं व्यञ्जन् व्यक्तं कर्तु-कामो जगतोऽङ्के रमयितृत्वात् जगदङ्कुरः परमः पुरुषा आत्मप्रस्वापनं योगनिद्राकारणं तीव्रं निबिडं तमः स्वतेजसा स्वरूपप्रभया अपिबत् विनष्टमकरोदित्यन्वयः । जगतोऽङ्कुरो जगदङ्कुर इति विग्रहे तद्विकारो हरिरित्यर्थोऽनुपपन्नः । 'निर्विकारोऽक्षर शुद्धः' इत्यादिश्रुतिविरोधात् । अतः 'अङ्के रमयते यस्मात् केशवो जगदंकुरः । महान्तं योऽसृजज्जीवं मोहकं च तमोऽग्रसत्[2]' इति प्रमाण-बलात् उक्त एवार्थः ॥ २१ ॥

दैवनाम्नो हरेरभिव्यक्तात् परमपुरुषात् महत्तत्वसृष्टिमुक्त्वा महत्तत्त्वेनाभिमन्यमानस्य चित्तस्य सृष्टिं वक्ति—**यत् तत् सत्वगुणमिति** । सत्वगुणं पूर्णानन्दादिगुणं स्वच्छं धवलं शान्तमकलुषं स्तिमितं भगवतो हरेः पदं स्वरूपं यच्च ज्ञानिनो वासुदेवाख्यमाहुः तस्मान्महत्तत्त्वाभिगताद् वासुदेवात् महत्तत्त्वेनाभिमन्यमानं सर्वप्राणिनां चित्तं जायत इति शेषः । तदुक्तम्—'तदेव वासुदेवाख्यं मह-त्तत्त्वनियामकम्' इति । 'सत्त्वशब्देन चोच्यन्ते पूर्णानन्दादयो गुणाः' इति च । 'महत्तत्त्वगतो योऽसौ वासुदेवाभिधो हरिः । स चित्तजनकः प्रोक्तः प्राणिनां हि पृथक् पृथक्' इति वचनात् न-चित्तस्य वासुदेवादन्यो जनकोऽस्तीति ज्ञायते ॥ २२ ॥

---

[1] स्रष्टृ—इति पाठान्तरम् ।

[2] 'महान्तं योऽसृजज्जीवमोहकं च तमोऽग्रसत'—इति पाठान्तरम् । आत्मप्रस्वापनमिति मूलपदं जीवमोहकमित्यनेन व्याख्यातम् आत्मशब्दो जीवपर इति ।

**स्वच्छत्वमविकारित्वं शान्तत्त्वमिति चेतसः ।**
**वृत्तिभिर्लक्षणं प्रोक्तं यथाऽपां प्रकृतिः परा ॥ २३ ॥**

**महत्तत्त्वाद् विकुर्वाणाद् भगवद्वीर्यसम्भवात्[1] ।**
**क्रियाशक्तिरहङ्कारस्त्रिविधः समपद्यत ॥ २४ ॥**

**वैकारिकस्तैजसश्च तामसश्च यतो भवः ।**
**मनसश्चेन्द्रियाणां च भूतानां महतामपि ॥ २५ ॥**

**वैकारिकोऽधिदैवं तु बुद्धिः प्राणश्च तैजसः ।**
**तामसस्त्वर्थमात्रं च गुणव्यतिकरस्त्रिवृत् ॥ २६ ॥**

---

कारणगुणाः कार्येऽपि संक्राम्यन्त इति भावेनास्य चित्तस्य लक्षणमाह—**स्वच्छत्वमिति ।** स्वच्छत्वं निर्मलत्वम् । अविकारत्वं स्तिमितोदकवदल्पविकारत्वं न सर्वात्मना विकाराभावः । 'स्तिमितोदकचित्तादेरविकारोऽल्पविक्रिया' इति वचनात् । शान्तत्वं प्रसन्नता । यथापां परा विशिष्टा प्रकृतिरुपाधिमन्तरेण धावल्यस्वभावः, तथा चित्तस्य वृत्तिभिः स्वभावैर्लक्षणं कथितमित्यन्वयः । 'वृत्तिः स्वभावो वृत्तं च स्थितिरित्यभिधीयते' इति वचनात् स्वाभाविकं लक्षणमुक्तमित्यर्थः ॥ २३ ॥

महत्तत्त्वादहङ्कारसृष्टिमाचष्टे—**महत्तत्त्वादिति ।** 'ज्ञानप्रधानस्तु महानहङ्कारः क्रियाधिकः । इतरापेक्षया सोऽपि ज्ञानाधिक उदाहृतः' इति विवक्षया क्रियाशक्तिः, न तु ज्ञानशक्तिरहितत्वात् अन्यथाहङ्कारस्य शक्तिद्वयकथनं[2] व्यर्थं स्यादिति ॥ २४ ॥

पृथक् नाम्ना त्रैविध्यं वक्ति—**वैकारिक इति ।** यतो यस्मात् त्रिविधाहङ्कारात् मनआदीनां भव उत्पत्तिः स[3] इति । महतां भूतानां पृथिव्यादीनाम् ॥ २५ ॥

प्रकारान्तरेण त्रैविध्यं वक्ति—**वैकारिक इति ।** 'सप्तसु प्रथमा यत्र स्वातन्त्र्यं यद् विवक्षितम्' इति वचनात् वैकारिकोऽधिदैवमित्यादिप्रथमा पञ्चम्यर्थे वक्तव्या । 'देवताधिकृतं यत् तदधिदैवमितिस्मृतम्' इति वचनात् दिगादिदेवतासर्गमधिकृत्य वर्तमानाद् वैकारिकाहङ्कारात् दिगादिदेवत जाता इत्यर्थः । तैजसात् तैजसाहङ्कारात् बुद्धिर्बुद्धितत्वं तदभिमानिन्युमा, आहङ्कारिकः प्राणश्चा जात इति शेषः । अर्थमात्रं शब्दादितन्मात्रा च तामसात् तामसाहंकारादभूदिति शेषः । तामसो-

---

[1] भगवद्वीर्यचोदितात्—इति पाठान्तरम् । [2] 'द्वितीयस्त्वहमस्तत्र द्रव्यज्ञानक्रियादयः' (३-११-१५) इत्यादौ । [3] सः वैकारिकस्तैजसस्तामसश्चेत्यन्वयः ।

सहस्रशिरसं साक्षाद् यमनन्तं प्रचक्षते ।
संकर्षणाख्यं पुरुषं भूतेन्द्रियमनोमयम् ॥ २७ ॥
कर्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम् ।
शान्तघोरविमूढत्वमिति वा स्यादहंकृतेः ॥ २८ ॥

---

ऽहंकारोऽर्थानां शब्दादीनां मात्रं निर्मातेति वा । अनेन किमुक्तं स्यादित्यत उक्तम्—**गुणव्यतिकर इति** । गुणानां सत्त्वादीनां शान्तत्वादिव्यञ्जकानां व्यतिकरो यस्मिन् स तथा सोऽहङ्कार एव त्रिवृत् त्रिविधः[1] ॥ २६ ॥

अहङ्कारतत्त्वस्य सूक्ष्मस्थूलरूपभेदेन स्थितस्याभिमानिविशेषमाह — **सहस्रशिरसमिति** । भूतेन्द्रियमनोमयमित्यत्र मयट् प्रत्ययः प्राधान्यार्थः । तथा च भूतादीनां प्रधानकारणं मुख्यं प्रवर्तकमित्यर्थः । 'सङ्कर्षणाख्यस्तु हरिः सूक्ष्माहङ्कारयामकः । स्थूलाहङ्कारनियमी विष्णुः प्रद्युम्ननामकः । अनिरुद्धो मनस्तत्त्वनियन्ता भगवान् हरिः । महत्तत्त्वादिजीवास्तु ब्रह्म शेषोऽङ्गजस्तथा । सूक्ष्मस्थूलविभेदेन कामजश्चानिरुद्धकः' इति विशेषवचनादर्थविशेषोऽत्र बुभुत्सुभिर्ज्ञातव्य इति । साक्षादिति विशेषणात् सङ्कर्षणादिनाम्ना त्रिधाऽभिव्यक्तेन हरिणा प्रेरितः सङ्कर्षणनामाऽनन्तः त्रिविधाहंकाराभिमानीति सम्यगवगन्तव्यम् ॥ २७ ॥

अहङ्कारलक्षणं वक्ति—**कर्तृत्वमिति** । वैकारिकाहङ्कारस्य मनोरूपेण परिणतत्वात् मनोव्यापित्वेन देहाद्यहंममतोत्पादकत्वेन कर्तृत्वं नाम लक्षणम् । तैजसाहंकारस्य करणानामिन्द्रियाणां कारणत्वादिन्द्रियाभिमानिनियतेन्द्रियद्वारा ज्ञानजनकत्वेन करणत्वम् । तामसाहंकारस्य कार्यापरपर्यायदेहकारणत्वात् देहस्य च पाञ्चभौतिकत्वात् देहरूपेण कार्यत्वं च । इतिशब्दः प्रकारवाची । तदुक्तम्—'मनोरूपेण कर्तृत्वं देहरूपेण कार्यता । इन्द्रियात्मतया चैव करणत्वमहंकृतेः । यतो मनस्यहम्भावस्तस्मात् कर्ता[2] मनः स्मृतम् । स्वभावकर्तृजीवस्य[3]त्वासन्नोपाधि तद् यतः । कर्मज्ञाने कारणता यतः करणमिन्द्रियम् । कार्यं देहः समुद्दिष्टमुत्पाद्यत्वात् पुनः पुनः' इति । स्वोत्पन्नपदार्थेषु तत्तत्स्वभावस्फुरणात् स तल्लक्षणमिति भावेन लक्षणान्तरमाह—**शान्तेति** । देवपितृवैकारिकस्य[4] सत्त्वांशप्राचुर्येणोत्पन्नत्वात् शुक्लात्मनो भगवन्निष्ठोपेतत्वात् शान्तत्वम् । करणापरपर्यायेन्द्रियाणां स्रष्टुस्तैजसाहंकारस्य

---

[1] गुणानां सत्त्वादीनां व्यतिकरो व्यत्यासो वैषम्यं यस्मिन् स तथा । यतो गुणव्यतिकरोऽहङ्कारस्तस्मात् उक्तरीत्या त्रीणि कार्याणि वृणोतीति त्रिवृदिति यादुपत्यम् । [2] कर्तृ—घ । [3] कर्तुर्जीवस्य—च ।

[4] देवशरीरकारणत्वाद् वैकारिकस्य देवपितृत्वव्यपदेशः तात्पर्योदाहृतप्रमाणानुरोधेन ।

वैकारिकाद् विकुर्वाणान्मनस्तत्त्वमजायत ।
यत् सङ्कल्पविकल्पाभ्यां वर्तते कामसम्भवः ॥ २९ ॥

यद् विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम् ।
शारदेन्दीवरश्यामं संराध्यं योगिभिः शनैः ॥ ३० ॥

तैजसात् तु विकुर्वाणाद् बुद्धितत्त्वमभूत् सति ।
द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहात् ॥ ३१ ॥

---

तेजोंऽशप्राचुर्येण जातत्वात् ज्ञानेन्द्रियैः नानाविधघोरपदार्थविषयज्ञानजनकत्वात् कर्मेन्द्रियैः घोरतरनानाविधकर्मकारयितृत्वात् घोरत्वम् । वैकारिकतैजसयोर्यावत् ज्ञानस्य जनकत्वं तावत् ज्ञानजनकत्वाभावेन तमोंऽशप्राचुर्येणोद्भूतत्वात् भूतादेश्च तामसाहङ्कारस्य विमूढत्वम् । 'शान्तरूपो देवपिता घोरः करणसृङ् मतः । तावज्ज्ञानस्याप्रकाशान्मूढो भूतपिता स्मृतः । त्रिरूपोऽयमहङ्कारः शेष इत्येव तं विदुः इति वचनाद् अर्थविशेषः कल्प्यत इत्यर्थः ॥ २८ ॥

वैकारिकाद्यहङ्कारेभ्यो मनआदीनामुक्तानामुत्पत्तिमधुना स्पष्टयति- **वैकारिकादिति** । तल्लक्षणमाह—**यत् सङ्कल्पेति** । यन्मनःसङ्कल्पविकल्पाभ्यां वृत्तिविशेषाभ्यां वर्तते, देह इति शेषः । लक्षणान्तरमप्याह—**कामसम्भव इति** । यदिति[1] वर्तते । यद् यस्मान्मनसः कामानां नानाविधानां सम्भवो जन्मेत्यनेन ज्ञातुं शक्यत इति ॥ २९ ॥

तस्याभिमानिनमाह— **यद् विदुरिति** । स्थूलान्तर्यामित्वेनावतीर्णात् प्रद्युम्नरूपादभिव्यक्तमनिरुद्धाख्यं यद् यस्य मनसोऽभिमानिनः कामपुत्रस्या[2]निरुद्धाख्यांतर्यामित्वेन प्रादुर्भूतं विदुः, ज्ञानिन इति शेषः । मनसः सर्वेन्द्रियनेतृत्वात् तन्नियन्तृत्वोक्त्याऽस्य सर्वेन्द्रियनेतृत्वमपि सिद्धमित्याह— **हृषीकाणामिति** । तद्ध्यानार्थमाह— **शारदेन्दीवरश्याममिति** । शरत्कालीननीलोत्पलनीलम् । अधिकारिणमाह—**संराध्यमिति** । शनैरव्यग्रमनसा सनकादियोगिभिः । यद्वा यन्मनो निरोधरहितत्वेन प्रसिद्धमत एव सर्वेन्द्रियाणां नियन्तृत्वे समर्थम् । तद्वर्णमाह—**शारदेति** । एवंविधं मनः कस्य वशे भवतीत्यत उक्तम्—**संराध्यमिति** । योगिभिः पवनाभ्यासिभिः संराध्यं वशीकर्तुं शक्यमित्यर्थः ॥ ३० ॥

चक्षुरादीन्द्रियाणां काचकामलादिदोषाभावलक्षणानुग्रहाद् विद्रव्यस्फुरणे सति यद् विज्ञानं विशेष-

---

[1] **मूले यदिति भिन्नं पदम् । यद् यस्य सङ्कल्पविकल्पाभ्यां, देहो वर्तत इत्येकोऽर्थः । यद् यस्मादित्यपरः ।**

[2] **कामपुत्रस्याप्यनिरुद्ध इति नाम ।**

संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च ।
स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक् ॥ ३२ ॥

तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः ।
प्राणस्य हि क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता ॥ ३३ ॥

तामसाच्च विकुर्वाणाद् भगवद्वीर्यचोदितात् ।
शब्दमात्रमभूत् तस्मान्नभः श्रोत्रं तु शब्दगम् ॥ ३४ ॥

---

ज्ञानं जायते तादृशं बुद्धितत्त्वमभूदित्यर्थः । हे सति । 'सामान्यं मनसा ज्ञानं विशेषाद् बुद्धिजम्भवेत्' इति वचनाज्ज्ञानस्य सामान्यविशेषलक्षणे विशेषणे स्त इति ॥ ३१ ॥

तादृशबुद्धितत्त्वलक्षणमाह—**संशय इति** । न केवलमेकमेव लक्षणं किन्त्वन्यान्यपि लक्षणानि सन्तीति भावेनोक्तम्—**अथेति** । विपर्यासो मिथ्याज्ञानम् । इदमेव तत्त्वं नान्यदित्यतत्त्वे यद् ज्ञानं तन्मिथ्येति । मनसोऽपि संशयोऽस्ति अतः कथं बुद्धेः संशयलक्षणमुच्यत इति चेदुच्यते निश्चायकलक्षणदर्शनेन मनःसंशयो निवर्तते, न बुद्धेः संशयः कदापीति । तदुक्तम्—'अचलः संशयो बुद्धेश्चलो मानस उच्यते । चञ्चला तु स्मृतिर्बुद्धेश्चित्तजैव स्थिरा स्मृतिः' इति । येन धर्मेण यद् वस्तु ज्ञायते स धर्मस्तस्य लक्षणं यथा सास्नादिमत्त्वमिति । 'येन यज्ज्ञायते वस्तु तत् तल्लक्षणमुच्यते । तत्स्वरूपं पृथक् चेति द्विविधं कवयो विदुः' इति वचनात् । अस्वरूपाणां संशयादीनां निवृत्तिर्युक्ता, न स्वरूपाणामिति तात्पर्यमवगन्तव्यम् । स्वापोऽज्ञानम्[1] ॥ ३२ ॥

इन्द्रियाणि तैजसानि तैजसाहङ्कारादुत्पन्नान्येव । तद्विवेकमाह—**क्रियाज्ञानेति** । क्रियाज्ञानविभागेन कर्मेन्द्रियज्ञानेन्द्रियसंज्ञाभेदेन तदभिमानिविशेषं वक्ति—**प्राणस्य हीति** । प्राणस्याहङ्कारिकस्य क्रियाशक्तिः कर्मेन्द्रियप्रेरकत्वशक्तिः । बुद्धेरुमायाः विज्ञानशक्तिता श्रोत्रादीन्द्रियैर्विज्ञानजनकत्वशक्तिः ॥ ३३ ॥

शब्दमात्रं शब्दाख्यो गुणः । तस्माच्छब्दाख्यगुणात् नभ उत्पन्नम् । शब्दं गमयति ज्ञापयतीति शब्दगं श्रोत्रेन्द्रियमुत्पन्नमिति शेषः ॥ ३४ ॥

---

[1] स्वापो निद्रेति यादुपत्यम् ।

अर्थाश्रयत्वं शब्दस्य द्रष्टुर्लिङ्गत्वमेव च ।
तन्मात्रत्वं च नभसो लक्षणं कवयो विदुः　　　　॥ ३५ ॥

भूतानां छिद्रदातृत्वं बहिरन्तरमेव च ।
प्राणेन्द्रियात्मधिष्ण्यत्वं नभसो वृत्तिलक्षणम्　　　　॥ ३६ ॥

नभसः शब्दतन्मात्रात् कालगत्या विकुर्वतः ।
स्पर्शोऽभवत् ततो वायुस्त्वक् स्पर्शस्य च संग्रहः　　　　॥ ३७ ॥

---

शब्दतन्मात्रालक्षणमाह— **अर्थाश्रयत्वमिति** । अर्थाश्रयत्वम् अर्थविषयत्वमभिधेयैकनिष्ठत्वमित्यर्थः । द्रष्टुः सर्वज्ञस्य लिङ्गत्वं ज्ञापकत्वं, नभस आकाशस्य तन्मात्रत्वं स्पर्शाद्यभावात् तदेकनिष्ठत्वं शब्दस्य लक्षणं कवयो विदुरित्यन्वयः[1] । तदुक्तम् 'शब्देनैव यतो ज्ञेयो हरिर्लिङ्गं तु तस्य तत् । स्पर्शाद्यभावात् तन्मात्रा नभसश्चेति कीर्त्यते । स्पर्शादयश्च तन्मात्रा इतरे पूर्वसंस्थिते । तिष्ठत्येको[2] गुणो भूते प्रत्येकं पञ्चसु स्थितः । शब्दो वर्णात्मको नित्यो ध्वनिराकाशसंभवः । आकाश एव सूक्ष्मस्तु ध्वनिरित्येव शब्द्यते । स एव व्यज्यमानस्तु भवेत् कर्णैकगोचरः ' इति ॥ ३५ ॥

आकाशलक्षणं वक्ति—**भूतानामिति** । भूतानां जीवानां छिद्रदातृत्वं गमनाद्यर्थमवकाशदातृत्वं, बहिरन्तर्दिगादिरूपत्वमेकं, प्राणापानादीनामिन्द्रियाणामात्मनां जीवानां धिष्ण्यत्वमावासस्थानत्वं च नभसो वृत्तिलक्षणं स्वभावलक्षणं कवयो विदुरिति शेषः ॥ ३६ ॥

नभसः स्पर्शोत्पत्तिं ब्रूते—**नभस इति** । शब्दाख्या तन्मात्रा यस्य तत् तथा, तस्मान्नभसः कालगत्या भगवत्प्रेरणया विकुर्वतः स्पर्शोऽभवत् स्पर्शतन्मात्राऽभूत् । ततः स्पर्शतन्मात्रायाः वायुरभूत् । 'प्रधानवायुः सूत्रात्मा महता सह जायते । तैजसश्च खजःस्पर्श इत्याद्यास्तत्सुताः स्मृताः । तदाविष्टा अन्यजीवास्तदाधाराश्च तद्बलाः ' इति वचनात् तैजसो वायुराकाशाज्जातः । स्पर्शवायुश्च मुख्यवायोः सुत इति ज्ञातव्यम् । तैजसादिवायुभिराविष्टत्वात् तदुद्भूतत्वात् तद्बलत्वाच्च तद्विशिष्टा इत्युच्यन्ते । 'स्पर्शादयोऽपि वाय्वादेः सूक्ष्मावस्थाः प्रकीर्तिताः ' इति वचनात् । अत्र कार्यकारणभाव उपचयविवक्षयेति ज्ञायते । तदुक्तम् 'सूक्ष्मेन्द्रियाणि सन्त्येव स्युः स्थूलान्यप्यहंकृतेः । भूतेभ्यश्चोपचीयन्ते पुनर्ब्रह्मशरीरतः[3] ' इति । स्पर्शस्य स्पर्शतन्मात्रायाः, संग्रहो ज्ञातृ त्वगिन्द्रियं, चोप-

---

[1] अर्थाश्रयत्वमर्थवाचकत्वम् । द्रष्टुः सर्वज्ञस्य हरेर्लिङ्गत्वं ज्ञापकत्वम् । इन्द्रियलिङ्गशब्देषु शब्द एव हरेर्ज्ञापकः । नभस आकाशस्य तन्मात्रत्वं विशेषगुणत्वम् एतत् सर्वं शब्दस्य लक्षणं कवयो विदुरित्यनन्ततीर्थाः ।

[2] तिष्ठन्त्येकः—इति पाठान्तरम् । [3] ब्रह्मशरीरतो ब्रह्माण्डान्तर्विराट्शरीरादिति यादुपत्यम् ।

मृदुत्वं कठिणत्वं च शैत्यमुष्णत्वमेव च ।
एतत् स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वतः ॥ ३८ ॥
चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः ।
सर्वेन्द्रियाणामात्मत्वं वायोः कर्माभिलक्षणम् ॥ ३९ ॥
वायोश्च स्पर्शतन्मात्राद् रूपं दैवेरितादभूत् ।
समुत्थितं ततस्तेजश्चक्षू रूपोपलम्भनम् ॥ ४० ॥
द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेव च ।
तेजस्त्वं तेजसः साध्वि रूपमात्रस्य वृत्तयः ॥ ४१ ॥

---

चित्तमभूदिति शेषः ॥ ३७ ॥

स्पर्शतन्मात्रालक्षणमाह—**मृदुत्वमित्यादिना** । मृदुत्वमित्यादीनि नभस्वतो वायोः स्वभाव-लक्षणानि ॥ ३८ ॥

स्वरूपलक्षणमाह—**चालनमित्यादि** । 'स्वरूपमपि कर्मेति विषयत्वादुदीर्यते' इति वचनाद् एतानि चालनादीनि कर्मनिमित्तलक्षणानि । चालनं चलनकर्तृत्वम् । व्यूहनं पृथक् स्थितानामेकी-करणम् । प्राप्तिः सर्ववस्तुव्याप्तिः । प्राप्नोति वायुः सर्वं तु स्वत एव हरेस्तथा । अतः प्राप्तिरिति प्राहुर्वायुं भूतपतिं प्रभुम् । प्रधानवायुरन्येषु नित्याविष्टो यतः स्वतः । तद्गुणास्तेषु चोच्यन्ते नीचता नास्य तत्कृता ' इति वचनात् । द्रव्यशब्दयोः पर्णादिद्रव्यस्य शब्दस्य वर्णात्मकस्य च नेतृत्वं देशान्तर-प्रापकत्वम् । सर्वेन्द्रियाणामात्मत्वं स्वामित्वं, तदविनाभूतप्रकृतित्वं वा । कर्माभिलक्षणं स्वरूप-लक्षणम् ॥ ३९ ॥

स्पर्श एव तन्मात्रो गुणो यस्य स स्पर्शतन्मात्रः, तस्मात् वायोः रूपं रूपतन्मात्राऽभूत् । ततो रूपतन्मात्रायास्तेजः समुत्थितम् । रूपस्योपलम्भनं ज्ञानं यस्मात् तादृशं चक्षुरिन्द्रियं चोत्पन्न-मित्यर्थः ॥ ४० ॥

रूपतन्मात्राया लक्षणमाह—**द्रव्याकृतित्वमिति** । द्रव्याकृतित्वं यावद्द्रव्यव्याप्तित्वम् । गुणता प्रकाशित्वम्[1] । व्यक्तिसंस्थात्वं व्यक्तत्वेन स्थितिः । तेजस्त्वमुग्रत्वम् । 'आलोको गुण इत्येव प्रकाशश्चापि कथ्यते' इति 'तेजस्त्वमथ चोग्रत्वं क्रौर्यमित्यपि चोच्यते' इति चोक्तार्थेऽभिधानम् । रूपमात्रस्य रूपतन्मात्राया वृत्तयः स्वभावलक्षणानि ॥ ४१ ॥

---

[1] प्रकाशत्वम्—ग ।

द्योतनं पचनं पानमदनं हिममर्दनम् ।
तेजसो वृत्तयस्त्वेताः शोषणं क्षुत्तृड्ढ्वः ॥ ४२ ॥

रूपमात्राद् विकुर्वाणाद् तेजसो दैवचोदितात् ।
रसमात्रमभूत् तस्मादम्भो जिह्वा रसग्रहः ॥ ४३ ॥

कषायो मधुरस्तिक्तः कट्वम्ल इति नैकधा ।
भौतिकानां विकारेण रस एको विभिद्यते ॥ ४४ ॥

क्लेदनं पिण्डनं तृप्तिः प्राणनाप्ययनोन्दनम् ।
तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः ॥ ४५ ॥

रसमात्राद् विकुर्वाणादम्भसो दैवचोदितात् ।
गन्धमात्रमभूत् तस्मात् पृथ्वी घ्राणस्तु गन्धगः ॥ ४६ ॥

---

तेजसो लक्षणमाह—**द्योतनमिति** । द्योतनं प्रकाशनम् । द्युत प्रकाशन इति धातुः । पचनं पाककरणम् । पानं रसादनम् । अदनं भक्षणम् । हिममर्दनं शीतनिवारकत्वम् । शोषणं शुष्कीकरणम् । क्षुत्तृड्ढ्वः प्राणिनां क्षुत्तृड्जनकत्वम् । वृत्तयः स्वभावलक्षणानि ॥ ४२ ॥

क्रमप्राप्तां तेजसो वारिसृष्टिं वक्ति—**रूपतन्मात्रादिति** । रूपमेव तन्मात्रा यस्य तद् रूपतन्मात्रम् । तस्मात् तेजसः रसमात्रं रसतन्मात्राऽभूत् । यथा रसग्रहो भवति सा जिह्वा जिह्वेन्द्रियं चाभूत् ॥ ४३ ॥

रसगुणलक्षणं वक्ति—**कषाय इत्यादिना** । कटुयुक्तोऽम्लः कट्वम्लः । अत्र लवणोऽपि ग्राह्यः । भौतिकानां भूतकार्याणां पदार्थानां विकारेण एको रसः षडात्मना भिद्यते ॥ ४४ ॥

उदकलक्षणं वक्ति—**क्लेदनमित्यादिना** । क्लेदनमार्द्रीकरणम् । पिण्डनं पिण्डीकरणम् । तृप्तिरलंबुद्धिजनकत्वम् । प्राणनं चेष्टाहेतुत्वम् । आप्यायनं सुखकरत्वम् । उन्दनं बिन्दुभावः । तापापनोदः तापनिवारणत्वम् । अन्येभ्यो भूतेभ्यः कार्येषु भूयस्त्वमाधिक्यम् । इमा अंभसो वृत्तयः जलस्य स्वरूपलक्षणानि । उदि बिन्दुभाव इति धातुः । 'उन्दनं बिन्दुभावः स्यात् स्यन्दनं स्रवणं स्मृतम्' इत्यभिधानात् । पृथिवीतेजःपरमाणुसंयोगादम्भस उन्दीभाव इति ॥ ४५ ॥

अद्भ्यः पृथिव्युत्पत्तिं वक्ति—**रसमात्रादिति** । रस एव मात्रा यस्य तत् तथा तस्मादम्भसो गन्धमात्रं गन्धतन्मात्राऽभूत् । तस्माद् गन्धात् पृथिव्यभूत् । गन्धं गमयति ज्ञापयतीति गन्धगो

करम्भपूतिसौरभ्यशान्तोग्राम्लादिभिः पृथक् ।
द्रव्यावयववैषम्याद् गन्ध एको विभिद्यते ॥ ४७ ॥

भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् ।
सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् ॥ ४८ ॥

नभोगुणविशेषोऽर्थो यस्य तच्छ्रोत्रमुच्यते ।
वायोर्गुणविशेषोऽर्थो यस्य तत् स्पर्शनं विदुः ॥ ४९ ॥

तेजोगुणविशेषोऽर्थो यस्य तच्चक्षुरुच्यते ।
अम्भोगुणविशेषोऽर्थो यस्य तद् रसनं विदुः ॥ ५० ॥

---

घ्राण इन्द्रियविशेषोऽप्यभूत् ॥ ४६ ॥

गन्धलक्षणानि ब्रूते—**करम्भेति** । करम्भो दग्धपार्थिवविषयः । पूतिः क्लिन्नक्षतविषयः । शान्तो मिश्रगन्धः । उग्रो वचादिविषयः । आम्लः आरनालादिविषयः । आदिशब्देन कषायादिलक्षणो विवक्ष्यते । एकस्य गन्धस्य नानाविधत्वं कथमित्यत उक्तम्—**द्रव्येति** । द्रव्याणामवयवानामंशानां च वैषम्याद् विशेषलक्षणाद् एको गन्धो नानाविधो भवतीत्यर्थः ॥ ४७ ॥

पृथिवीलक्षणं वक्ति—**भावनमित्यादिना** । भावनमुत्पादकत्वम् । ब्रह्मणः स्थानं 'ब्रह्मस्थानं तु पृथिवी शरीरे ब्रह्मदर्शनाद्' इति वचनात् पार्थिवशरीरेषु ब्रह्मणः सन्निधानात्, तत्रैव ब्रह्मदर्शनाच्च । यः पृथिव्यां तिष्ठन्नित्यादेश्च । धारणं, मूर्तद्रव्यानामिति शेषः । सद्विशेषणं भूतत्रयमपेक्ष्य विशेषेण व्यक्तत्वम्[1] । तदुक्तम्—'असदव्यक्तनाम स्याद् व्यक्तं सदिति चोच्यते' इति । सर्वसत्त्वगुणोद्भेदः सर्वेषां सत्त्वानां प्राणिनां शरीरे सर्वगुणानामुद्भेदो व्यक्तिः । साऽपि संसारावस्थायामिति ज्ञातव्यम् । 'शरीरं पार्थिवं ज्ञेयमिन्द्रियाण्यौदकानि तु । तैजसः कोष्ठगो वह्निश्छिद्रमाकाशसम्भवम् । प्राणा वायुमयाः सर्वे प्रत्येकं पञ्चधा पुनः' इति वचनात् पृथिव्याः प्राधान्यादितरेषामल्पत्वाद् युक्तमुक्तम् । पृथिव्याः वृत्तिलक्षणं स्वभावलक्षणम् ॥ ४८ ॥

श्रोत्रादीनां लक्षणं वक्ति—**नभ इत्यादिना** । यस्य नभोगुणविशेषः शब्दोऽर्थो विषयः तच्छ्रोत्रमिन्द्रियमित्यादि ज्ञातव्यम् । नभोगुणविशेषोत्थ इति पाठे यस्य विषयः शब्दोद्भवः शब्द एवार्थ इति[2] ॥ ४९ ॥

---

[1] शब्दादिगुणपञ्चकवत्तया व्यक्तत्वाद् विशेषेण व्यक्तत्वम् । [2] अस्याभिप्रायस्तु न व्यक्तः ।

भूमेर्गुणविशेषोऽर्थो यस्य स घ्राण उच्यते ।
परस्य दृश्यते धर्मो ह्यपरस्मिन् समन्वयात् ॥ ५१ ॥

अतो विशेषो भावानां भूमावेवोपलक्ष्यते ।
एतान्यसंहत्य यदा महदादीनि सप्त वै ॥ ५२ ॥

न शेकुः पुरुषं स्रष्टुं भोगायतनमञ्जसा ।
कालकर्मगुणोपेतो जगदादिरुपाविशत् ॥ ५३ ॥

ततस्तेनानुविद्धेभ्यस्तत्त्वेभ्योऽण्डमचेतनम् ।
उत्थितं पुरुषो यस्मादुदतिष्ठदसौ विराट् ॥ ५४ ॥

---

'शब्दादय आकाशादीनां विशेषगुणत्वेन व्यावर्तकधर्माः न व्यभिचीर्णाः' इति या वैशेषिकाणां प्रक्रिया तां विघटयितुमाह—**परस्येति** । परस्य पूर्वस्य कारणस्य आकाशादेर्धर्मः शब्दादिगुणोऽपरस्मिन् पश्चात्तने कार्ये वाय्वादौ दृश्यते हि । कुतः ? समन्वयात् संबन्धात् ॥ ५१ ॥

ततः किम् ? तत्राह—**अत इति** । यत एवं गुणानां संबन्धोऽस्त्यत आकाशादिसर्वभावानां विशेषगुणो भूमावेवोपलक्ष्यत इति सर्वसत्वगुणोद्भेद इत्युक्तं साधु । वैशेषिककल्पनायाः स्वमनीषोत्थत्वादप्रमाणत्वमित्यतो दृश्यत इति । दृष्टेर्बलवत्प्रमाणत्वात् तद्विरोधोऽपि दुर्वार इति । महदाद्यभिमानिदेवतास्तुतिप्रसन्नश्रीनारायणाविष्टैः उज्जृम्भितशक्तिभिः तैरन्त्यावयविनिर्माणात् परमाणुभिः द्व्यणुकादिक्रमेण खण्डावयव्यन्त्यावयवी च जायत इति कल्पनाऽपि निर्मानेत्यभिप्रेत्याह—**एतानीति** । यदा एतानि महदादीनि सप्त तत्त्वानि भोगायतनं ब्रह्माण्डं स्रष्टुं पुरुषं विराट्पुरुषशरीरं च स्रष्टुं न शेकुः । कुत इत्यत उक्तम्—**असंहत्येति** । असंहत्याचेतनत्वेन स्वतः संयोजनशक्त्यभावेन विश्लिष्य स्थितत्वादित्यर्थः । अत एव अञ्जसेत्युक्तम् । तदा कालकर्मगुणोपेतो जगदादिः श्रीनारायणो महदादीन्युपाविशत् यथा कार्योत्पत्तिक्षमा शक्तिः स्यात् तथा सन्निहितवानित्यर्थः[1] ॥ ५२,५३ ॥

तत्फलमाह—**तत इति** । तदनन्तरं तेन हरिणाऽनुविश्यानुविद्धेभ्यः प्रेरितेभ्यस्तत्त्वेभ्योऽचेतनमण्डं ब्रह्माण्डं उत्थितमुत्पन्नम् । 'अचेतनाद् यतस्त्वण्डात् ब्रह्मा समजनि स्फुटम् । अतो

---

[1] एवमुत्पन्नानि तत्त्वानि ब्रह्माण्डरूपकार्योत्पादने स्वत एव समर्थानीति सांख्यमतनिरासायाह—एतानीति । एतानि महदादीनि सप्ततत्त्वानि असंहत्यामिलित्वा, मेलनाभावादिति हेतुसूचनायेदम् । भोगायतनं ब्रह्माण्डं तदन्तर्गतब्रह्मशरीरं च । जगदादिः श्रीनारायणोऽञ्जसा कार्यजननशक्त्युद्बोधकरूपेणाविशत् । महदादीनीति वर्तते । अत्र सप्तेति प्राधान्यविवक्षयोक्तम् । इन्द्रियादीन्यपि ग्राह्याणीति यादुपत्यम् ।

एतदण्डं विशेषाख्यं क्रमवृद्धैर्दशोत्तरैः ।
तोयादिभिः परिवृतं प्रधानेनावृतं बहिः ।
यत्र लोकवितानोऽयं रूपं भगवतो हरेः ॥ ५५ ॥

हिरण्मयादाण्डकोशादुत्थाय सलिलेशयात् ।
तमाविश्य महादेवो बहुधा निर्बिभेद खम् ॥ ५६ ॥

निरभिद्यतास्य प्रथमं मुखं वाणी ततोऽभवत् ।
वाण्या वह्निरथो नासे प्राणोऽतः प्राण एतयोः ॥ ५७ ॥

प्राणाद् वायुरभिद्येतामक्षिणी चक्षुरेतयोः ।
तस्मात् सूर्योऽन्वभिद्येतां कर्णौ श्रोत्रं ततो दिशः ॥ ५८ ॥

---

ब्रह्माण्डमित्याहुर्विराड् ब्रह्मा प्रकाशनात्' इति वाक्यमस्मिन्नर्थे मानमिति भावेनाह—**पुरुष इति** । यस्मादण्डादसौ विराट् विशेषेण प्रकाशमानः पुरुषः हिरण्यगर्भ उदतिष्ठदुत्पन्न इत्यन्वयः ॥ ५४ ॥

अस्याण्डस्य पृथिव्यंशानां भूयस्त्वान्नामान्तरं च युक्तमिति भावेनाह—**एतदण्डमिति** । तोयाद्यावरणविशेषैर्विशेषितत्वाच्च विशेषाभिधानं युक्तमिति भावेनाह—**क्रमवृद्धैरिति** । क्रमवृद्धिमेव विशिनष्टि—**दशोत्तरैरिति** । ततो बहिः गुणत्रयेण प्रधानेन मूलप्रकृत्या चावृतम् । अन्तश्चतुर्दशभुवनलक्षणैर्विशेषणैर्विशिष्टत्वात् विशेषाख्यमित्याशयेनाह—**यत्रेति** । यत्र यस्मिन्नण्डेऽयं लोकवितानः पातालादिलोकविस्तारो, विशेषितः इति शेषः । अयमपि कश्चन विशेषोऽस्तीत्याह—**रूपमिति** । रूपं मूर्तिः प्रतिमा सन्निधानविशिष्टत्वात् ॥ ५५ ॥

इदानीं 'यस्मादुदतिष्ठदसौ' इत्युक्तं विवृणोति—**हिरण्मयादिति** । प्रासादात् प्रेक्षत इतिवत् द्वितीयार्थे पञ्चमीयम् । महादेवो देवोत्तमो हरिः सलिलेशयं हिरण्मयाण्डकोशमुत्थायोत्थाप्य तदन्तः प्रविश्य स्वस्मादुत्पन्नस्य विराट्पुरुषस्य । अण्डवत् स्थितं शरीरं पुनः समाविश्य यथा सन्निधानविशेषो भवति तथान्तःस्थित्वा मुखविवरादिलक्षणं खमाकाशं निर्बिभेद व्यक्तमकरोदित्यन्वयः ॥ ५६ ॥

ब्रह्मशरीरस्य मुखादिव्यक्तिप्रकारं वक्ति—**निरभिद्यतेत्यादिना** । अस्य ब्रह्मणः प्रथमं मुखं निरभिद्यत व्यक्तमभूत् । ततो मुखाद् वाणी वागिन्द्रियम् । तस्माद् वागिन्द्रियात् तदभिमानी वह्निरभूत् । इत्येवमेवोत्तरोत्तरत्रानुसन्धेयम् । नासे नासापुटे । प्राणो नाम नासिक्यः ॥ ५७ ॥

अध्यात्माधिदैवभेदेन एकस्यैव प्राणो वायुरिति नामद्वयम् । दिशः दिग्देवताः ॥ ५८ ॥

निर्बिभेद विराजस्त्वग् रोमश्मश्र्वादयस्ततः ।
ततश्चौषधयः पश्चाच्छिश्नं निर्बिभिदे ततः ॥ ५९ ॥

रेतस्तस्मादाप आसन् निरभिद्यत वै गुदम् ।
गुदादपानोऽपानच्च मृत्युर्लोकभयङ्करः ॥ ६० ॥

हस्तौ च निरभिद्येतां बलं ताभ्यां ततः स्वराट् ।
पादौ च निरभिद्येतां गतिस्ताभ्यां ततो हरिः ॥ ६१ ॥

नाड्योऽस्य निरभिद्यन्त ताभ्यो लोहितमाहृतम् ।
नद्यस्ततः समभवन्नुदरं निरभिद्यत ॥ ६२ ॥

क्षुत्पिपासे ततः स्यातां समुद्रस्तु तयोरभूत् ।
अथास्य हृदयं भिन्नं हृदयान्मन उत्थितम् ॥ ६३ ॥

मनसश्चन्द्रमा जातो बुद्धिर्बुद्धेर्गिरांपतिः ।
अहङ्कारस्ततो रुद्रश्चित्तं चैत्त्यस्ततोऽभवत् ॥ ६४ ॥

---

विराजः ब्रह्मणः । ततो रोमादिभ्यः । शिश्नं लिङ्गम् । तत उपस्थेन्द्रियम् ॥ ५९ ॥

ततो रेतः । तस्माद् रेतसः । गुदशब्दस्तु गोलकेन्द्रिययोरपि वाचकः । गुदात् पाय्विन्द्रियम् । ततोऽपानः । मृत्युर्मरणलक्षणः ॥ ६० ॥

स्वराडिन्द्रः । ताभ्यां पादाभ्यां गतिर्गन्तव्यमिन्द्रियम् । तत इन्द्रियात् हरिरित्यत्रेदं तात्पर्यम् । इन्द्रियाद् यज्ञदेवनामाभिमानी तदन्तर्यामी हरिश्च । ब्राह्मणाङ्गुष्ठजलपायिनां फलदानार्थत्वेन कृतसन्निधानविशेषत्वात् हरिरिति । 'यज्ञनामा तु देवोऽन्यो विज्ञेयः पाददेवता । तमाविष्टो हरिर्नित्यं तमाहुः पाददैवतम्' इति वचनात् ॥ ६१ ॥

विरिञ्चिशरीरात् नाड्युत्पत्तिं वक्ति—**नाड्यश्चेति** । आहृतमुत्पन्नम् । ततो रुधिरात् ॥६२॥

ततः उदरात् । तयोः क्षुत्पिपासयोः । अथोदरोत्पत्त्यनन्तरम् । भिन्नं व्यक्तम् ॥ ६३ ॥

तस्मात् हृदयात् मनोभेदरूपा बुद्धिर्जाता । तस्या बुद्धेः गिरांपतिर्बृहस्पतिर्जात इत्यर्थः । ततो हृदयादेव मनोभेदरूपोऽहङ्कारोऽपि तदभिमानी रुद्रश्च । तत एतस्मात् हृदयान्मनोविशेषरूपं चित्तम् । ततश्चित्ताच्चैत्त्यं चित्ताभिमानी विरिञ्चो रूपान्तरेणासीत् । अत्र चित्तभिमानिगत्वेन[1] विष्णुरपि

---

[1] चित्ताभिमानिगत्वेनेति गपाठः । अन्यत्र चित्ताभिमानित्वेन ।

एते ह्यभ्युत्थिता देवा नैवास्योत्थापनेऽशकन् ।
पुनराविविशुः खानि तमुत्थापयितुं क्रमात् ॥ ६५ ॥

वह्निर्वाचा मुखं भेजे नोदतिष्ठत् ततो[2] विराट् ।
घ्राणेन नासिके वायुः नोदतिष्ठत् ततो विराट् ॥ ६६ ॥

अक्षिणी चक्षुषादित्यो नोदतिष्ठत् ततो विराट् ।
श्रोत्रेण कर्णौ च दिशो नोदतिष्ठत् ततो विराट् ॥ ६७ ॥

त्वचं रोमभिरोषध्यो नोदतिष्ठत् ततो विराट् ।
रेतसा शिश्नमापस्तु नोदतिष्ठत् ततो विराट् ॥ ६८ ॥

गुदं मृत्युरपानेन नोदतिष्ठत् ततो विराट् ।
हस्ताविन्द्रो बलेनैव नोदतिष्ठत् ततो विराट् ॥ ६९ ॥

विष्णुर्गत्यैव चरणौ नोदतिष्ठत् ततो विराट् ।
नाडीर्नद्यो लोहितेन नोदतिष्ठत् ततो विराट् ॥ ७० ॥

---

चैत्त्य इति ग्राह्यम् । ब्रह्मान्तर्यामिणोऽपि स्वेच्छया तदभिव्यक्तरूपान्तरेण तज्जत्वं च युक्तम् । प्रामाणिकत्वात् । उक्तं च—'चैत्त्योऽपि भगवान् विष्णुरन्तर्यामी चतुर्मुखात् । स्वेच्छया व्यक्तिमगमत् ततोऽसौ ब्रह्मजः स्मृतः ' इति । इदं सर्व[1]स्याभितप्तस्य मुखं निरभिद्यतेत्याद्यैतरेय्यामुपनिषद्युक्तम् ॥ ६४ ॥

ब्रह्मवाय्वोरेकत्वेनैकस्योत्तमत्वकथनेऽन्यस्य तदविनाभूतमिति कृत्वा प्राणस्य सर्वचेतनोत्तमत्वं ज्ञापयितुमग्न्यादिदेवानां विवादेन तन्निर्णयप्रकारं वक्ति—**एते हीति** । एतेनाहमुक्थमस्मीत्यादिवाक्यार्थोऽपि विवृत इति ज्ञातव्यम् । अस्य ब्रह्मशरीरस्योत्थापने खानि गोलकस्थानानि ॥ ६५ ॥

गत्यैवेत्येवकारेण विष्णोरुत्थापनाशक्तिर्न विधीयते । किन्तु ब्रह्मवाय्वोः बलज्ञापनायैवेति । 'यज्ञान्तस्थः स्वयं पादौ विशन्नोत्थापयद्धरिः । शक्तोऽपि ब्रह्मवाय्वोस्तु बलज्ञप्त्यै जनार्दनः । तत्स्थ उत्थापयामास ब्रह्मदेहं विशन् प्रभुः ' इति वचनात् । अनेन श्रियस्तदुत्तमत्वं तस्याः हरेरनन्तगुणोत्तमत्वं ध्वनितम् । 'अहं सुवे पितरमस्य मूर्धन् ' इत्यादेः ॥ ७० ॥

---

[1] 'तस्य' इति मुद्रितेषु उपनिषत्पाठेषु दृश्यते । [2] तदा—क ।

क्षुत्तृड्भ्यामुदरं सिन्धुर्नोदतिष्ठत् ततो विराट् ।
हृदयं मनसा चन्द्रो नोदतिष्ठत् ततो विराट् ॥ ७१ ॥

बुद्ध्या ब्रह्माऽपि हृदयं नोदतिष्ठत् ततो विराट् ।
रुद्रोऽभिमत्या हृदयं नोदतिष्ठत् ततो विराट् ॥ ७२ ॥

चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद् यदा ।
विराट् तदैव पुरुषः सलिलादुदतिष्ठत ॥ ७३ ॥

यथा प्रसुप्तं पुरुषं प्राणेन्द्रियमनोधियः ।
प्रभवन्ति विना येन नोत्थापयितुमोजसा ॥ ७४ ॥

तमस्मिन् प्रत्यगात्मानं धिया योगविपक्कया[2] ।
भक्त्या विरक्त्या ज्ञानेन विविच्यात्मनि चिन्तयेत् ॥ ७५ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे सप्तविंशोऽध्यायः ।

---

ब्रह्मा बृहस्पतिः । 'यस्मिन् ब्रह्मा राजनि पूर्व एति' इति श्रुतेः । 'बृहस्पतिः पुरोगश्च[1] ब्रह्मा च ब्रह्मणस्पतिः' इति चाभिधानम् ॥ ७२ ॥

नन्वेवं तर्हि सलिले पतितं ब्रह्मशरीरमुत्थापकाभावात् क्लिन्नप्रायं भवेदित्याशङ्क्य वायुना सह निर्गमात् शरीरमपतत् । स एव क्षेत्रज्ञो ब्रह्मान्तर्यामी वायुब्रह्माभ्यां सह प्रवेशेन शरीरमुदस्थापयदित्याह—**चित्तेनेति** । 'अंशेन सुप्तो ब्रह्मा तु अंशेन निरगात् तथा । स्वदेहाद् वायुसहितो विष्णुना च जगत्प्रभुः । तमुत्थापयितुं देवास्तानृते त्रीन् महाबलान् । नाशक्नुवन्नेकसंस्थास्ततस्ते-त्वविशंस्त्रयः । उदतिष्ठत् ब्रह्मदेहः तदा तेषां प्रभावतः । विशेषेण हरेरेव प्रभावेन श्रियः पतेः । चित्ताभिमानी ब्रह्मैव क्षेत्रज्ञस्तद्गतो हरिः । प्राणो वायुरिति प्रोक्तः तयोरीशो हरिः स्वयम्' इत्यनेन क्षुद्रोपद्रवशङ्का परिहृतेति सन्तोष्टव्यम् ॥ ७३ ॥

नन्वत्र विष्णोः सर्वोत्तमत्वेन सर्वशक्तिमत्त्वं सम्यक् न प्रतीतम् । बलादाकृष्य प्रवेश्यते च इत्याशङ्क्य प्रातीतिकौ प्राणस्योक्तौ अन्वयव्यतिरेकौ विष्णोरेवेति विशदयंस्तदुपास्तिं विदधाति—**यथेति** । अंशेन प्रसुप्तं पुरुषं ब्रह्माणं प्राणेन्द्रियमनोधियः प्राणेन्द्रियाद्यभिमानिनो देवास्तत्तदिन्द्रियार्थक्रिया-वस्वैनौजसा येन क्षेत्रज्ञेन विनोत्थापयितुं न प्रभवन्तीदं यथा यथार्थं सत्यं यस्मात् तस्मात् तं सर्वोत्तमं

---

[1] पुरोगाश्च, पुरोधाश्च इति पाठान्तरे । [2] योगप्रवृत्तया–क ।

। अथ अष्टाविंशोऽध्यायः ।

**भगवानुवाच —**

**प्रकृतिस्थोऽपि पुरुषो नाज्यते प्राकृतैर्गुणैः ।**
**अविकारादकर्तृत्वान्निर्गुणत्वाज्जलार्कवत् ॥ १ ॥**

**स एष यर्हि प्रकृतेर्गुणेष्वभिविषज्जते ।**
**अहङ्कारविमूढात्मा कर्तास्मीत्यभिमन्यते ॥ २ ॥**

---

प्रत्यगात्मानं क्षेत्रज्ञं श्रीनारायणमस्मिच्छरीरेऽन्तर्यामित्वेन स्थितं विरक्त्या, अष्टाङ्गयोगविपक्कया क्रमविवृद्धया भक्त्या च जातधिया निश्चयलक्षणबुद्ध्या जातेन ज्ञानेनात्मनि हृदये चिन्तयेदित्यन्वयः ॥ ७४,७५ ॥

इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे सप्तविंशोऽध्यायः ।

॥ अथ अष्टाविंशोऽध्यायः ॥

श्रोतृप्रवक्तृभेदात् गुणनिकायात्[1] तात्पर्यातिशयजननाय उक्तमेव प्रपञ्चयतेऽस्मिन्नध्याये । तत्र जीवपरयोरेकशरीरस्थत्वात् जीववत् तद्गतदुःखादिभोगः परस्य कथं न स्यादित्याशङ्क्य परिहरति— **प्रकृतिस्थ इति** । 'तं वा एतं पूर्णमाचक्षते पुरुष इति' इति श्रुतेः पूर्णत्वात् पुरुषो विष्णुः प्रकृतिस्थः जडप्रकृतौ तत्कार्यशरीरेष्ववस्थितोऽपि प्राकृतैः प्रकृतिनिमित्तशरीरगतैः सुखदुःखादिगुणैः जननादिभिः नाज्यते न लिप्यते । तत्र हेतुमाह—**अविकारादिति** । अविकारात् षड्भावविकाररहितत्वात् अकर्तृत्वात् परतन्त्रकर्तृत्वरहितत्वात्[2] निर्गुणत्वात् सत्त्वादिगुणरहितत्वाच्च । जलार्कवत् यथा जलगतः सूर्यो जलदोषैः कम्पभेदादिभिर्न संबध्यते तथा प्रकृतेऽपीत्यर्थः ॥ १ ॥

ननु यदि परमस्य सुखदुःखादिसम्बन्धो नास्ति तर्हि सुखी दुःखी जातो मृतो दरिद्र इति व्यवह्रियमाणः क इति तत्राह—**स एष इति** । यर्हि यदा अनन्तरातीताध्याये 'प्रत्यगात्मानमात्मनि चिन्तयेत्' इति प्रकृतः सोऽहमिति प्रत्यक्षसिद्धत्वादेषः जीवः प्रकृतेर्गुणेषु सत्त्वादिगुणरचितशरीरेषु अभिविषज्जते शरीरवान् जायते तदा तेषां त्रयाणां गुणानां सन्निपातजाताहंकारममकाराभ्यां विमूढात्मा विस्मृतपरमात्मस्वरूपः सन् पराधीनकर्तृत्वमन्तरेण स्वतः कर्तृत्वाभावेऽप्यहंकर्तास्मीत्यभिमन्यते ॥ २ ॥

---

[1] भगवतः गुणनिकाये तात्पर्यातिशयजननायेत्यर्थः स्यात् ।  [2] परतन्त्रकर्तृरहितत्वात्-च छ ।

तेन संसारपदवीमवशोऽभ्येत्यनिर्वृतः ।
प्रासङ्गिकैः कर्मदोषैः सदसन्मिश्रयोनिषु ॥ ३ ॥
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ४ ॥
प्रबुद्धय स्वप्नसुप्तिभ्यां संस्मरन्नात्मवैशसम्[1] ।
वैतथ्यं व्यभिचारं च नासौ ध्यायेद् यतो भयम् ॥ ५ ॥

तत्फलमाह—**तेनेति** । तेन अविद्यमानकर्तृत्वाभिमानेन मनसा शब्दादिषु क्षणभङ्गुरत्वेन अनिर्वृतोऽलम्बुद्धिगोचरानन्दरहितोऽपि प्रासङ्गिकैः विषयासक्तिजातैः कर्मदोषैः सदसन्मिश्रयोनिषु देवासुरमनुष्ययोनिषु जातः सुखदुःखलक्षणां संसारपदवीमभ्येतीत्यन्वयः ॥ ३ ॥

आभिमानिकसंसारानिवृत्तौ किं निमित्तमित्याशङ्क्य विषयाभिध्यानमित्याह—**अर्थे हीति** । स्वतः चित्सुखरूपस्यास्य जीवस्यार्थे सुखी दुःख्यहमित्यादिव्यवहारे अविद्यमाने सत्तारहितेऽपि संसृतिर्न निवर्तते । ध्यायतो विषयानिति हेतुगर्भविशेषणम् । 'ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते' इत्यादि प्रसिद्धिं हिशब्द आपादयति । विषयध्यानसंस्कारपरम्परया बीजाङ्कुरन्यायेनान्योन्यकारणत्वस्यानादित्वेन भगवत्प्रसादमन्तरेणानुच्छेदादित्यर्थः । एतमर्थं निदर्शयति—**स्वप्न इति** । यथा जाग्रदवस्थायां नानाविधपदार्थान् ध्यायतः स्वप्ने गर्दभाद्यारोहणादिना मरणाद्यनर्थागमो न निवर्तते 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्यादेः । अनेन अर्थक्रियाकारित्वात् स्वप्नस्य मिथ्यात्वमपि प्रत्युक्तम् । यद्वा अर्थेऽबाधितप्रयोजनेऽसत्यपीति ॥ ४ ॥

अस्य संसारस्य निवृत्त्युपायमाह—**प्रबुद्धयेति** । 'अज्ञानं सुप्तिशब्दोक्तं स्वप्नश्चैव विपर्ययः' इति वचनात् स्वप्नसुषुप्तिभ्यां विपरीतज्ञानाज्ञानाभ्यां विषयाणां सेवा या स्यात् सा स्वतो न निवर्तत इति शास्त्राद्युपदेशेन प्रबुद्धय प्रकृष्टं बोधं प्राप्य आत्मवैशसं दुर्विषयसेवया आत्मनाशं स्मरन्नसौ पुरुषो विषयाणां वैतथ्यं[2] निष्फलत्वं व्यभिचारमनित्यत्वं च ज्ञात्वा यतो विषयात् भयं संसारलक्षणं स्यात् तं न ध्यायेत् न संस्मरेदित्यर्थः । आत्मसंसृतेरिति पाठे तस्या मिथ्यात्वमनेकान्तत्वं च दृश्यमानं संस्मरन्नित्यर्थः ॥ ५ ॥

[1] आत्मसंसृतेः—इति पाठान्तरम् ।

[2] वैतथ्यं नित्यपुरुषार्थासाधनत्वमिति याद्वपत्यम् ।

अत एव शनैश्चित्तं प्रसक्तमसतां पथि ।
भक्तियोगेन तीव्रेण विरक्त्यात्मवशं नयेत् ॥ ६ ॥

यमादिभिर्योगपथैरभ्यसंच्छ्रद्धयाऽन्वितः ।
मयि भावेन सत्येन मत्कथाश्रवणेन च ॥ ७ ॥

सर्वभूतसमत्वेन निर्वैरेणाप्रसङ्गतः ।
ब्रह्मचर्येण मौनेन स्वधर्मेण महीयसा ॥ ८ ॥

यदृच्छयोपपन्नेन सन्तुष्टो मितभुङ् मुनिः ।
विविक्तशरणः शान्तो मैत्रः करुण आत्मवान् ॥ ९ ॥

सानुबन्धे च देहेऽस्मिन्नकुर्वन्नसदाग्रहम् ।
ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च ॥ १० ॥

---

मनसि विजिते सर्वं विजितं स्यादिति कृत्वा मनोविजयप्रकारं वक्ति—**अत इति** । यत एवं मनसो विषयेषु सङ्गः संसारहेतुरत एव विषयसङ्गिनामसतां पथि प्रसक्तं चित्तं शनैर्हरौ तीव्रेण भक्तियोगेन विषयविरक्त्या च आत्मवशं नयेदित्यन्वयः । असताममङ्गलानां विषयाणां पथीति वा ॥ ६ ॥

मनसः स्ववशानयनमेव नालम् । किन्तु यमादिसाधनसामग्र्या समुत्पन्नेनापरोक्षज्ञानेनानावृत्तिलक्षणश्रीनारायणप्राप्तिः स्यादित्याह—**यमादिभिरिति** । अभ्यसन्[1], प्रणवमिति शेषः । सत्येन भूतहितवचनेन ॥ ७ ॥

सर्वभूतसमत्वेन सर्वभूतान्तर्यामिणो मम पूर्णत्वादिज्ञानेन तत्तद्वस्तुयोग्यतानुकूलदर्शनेन वा । निर्वैरेण वैष्णवद्वेषराहित्येन । अप्रसङ्गतः विषयरागिभिः सह सल्लापादिप्रसङ्गराहित्येन । मौनेन उपासनेन । स्वधर्मेण स्वविहितवर्णाश्रमधर्मानुष्ठानेन ॥ ८ ॥

यदृच्छयोपलब्धेन दैवतः प्राप्तधनेन सन्तुष्टोऽलम्बुद्धिमान् । शान्तः मदेकनिष्ठः । सतामापदं मित्वा ज्ञात्वा त्रायत इति मित्रं, सा बुद्धिर्यस्यास्ति स मैत्रः । मित्रादिदेवतानिष्ठ इति वा । करुणो मित्रोदासीनेषु सत्सु कृपावान् । आत्मवान् वशीकृतमनाः ॥ ९ ॥

पुत्राद्यनुबन्धसहितेऽस्मिन् देहेऽसदाग्रहं मदीयं तदीयमिति भेदज्ञानमकुर्वन् । प्रकृतेः पुरुषस्य च दृष्टतत्त्वेन यथावत् ज्ञातस्वरूपेण ज्ञानेन ॥ १० ॥

---

[1] अभ्यसन् पुनःपुनः चित्तमेकाग्रीकुर्वन्निति यादुपत्यम् ।

निवृत्तबुद्ध्यवस्थानो[1] दूरीभूतान्यदर्शनः ।
उपलभ्यात्मनात्मानं चक्षुषेवार्कमेकदृक्[2] ॥ ११ ॥

मुक्तलिङ्गः सदाभासमसति प्रतिपद्यते ।
सतो बन्धुं समं चक्षुः सर्वानुस्यूतमद्वयम् ॥ १२ ॥

यथा जलस्थ आभासः स्थलस्थेनावदृश्यते ।
स्वाभासेन यथा सूर्यो जलस्थेन दिवि स्थितः ॥ १३ ॥

---

निवृत्तबुद्ध्यवस्थानः निवृत्तं बुद्धेरर्वाक् स्थानं निद्रादिलक्षणं यस्य स तथा । दूरीभूतमन्यदर्शनं शब्दादिविषयज्ञानं दुःशास्त्रं वा यस्य स तथा । चक्षुषार्कमिव आत्मना बाह्यान्तःकरणेनाविमिश्रस्वरूपान्तःकरणेन आत्मानं स्वस्वरूपमुपलभ्य दृष्ट्वा, द्रष्टव्यनामादिप्राणान्तदेवतानां च स्वरूपं दृष्ट्वा, तत्प्रसादादात्मानं स्वान्तर्यामिणं च[3], एका मुख्या दृगेव ज्ञानमेव यस्य स तथा ॥ ११ ॥

प्रारब्धक्षये सति मुक्तलिङ्गः समुत्सृष्टलिङ्गशरीरः देवयानेन विरिञ्चलोकमुपागम्य असति ब्रह्मप्रलये अनिरुद्धद्वारेण विरिञ्चं प्रविश्य तेन सह सन् प्राण आभासः प्रतिबिम्बो यस्य तद् ब्रह्म प्रतिपद्यत इत्यन्वयः । 'शेषस्य प्रतिबिम्बास्तु देवाः शेषश्च ब्रह्मणः । स परब्रह्मणश्चैव ते स्वबिम्बप्रदर्शकाः । ततः स्वबिम्बद्वारेण परमात्मप्रदर्शनम्' इत्यनेन सर्वोऽप्युक्तार्थो ज्ञायते । सदाभासं विशिनष्टि—**सतो बन्धुमिति** । पितृत्वादिना सतः प्राणस्य बन्धुभूतं 'सतो बन्धुमसति निरविन्दन्' इत्यादेः सर्वरूपेषु पूर्णगुणत्वादिना समं, चक्षुः सर्वज्ञं, सर्वेषु मुक्तामुक्तप्रपञ्चेषु मणिषु सूत्रमिव धारकत्वेन अनुस्यूतं प्रोतम्, अद्वयमसमाधिकम् ॥ १२ ॥

मुख्यप्राणादिप्रतिबिम्बस्य बिम्बभूतपरमात्मप्रदर्शकत्वमुक्तम् । तत्र प्रतिबिम्बानां बिम्बप्रदर्शकत्वप्रकारः कथमिति तत्राह—**यथेति** । गगनतलवर्तिनः सूर्यस्याभासो जले भवति । जलस्यापि कदाचित् स्थले भित्त्यादौ भवति । एवं स्थिते यथा स्थलस्थेन भित्त्यादिगतेनाभासेन जलस्थ आभासो दृश्यते ज्ञायते, यथा च जलस्थेन स्वाभासेन प्रतिबिम्बेन दिवि स्थितः सूर्यः बिम्बभूतोऽवगम्यते । एवं वा योजनाभेदः । जलस्थ आभासः स्थलस्थेन[4] जले प्रतिबिम्बितं मुखं तीरस्थपुरुषमुखमेतादृशलक्षणमिति यथा ज्ञापयति, यथा जलस्थेन स्वाभासेन प्रतिबिम्बेन दिवि स्थितः सूर्यो दृश्यते जले स्थितसूर्यमण्डलं व्योम्नि स्थितं बिम्बभूतं सवितृमण्डलमवगमयति[5] ॥ १३ ॥

---

[1] निवृत्तबुध्यवाक्स्थानः—इति पाठान्तरम् । [2] आत्मदृक्–च । [3] दृष्ट्वेति शेषः । अस्योत्तरश्लोकस्थेन प्रतिपद्यत इत्यनेनान्वयः । [4] स्थलस्थेन पुरुषेणेत्यर्थः । [5] अत्र इतीत्युपस्कर्तव्यम् ।

**एवं त्रिवृदहङ्कारो भूतेन्द्रियमनोगुणैः ।**
**स्वाभासैर्लक्षितोऽनेन सदाभासेन सत्यदृक् ॥ १४ ॥**
**भूतसूक्ष्मेन्द्रियमनोबुद्ध्यादिष्विह निद्रया ।**
**लीनेषु सत्सु यस्तत्र विनिद्रो निरहङ्क्रियः ॥ १५ ॥**
**मन्यमानस्तदात्मानमनष्टो नष्टवन्मृषा ।**
**नष्टेऽहङ्करणे द्रष्टा नष्टचित्त[1] इवातुरः ॥ १६ ॥**

---

एवं तथा त्रिवृद् वैकारिकतैजसतामसाहङ्काराभिमानी शेषः स्वाभासैः स्वप्रतिबिम्बैः भूतेन्द्रियमनोगुणैः अभिमानिभिरिन्द्रादिदेवैः लक्षितो भवति । अनेन शेषाख्येन प्रतिबिम्बेन सन् ब्रह्मा लक्षितः । तेन सदाभासेन चतुर्मुखाख्यप्रतिबिम्बेन सत्यदृक् यथार्थज्ञानी श्रीनारायणो लक्षितो भवति ॥ १४ ॥

ननु स्वतः सत्यदृक्त्वेऽप्याभासेनास्यासत्यदृक्त्वमभ्युपेयम् । अन्यथा स्वतोऽसङ्गस्य संबन्धाभावेन लक्षणानुपपत्तिः । तदनुपपत्तावुक्तार्थानुपपत्तिरिति तत्राह—**भूतसूक्ष्मेति** । इह संसारे भूतसूक्ष्मेन्द्रियमनोबुद्ध्यादिषु लीनेषु निद्रया नष्टवृत्तिषु सत्सु अतिसुप्तेषु यो विनिद्रः उत्फुल्ललोचनः स सत्यदृक् । अनेन कदाप्यस्य ब्रह्मणोऽज्ञानासम्भवो दर्शितः । अत उक्तानुपपत्तिः प्रेक्षावतां हृदि पदं न धत्ते ॥ १५ ॥

परमात्मस्थितिं निरूप्य जीवस्थितिमाह—**मन्यमान इति** । योऽनष्टोऽपि मनोधर्मे अहङ्करणे नष्टे सत्यात्मानं नष्टवन्मृषा मन्यमानः, कदा? तदा सुप्तावस्थायाम् । नष्टचित्त[1] इवातुरो द्रष्टा जीव इत्यन्वयः । अनेन कदाप्यविनष्टद्रष्टृत्वं परस्य लक्षणम् । इतरस्य तदन्यथेति वैलक्षण्यमुभयोरुक्तम्[2] ॥ १६ ॥

---

[1] नष्टवित्त–क ।

[2] ततश्चायं श्लोकद्वयार्थः । असति प्रलये भूतादिषु जीवेषु नष्टेष्विह संसारिषु निद्रया प्रलयकालीनया लीनेषु श्लिष्टेषु यस्तत्र तस्यामवस्थायां विगतनिद्रो निरहंक्रियोऽहङ्कारशून्यः स सत्यदृक् नित्यदृक् परमात्मा । जीवस्तु नैतादृश इत्याह— मन्यमान इति । योऽनष्टोऽविलुप्तस्वरूपोऽपि तदा प्रलयेऽहङ्कारममकाररूपाभिमानजनके मनःप्रभेदरूपेऽहङ्कारे नष्टे सति मृषाऽऽत्मानं स्वात्मानं नष्टवन्मृतवत् मन्यमानः । मृतो यथा मरणानन्तरं मरणसमये किमपि नाज्ञासिषमिति मन्यते, एवं प्रलयानन्तरं स्थूलशरीरप्राप्तौ । एतावन्तं कालं प्रलये किमपि नाज्ञासिषमिति मन्यमान इति यावत् । स आतुरो द्रष्टा विवशद्रष्टा जीवः । नाज्ञासिषमित्यनुभवस्य मृषात्वोपपादनाय द्रष्टेत्युक्तम् । तदापि स्वरूपकालादिद्रष्टेत्यर्थ इति यादुपत्यम् ।

एवं प्रत्यवमृश्यासावात्मानं प्रतिपद्यते ।
साहङ्कारस्य द्रव्यस्य योऽवस्थानमनुग्रहः ॥ १७ ॥
देवहूतिरुवाच —
पुरुषं प्रकृतिर्ब्रह्मन् न विमुञ्चति कर्हिचित् ।
अन्योन्यापाश्रयत्वाच्च नित्यत्वादनयोः प्रभो ॥ १८ ॥
यथा गन्धस्य भूमेश्च न भावो व्यतिरेकतः ।
अपां रसस्य च यथा तथा बुद्धेः परस्य च ॥ १९ ॥
अकर्तुः कर्मबन्धोऽयं पुरुषस्य यदाश्रयः ।
गुणेषु सत्सु प्रकृतेः कैवल्यं तेष्वतः कथम् ॥ २० ॥

---

जीवपरयोः वैलक्षण्यज्ञानस्य फलमाह—**एवमिति** । एवमुक्तप्रकारेण ब्रह्मादिजीवराशेः परस्य हरेर्जीवात्[1] प्रत्यवमृश्य युक्त्यालोच्य निश्चित्य असावुपासको जीवः साहङ्कारस्य द्रव्यस्य योऽवस्थानं स्थितिहेतुरनुग्रहश्च सत्ताप्रतीतिदानेनानुगृह्णातीति ज्ञातः तमात्मानं विष्णुं प्रतिपद्यत इत्यन्वयः । एकस्यैव परब्रह्मणोऽवस्थाद्वयमत्रोच्यते, न तु वैलक्षण्यं[2], निश्चायकप्रमाणाभावात् इतीयमाशंका 'नित्यदृक् परमात्मासौ मृतवद् यो न किञ्चन । जानाति जीवः स ज्ञेयः परमात्मा तदाश्रयः' इत्यनेन निश्चायकेन परिहर्तव्या ॥ १७ ॥

जीवपरयोर्भेदज्ञानमेव प्रकृतिबन्धमोक्षकारणं श्रुत्वा देवहूतिस्तदर्थमाक्षिपति—**पुरुषं प्रकृतिरित्यादिना** । त्रिगुणात्मिका प्रकृतिः पुरूणि पापपुण्यलक्षणानि कर्माणि सनन्तं भजन्तं, वन षण संभक्ताविति धातुः, कर्हिचित् कदापि न विमुञ्चति । तत्र हेतुः—**अन्योन्येति** । अनयोः प्रकृतिपुरुषयोः नित्यत्वादविनाशित्वाद् अन्योन्यापाश्रयत्वाच्च । शरीरं विना पुरुषस्य चेष्टाभावात् पुरुषमन्तरेणाचेतनत्वेन प्रकृतेर[3]पीतरेतरोपकारित्वाच्च ॥ १८ ॥

तत्र दृष्टान्तमाह—**यथेति** । भूमेः तद्गुणस्य गन्धस्य च व्यतिरेकतो भावो विनाभावो नास्ति । अपामित्यनेनैव व्याख्यातम् । बुद्धेः प्रकृतेः परस्य जीवस्य तथा पृथग्भावो नास्ति ॥ १९ ॥

इतोऽपि पुरुषस्य प्रकृतिबन्धमोक्षो न घटत इत्याह—**अकर्तुरिति** । अकर्तुः स्वातन्त्र्येण कर्तुमशक्तस्य पुरुषस्यायं संसारबन्धो यदाश्रयः, यः प्रकृतिगुणसमुदाय आश्रयो यस्य बन्धस्य स यदाश्रयः ।

---

[1] वैलक्षण्यम् इत्यध्याहर्तव्यम् । [2] जीवपरयोरिति शेषः ।
[3] प्रकृतेरपि इत्यतः परं 'इति' पदं स्यात् ।

**सकृत् तत्त्वावमर्शेन निवृत्तं भयमुल्बणम् ।**
**निवृत्तस्यानिवृत्तत्त्वात्[1] पुनः प्रत्यवतिष्ठते ॥ २१ ॥**

**भगवानुवाच —**
**अनिमित्तप्रवृत्तेन स्वधर्मेणामलत्मना ।**
**तीव्रया मयि भक्त्या च श्रुतिसंभृतया चिरम् ॥ २२ ॥**

**दृष्टतत्त्वेन ज्ञानेन वैराग्येण बलीयसा ।**
**तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥ २३ ॥**

---

तेषु प्रकृतेर्गुणेषु सत्सु पुरुषस्य अतः गुणेभ्यः कैवल्यं मोक्षलक्षणं कथम् ? न कथमपीत्यन्वयः । प्रकृतिगुणानिवृत्त्या तत्कृतसंसारबन्धानिवृत्तिरित्यर्थः ॥ २० ॥

वैलक्षण्यज्ञानेन बन्धो निवर्तत इत्यनेन मयायं प्रश्नोऽपि परिहृतो नन्विति तत्राह—**सकृदिति** । भवतो वचनश्रवणात् तत्त्वावमर्शेन तत्त्वालोचनेनोत्पन्नं प्रकृतिबन्धभयं सकृन्निवृत्तम् । निवृत्तस्य भयस्य बाह्यान्तःकरणस्यानिवृत्तत्वात् पुनः संशयरूपं भयं प्रत्यवतिष्ठते प्रत्यवस्थानं करोति नापसरतीत्यर्थः[2] ॥ २१ ॥

प्रकृतावपसृतायां तद्गुणाः स्वत एवापसरन्तीति भावेन तन्निवृत्तिरपि असंक्लृप्तफलेन स्वधर्मादिना स्यादिति पूर्वोक्तमेव तत्परिहारत्वेनाह—**अनिमित्तप्रवृत्तेनेति** । अनिमित्तेन फलाभिसंधिराहित्येन प्रवृत्तेन निरन्तरमनुष्ठितेन, अत एवामलात्मना अतिशुद्धस्वरूपेण, चिरं श्रुत्या वेदान्तशास्त्रश्रवणेन संभृतया सम्पादितया ॥ २२ ॥

दृष्टतत्त्वेन अपरोक्षीकृतविष्ण्वादिदेवतास्वरूपेण योगेन अष्टाङ्गयोगेन आत्मसमाधिना मनस एकाग्रतालक्षणेन ध्यानेन ॥ २३ ॥

---

[1] निमित्तस्यानिवृत्तत्वात्—इति पाठान्तरम् ।

[2] तत्त्वावमर्शेन उक्तरीत्या वैतथ्यव्यभिचारादिस्मरणेन विषयाध्यानमनोवशीकरणादिनाऽपरोक्षज्ञानेन कर्मक्षये स्थूलशरीरप्राप्तिरूपभयस्य सकृन्निवृत्तावपि तन्निमित्तस्य लिङ्गशरीरस्योक्तरीत्याऽनिवृत्तत्वात् पुनः स्थूलशरीरप्राप्तिरूपं भयं प्रत्यवतिष्ठत एव । यथा प्रलये स्थूलशरीराभावेऽपि सूक्ष्मशरीरसत्त्वेन पुनः संसारारम्भः सृष्टिसमये तथैवेत्याशयः । न च कर्मनाशात् पुनः कथं संसारारम्भ इति वाच्यम् । कर्मसंबन्धस्यापि प्रकृतिसंबन्धतुल्यतया सर्वात्मनाऽपगमासंभवादित्याशयादिति यादुपत्यम् ।

प्रकृतिः पुरुषस्यैवं दह्यमाना त्वहर्निशम् ।
तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः ॥ २४ ॥

भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यशः ।
नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च ॥ २५ ॥

यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थकृत् ।
स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥ २६ ॥

एवं विदिततत्त्वस्य प्रकृतिर्मयि मानसम् ।
युञ्जतो नापकुरुते आत्मारामस्य कर्हिचित् ॥ २७ ॥

यदैवमध्यात्मरतः कालेन बहुजन्मना ।
सर्वत्र जातवैराग्य आब्रह्मभुवनान्मुनिः ॥ २८ ॥

---

एवमुक्तसाधनसामग्रीसंपन्नज्ञानाग्निना अहर्निशं दह्यमाना पुरुषस्य प्रकृतिः शनकैः तिरोभवित्री नाशं गन्त्री स्यादित्यन्वयः । योनिरुत्पत्तिस्थानमग्नेः ज्वालयेति शेषः । गन्धरसयोः पृथिवीजलसमवेतत्वेन यावद्द्रव्यभावित्वसंभवेऽपि प्रकृतिपुरुषयोः द्रव्यत्वेन तदभावात् संयोगमात्रसंबन्धलक्षणस्य नाशलक्षणविभागोपपत्तेः विषमस्त्वदुक्तो दृष्टान्त इति द्योतनाय अग्न्यरणिदृष्टान्तकथनम् । अन्यथा तदुपादानं व्यर्थं स्यादिति ॥ २४ ॥

समूलतूलसमुत्सृष्टायाः प्रकृतेर्भयं पुनरागतचोरादिवत् नास्तीत्याह—**भुक्तभोगेति** । भुक्तभोगत्वं नित्यशो दृष्टदोषत्वं च परित्यागे हेतुः । स्वे महिम्नि ज्ञानानन्दात्मके अच्छेद्याभेद्याक्लेद्यादिस्वरूपमाहात्म्ये स्थितस्यापरोक्षीकृतस्वबिम्बभगवत्प्रसादात् ईश्वरस्य [1]समर्थस्याशुभं दुःखलक्षणं संसारभयं न धत्त इत्यन्वयः ॥ २५ ॥

एतदेव सदृष्टान्तं विवृणोति—**यथा हीति** । अप्रतिबुद्धस्य निद्रितस्य प्रस्वापो निद्रा[2] बह्वनर्थकृत् व्याघ्रादिनिमित्तभयजनकः स्यात् । प्रतिबुद्धस्य निद्राया उत्थितस्य जाग्रतः ॥ २६ ।

दृष्टान्तार्थं दार्ष्टान्तिके योजयति—**एवमिति** । विदितमपरोक्षितं नामादिमदन्तदेवतानां तत्त्वं निजं रूपं येन स तथा तस्य ॥ २७ ॥

इदानीमनुष्ठीयमानश्रेयःसाधनफलं वक्ति—**यदैवमिति** । यदैवमुक्तप्रकारेण बहुजन्मना कालेनाध्यात्मरतः स्वोत्तममारभ्य मदन्ततत्त्वेषु रतः तदितरत्र अनित्यत्वेनासारत्वेन आब्रह्मभुवनात् सत्यलोक-

---

[1] समर्थस्य जीवस्येत्यर्थः । [2] स्वप्न इत्यर्थः ।

मद्भक्तः प्रतिबुद्धार्थो मत्प्रसादेन भूयसा ।
निःश्रेयसं स्वसंस्थानं कैवल्याख्यं मदाश्रयम् ॥ २९ ॥

प्राप्नोतीहाञ्जसा धीरः स्वदृशा च्छिन्नसंशयः ।
यद् गत्वा न निवर्तेत योगी लिङ्गविनिर्गमे ॥ ३० ॥

यदा न योगोपचितासु चेतो
मायासु सिद्धस्य विषज्जते च[1] ।
अनन्यहेतुष्वथ मे गतिः स्याद्
आत्यन्तिकी यत्र न मृत्युहासः ॥ ३१ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे अष्टाविंशोऽध्यायः ।

---

पर्यन्तं जातवैराग्यो भूत्वा मुनिः निरन्तरमदुपासनाशीलो मद्भक्तो भूयसा मत्प्रसादेन प्रतिबुद्धार्थोऽपरोक्षीकृतनामादिमदन्तविषयः अत एव स्वदृशा स्वरूपज्ञानेन च्छिन्नसंशयः निश्चिततत्त्वः स्वसंस्थानं स्वरूपावस्थानं मदाश्रयं कैवल्याख्यं निःश्रेयसं पुरुषार्थमञ्जसा प्राप्नोति । तं विशिनष्टि—**यद् गत्वेति** । योगी लिङ्गशरीरविनिर्गमे यद् गत्वा न निवर्तेत तादृशं पुरुषार्थमित्यर्थः ॥ २८,२९,३० ॥

[2]अत्राप्यवान्तरप्राप्तस्वान्तरायानुपहतश्चेत् उक्तपुरुषार्थमाप्नोतीत्याह—**यदा नेति** । यदैवं साधनसिद्धस्य योगोपचितासु अष्टाङ्गयोगप्राप्तासु मायासु अणिमादिविभूतिषु चेतो बुद्धिर्न विषज्जते अनुभवानीति न विलम्बते, अथ तदा यत्र यस्यां गतौ मृत्योरन्तकस्य हासः पुनरावृत्तिलक्षणो न स्यात् । आत्यन्तिकी मे गतिर्मुक्तिलक्षणा स्यादित्यन्वयः । नान्यो हेतुः यासां तास्तथा, तासामप्यहमेवाश्रय इत्यर्थः, तासु । अनेनाणिमाद्यैश्वर्यमनुभूय पश्चान्मुक्त्यवाप्तेः न मद्भक्तिः निष्फलेति ध्वनितम् ॥३१॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे अष्टाविंशोऽध्यायः ।

---

[1] विषजतेऽम्ब—ग । [2] अत्राप्यवान्तरान्तराय—ग ।

॥ अथ एकोनत्रिंशोऽध्यायः ॥

भगवानुवाच —
योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मजे ।
मनो येनैव विधिना प्रपन्नं याति सत्पथम् ॥ १ ॥

स्वधर्माचरणं शक्त्या विधर्माच्च निवर्तनम् ।
दैवलब्धेन सन्तोष आत्मविच्चरणार्चनम् ॥ २ ॥

ग्राम्यधर्मनिवृत्तिश्च मोक्षधर्मरतिस्तथा ।
मितमेध्यादनं[4] शश्वद् विविक्तक्षेत्रसेवनम् ॥ ३ ॥

---

॥ अथ एकोनत्रिंशोऽध्यायः ॥

कपिलो भगवान्, एवं तावद् विरक्तस्य भगवद्भक्तिसंपन्नस्य परमात्मोपासनया जनितज्ञानेन स्वरूपाविर्भावलक्षणं कैवल्यं भवतीत्युक्तम्, इदानीं तस्य ज्ञानस्य साधनभूताष्टाङ्गयोगप्रकारं वक्ष्यामीति प्रतिजानीते—**योगस्येत्यादिना**। बीजं विष्णुः, तेन सहितस्य वैष्णवस्येत्यर्थः। योगस्य लक्षणं वक्ष्येऽस्मिन्नध्याय इत्यन्वयः[1]। 'सबीजो वैष्णवो योगो निर्बीजस्त्वन्यदैवतः। बीजं विष्णुर्हि जगतः[2] शाखाद्या अन्यदेवताः' इति। 'सदिति ब्रह्म' इति श्रुतेः सतो ब्रह्मणः पन्थानं यातीत्यतश्च योगस्य विष्णुविषयत्वं ज्ञायते ॥ १ ॥

योगस्तु ज्ञानसाधनमेव। तस्य किं साधनमिति तत्राह स्वधर्माचरणमित्यारभ्य समाधानं तथात्मन इत्यन्तेन ग्रन्थेन। विधर्माच्च निवर्तनं धर्मवत् अवभासमानानां च शास्त्रनिषिद्धानां पञ्च-विधधर्मादीनां[3] त्यागः। सन्तोषोऽलंबुद्धिः। दैवं स्वादृष्टप्रेरको भगवान्। तदनुग्रहतः प्राप्तेन। आत्मविदां ब्रह्मज्ञानिनां श्रीपादार्चनम् ॥ २ ॥

ग्राम्यधर्मो विषयसेवा, ततो निवृत्तिः। प्रवृत्तिधर्मत्यागो वा। मोक्षधर्मरतिः निवृत्तिधर्मसेवा। शश्वन्मितस्य 'सव्यञ्जनस्याशनस्य अर्धम्, उदकस्य तृतीयं, वायोः सन्चरणार्थं चतुर्थमवशेषयेत्' इत्येवं परिमितस्य मेध्यस्य शास्त्रविहितस्यान्नस्य अदनम्। विविक्तो हरिः तस्य क्षेत्रसेवनम् ॥ ३ ॥

---

[1] इति शेष इति स्यात्। [2] जगताम्—ङ।

[3] पञ्चविधाधर्मादीनामिति स्यात्। यथोक्तं सप्तमे—'विधर्मः परधर्मश्च आभास उपमा छलः। अधर्म-शाखाः पञ्चेमा धर्मज्ञोऽधर्मवत् त्यजेत्' इति। [4] मितमेध्याशनम्—इति च।

अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः ।
ब्रह्मचर्यं तपः शौचं स्वाध्यायः पुरुषार्चनम् ॥ ४ ॥
मौनं सदासनं[1] स्थैर्यं प्राणानां च जयः शनैः ।
प्रत्याहारश्चेन्द्रियाणां विषयान्मनसा हृदि ॥ ५ ॥
स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम् ।
वैकुण्ठलीलाभिध्यानं समाधानं तथात्मनः ॥ ६ ॥
एतैरन्यैश्च पथिभिर्मनो दुष्टमसत्पथम् ।
बुद्ध्या युञ्जीत शनकैर्जितप्राणो ह्यतन्द्रितः ॥ ७ ॥

---

अहिंसा शास्त्रनिषिद्धहिंसावर्जनम् । सत्यं मिथ्यावादवर्जनम् । भूतहितकथनं वा । अस्तेयं स्वाम्यननुज्ञातस्य तृणाग्रस्याप्यग्रहणम् । यावता शरीरावस्थितिर्भवति तावत्परिमाणोऽर्थो यावदर्थः, तस्य परिग्रहः स्वीकारो यावदर्थपरिग्रहः । अष्टाङ्गं ब्रह्मचर्यम्[2] । 'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । सङ्केतोऽध्यवसायश्च क्रियानिर्वृतिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्' । तप उपवासादि, तत्त्वपर्यालोचनं वा । शौचं बाह्याभ्यन्तरशुद्धिः । स्वाध्यायो ब्रह्मयज्ञः । पुरुषस्य श्रीनारायणस्य वैदिकतान्त्रिकार्चनम् ॥ ४ ॥

सदा पद्माद्यासनजयः । वैष्णवसिद्धान्ताद् अचलनं स्थैर्यम् । विपद्यपि आत्मावष्टम्भनं धैर्यं वा । प्राणायामैः प्राणानां जयः । श्रोत्रादीन्द्रियाणां शब्दादिविषयेभ्यो मनसा हृदि स्थितं हरिं प्रत्याहरणम् आनीय स्थापनं प्रत्याहारः ॥ ५ ॥

स्वस्य विष्णोर्धिष्ण्यानां पदादिस्थानानामेकदेशे एकैकावयवे मनसा प्राणस्य वृत्तेः धारणम्[3] । वैकुण्ठस्य हरेः लीलायाः सृष्ट्यादिरूपायाः अभिध्यानं निरन्तरस्मरणम् । तथाऽऽत्मनो मनसः समाधानमप्रयत्नेन हरौ स्थितिः । तदुक्तम् 'समाधिरप्रयत्नेन मनसः संस्थितिर्भवेत्' इति ॥ ६ ॥

स्वधर्माचरणाद्युक्तस्य[4] प्रयोगप्रकारमाह—**एतैरिति** । असद्विषयसङ्गेन दुष्टमत एव असत्पथं दुर्मार्गवर्ति मनः ॥ ७ ॥

---

[1] सदासनस्थैर्यम्—इति च । [2] यथोक्तमित्युपस्कर्तव्यम् ।
[3] मनसा सह प्राणानामिन्द्रियाणां धारणमिति वादुपस्यम् । [4] उक्तस्वधर्माचरणादेरित्यर्थः ।

शुचौ देशे प्रतिष्ठाप्य विजितासन आसनम् ।
तस्मिन् स्वस्तिकमासीन[1] ऋजुकायः समभ्यसेत् ॥ ८ ॥

प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः ।
प्रतिकूलेन वा चित्तं यथा स्थितमचञ्चलम् ॥ ९ ॥

मनोऽचिरात् स्याद् विरजं जितश्वासस्य योगिनः ।
वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै मलम् ॥ १० ॥

प्राणायामैर्दहेद् दोषान् धारणाभिश्च किल्बिषान् ।
प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् ॥ ११ ॥

यदा मनः स्वं विरजं योगेन सुसमाहितम् ।
काष्ठां भगवतो ध्यायेत् स्वनासाग्रावलोकनः ॥ १२ ॥

प्रसन्नवदनाम्भोजं पद्मगर्भारुणेक्षणम् ।
नीलोत्पलदलश्यामं शङ्खचक्रगदाधरम् ॥ १३ ॥

---

योगे इतिकर्तव्यतामाह— **शुचावित्यादिना** । योगमभ्यसेदित्यन्वयः ॥ ८ ॥
प्रतिकूलेन रेचकादिक्रमेण ॥ ९ ॥

प्राणायामादिफलमाह— **मन इति** । विरजं रजोगुणरहितम् । एतदेव सोदाहरणमाह— **वाय्वग्निभ्यामिति** ॥ १० ॥

क्रममाह— **प्राणायामैरिति** । रागादिदोषान् । किल्बिषान् जन्मान्तरसञ्चितपापानि । दुर्जन-संसर्गावाप्त[2]दुरितानि । अनीश्वरान् ऐश्वर्यविरोधिनः प्रकृतेः सत्त्वादिगुणान् ॥ ११ ॥

मनसि विरजसि सतीतिकर्तव्यतामाह[3]— **यदा मन इति** । यदा मनो विरजं स्यात् तदा भगवतो हरेः काष्ठां पूर्णां मूर्तिं ध्यायेत् । नासाग्रेणावलोकनं निरीक्षणं यस्य स तथा ॥ १२ ॥

'काष्ठोत्कर्षे सीम्नि दिशि' इत्यभिधानात् काष्ठाशब्दस्य अनेकार्थत्वात् अत्र विवक्षितः क इत्याशङ्क्य सर्वगुणोत्कृष्टं भगवद्रूपं विवक्षितमिति तत्र ध्येयस्वरूपं वक्ति— **प्रसन्नवदनेति** ॥ १३ ॥

---

[1] स्वस्तिक आसीनः । [2] सङ्गावाप्त–च । [3] इतिकर्तव्यमाह–क ।

लसत्पङ्कजकिञ्जल्कपीतकौशेयवाससम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ॥ १४ ॥

मत्तद्विरेफाकुलया परीतं वनमालया ।
परार्घ्यहारवलयकिरीटाङ्गदनूपुरम् ॥ १५ ॥

काञ्चीगुणोल्लसच्छ्रोणिं हृदयाम्भोजविष्टरम् ।
दर्शनीयतमं शान्तं मनोनयननन्दनम् ॥ १६ ॥

अपीच्य[1]दर्शनं शश्वत् सर्वलोकनमस्कृतम् ।
सन्तं वयसि कैशोरे भक्तानुग्रहकातरम् ॥ १७ ॥

कीर्तन्यतीर्थयशसं पुण्यश्लोकयशस्करम् ।
ध्यायेद् देवं समग्राङ्गं यावन्न च्यवते मनः ॥ १८ ॥

स्थितं व्रजन्तमासीनं शयानं वा गुहाशयम् ।
प्रेक्षणीयेहितं ध्यायेच्छुद्धभावेन चेतसा ॥ १९ ॥

---

लसतः पङ्कजस्य किञ्जल्कं केसरः । तद्वत् पीतं कौशेयं वासो यस्य स तथा तम् । श्रीवत्सो वक्षसि यस्य स तथा तम् । भ्राजता कौस्तुभेन आमुक्ता बद्धा कन्धरा यस्य स तथा तम् ॥ १४ ॥

मत्तैर्द्विरेफैः भृङ्गैः आकुलया व्याप्तया । परार्घ्यानि अनर्घ्यत्वेन श्रेष्ठानि हारश्च वलयश्च किरीटं चाङ्गदं च नूपुरं च परार्घ्यहारवलयकिरीटाङ्गदनूपुराणि यस्य स तथा तम् ॥ १५ ॥

काञ्चीगुणेनोल्लसन्ती श्रोणी यस्य स तथा तम् । भक्तानां हृदयाम्भोजमेव विष्टरं यस्य स तथा तम् ॥ १६ ॥

अपीच्य[2]दर्शनं प्राप्तषोडशवर्षवत् दृश्यमानं स्वतः कैशोरे वयसि द्वादशवर्षलक्षणे सन्तं वर्तमानम् ॥ १७ ॥

कीर्तन्यं कीर्तनीयं तीर्थं शुद्धं यशो यस्य स तथा तम् । पुण्यश्लोकाः ब्रह्मादयः । तेषां सृष्ट्यादिना यशः करोतीति पुण्यश्लोकयशस्करः तम् । मनो यावन्न च्यवते न चलति सर्वाङ्गध्यानसक्तं[3] यथा स्यात् तथा ध्यायेदित्यर्थः ॥ १८ ॥

हृदयगुहायां शेत इति गुहाशयम् । प्रेक्षणीयमीहितं चेष्टितं यस्य स तथा तम् ॥ १९ ॥

---

1-2 आवीच्य–च । 3 ध्यानशक्तं–च ग छ ।

**तस्मिन् लब्धपदं चित्तं सर्वावयवसंस्थितम् ।**
**विलोक्यैकत्र संयुञ्ज्यादङ्गे भगवतो मुनिः ॥ २० ॥**

**सञ्चिन्तयेद् भगवतश्चरणारविन्दं**
**वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम् ।**
**उत्तुङ्गरक्तविलसन्नखचक्रवाल-**
**ज्योत्स्नाभिराहतमहद्धृदयान्धकारम् ॥ २१ ॥**

**यच्छौचनिःसृतसरित्प्रवरोदकेन**
**तीर्थेन मूर्ध्न्यधिधृतेन शिवः शिवोऽभूत् ।**

---

एवं समग्राङ्गध्यानमुक्त्वा तदशक्तौ एकैकाङ्गध्यानप्रकारमाह—**तस्मिन्निति** । तस्मिन् हरौ समग्राङ्गे लब्धपदं प्राप्तास्पदं सर्वावयवसंस्थितं सर्वावयवं व्याप्य स्थितं चित्तं विलोक्य भगवतः सर्वावयवसंस्मरणाशक्तौ एकत्राङ्गे एकस्मिन्नवयवे पादमारभ्य उत्तमाङ्गपर्यन्तं चित्तं संयुञ्ज्यादित्यन्वयः । 'सर्वं स्मर्तुमशक्तः सन्नेकाङ्गं चिन्तयेद् बुधः' इति वचनात्[1] ॥ २० ॥

नन्वत्र पृथक् पृथगवयवस्थितं चित्तमेकत्र ऐक्येन भावनायां संयुञ्ज्यात् । न तु एकैकावयवध्यानं विधीयते अशक्तस्येत्याशङ्क्य एकैकाङ्गध्यानविधानादुक्तं युक्तमिति तत्प्रकारं वक्ति[2]—**सञ्चिन्तयेदित्यादिना** । भक्ताभीष्टप्रदानसामर्थ्यमस्यास्तीत्यतः संचिन्तनीयमिति भावेन तद् विशिनष्टि—**वज्रेत्यादिना** । उत्तुङ्गानि उन्नतानि रक्तानि विलसन्ति नखानि उत्तुङ्गरक्तविलसन्नखानि । तान्येव चक्रवालं चन्द्रमण्डलम् । तस्य ज्योत्स्नाभिराहतो निर्दलितो महतां योगिनां हृदयान्धकारोऽज्ञानाख्यो येन तत् तथोक्तम् । नखानां चक्रवालं आवलिः तस्या ज्योत्स्नाभिरिव निर्मलाभिः दीप्तिभिर्वा ॥२१॥

यस्य चरणारविन्दस्य शौचात् प्रक्षालनलक्षणात् निःसृता सरित्प्रवरा गङ्गा, तस्या उदकेन तीर्थेन पावनेन मूर्ध्न्यधिधृतेन अधिगतजटाबन्धे धृतेन शिवो महादेवः शिवोऽतिशयितपुण्यभाजनीभूतोऽभूत् ।

---

[1] तस्मिन् हरौ समग्राङ्गे लब्धपदं प्राप्तस्थानं सर्वावयवसंस्थितं युगपत् सर्वावयवविषयकतया स्थितं विलोक्यैकत्रावयवे संयुञ्ज्यात् । नन्विदमनुपपन्नं, समग्राङ्गध्यानकाल एकत्र मनोयोगस्यासङ्गतत्वात् । अतोऽत्राभिप्रेतं तात्पर्यं दर्शयति—सर्वस्मरणाशक्तावेकाङ्ग (ता) । अत्रान्तरंगज्ञापकमाह—'यावन्न च्यवते मनः' इत्युक्तत्वात् (ता) । तत्र यावन्न च्यवते मन इत्युक्त्या समग्रांगे मनसः च्यवनेऽसमग्रध्यानस्यार्थत उक्तत्वादित्याशयः। स्पष्टं च प्रमाणमाह—सर्वमिति (उदाहृतमुपरि) । ततश्च तत्र असक्तं विलोक्येति मूलं योज्यमिति भावः—इति यादुपत्यसू । [2] अवतारिकाया अभिप्रायस्त्वस्पष्टः ।

ध्यातुर्मनः शमलशैलनिसृष्टवज्रं
ध्यायेच्चिरं भगवतश्चरणारविन्दम् ॥ २२ ॥

ऊरू सुपर्णभुजयोरधिशोभमाना-
वोजोनिधी स्वतसिकाकुसुमावभासौ ।
व्यालम्बिपीतवरवाससि वर्तमान-
काञ्चीकलापपरिरम्भिनितम्बमम्ब ॥ २३ ॥

नाभिह्रदं भुवनकोशगुहोदरस्थं
यत्रात्मयोनिधिषणाखिललोकपद्मम् ।
व्यूढं हरिन्मणिवृषः स्तनयोरमुष्य
ध्यायेद् द्वयं विततहारमयूखगौरम् ॥ २४ ॥

---

ध्यातुः पुरुषस्य मनसि वर्तमानं यच्छमलं पापं तदेव शैलः पर्वतः तस्य विदारणाय नितरां सृष्टं क्लृप्तम् । वज्रमिव वज्रम् । लुप्तोपमा ॥ २२ ॥

जङ्घाद्वयं तु तच्चरणारविन्दान्तर्भूतं, जानुनी ऊर्वोरन्तर्भूते इति भावेनोरूपास्तिमाह —ऊरू इति । हरेरूरू ध्यायेदित्यन्वयः । सुपर्णो गरुडः तस्य भुजयोः अध्युपरि स्कन्धे, ओजसां बलानां निधी । 'ओजोऽवष्टम्भबलयोः' इत्यभिधानम् । स्वतसिकाकुसुमं, प्रोत्फुल्लकल्प[1]कुसुमं, तद्वदवभासो ययोस्तौ तथोक्तौ । हे अम्ब! अथ हरेर्नितम्बं ध्यायेदित्यन्वयः । व्यालम्बि च प्रपदान्तं[2] च वर्णेन पीतं च वरं च यद् वासः तद् व्यालम्बिपीतवरवासः । तत्र वर्तमानो यः काञ्चीकलापः सप्तगुणितरशनाभूषणं तस्य परिरम्भोऽस्यास्तीति, तदन्तर्वर्तमान इत्यर्थः ॥ २३ ॥

हरेर्नाभिह्रदं ध्यायेदित्यन्वयः । निम्नत्वद्योतनाय लोकपद्मजन्महेतुत्वाच्च ह्रदमिति । चतुर्दशभुवनानां कोशो गृहं भुवनकोशो ब्रह्माण्डं तत् गूहयति[3] ग्रसतीति भुवनकोशगुहं तच्चोदरं जठरं तत्र स्थितम् । यद्वा भुवनकोशनिगरणगुहास्थानीयोदरे तिष्ठतीति । यद्वा भुवनकोशगुहोदे ब्रह्माण्डगर्भोदके रत्वा स्थितम् । यत्र यस्मिन् नाभिह्रदे आत्मयोनेः चतुर्मुखस्य धिषणं धिष्ण्यं च अखिललोकात्मकं च पद्मम् आत्मयोनिधिषणाखिललोकपद्मं व्यूढमुत्पन्नमित्यर्थः । हरिन्मणिवृषः हरिन्मणिरिन्द्रनीलरत्नं तस्य प्रभां मुष्णतोऽमुष्य हरेः स्तनयोर्द्वयं ध्यायेत् । विततस्य विस्तृतस्य हारस्य मयूखेन गौरम् अतिधवलम् ॥ २४ ॥

---

[1] कलाप– ग घ । [2] आप्रपदीनं–छ । [3] गूहति–छ घ ग ङ ।

वक्षोऽधिवासमृषभस्य महाविभूतेः
पुंसां मनोनयननिर्वृतिमादधानम् ।
कण्ठं च कौस्तुभमणेरधिभूषणार्थं
कुर्यान्मनस्यखिललोकनमस्कृतस्य ॥ २५ ॥

बाहूंश्च मन्दरगिरेः परिवर्तनेन
निर्णिक्तबाहुवलयानधिलोकपालान् ।
सञ्चिन्तयेद् दशशतारमसह्यतेजः
शङ्खं च तत्करसरोरुहराजहंसम् ॥ २६ ॥

कौमोदकीं भगवतो दयितां स्मरेत
दिग्धामरातिभटशोणितकर्दमेन ।
मालां मधुव्रतवरूथगिरोपघुष्टां
चैत्यस्य तत्त्वममलं मणिमस्य कण्ठे ॥ २७ ॥

---

सर्वेषां पुंसां मनोनयनानां निर्वृतिमानन्दमादधानमुत्पादयन्तं महाविभूतेः लक्ष्म्याः अधिवासं-निवासस्थानमृषभस्य हरेर्वक्षो मनसि कुर्यादित्यन्वयः । कौस्तुभमणेरधिकं भूषणमेव अर्थः प्रयोजनं यस्य स तथा तं कण्ठं च मनसि कुर्यात् । अखिललोकनमस्कृतत्वात् ऋषभत्वं युक्तम् ॥ २५ ॥

हरेः बाहूंश्च दशशतारं च शङ्खं च सञ्चिन्तयेदित्यन्वयः । मन्दरगिरेः परिवर्तनेन परिभ्रमणेन निर्णिक्ताः शोभिताः बाहुवलयाः अङ्गदादयो येषां ते तथा तान् । अधिश्रिता लोकपाला इन्द्रादयो येषु ते तथा तान् । दशशतं सहस्रमराणि दलानि यस्य तत् तथोक्तम् । शत्रूणामसह्यं सोढुमशक्यं तेजो वीर्यं यस्य तत् तथोक्तम् । तस्य हरेः करा एव सरोरुहाणि पद्मानि, तेषु राजहंसमिव वर्तमानम् ॥ २६ ॥

भगवतो दयित कौमोदकीं गदाम् अस्य हरेः कण्ठे मालाम् अमलं मणिं च स्मरेतेत्यन्वयः । कथं-भूतां गदाम् ? अरातयो दैत्या एव भटा योद्धारः तेषां शोणितं रुधिरमेव कर्दमस्तेन दिग्धां रूषिताम् । अरातीनां भटानां वा । कथंभूतां मालाम् ? मधुव्रतानां नित्यसुखानां भृङ्गाकारमितानां भक्तानां वरूथाः समूहास्तेषां स्तुतिलक्षणया गिरोपघुष्टां शब्दायमानाम्[1] । कथंभूतं मणिम् ? चैत्यस्य चित्ताभिमानिनः चतुर्मुखस्य तत्त्वं स्वरूपम् । 'ब्रह्मा चित्ताभिमानेन चैत्यस्तन्नियमाद्धरिः । स च ब्रह्मा हरेः कण्ठे कौस्तुभत्वेन भासते ' इति वचनात् ॥ २७ ॥

---

[1] मधुव्रतानां भ्रमराणां वरूथस्य समूहस्य गिरोपघुष्टां नादितामिति यादुपत्यम् ।

भृत्यानुकम्पितधियेह गृहीतमूर्तेः
सञ्चिन्तयेद् भगवतो वदनारविन्दम् ।
यद् विस्फुरन्मकरकुण्डलवल्गितेन
विद्योतितामलकपोलमुदारहासम् ॥ २८ ॥

यच्छ्रीनिकेतमलिभिः परिसेव्यमानं
भूत्या स्वया कुटिलकुन्तलवृन्दजुष्टम् ।
मीनद्वयश्रियमधिक्षिपदब्जनेत्रं
ध्यायेन्मनोमयमतन्द्रित उल्लसद्भ्रु ॥ २९ ॥

तस्यावलोकमधिकं कृपयातिघोर-
तापत्रयोपशमनाय निसृष्टमक्ष्णोः ।

---

भगवतो वदनारविन्दं सञ्चिन्तयेदित्यन्वयः । किंविशिष्टस्य ? इह जगति सत्सु भृत्येषु अनुकम्पितया धिया द्रवीभूतचित्ततया गृहीता मूर्तिः आकारविशेषो येन स तथा तस्य । वदनारविन्दस्य चिन्तनीयत्वे गुणानाह—**यदिति** । यद् वदनारविन्दं विस्फुरती किंचित्सञ्चलती मकरकुण्डले विस्फुरन्मकरकुण्डले तयोर्वल्गितेन नृत्तेन विद्योतितावमलौ च कपोलौ यस्मिन् तत् तथा । उदारो[1] निर्दुष्टो हासो यस्मिन् तत् तथा ॥ २८ ॥

यच्च श्रीनिकेतं परममङ्गलायतनम् । यच्च सौरभ्यलोलैरलिभिः परितः सेव्यमानम् । यच्च स्वया स्वरूपभूतया भूत्या श्रिया सेवितम् । 'साक्षाच्छ्रीस्तु हरेरूपमिन्दिरा तु तदाश्रयात्' इति वचनात् पत्नीभूतायाः श्रीत्वं भगवदाश्रयादित्यतः स्वयेत्युक्तम् । यच्च कुटिला वक्राः कुन्तलाः ललाटरङ्गे नृत्यन्तः केशविशेषाः तेषां वृन्देन समूहेन जुष्टं संवृतम् । किञ्च अब्जनेत्रं पद्मदलसदृशनेत्रं ध्यायेदित्यन्वयः । कीदृशम् ? मीनद्वयस्य आयामत्वपृथुमध्यत्वतनूभयभागत्वश्वेतत्वादिलक्षणं श्रियं कान्तिविशेषमधिक्षिपत् धिक्कुर्वत् । किञ्च मनोमयं ध्यातृसङ्कल्पनात्मकम्[2] । उल्लसन्ती भ्रूर्यस्य तत् तथोक्तम् । अतन्द्रितो निरालस्य इत्यनेन ध्यानस्य निरन्तरं कर्तव्यत्वं सूचयति ॥ २९ ॥

हृदयगुहायां निहितस्य हरेरवलोकं विततभावनया पूर्णभक्त्या चिरं ध्यायेदित्यन्वयः । कटाक्षनिरीक्षणं विशिनष्टि—**अधिकमिति** । अधिकं कृपया अनन्यसाध्यकार्यसाधनपटीयस्या करुणया अति-

---

[1] उदारो भक्ताभीष्टदानशूरो हासो यस्मिन् तदिति यादुपत्यम् ।

[2] मीनद्वयस्य श्रियं कान्तिमधिक्षिपती धिक्कुर्वती अब्जसदृशे नेत्रे यस्मिन् तत् तथा । नित्यसापेक्षत्वात् समासः । मनोमयं प्राचुर्येण मनोविषयं, मनोहरमिति यावदिति यादुपत्यम् ।

स्निग्धस्मितानुगुणितं विपुलप्रसादं
ध्यायेच्चिरं विततभावनया गुहायाम् ॥ ३० ॥

हासं हरेरवनताखिललोकतीव्र-
शोकाश्रुसागरविशोषणमत्युदारम् ।
संमोहनाय रचितं निजमाययास्य
भ्रूमण्डलं मनुसुते मकरध्वजस्य ॥ ३१ ॥

ध्यानायनं रहसि तद् बहुलाधरोष्ठ-
भासाऽरुणायिततनुद्विजकुन्दपङ्क्ति ।
ध्यायेत् स्वहृत्कुहरकेऽवसितस्य विष्णो-
र्भक्त्यार्द्रयार्पितमना न पृथग् दिदृक्षेत् ॥ ३२ ॥

---

घोरस्य तापत्रयस्य आध्यात्मिकादिलक्षणस्य उपशमनाय विनाशाय नितरां सृष्टं निर्मितम् । किंचित् स्निग्धेन स्मितेनानुगुणितं सान्द्रीकृतं, विपुलः पुष्कलः प्रसादः प्रसन्नता यस्य स तथा तम् ॥ ३० ॥

हरेः हासं मन्दस्मितं च ध्यायेदित्यन्वयः । कीदृशम् ? अवनतस्य अखिलस्य लोकस्य यस्तीव्रोऽत्युल्बणः शोकः तापत्रयोद्भूतः, तन्निमित्तानि अश्रूणि यानि, तेषां सागरः समुद्रस्तं विशेषेण शोषयतीति अवनताखिललोकतीव्रशोकाश्रुसागरविशोषणस्तम् । अत्युदारमनुग्रहाभिप्रायम् । किञ्च हे मनुसुते निजमायया स्वेच्छया मकरध्वजस्य कामस्य संमोहनाय रचितम् अस्य हरेर्भ्रूमण्डलं चिन्तयेदित्यन्वयः ॥ ३१ ॥

एवमेकैकावयवध्यानानायास[1]चित्तस्य समग्रावयवविशिष्टवपुर्ध्यानं निर्दिशति—**ध्यानायनमिति**। रहस्येकान्ते स्थित्वा स्वहृत्कुहरके निजहृदयगुहायामवसितस्य निश्चितावस्थानस्य विष्णोः तद् ध्यानायनमेकैकावयवध्यानास्पदं वपुर्ध्यायेदित्यन्वयः । किंविशिष्टम् ? बहुलया सान्द्रया अधरोष्ठभासा अरुणायिता आरक्तवद् वर्तमानाश्च ते तनवः सूक्ष्माग्राश्च ते द्विजा दन्ता एव कुन्दकुड्मलानि तेषां पङ्क्तिर्यस्मिन् तत् तथोक्तम् । ध्यातुरितिकर्तव्यतामाह—**भक्त्येति** । आर्द्रया स्नेहलक्षणजलक्लिन्नया भक्त्या यस्मिन्नेवार्पितमनाः स्थिरीकृतचित्त एवं ध्यायन्, तदेव दिदृक्षेत् द्रष्टुमिच्छेत् । तदितरन्मुक्तिदातृत्वेन न चिन्तयेदित्यन्वयः ॥ ३२ ॥

---

[1] ध्यानायास–घ । ध्यानानुसञ्जितचित्तस्य–प्र ।

एवं हरौ भगवति प्रतिलब्धभावो
भक्त्या द्रवद्धृदय उत्पुलकप्रमोदः ।
औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमान-
स्तच्चापि चित्तबडिशं शनकैर्वियुङ्क्ते ॥ ३३ ॥

मुक्ताश्रयं यर्हि निर्विषयं स्वचित्त
निर्वाणमृच्छति मनः सहसा यथार्चिः ।
आत्मानमत्र पुरुषोऽव्यवधानमेक-
मन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥ ३४ ॥

---

एवं ध्यानारूढस्य तत्फलं वक्ति—**एवं हराविति** । एवमुक्तप्रकारेण हरौ भगवति प्रतिलब्धो भावो मनो यस्य स तथा । द्रवद्धृदयः तस्मिन्नेकस्मिन् एव लीयमान[1]हृदयः, उत् उत्कृष्टौ पुलकप्रमोदौ रोमाञ्चहर्षौ यस्य स तथा । औत्कण्ठ्येनाविर्भूतया बाष्पकलया अश्रुधारया मुहुरर्द्यमान आर्द्रीक्रियमाणः पुमान् यच्चित्तबडिशं लक्ष्यं प्रति प्रायुङ्क्त तच्चित्तबडिशमपि शनकैर्वियुङ्क्ते चिरपरिचयात्[2] स्ववशत्वेन विशिष्टं योजयति, अप्रयत्नेन ध्यानान्तरं समाधिं करोति ॥ ३३ ॥

प्राकृतान्तःकरणे नष्टे भगवदितरस्मरणत्यागेन निरायाससमाधिफलमप्रयत्नेन यद् हरिध्यानं तत्फलं ब्रूते—**मुक्ताश्रयमिति** । यथार्चिर्दीपः तैलवर्त्यभावे सहसा नश्यति तथा यर्हि यदा स्वचित्तं स्वरूपचिति जीवचैतन्ये ततं तन्मयमित्यर्थः मनो निर्विषयं शब्दादिविषयेभ्यो निर्गत्य मुक्ताश्रयं नित्यमुक्तभगवद्विषयं भवति तदा निर्वाणमृच्छति स्वचिदभिमानेन स्थूलसूक्ष्मशरीराभिमानं जहति, अत्र अस्यामवस्थायां पुरुष उपासको जीव आत्मानं परमात्मानमेकं सर्वोत्तमम् अव्यवधानं स्वस्य च तस्य च माया लक्षणभित्तिराहित्येन अन्वीक्षते करतलामलकवत् अपरोक्षीकरोति । यद् बिम्बादि द्रष्टव्यं सर्वं तत् पश्यतीत्यर्थः । अतोऽपरोक्षज्ञानं तत्फलमिति । प्रतिबन्धकसंसारसद्भावे कथं स्वबिम्बादिदर्शनम् ? अत्राह—**प्रतिनिवृत्तगुणप्रवाह इति** । प्रतिनिवृत्तो गुणप्रवाहः संसारधर्मो यस्मात् स तथोक्तः । यदा बाह्यमनो निर्वाणं विनाशमृच्छति यथार्चिर्दीपज्वाला तैलाद्यभावे, तदा स्वचित्तं स्वरूपचैतन्यं स्वरूपान्तःकरणं निर्वाणं परमानन्दमाप्नोति यथा स्तिमिततैलपात्रे स्थितो मनुष्याद्यभावे दीपो ज्वलनाख्यानन्दमाप्नोति । ततः किम् ? अत्राह — **आत्मानमिति** । अत्र प्रज्वलित[3]दीपवदन्तःकरणे विजृम्भमाणे सति घटादिपदार्थमिव एकं प्रधानमव्यवधानं स्वरूपाच्छादकमायाव्यवधानरहितमात्मानं स्वरूपं, स्वस्य प्रियतमं

---

[1] आर्द्रीयमान-ग । [2] चित्तपरिचयात्–च । [3] ज्वलन-क ।

सोऽप्येतया चरमया मनसो निवृत्त्या
तस्मिन् महिम्न्यवसितः सुखदुःखबाह्ये ।
हेतुत्वमप्यसति कर्तरि दुःखयोर्न
स्वात्मन् विधत्त उपलब्धपरात्मकाष्ठः ॥ ३५ ॥

देहं तु तं न चरमं स्थितमुज्झितं वा
सिद्धो विपश्यति यतोऽध्यगमत् स्वरूपम् ।
दैवादुपेतमथ दैववशादपेतं
वासो यथा परिकृतं मदिरामदान्धः ॥ ३६ ॥

---

परमात्मानं चानु सृष्ट्यादिलक्षणवत्तया ईक्षते इति वा योजनाभेदः[1] ॥ ३४ ॥

जीवन्मुक्त्यवस्थामाह—**सोऽपीति** श्लोकद्वयेन । स जीवन्मुक्तोऽपि भगवन्तमपरोक्षं पश्यन्नेतया मनसो निवृत्त्या बाह्यन्तःकरणविनाशलक्षणया पुरा योऽज्ञानेनावृतः पश्चाद् ब्रह्मज्ञानेन प्रकाशितः तस्मिन् महिम्नि स्वरूपज्ञानानन्दलक्षणेऽवसितोऽहं निर्दोषज्ञानानन्दादिरूपो भगवदधीनोऽस्मीति निश्चितः स्वात्मन् स्वात्मनि दुःखयोर्दुर्नाम्नो दुःखस्य खनाम्नः सुखस्य हेतुत्वं न विधत्तेऽभिमानं न करोति । 'दुर्दुःखमिति विज्ञेयं खं सुखं च तयोर्यतः । प्रदाता परमो विष्णुस्तस्माद् दुःखदनामवान्' इति वचनात् । सुखदुःखयोर्वा कर्तरि बाह्यान्तःकरणे असति नाशं गते । ननु मनसो निवृत्तेः सुषुप्तावपि संभवात् दुःखाभिमानाभावविशेषवचनं कथमित्यत उक्तम्—**चरमयेति** । चरमया संसारावसानजातया ॥ ३५ ॥

एवमपरोक्षज्ञानिनो देहपोषणादौ प्रयत्नोऽपि नास्ति सच्चिदानन्दात्मकनारायणसन्दर्शनसुधासमुद्रमग्नत्वादित्याह—**देहं त्विति** । येन देहेन स्वयं सिद्धोऽभूत् स सिद्धः तं चरमं देहं न विपश्यति मदीयोऽयमिति नाभिमन्यते । किन्तु कपालमुक्तनारिकेलफलवत् देहात्मनो विविक्तत्वात् हरिमेव

---

[1] यर्हि यदा मनो निर्विषयं विषयेभ्यो निर्गत्य मुक्ताश्रयं नित्यमुक्तविष्णुविषयम्, उक्तसमाधियुक्तमिति यावत्, स्वचित्तं जीवचैतन्ये ततं भवति, चिदानन्दात्मके स्वरूपदेहे एव ममायं देह इत्यभिमानयुक्तं भवतीति यावत्, तेन स्वरूपदेहाभिमानेन सहसा निर्वाणमृच्छति जडशरीराभिमानं जहाति । मनोगतो जडशरीराभिमानो नश्यतीत्यर्थः । अत्र दृष्टान्तमाह—यथेति । यथाऽर्चिर्ज्वाला सहसेन्धनाद्यभावे निर्वाणमृच्छति तथैवेति । अत्रास्यामवस्थायां पुरुष उपासको जीव एकं सर्वोत्तमम् अव्यवधानं समाधिपरिपाकेन परमाच्छादिकाया व्यावृत्तित्वेन तत्कृतव्यवधानशून्यमात्मानं स्वबिम्बादिरूपं परमात्मानमीक्षतेऽपरोक्षतया पश्यति । अनु पश्चादारब्धकर्मक्षये सति प्रतिनिवृत्तः गुणप्रवाहः यस्य स तथोक्तः । अप्रारब्धकर्मनिर्मितदेहपरम्पराशून्यो भवतीत्यर्थः—इति यादुपत्यम् ।

देहोऽपि दैववशगः खलु कर्म यावत्
स्वारम्भकं प्रतिसमीक्षत एव सासुः ।
तं सप्रपञ्चमधिरूढसमाधियोगः
स्वाप्नं पुनर्न भजते प्रतिबुद्धवत् सः ॥ ३७ ॥

यथा पुत्राच्च वित्ताच्च पृथङ् मर्त्यः प्रतीयते ।
अप्यात्मत्वेनाभिमताद् देहादेः पुरुषस्तथा ॥ ३८ ॥

यथोल्मुकाद् विस्फुलिङ्गाद् धूमाद् वापि स्वसम्भवात् ।
अप्यात्मत्वेनाभिमताद् दाहकोऽग्निः पृथङ् मतः ॥ ३९ ॥

---

पश्यति । अनेन यतोऽध्यगमत् स्वरूपमिति विवृतम् । अनभिमानप्रकारमाह—**स्थितमिति**। स्वप्रेरणालक्षणगुरुत्वात् स्थितम् । तदभावादुज्झितं पतितमिति[1] । तत्रोदाहरणमाह— **दैवादिति** । यथा मदिरापानेनोत्पन्नमदेन अन्धः पुमान् दैवादुपेतं दैववशादपेतं परिकृतं परिवृतं वासो नु जानाति तथेत्यर्थः ॥ ३६ ॥

एवंविधस्य ज्ञानिनो देहस्तु ज्ञानोदयसमय एव पतत्युत कञ्चित्कालं प्रतीक्षत इति संशये प्रारब्धकर्मक्षय एव देहपातसमय इत्याशयेनाह– **देहोऽपीति** । यावत् स्वारम्भकं कर्म तावद् देहोऽपि सासुः सेन्द्रियः प्रतीक्षते । तस्मिन् स्वारम्भके क्षीणेऽधिरूढसमाधियोगः प्राप्तसमाधियोगफलः सप्रपञ्चमिन्द्रियादिप्रपञ्चसंहितं देहं पुनर्न भजते[2] तद्रक्षणादौ न प्रयतत इत्यर्थः । कथमिव ? प्रबुद्धवत् । यथा स्वप्नादुत्थितः स्वाप्नं स्वप्नदृष्टं देहं पुनर्न भजते तथेति ॥ ३७ ॥

देह एव सर्वेषामहं गच्छामीत्यात्मत्वेनाभिमतो यतः तस्मात् तदभजनं मरण एव भवतीति देहात्मत्वमतनिरासायाह—**यथेति** । यथा पुत्रादेरात्मत्वेनाभिमतात् मर्त्यो मरणशीलो देहः पृथक् प्रतीयते तथा पुरुषो जीव आत्मत्वेनाभिमताद् देहाद् भिन्न इत्यन्वयः । अपिपदेन देहात्मवादस्य निन्दितत्वं सूचयति । 'रेतो धातुर्वटकणिका' इत्यादिवाक्यात् ॥ ३८ ॥

इदानीं जीवपरमात्मनोरपि भेद एवेत्याह—**यथोल्मुकादिति** । यथाऽत्मत्वेनाभिमतादुल्मुकादेः तद्दाहकोऽग्निः पृथङ्मतः । तथा भूतेन्द्रियान्तःकरणात् पञ्चभूतदशेन्द्रियमनोभ्यः प्रधानात् प्रकृतेः

---

[1] स्थितं स्वप्रेरणयैकत्र स्थितं, उज्झितं तत्स्थानरहितं च न पश्यतीति यादुपत्यम् ।

[2] पुनर्न भजते न प्राप्नोतीत्यर्थः—इति यादुपत्यम् ।

भूतेन्द्रियान्तःकरणात् प्रधानाज्जीवसंज्ञितात् ।
आत्मा तथा पृथग् द्रष्टा भगवान् ब्रह्मसंज्ञितः ॥ ४० ॥

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
ईक्षेतानन्यभावेन भूतेषु च तदात्मताम् ॥ ४१ ॥

स्वयोनिषु यथा ज्योतिरेकं नाना प्रतीयते ।
योनीनां गुणवैषम्यात् तथात्मा प्रकृतौ स्थितः ॥ ४२ ॥

तस्मादिमां स्वां प्रकृतिं दैवीं सदसदात्मिकाम् ।
दुर्विभाव्यां पराभाव्य स्वरूपेणावतिष्ठते ॥ ४३ ॥

---

जीवसंज्ञितात् संसारिणश्च द्रष्टा सर्वज्ञो ब्रह्मसंज्ञितः आत्मा परमात्मा भगवान् पृथगेवेत्यन्वयः ॥३९, ४०॥

भिन्नेषु जीवेषु स्थितस्य परमात्मन उपास्तिप्रकारं कथयति— **सर्वभूतेष्विति** । सर्वभूतेष्वन्तर्यामित्वेन आत्मानं हरिमीक्षेत सर्वभूतान्यात्मनि हरावाधारत्वेनेक्षेत[1] । किञ्च अनन्यभावेन सर्वान्तर्यामिरूपाण्यभेदेन ईक्षेत । अभेदेनेत्युक्तिं विहाय अनन्यभावेनेति वचनमनर्थहेतुत्वाद् रूपाणा[2]मन्यत्वभावना सर्वथा न कार्येति द्योतनाय । किञ्च भूतेष्वपि जीवेष्वपि तदात्मतां तस्य हरेरादानादिकर्तृतां चेक्षेत । अनेन अनुग्राह्यानुग्राहकत्वद्योतनेन जीवपरमात्मनोर्भेदः पारमार्थिक इत्युक्तं भवति । आदानादिकर्तृत्वं च भूतविषये न स्वविषये, नित्यतृप्तत्वात् ॥ ४१ ॥

अधिष्ठानवैलक्षण्याद् आधिष्ठातृरूपाणां वैलक्षण्यं न शङ्कनीयमितीममर्थं सदृष्टान्तं समर्थयते— **स्वयोनिष्विति** । यथैकं ज्योतिरग्न्याख्यं स्वयोनिषु कारणेषु काष्ठेषु योनीनां दारूणां गुणवैषम्याद् आर्द्रशुष्कत्वादिवैलक्षण्यात् नानाविधलक्षणमिव[3] प्रतीयते तथा प्रकृतौ प्रकृतिकार्ये जगति स्थित आत्मा हरिः विलक्षण इव प्रतीयते, क्वचिद् बहुसामर्थ्याभिव्यक्तिमान् क्वापि अल्पसामर्थ्याभिव्यक्तिमानित्यादिरूपेण ॥ ४२ ॥

मथितार्थमाह—**तस्मादिति** । यस्मात् सर्वस्मादन्यः श्रीनारायणः तस्मात् स्वां स्वाधीनां जडप्रकृतिं देवीं कार्यरूपेण द्योतमानां तदभिमानिनीं देवीं चित्प्रकृतिं च सदसदात्मिकां कार्यकारणव्यापिनीं दुर्विभाव्यां ब्रह्मादिभिरपि निरूपयितुमशक्यां पराभाव्यातिक्रम्य तदुत्तमत्वेनैव स्थित्वा निरस्तसाम्यातिशयेन सर्वदोषविवर्जितेन सर्वगुणपूर्णेन त्रिकालेष्वेकप्रकारेण स्वरूपेणावतिष्ठत इत्यन्वयः । तदुक्तम् 'सर्वभूतस्थमीशेशं जेतारं प्रकृतेरपि । अविशेषं सदैवैकं चिन्तयन् विप्रमुच्यते' इति ॥ ४३ ॥

---

[1] आश्रितत्वनेक्षेतेत्यर्थः । [2] तद्रूपाणां–क । [3] लक्षणमिति–घ ।

**अन्वयव्यतिरेकाच्च साक्ष्यात्मा व्यभिचारिणः ।**
**वैतथ्यं व्यभिचारं च निद्रान्तेऽस्यानुचिन्तयेत् ॥ ४४ ॥**

इति श्रीमद्भागवते तृतीयस्कन्धे एकोनत्रिंशोऽध्यायः ।

॥ अथ त्रिंशोऽध्यायः ॥

**देवहूतिरुवाच —**
**लक्षणं महदादीनां प्रकृतेः पुरुषस्य च ।**
**स्वरूपं लक्ष्यतेऽमीषां येन तत् पारमार्थिकम् ॥ १ ॥**

**यथा साङ्ख्येषु कथितं यन्मूलं तत् प्रचक्षते ।**
**भक्तियोगस्य मे मार्गं ब्रूहि विस्तरशः प्रभो ॥ २ ॥**

---

सिंहावलोकनन्यायेन उपासकस्येत्थम्भावान्तरं वक्ति—**अन्वयेति** । अन्यदेशेऽन्यरहितदेशेऽन्यकालेऽन्यरहिते काले च सत्त्वलक्षणादन्वयव्यतिरेकात् सिद्धो यश्च साक्षाद् ईक्षत इति साक्षी[1] । 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुतेः, आत्मा 'यच्चाप्नोति यदादत्ते' इत्यादेः सर्वव्यापी परमात्मेति यल्लक्षणं तल्लक्षणव्यभिचारिणः अनित्यस्यास्य प्रपञ्चस्य वैतथ्यं निष्प्रयोजनत्वं व्यभिचारमनित्यत्वं च निद्रान्ते ब्राह्मे मुहूर्ते उत्थाय चिन्तयेत्, एतद्धरिप्रसादजनकमिति शेष इत्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे एकोनत्रिंशोऽध्यायः ।

॥ अथ त्रिंशोऽध्यायः ॥

एवं तावज्ज्ञानात् मोक्षो, ज्ञानं चाष्टाङ्गयोगेन प्रचितया भगवदुपासनया जायत इत्यभिहितम् । अधुना भक्तियोगस्य तारतम्यमभिधीयतेऽस्मिन्नध्याये । तत् प्रसञ्जयितुं सामान्यतो ज्ञानमपि विविच्य ज्ञातुं महदादिलक्षणं पृच्छति देवहूतिः— **लक्षणमित्यादिना** । येन लक्षणेन अमीषां महदादीनां परमार्थिकं स्वरूपं लक्ष्यते ज्ञायते ॥ १ ॥

वक्तव्यार्थे नियममाह—**यथेति** । यथा साङ्ख्येषूक्तं तथा कथितं, महदादिलक्षणज्ञानं पुरुषार्थोपयोगि स्यादिति शेषः । अन्यशास्त्रोक्तं किं न स्यादिति तत्राह[2]—**यन्मूलमिति** । यत्साङ्ख्यमूलं[3]

---

[1] यः साक्षात् सर्वसुकृतदुष्कृतादिकमीक्षत इति साक्षी, आत्माऽऽदानादिकर्ता हरिरन्वयव्यतिरेकात् सिद्धोऽस्ति । प्रपञ्चसहितदेशकालयोस्तद्रहितदेशकालयोश्च हरेः सत्त्वादिति यादुपत्यम् ।

[3] इत्यत्राह-ग । [3] यत् साङ्ख्यं मूलं प्रतिपादकं यस्य तत् तथेति यादुपत्यम् ।

विरागो येन पुरुषो भगवन् सर्वतो भवेत् ।
आचक्ष्व जीवलोकस्य विविधाः कर्मसंसृतीः ॥ ३ ॥

कालस्येश्वररूपस्य परेषां च परस्य ते ।
स्वरूपं बत कुर्वन्ति यद्धेतोः कुशलं जनाः[1] ॥ ४ ॥

लोकस्य मिथ्याभिमतेरचक्षुषश्चिरं प्रसुप्तस्य तमस्यनाश्रये ।
श्रान्तस्य कर्मण्यनुविद्धया धिया त्वमाविरासीः किल योगभास्करः ॥

तल्लक्षणं प्रचक्षते, प्राज्ञा इति शेषः, तल्लक्षणं मम ब्रूहित्यन्वयः । यद्वा यथा यथावत् साङ्ख्येषूक्तं तथा कथितं मे ब्रूहीत्यन्वयः । साङ्ख्यमूलत्वाल्लक्षणस्येत्यर्थ इति । उक्तमपीममर्थं विस्तरेण ब्रूहीत्याह —**भक्तियोगस्येति** । मार्गं प्रकारम् ॥ २ ॥

न केवलं भक्तियोगमार्गेणालं, वैराग्याभावे तस्य चञ्चलत्वसम्भवात् । अतो विरक्तिमता भाव्यम् । अतः तत्प्रकारोऽपि वक्तव्य इत्याह—**विराग इति** । पुरुषः सर्वतो विरागो विगतरागो भवेदिति येनातो जीवलोकस्य गर्भवासादिलक्षणाः विविधाः कर्मसंसृतीर्मम आचक्ष्वेत्यन्वयः । यद्वा येन संसृतीनां ज्ञानेन विरागो भवेत् तादृज्ज्ञानोत्पत्तिम् आचक्ष्वेति ॥ ३ ॥

कालस्वरूपज्ञानमपि पुरुषार्थोपयोगीति तद्विषयप्रश्नं करोति —**कालस्येति** । जनाः यद्धेतोर्यस्य कालनाम्नस्तव भयनिमित्तात् कुशलं कुर्वन्ति, परेषामुत्तमानां सकाशादपि परस्योत्तमस्य तस्य ते तव ईश्वररूपस्य ऐश्वर्यमूर्तेः कालस्य स्वरूपमाचक्ष्वेत्यन्वयः । बत अद्भुतम् । स्त्रीत्वादिदं बोद्धुमशक्यम् । तथापि त्वत्प्रसादात् शक्ता स्यामित्यामन्त्रयामि । 'बत त्वामन्त्रणेऽद्भुते' इति यादवः ॥ ४ ॥

ऋषिदेवादिष्वेकं प्रति अयं प्रश्नः किं न स्यात् ? किमिति मां प्रति ? इत्याशङ्क्य तस्य तादृशप्रश्नवचन[2]प्रभुत्वाभावादिह लोके तव ज्ञानप्रवर्तनायावतीर्णत्वाच्च त्वमेव समर्थ इति भावेनाह— **लोकस्येति** । लुक् प्रकाशने इति धातोः प्रकाशो ज्ञानं लोकस्य परमात्मज्ञानप्राप्तियोग्यस्य जनस्य । संसारान्मुमुक्षोरित्यर्थः । हिताय योगभास्करः ज्ञानयोगादित्यः त्वमाविरासीः । किल लोकवेदादि-वार्ता, अन्यस्येदृक्सामर्थ्याभावादिदं संभावितं च, 'वार्तासम्भावयोः किल' इति च । अवतार-साफल्यमेवोपपादयति—**अचक्षुष इत्यादिना** । प्रत्यक्षतो दृश्यमानत्वाच्चक्षुर्हीनत्ववचनं व्याहतमिवे-त्यत उक्तम्—**चिरं प्रसुप्तस्येति** । अनाश्रयेऽपारे तमस्यविद्यालक्षणेऽनादित एव प्रसुप्तस्य शयानस्य ।

[1] प्रजाः–ग । [2] प्रश्नप्रतिवचनेत्यर्थः ।

मैत्रेय उवाच —

इति मातुर्वचः श्लक्ष्णं प्रतिनन्द्य महामुनिः ।
आबभाषे कुरुश्रेष्ठ प्रीतस्तां करुणार्दितः ॥ ६ ॥

भगवानुवाच —

भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते ।
स्वभावगुणमार्गेण पुंसां भावो विभिद्यते[2] ॥ ७ ॥

अभिसन्धाय यो हिंसां दम्भं मात्सर्यमेव च ।
संरम्भी भिन्नदृग् भावं मयि कुर्यात् स तामसः ॥ ८ ॥

विषयानभिसन्धाय यश ऐश्वर्यमेव च ।
अर्चादावर्चयेद् यो मां पृथग्भावः स राजसः ॥ ९ ॥

---

तत्फलमाह - **मिथ्याभिमतेरिति** । [1]बोधकाभावादन्यथाज्ञानिनो देहाद्यभिमानित्वात् । एतत्फलमाह— **श्रान्तस्येति** । कर्मसु पुण्यपापलक्षणेषु अनुविद्धयानुरक्तया धिया श्रान्तस्यानवस्थितेरिति ॥ ५ ॥

मातुर्वचः श्रुत्वा कपिलेन भगवता किमुत्तरं प्रत्यूचे इतीतरचोद्यं परिहरति—**मैत्रेय उवाच**[3] । अर्द गताविति धातोः करुणामर्दितो गतः । अनेन करुणैव वक्तव्यत्वे कारणमित्यसूचि ॥ ६ ॥

पुरुषार्थसाधनेषु भक्तियोगस्य प्राधान्यादत्र प्रथमतः तत्प्रकारं निरूपयति—**भक्तियोग इति** । भामिनि सौन्दर्यादिगुणपूर्णे[4] मन्मातः । शास्त्रमार्गैर्भाव्यते निरूप्यते । बाहुविध्ये निमित्तमाह— **स्वभावेति** । तामसादिस्वभावोद्बोधकसत्त्वादिगुणभेदेन भावो भक्तिर्विभिद्यते तामसादिभेदेन नाना भवतीत्यर्थः ॥ ७ ॥

बाहुविध्यं दर्शयति — **अभिसन्धायेति** । यो हिंसां परोपद्रवं दम्भं धर्मध्वजवृत्तिं मात्सर्यं चाभिसन्धाय मनसि कृत्वा हरिभक्तेषु संरम्भी गूढद्वेषो भिन्नदृक् वस्त्वयथार्थदर्शी मयि भावं कुर्यात् स तामसभक्त इत्युच्यत इत्यन्वयः ॥ ८ ॥

शब्दादिविषयान् दिक्षु व्याप्तं यशः छत्रचामराद्यैश्वर्यं वा मनसाभिसन्धाय सङ्कल्प्य योऽर्चादौ प्रतिमादौ मामर्चयेत् स पृथग्भावः तद्रूपाणां भेददर्शी । अर्चादिस्थितानां तेषां रूपाणां भेदं पश्यन्

---

[1] मिथ्याभिमतेः मिथ्याभूतस्वातन्त्र्याभिमानयुक्तस्येति यादुपत्यम् । [2] विधीयते-ङ । विपद्यते-ग ।
[3] भगवता किमुदास्तमुत प्रत्यूच उतेत्यान्तरं चोद्यं परिहरति मैत्रेय इत्याह—मैत्रेय इति-क ।
[4] गुणमूर्ते-च । भो भामिनि संसाराख्ये वैरिणि कोपयुक्त सुन्दरीति यादुपत्यम् ।

कर्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम् ।
यजेद् यष्टव्यमिति वाऽपृथग्भावः स सात्त्विकः ॥ १० ॥

मद्गुणश्रुत[1]मात्रेण मयि सर्वगुणाश्रये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥ ११ ॥

लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥ १२ ॥

सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमित्युत[2] ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥ १३ ॥

स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ।
येनातिव्रज्य त्रिगुणान् मद्भावायोपपद्यते ॥ १४ ॥

---

राजसो भक्तः ॥ ९ ॥

यः कर्मनिर्हारं पापक्षयमुद्दिश्य मां यजेत् परस्मिन् सर्वोत्तमे मयि तदर्पणं कर्मार्पणं चोद्दिश्य यजेत्, यष्टव्यं विहितत्वात् ममेदं कर्तव्यमिति वा मां यजेत्, अपृथग्भावः मद्रूपाणामभेददर्शी स सात्त्विको भक्तः । राजससात्त्विकयोर्भेदे पृथगपृथग्भावावेव निमित्तं नत्वर्चादावर्चनम् । अज्ञस्य विहितत्वात् तज्ज्ञस्य गुणहेतुत्वात् । तदुक्तम्—'अज्ञोऽर्चयेदेवार्चायामन्यथा दोषवान् भवेत् । ज्ञस्त्वर्चयन् सुगुणवानन्यथा दोषवान् न तु' इति ॥ १० ॥

निर्गुणभक्तिलक्षणं वक्ति—**मद्गुणेति** । यथाम्बुधौ गङ्गाम्भसो गतिरविच्छिन्ना तथा मद्गुण श्रवणमात्रेण यस्य सर्वगुणाश्रये सर्वगुणानामाश्रयो निषेवणं यस्मिन् स तथा, सर्वगुणमूर्तिरित्यर्थः, तस्मिन् मयि मनोगतिरविच्छिन्ना निरन्तरा ॥ ११ ॥

तेन क्रियमाणस्य निर्गुणस्य भक्तियोगस्य लक्षणमुदाहृतं हीत्यन्वयः । आत्यन्तिकभक्तिलक्षणं ब्रूते—**अहैतुकीति**[3] ॥ १२ ॥ सार्ष्टिः समानैश्वर्यम् ॥ १३ ॥

तद्भक्तिफलमाह—**येनेति** । येन आत्यन्तिकभक्तियोगेन त्रिगुणान् लिङ्गशरीरेन्द्रियाणि अतिव्रज्यातिक्रम्य सन्त्यज्येत्यर्थः, मद्भावाय चिदानन्ददेहेन मयि सत्तायै औन्नत्यस्थित्यै उपपद्यते योग्यो भवतीत्यर्थः ॥ १४ ॥

---

[1] श्रुति-च । [2] अप्युत-च । [3] अहैतुकी फलानुसन्धानशून्येति यादुपत्यम् ।

निषेवितेनानिमित्तेन[1] स्वधर्मेण महीयसा ।
क्रियायोगेन शस्तेन[2] नातिहिंस्रेण नित्यशः ॥ १५ ॥

मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः ।
भूतेषु मद्भावनया सत्त्वेनासङ्गमेन च ॥ १६ ॥

महतां बहुमानेन दीनानामनुकम्पया ।
मैत्र्या वा [3]चात्मतुल्येषु यमेन नियमेन च ॥ १७ ॥

आध्यात्मिकानुश्रवणान्नामसङ्कीर्तनाच्च मे ।
आर्जवेनार्यसङ्गेन निरहंक्रियया तथा ॥ १८ ॥

मद्धर्मेणापि यर्ह्येतैः परिसंशुद्ध आशयः ।
पुरुषस्याञ्जसाभ्येति श्रुतमात्रगुणं हि माम् ॥ १९ ॥

---

एतादृशभक्त्युत्पत्तौ किं साधनम् ? अत आह—**निषेवितेनेति** । निषेवितेनानिमित्तेन निष्कामेन नितरां सेवितेन । अनिमित्तमिति पाठे यथा फलाभिसन्धिरहितो भवति तथा निषेवितेनेत्यर्थः । अष्टवर्षं ब्राह्मणमुपनयीतेत्यादिवेदविहितेन स्वधर्मेण क्रियायोगेन भगवत्पूजालक्षणयोगेन कर्मयोगेन वा । नातिहिंस्रेण प्राण्युपद्रवरहितेन ॥ १५ ॥

मद्धिष्ण्यानां[4] दर्शनादिभिर्भूतेषु जीवेष्वन्तर्यामित्वेन मद्भावनया मम स्मरणलक्षणोपासनया, सत्येन भूतहितेन वचसा, असङ्गमेन दुर्जनसङ्गराहित्येन ॥ १६ ॥

महतां स्वोत्तमानां बहुमानेनार्चनेन, हीनानां स्वाधमानामनुकम्पया, तुल्येषु स्वसमेषु मैत्र्या मित्रभावेन ज्ञात्वा तद्रक्षणाभावेनेत्यर्थः[5] ॥ १७ ॥

आध्यात्मिकानुश्रवणात् वेदान्तशास्त्रश्रवणात्, आर्जवेनाऽवक्रबुद्धित्वेन[6], आर्याणां पण्डितानां सङ्गेन, निरहंक्रियया देहादावहंममतावर्जनेन ॥ १८ ॥

मद्धर्मेणोर्ध्वपुण्ड्रादिधारणादिना । स्वधर्माद्यनुष्ठानफलमाह— **यर्हीति** । पुरुषस्योपासकस्य यर्हि यदा कथितैरेतैः धर्मादिभिरनुष्ठितैः अन्तःकरणमाशयः परितः शुद्धः स्यात् तदाञ्जसा कालक्षेपमन्तरेण,

---

[1] अनिमित्तं–च । [2] शस्तेन–ग ङ । [3] चैवात्म–च ग ङ । [4] केशवादिप्रतिमानामित्यधिकपाठः–ग च घ ङ ।
[5] यद्रक्षणं तेनेत्यर्थः–ङ । यद्रक्षणमेवेत्यर्थः–च । यद्रक्षणभावेनेत्यर्थः–प्र ।
[6] आर्जवेन विष्णुवैष्णवेषु मनोवाक्कायवृत्तीनामवैपरीत्येनेति यादुपत्यम् ।

यथा वातरथो घ्राणमावृङ्क्ते गन्ध आशयात्[1] ।
एवं योगरतं चेत आत्मानमविकारि यत् ॥ २० ॥

अहं सर्वेषु भूतेषु भूतात्मावस्थितः सदा ।
तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम् ॥ २१ ॥

यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् ।
हित्वार्चां भजते मौढ्याद् भस्मन्येव जुहोति सः ॥ २२ ॥

द्विषतः परकाये मां मानिनो भिन्नदर्शिनः ।
भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति ॥ २३ ॥

---

श्रुतमात्रगुणं[2] केवलं गुण एव श्रुता न दोषा यस्य स श्रुतमात्रगुणस्तमञ्जसा तत्त्वं मामभ्येतीत्यन्वयः । गुणाः श्रुताः सुविरुद्धाश्च देवे' इत्यादिवाक्यं हिशब्दगृहीतम् ॥ १९ ॥

परिशुद्धाशयस्य हरौ मनःप्रसादप्रकारं वक्ति—**यथेति** । यथाऽऽशयात्[1] पुष्पादागत्य वातरथः वात एव रथो यस्य स तथा गन्धो घ्राणमावृङ्क्ते आवृणोति वशीकरोति एवमुक्तसाधनाख्य[3]योगेन हरौ रतं यदविकारि विषयविकाररहितं[4] तच्चेत आत्मानं हरिप्रसादाभिमुखं करोतीत्यन्वयः । अनेन निर्गुण-भक्तियोगवान् आत्यन्तिकभक्तियोगवान् भूत्वा परमात्मापरोक्षवान् भवतीत्युक्तम् ॥ २० ॥

एवंविधैर्योगिभिः कुत्र ध्येय इति तत्राह—**अहं सर्वेष्विति** । [5]भूतानामादानादिकर्तृत्वात् [6]भूतानामात्मान्तर्यामित्वेन ध्येय इति भावः । तामसराजसभक्तयोरधमत्वे कारणमेकोक्त्याह—**तमिति** । सर्वेष्वेतदित्यनुवर्तते[7] योऽहं सर्वभूतेष्ववस्थितस्तं मामवज्ञाय मर्त्यस्तामसो राजसश्चार्चायामर्चया विडम्बनं कुरुत इति यस्मादतस्तामसो राजसश्चाधम इत्यर्थः ॥ २१ ॥

एतदेव विवृणोति—**यो मामिति** । भस्मनीत्युक्त्या तामसात् किञ्चिदुत्तमत्वमवबोद्धव्यम् । मन्त्रावृत्त्या फलसम्भवात् ॥ २२ ॥

तामसस्य न किञ्चित् फलमित्याह—**द्विषत इति** । परकाये मां द्विषत इत्यस्य विवरणम्—**भिन्नदर्शिन इति** । [8]शान्तिर्मन्निष्ठा, भूतेषु वैष्णवेषु बद्धवैरस्य ॥ २३ ॥

---

[1] आश्रयात्—ग घ ङ । [2] श्रुतमात्रगुणं मामभ्येति मद्गुणश्रवणमात्रेण प्रतिदिनं मय्येव वर्धमानं सदेत्यर्थ इति यादुपत्यम् । [3] साधनस्य—ग । [4] विषयकृतविकाररहितमित्यर्थः । विषयेति नास्ति—ग ।
[5] भूतानां जीवानाम्—च । [6] भूतात्मा—च ग । [7] सर्वेष्वित्येतदनुवर्तेत इति स्यात् । सर्वेषु भूतेषु योऽहमवस्थितस्तं मां सर्वेषु भूतेष्ववज्ञायेत्यभिप्रायः । [8] शान्तिर्नाम मन्निष्ठा—च ग ।

अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयानघे ।
नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः ॥ २४ ॥

अर्चादावर्चयेत् तावदीश्वरं मां स्वकर्मकृत् ।
यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम् ॥ २५ ॥

आत्मनश्च परस्यापि यः करोत्यन्तरोदरम् ।
तस्य भिन्नदृशो मृत्युर्विधत्ते भयमुल्बणम् ॥ २६ ॥

अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ।
अर्हयेद् दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा ॥ २७ ॥

---

मत्प्रीत्यभावादर्चादिविडम्बनत्वं[1] स्पष्टमाह—**अहमिति** । भूतग्रामे भूतसमूहे स्थितं मामवमन्तुं शीलमस्यास्तीति भूतग्रामावमानी तस्य ॥ २४ ॥

तर्ह्यर्चादि[2]पूजाविधायकशास्त्रं व्यर्थमिति तत्राह—**अर्चादाविति** । आदिशब्दात् स्थण्डिले[3] । स्वकर्मकृद् विहितं कुर्वन् निषिद्धं परित्यजन् स्वहृदि स्थितं देवदत्तादि[4]सर्वभूतेष्ववस्थितं मामभेदतो न वेद, सर्वभूतान्तर्यामिरूपेषु भेददर्शनस्यानर्थफलत्वमिति च ॥ २५ ॥

अन्तर्यामिरूपाणि भिन्नानि पश्यतीति भिन्नदृक्, तमाह[5]—**आत्मनश्चेति** । य आत्मनः स्वस्य हृदि स्थितं परस्य देवदत्तादेर्हृदि गतमन्तरेण भेदेन युक्तमुदरं ब्रह्म करोति स्वतस्त्वभिन्नं ब्रह्म भिन्नं पश्यतीत्यर्थः, उदरं ब्रह्मेति श्रुतेः, उदरमन्तरं कुरुत इति च । अन्तर्यामिरूपाणि भिन्नानि पश्यतीति भिन्नदृक्, तस्य मृत्युः संसाराख्यदुर्जनमारयिता श्रीनृसिंहस्वरूपः उल्बणं भयं नित्यदुःखलक्षणमन्धन्तमो विधत्त इत्यन्वयः ॥ २६ ॥

उक्तार्थोपसंहारमुखेन सर्वान्तर्यामिपूजाप्रकारं वक्ति—**अथेति** । अन्तर्यामिरूपाणां भिन्नत्वज्ञानमनर्थकमिति[6] यस्मादथ तस्मात् सर्वेषु भूतेषु कृतालयं हरेरन्तर्यामिरूपं भूतात्मानं मां द्रव्यादिदानमानाभ्यां मैत्र्या स्वस्मादयमेव ममार्हः सुहृदिति भावेन निमित्तेनाभिन्नेन चक्षुषा अभेददर्शनेन[7] अर्हयेदर्चयेदित्यर्थः ॥ २७ ॥

---

[1] अर्चाविडम्बनत्वं–ग प्र च । अर्चनविडम्बनत्वं–घ । [2] अग्न्यादिपूजा–ग ।
[3] स्थण्डिलेषु–च । [4] देवतादि–ग घ । [5] भिन्नदृक्त्वमित्याह–ग घ । तामाह–प्र ।
[3] आश्रयात्–ग । [6] तदज्ञानमनर्थकरमिति यस्माद्–ग ङ ।
[7] भिन्नेन चक्षुषा भेददर्शनेन–च ग ।

जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे ।
ततः सचित्ताः प्रवरास्ततश्चेन्द्रिय[1]वृत्तयः ॥ २८ ॥
अत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः ।
तेभ्यो[8] गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः ॥ २९ ॥
रूपभेदविदस्तत्र ततश्चोभयतोदतः ।
तेषां बहुपदः श्रेष्ठाश्चतुष्पादस्ततो द्विपात् ॥ ३० ॥

---

हरेरन्तर्यामिरूपाणां तत्र तत्र सन्निधानविशेषात् तत्क्लृप्तत्वाच्च चेतनानां तारतम्यं तज्ज्ञानं[2] च पुरुषार्थसाधनमिति द्योतयन् तत्तारतम्यं वक्ति— **जीवा इत्यादिना** । संसारावस्थायां व्यत्ययेऽपि पशु[3]-वृक्षादिभेदेन स्थितानां जीवानां मुक्तौ निजमेव रूप[4]मपेक्ष्य तारतम्यमत्रोच्यते । तदुक्तम्— ‘ पशु-वृक्षादिभेदेन जीवा एव स्वतः स्थिताः[5] । संसृतौ व्यत्ययस्तेषां मुक्तौ तत्तत्स्वरूपता । तत्र स्थावर-मुक्तेभ्यो वरा जङ्गममुक्तकाः । तेभ्यो मानुषमुक्ताश्च विप्रा मुक्तास्ततोऽधिकाः । तत्रोपदेशमात्रेण मुक्तेभ्यो वेदवादिनः । अर्थज्ञा ऋषयस्तेभ्यो देवताः[6] संशयच्छिदः । पूर्णधर्म[7]स्ततस्त्विन्द्रो निःसङ्गो गरुडस्ततः । भक्तिपूर्णो हरेर्ब्रह्मा तस्मान्नान्योऽधिकस्ततः । मुक्तो वा संसृतौ वापि सम्यगेषु हि ते गुणाः ’ इति । अजीवाश्चलनरहिताः स्थावरमुक्तास्तेषां सकाशाज्जीवाः जङ्गममुक्ताः श्रेष्ठाः, अत्रापि विशेषद्योतनार्थम् इष्ठन् प्रत्ययः, हिशब्देनेश्वरशक्तेरचिन्त्यत्वं सूचयति । प्राणं प्रकृष्टचेष्टां बिभ्रतीति प्राणभृतः, श्रेष्ठा इत्यनुवर्तते । सचित्ता मनोव्यापारयुक्ता । इन्द्रियवृत्तयः चक्षुरादीन्द्रियैः प्रवर्त-मानाः ॥ २८ ॥

अत्रापि इन्द्रियवृत्तिष्वपि स्पर्शज्ञाः प्रवरास्तेभ्यो माधुर्यादिरसज्ञाः, गन्धविदः गन्धगुणज्ञाः, शब्दविदः शब्दज्ञाः ॥ २९ ॥

रूपभेदविदः शुक्लादिरूपविशेषज्ञाः, उभयतोदतः उत्तराधरदन्तयुक्ताः, बहुपदः शरभादयः, चतुष्पादो गवादयः, द्विपान्मनुष्यो वर्णहीनः ॥ ३० ॥

---

[1] स्वेन्द्रिय–घ । [2] तारतम्यज्ञानं च–ग । [3] व्यत्यये पशुवृक्षादि–ग । व्यत्ययेऽपि द्विजपशु-वृक्षादि–घ । [4] स्वरूपं–घ । जीवानां निजमेव रूपं ग । [5] स्थिताः स्वतः–ग ङ च ।
[6] ते देवाः–ग घ । ऽतो देवाः–ङ । [7] पूर्णधर्मा ततः–च । [8] तेषां–घ ग ङ ।

ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः ।
ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः ॥ ३१ ॥

अर्थज्ञात् संशयच्छेत्ता ततः श्रेयान् स्वधर्मकृत् ।
मुक्तसङ्गस्ततो भूयान् न दोग्धा धर्ममात्मनः ॥ ३२ ॥

तस्मान्मय्यर्पिताशेषक्रियार्थात्मरतिर्नरः ।
मय्यर्पितात्मनः पुंसो मयि संन्यस्त[1]कर्मणः ॥ ३३ ॥

न पश्यामि परं भूतमकर्तुः समदर्शनात्[2] ।
मनसैतानि भूतानि प्रणमेद् बहुमानयन् ।
ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥ ३४ ॥

---

ब्राह्मणादिलक्षणाश्चत्वारो वर्णाः, ब्राह्मणो वेदसंबन्धयोग्यः, तत्र ब्राह्मणेष्वपि उपदेशमात्रानुष्ठानेन जातापरोक्षज्ञानेन वेदज्ञो विप्र उच्यते, अर्थज्ञो वेदार्थज्ञः ऋषिरुक्तः ॥ ३१ ॥

वेदार्थसंशयच्छेत्ता देवः, जातवेकवचनम् । स्वस्य स्वतन्त्रस्य हरेर्धर्मं करोतीति स्वधर्मकृत् । त्रैलोक्यरक्षणलक्षणपूर्णधर्मकर्तृत्वादिन्द्रः । मुक्तसङ्गो गरुडः, अस्य विवरणम्—**न दोग्धेति** । आत्मनः स्वस्य धर्मं न दोग्धा भगवत्प्रसादमन्तरेण कर्मफलमनाकाङ्क्षमाणो भूयानुत्तरः ॥ ३२ ॥

तस्मात् गरुडात् मय्यर्पिताशेषक्रियार्थश्च मय्यर्पितसमस्तक्रियाफलश्च आत्मरतिश्च मय्येव मनोरतिश्च स मय्यर्पिताशेषक्रियार्थात्मरतिः भक्त्या, न रीयते न क्षीयत इति नरः पूर्णभक्तिः, ब्रह्मा श्रेष्ठः । पूर्वोक्तेभ्य इव चतुर्मुखब्रह्मणोऽपि उत्तमोऽस्ति किम् ? नेत्याह—**मयीति** ॥ ३३ ॥

परमुत्तमम् । अः हरिः कर्ता स्रष्टा जनको यस्य सोऽकर्ता तस्मात् समदर्शनात् निर्दोषब्रह्मज्ञानवतः । यद्वा परं[3] मुक्तौ संसारावस्थायां भूतमुत्पन्नं पुरुषं ब्रह्मणः समम् अधिकं वा न पश्यामीति । समदर्शनाच्छास्त्रेषु सम्यग्दर्शिनः । एवं तारतम्यज्ञानवता किं कर्तव्यमित्याह—**मनसेति** । [4]अत्र जीवकलयेति द्विरावृत्त्या व्याख्येयं, जीवकलया सहैतानि स्थावरादिब्रह्मान्तानि भूतानि मनसा बहुमानयन्नीश्वरो भगवान् जीवकलया अनिरुद्धाख्यांशेन एषु प्रविष्टः तदालयत्वेन स्थित इति तमीश्वरं प्रणमेत् । इयमुपास्तिः योग्यस्येति शास्त्रान्तरसिद्धमिति ज्ञातव्यम् ॥ ३४ ॥

---

[1] संत्यक्त-च घ ङ । [2] समदर्शिनः-ग । [3] परमित्यस्य पुरुषमित्यनेनान्वयः स्यात् । मुक्काविति व्याख्यानं वा । [4] जीवकलया सह जीवाख्यभिन्नांशेन सहेति यादुपत्यम् ।

भक्तियोगश्च योगश्च मया मानव्युदीरितः ।
ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ॥ ३५ ॥

यत् तद् भगवतो रूपं ब्रह्मणः परमात्मनः ।
परं प्रधानात् पुरुषाद् दैवं कर्मविचेष्टितम् ॥ ३६ ॥

रूपभेदास्पदं दिव्यं काल इत्यभिधीयते ।
भूतानां महदादीनां यतो भिन्नदृशां भयम् ॥ ३७ ॥

योऽन्तः प्रविश्य भूतानि भूतैरत्त्यखिलाश्रयः ।
स विष्ण्वाख्यो धिया ज्ञेयः कालः कलयतां प्रभुः ॥ ३८ ॥

---

उक्तार्थमुपसंहरति— **भक्तियोगश्चेति** । हे मानवि मया तव भक्तियोगश्च ज्ञानयोगश्च, चशब्दादर्चादावित्यादिना कथितकर्मयोगश्च गृह्यते, स च कथित इत्यन्वयः । एतद् द्वयमेव पुरुषार्थ-साधनं नान्यदिति निर्धारयति—**ययोरिति** । ययोर्ज्ञानभक्त्योरेकतरणैव ज्ञानयोगेनैव पुरुषः पुरुषं परमात्मानं व्रजेदित्यन्वयः । एकतरोऽलं चेदितरविधानं व्यर्थं न स्यात् । एकतरभावेऽन्यतरस्य नियत-त्वाद् एकतरेणैवेत्युक्तं, धूमाग्न्योरिवाविनाभावात् ॥ ३५ ॥

भक्तियोगप्रश्नानन्तरं पृष्टजीवसंसृतेः वक्तव्यत्वेऽपि बाहुल्यात् तदुलंघ्य सूचीकटाहन्यायेन काल-स्वरूपं वक्ति—**यत् तदित्यादिना** । ब्रह्मणः पूर्णस्य परमात्मनः सर्वान्तर्यामिणो भगवतो भाग्यनिधेः यत् प्रधानात् प्रकृतेः पुरुषाद् विरिञ्चात् परम् उत्तमं, दैवं सर्वदेवोत्तमं, यच्च कर्मविचेष्टितं सर्वकर्माणि यस्य विशिष्टचेष्टानिमित्तानि तत् तथोक्तम् ॥ ३६ ॥

यच्च रूपभेदास्पदं शुक्लादिरूपभेदानां ब्रह्माण्डादिपदार्थभेदानां चास्पदं, दिव्यमप्राकृतं, यतो यस्मात् कालात् भिन्नदृशामल्पज्ञानिनां[1] भयं भवति, तद् वस्तु काल इत्यभिधीयते । ‘भिन्नमल्पं विजानीयादभिन्नं पूर्णमिष्यते’ इति वचनाद् ईश्वरापेक्षया अत्र भिन्नशब्दोऽल्पवाची ॥ ३७ ॥

केचित् पूर्वापरकलाविकलः क्षणः काल इत्यादिलक्षणमाचक्षते, तन्नेति भावेनाह—**योऽन्त-रिति** । यो भूतानामन्तः प्रविश्य भूतैर्भूतान्यत्ति संहरति, यश्चाखिलानामाश्रयः, यश्च कलयतां संहरतां रुद्रादीनां प्रभुः संहारसमर्थः, स विष्ण्वाख्यः कालो धिया साक्षिज्ञानेन ज्ञेय इत्यन्वयः । यमादि-व्यवच्छेदार्थं विष्ण्वाख्य इति ॥ ३८ ॥

---

[1] एतदनन्तरं ‘महदादिजीवानां’ इत्यधिकपाठः–ग घ च ।

न चास्य कश्चिद् दयितो न द्वेष्यो न च बान्धवः ।
आविशत्यप्रमत्तोऽसौ प्रमत्तं जनमन्तकृत् ॥ ३९ ॥

यद्भयाद् वति वातोऽयं सूर्यस्तपति यद्भयात् ।
यद्भयाद् वर्षते देवो भगणो भाति यद्भयात् ॥ ४० ॥

यद् वनस्पतयो भीता लताश्चौषधिभिः सह ।
स्वे स्वे कालेऽभिगृह्णन्ति पुष्पाणि च फलानि च ॥ ४१ ॥

स्रवन्ति सरितो भीता नोत्सर्पत्युदधिर्यतः ।
अग्निरिन्धे सगिरिभिर्भूर्न मज्जति यद्भयात् ॥ ४२ ॥

नभो ददाति श्वसतां मार्गं यन्नियमाददः ।
लोकस्य देहं तनुते महान् सप्तभिरावृतः ॥ ४३ ॥

गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भयात् ।
वर्तन्तेऽनुयुगं येषां वश एतच्चराचरम् ॥ ४४ ॥

---

चेतनत्वाच्च नोक्तलक्षणः कालोऽत्रोच्यत इति भावेनाह—**न चास्येति** । 'यथायोग्यातिरेकेण न द्वेष्यश्च प्रियो हरेः' इति वचनात् योग्यतातिरेकेण दयितो द्वेष्यश्च नास्तीत्यर्थः । अन्तकृत् संहारकर्ता ॥ ३९ ॥

इतरेषां तदाज्ञानियतकर्तृत्वाच्च विष्णुरेवायं काल इति भावेनाह—**यद्भयादिति** । भगणो नक्षत्रगणः ॥ ४० ॥

यद् यस्माद् भीताः ॥ ४१ ॥

स्रवन्ति स्यन्दन्ते । यतो यस्य भयान्नोत्सर्पति वेलामतीत्य न गच्छति । इन्धे ज्वलति । न मज्जति, जल इति शेषः ॥ ४२ ॥

अदो नभो यन्नियमात् श्वसतां प्राणिनां मार्गं ददाति । सप्तभिः तत्त्वादिभिरावृतो[1] महान् ब्रह्मा लोकस्य जनस्य देहं तनुते सृजति ॥ ४३ ॥

गुणाभिमानिनो रुद्रादिदेवाः यद्भयादस्य जगतोऽनुयुगं सर्गादिषु वर्तन्ते । एतच्चराचरं येषां वशे तिष्ठति ॥ ४४ ॥

---

[1] तत्त्वैरावृत इति स्यात् । महदहङ्कारपञ्चभूतैरावृत इति यादुपत्यम् ।

सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः ।
जनं जनेन जनयन् मारयन् मृत्युनात्मनः । ॥ ४५ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे त्रिंशोऽध्यायः ।

॥ अथ एकत्रिंशोऽध्यायः ॥

भगवानुवाच —
तस्यैतस्य जनो नूनं नायं वेदोरुविक्रमम् ।
काल्यमानोऽपि बलिना वायोरिव घनावलिः ॥ १ ॥
यं यमर्थमुपादत्ते दुःखेन सुखहेतवे ।
तं तं धुनोति भगवान् पुमाञ्छोचति यत्कृते ॥ २ ॥

---

स कालः । कालशब्दनिर्वचनभावेन कालं विशिनष्टि—**अनन्त इत्यादिविशेषणैः** । कल ज्ञान इति धातोः ज्ञानरूपत्वात् भौतिकवदन्तवान् न भवतीत्यनन्तः । कल च्छेदन इत्यतः छेदनाख्यः । सर्वेषामन्तं करोतीत्यन्तकरः । अन्ताभावादनादिः । जातस्य हि ध्रुवो मृत्युरित्यादेः । अन्तकरत्वादादिकृत् । कल कामधेनावित्यतोऽव्ययः । अर्थिष्वासन्नेषु संवृतो निलीनो न भवतीति । जन्ममरणे चाज्ञयैव राजवत् करोतीत्याह—**जनमिति** । स्वसन्निहितेन ब्रह्मादिजनेनात्मनो वशेन[1] । मृत्युना रुद्रदुर्गादिना । अत एवंविधगुणविशिष्टः कालात्मा नारायणो मुमुक्षुभिरुपास्य इति सिद्धम् ॥ ४५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे त्रिंशोऽध्यायः ।

॥ अथ एकत्रिंशोऽध्यायः ॥

भक्तिसाधनवैराग्यजननाय विविधाः कर्मसंसृतीराचक्ष्वेति देवहूत्याः प्रश्नः परिह्रियतेऽस्मिन् अध्याये । तदर्थं जीवस्य संसारस्य मूलकारणं ब्रूते—**तस्यैतस्येति** । यो जगत्सृष्ट्यादिकं करोति तस्यैतस्य कालनाम्नः बलिना कालेन काल्यमानो द्राव्यमाणः, कल द्रावणे[2] । वायोरिव घनावलिरित्येतत् तदभिमानिदेवतापेक्षयोक्तम् । विद्राव्यमाणत्वमात्रेण वाऽयं दृष्टान्तः । अनेन जनस्य परमात्माज्ञानं संसारकारणमुक्तं भवति ॥ १ ॥

उरुविक्रममेव दर्शयति—**यं यमिति** । अर्थं सुखसाधनं धुनोति विनाशयति । यत्कृते यस्यार्थस्यार्थे नष्टोऽभूदिति शोचति ॥ २ ॥

---

[1] वशगेन–घ ग प्र । [2] इति धातुरिति शेषः ।

यदध्रुवस्य देहस्य सानुबन्धस्य दुर्मतिः ।
ध्रुवाणि मन्यते मोहाद् गृहक्षेत्रवसूनि च ॥ ३ ॥

जन्तुर्वै भव एतस्मिन् यां यां योनिमुपव्रजेत् ।
तस्यां तस्यां स लभते निर्वृतिं न विरज्यते ॥ ४ ॥

नरकस्थोऽपि देहं वै न पुमांस्त्यक्तुमिच्छति ।
नारक्यां निर्वृतौ सत्यां देवमायाविमोहितः ॥ ५ ॥

आत्मजायासुतागारपशुद्रविणबन्धुषु ।
निरूढमूलहृदय आत्मानं बहुमन्यते ॥ ६ ॥

सन्दह्यमानसर्वाङ्ग एषामुद्वहनादिना ।
करोत्यविरतं मूढो दुरितानि दुराशयः ॥ ७ ॥

आक्षिप्तात्मेन्द्रियः स्त्रीणामसतीनां च मायया ।
रहोरचितसल्लापैः शिशूनां कलभाषणैः[1] ॥ ८ ॥

---

जनस्यायमप्यज्ञानातिरेक इत्याह—**यदध्रुवस्येति** । अध्रुवस्यानित्यस्य देवमानुषादिलक्षणस्य । भोगसाधनानि गृहक्षेत्रधनानि मोहादज्ञानाद् ध्रुवाण्यनश्वराणि पुरुषो मन्यत इति यस्मादतो दुर्मतिः दुष्टज्ञानवान् ॥ ३ ॥

गृहादीनामनित्यत्वं पश्यन् न ततो विरक्तिमानिति यस्मादतोऽज्ञानातिरेकोऽयमपीत्याह—**जन्तुर्वा इति** ॥ ४ ॥

अत्र कैमुत्यन्यायमाह—**नरकस्थ इति** । नरकस्थोऽपि पुमान् नारक्यां निर्वृतौ सत्यां तं नारकं देहं त्यक्तुं नेच्छति, किमुत देवमानुषादिशरीरस्थ इति । तत्र हेतुः—**देवमायेति** ॥ ५ ॥

रागसागरमग्नत्वाच्च विरागानुदय इति भावेनाह—**आत्मजायेति** । निरूढमूलं समुत्पन्नरागादिकं हृदयं यस्य स तथा ॥ ६ ॥

आत्मजायादिष्वहंममताज्ञानफलमाह—**सन्दह्यमानेति** । एषाम् आत्मजायादीनाम् ॥ ७ ॥

क्वचित् द्रव्यालाभादिना मनोदुःखाग्निना सन्दीप्ताङ्गत्वादसारोऽयं संसार इति विरक्तो भविष्यति स्वयमेवेति, तत्राह —**आक्षिप्तात्मेति** । मायया मोहकशक्त्या ॥ ८ ॥

---

[1] कलभाषिणाम्—ग ।

गृहेषु कूटधर्मेषु दुःखतन्त्रेष्वतन्द्रितः ।
कुर्वन् दुःखप्रतीकारं सुखवन्मन्यते गृही ॥ ९ ॥

अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान् ।
पुष्णाति येषां पोषेण शेषभुग् यात्यधः स्वयम् ॥ १० ॥

वार्तायां लुप्यमानायामारब्धायां पुनः पुनः ।
लोभाभिभूतो निःसत्वः परार्थे कुरुते स्पृहाम् ॥ ११ ॥

कुटुम्बभरणाकल्पो मन्दभाग्यो वृथोद्यमः ।
श्रिया विहीनः कृपणो ध्यायञ्छ्वसति मूढधीः ॥ १२ ॥

एवं स्वभरणाकल्पं तत्कलत्रादयस्तदा ।
नाद्रियन्ते यथापूर्वं कीनाश इव गोजरम् ॥ १३ ॥

---

कूटं वञ्चनमेव धर्मो यत्र तेषु वञ्चनधर्मयुक्तेषु वा दुःखानां तन्त्रेषु साधनेषु दुःखानां प्रतीकारं सुखवन्मननाद् विरक्तो न स्यादित्यर्थः ॥ ९ ॥

ननु 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः। अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्' इति यया कयापि विधया कुटुम्बभरणस्य विहितत्वाद् विरक्तया तत्त्यागे महान् दोषः स्यादतो न विरागो भूषणमित्याशङ्क्य अशास्त्रविहितहिंसादिना प्राप्तमहापातकेनाधःपात एवेत्याह—**अर्थैरिति** । विप्रादेः सेवादिकमकार्यशतं, महाविपदि विहितत्वात्, तत् कृत्वा न दोष इत्यर्थपरं स्मार्तवचनम् । पोष्यजनभुक्तशेषस्य भोक्ता ॥ १० ॥

अतिवृष्ट्यनावृष्टिव्याधिगोजरनाशादिना कुण्ठितजीवनस्य वृत्तिं कथयति— **वार्तायामिति** । पुनः पुनरारब्धायामृणद्रव्याद्यानीतगोवृषादिनोपक्रान्तायां वार्तायां कृषिगोरक्षवाणिज्यादिलक्षणायां लुप्यमानायां विनाशं गच्छन्त्यां, लुभ गार्ध्ये इति धातोर्लोभेन परद्रव्यादित्सालक्षणेनाभिभूतोऽत एव निःसत्वः सत्त्वगुणशून्यो बलरहितो वा परार्थे चौर्यादिना परद्रव्यादाने स्पृहां कुरुत इत्यन्वयः ॥ ११ ॥

परार्थप्राप्त्यशक्तत्वेन स्वकुटुम्बभरणाकल्पस्य चरमावस्थामाह— **कुटुम्बभरणाकल्प इति** । श्रिया संपदा शरीरकान्त्या वा । श्वसिति दीर्घश्वासं करोति । मूढधीः कर्तव्यबुद्धिरहितः ॥ १२ ॥

कीनाशः कर्षकः गोजरमुल्लेखनासमर्थं वृषभम् ॥ १३ ॥

तत्राप्यजातनिर्वेदो भ्रियमाणः स्वयंभृतैः ।
जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे ॥ १४ ॥

आस्तेऽवमत्याऽपत्याद्यै[1]र्गृहपाल इवाहरन् ।
आमयेनाप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टितः ॥ १५ ॥

वायुनोत्क्रमतोत्तारकफसंरुद्धनासिकः ।
कासश्वासकृतायासः कण्ठो घुरुघुरायते ॥ १६ ॥

शयानः परिशोचद्भिः परिवीतः स्वबन्धुभिः ।
वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः ॥ १७ ॥

एवं कुटुम्बभरणे व्यापृतात्माऽजितेन्द्रियः ।
म्रियते रुदतां स्वानामुरुवेदनयाऽस्तधीः ॥ १८ ॥

यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ ।
स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुञ्चति ॥ १९ ॥

---

स्वकलत्राद्यनादरं दृष्ट्वा विरक्तो मोक्षाय यतिष्यत इति चेत् तत्राह— **तत्रापीति** । तस्यामवस्थायामपि ॥ १४ ॥

अपत्याद्यैरवमत्या अवज्ञानेन दत्तान्नमाहरन् गृहपालः श्वेव गृह आस्त इत्यन्वयः । संसारिण आसन्नमरणावस्थायामपि विरागो नोत्पद्यत इत्याशयेनाह— **आमयेनेत्यादिना** ॥ १५ ॥

यस्य कासश्वासाभ्यां कृतायासः पूर्णक्लेशः कण्ठो घुरुघुरायतेऽनुकारशब्दं करोति । स आतुरः किमपि न ब्रूते इत्यन्वयः । उत्क्रमता निर्गच्छता उत्तारं उद्गतं कफं श्लेष्म तेन संरुद्धा नासिका यस्य स तथा । अनेन आसन्नशयनानुत्त्यवस्थायामपि विरागो नाभूत्, अहो हरेर्माहात्म्यमित्यदर्शि ॥ १६, १७ ॥ तस्यान्त्यामवस्थामाह— **एवमिति** ॥ १८ ॥

मरिष्यतः प्रथमलक्षणमाह— **यमदूताविति** । यदा मरिष्यन्नास्ते तदा मूत्रं शकृत् पुरीषं च विमुञ्चति । रभसेन क्रोधवेगेन सह वर्तमाने ईक्षणे ययोस्तौ तथोक्तौ ॥ १९ ॥

---

[1] आस्तेऽवमत्योपन्यस्त–च छ । आस्तेऽवमत्यापन्यस्तं—इति यादुपस्यपाठः ।

गृहेषु कूटधर्मेषु दुःखतन्त्रेष्वतन्द्रितः ।
कुर्वन् दुःखप्रतीकारं सुखवन्मन्यते गृही ॥ ९ ॥
अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान् ।
पुष्णाति येषां पोषेण शेषभुग् यात्यधः स्वयम् ॥ १० ॥
वार्तायां लुप्यमानायामारब्धायां पुनः पुनः ।
लोभाभिभूतो निःसत्वः परार्थे कुरुते स्पृहाम् ॥ ११ ॥
कुटुम्बभरणाकल्पो मन्दभाग्यो वृथोद्यमः ।
श्रिया विहीनः कृपणो ध्यायञ्छ्वसति मूढधीः ॥ १२ ॥
एवं स्वभरणाकल्पं तत्कलत्रादयस्तदा ।
नाद्रियन्ते यथापूर्वं कीनाश इव गोजरम् ॥ १३ ॥

---

कूटं वञ्चनमेव धर्मो यत्र तेषु वञ्चनधर्मयुक्तेषु वा दुःखानां तन्त्रेषु साधनेषु दुःखानां प्रतीकारं सुखवन्मननाद् विरक्तो न स्यादित्यर्थः ॥ ९ ॥

ननु 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्' इति यया कयापि विधया कुटुम्बभरणस्य विहितत्त्वाद् विरक्तया तत्त्यागे महान् दोषः स्यादतो न विरागो भूषणमित्याशङ्क्य अशास्त्रविहितहिंसादिना प्राप्तमहापातकेनाधःपात एवेत्याह—**अर्थैरिति** । विप्रादेः सेवादिकमकार्यशतं, महाविपदि विहितत्वात्, तत् कृत्वा न दोष इत्यर्थपरं स्मार्तवचनम् । पोष्यजनभुक्तशेषस्य भोक्ता ॥ १० ॥

अतिवृष्ट्यनावृष्टिव्याधिगोजरनाशादिना कुण्ठितजीवनस्य वृत्तिं कथयति— **वार्तायामिति** । पुनः पुनरारब्धायामृणद्रव्याद्यानीतगोवृषादिनोपक्रान्तायां वार्तायां कृषिगोरक्षवाणिज्यादिलक्षणायां लुप्यमानायां विनाशं गच्छन्त्यां, लुभ गार्ध्ये इति धातोर्लोभेन परद्रव्यादित्सालक्षणेनाभिभूतोऽत एव निःसत्वः सत्त्वगुणशून्यो बलरहितो वा परार्थे चौर्यादिना परद्रव्यादाने स्पृहां कुरुत इत्यन्वयः ॥ ११ ॥

परार्थप्राप्त्यशक्तत्वेन स्वकुटुम्बभरणाकल्पस्य चरमावस्थामाह— **कुटुम्बभरणाकल्प इति** । श्रिया संपदा शरीरकान्त्या वा । श्वसिति दीर्घश्वासं करोति । मूढधीः कर्तव्यबुद्धिरहितः ॥ १२ ॥

कीनाशः कर्षकः गोजरमुल्लेखनासमर्थं वृषभम् ॥ १३ ॥

तत्राप्यजातनिर्वेदो भ्रियमाणः स्वयंभृतैः ।
जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे ॥ १४ ॥

आस्तेऽवमत्याऽपत्याद्यै[1]र्गृहपाल इवाहरन् ।
आमयेनाप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टितः ॥ १५ ॥

वायुनोत्क्रमतोत्तारकफसंरुद्धनासिकः ।
कासश्वासकृतायासः कण्ठो घुरुघुरायते ॥ १६ ॥

शयानः परिशोचद्भिः परिवीतः स्वबन्धुभिः ।
वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः ॥ १७ ॥

एवं कुटुम्बभरणे व्यापृतात्माऽजितेन्द्रियः ।
म्रियते रुदतां स्वानामुरुवेदनयाऽस्तधीः ॥ १८ ॥

यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ ।
स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुञ्चति ॥ १९ ॥

---

स्वकलत्राद्यनादरं दृष्ट्वा विरक्तो मोक्षाय यतिष्यत इति चेत् तत्राह—**तत्रापीति** । तस्यामवस्थायामपि ॥ १४ ॥

अपत्याद्यैरवमत्या अवज्ञानेन दत्तान्नमाहरन् गृहपालः श्वेव गृह आस्त इत्यन्वयः । संसारिण आसन्नमरणावस्थायामपि विरागो नोत्पद्यत इत्याशयेनाह—**आमयेनेत्यादिना** ॥ १५ ॥

यस्य कासश्वासाभ्यां कृतायासः पूर्णक्लेशः कण्ठो घुरुघुरायतेऽनुकारशब्दं करोति । स आतुरः किमपि न ब्रूते इत्यन्वयः । उत्क्रमता निर्गच्छता उत्तारं उद्गतं कफं श्लेष्म तेन संरुद्धा नासिका यस्य स तथा । अनेन आसन्नशयनानुत्त्यवस्थायामपि विरागो नाभूत्, अहो हरेर्माहात्म्यमित्यदर्शि ॥ १६,१७ ॥ तस्यान्त्यामवस्थामाह—**एवमिति** ॥ १८ ॥

मरिष्यतः प्रथमलक्षणमाह—**यमदूताविति** । यदा मरिष्यन्नास्ते तदा मूत्रं शकृत् पुरीषं च विमुञ्चति । रभसेन क्रोधवेगेन सह वर्तमाने ईक्षणे ययोस्तौ तथोक्तौ ॥ १९ ॥

---

[1] आस्तेऽवमत्योपन्यस्त-च छ । आस्तेऽवमत्यापन्यस्तं—इति यादुपस्यपाठः ।

यातनादेह आवृत्य पाशैर्बध्वा गले बलात्
नीयते दीर्घमध्वानं दण्ड्यं राजभटा यथा ॥ २० ॥

तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथुः ।
पथि श्वभिर्भक्ष्यमाण आर्तोऽघं स्वमनुस्मरन्[1] ॥ २१ ॥

क्षुत्तृट्परीतोऽर्कदवानलानिलैः
सन्तप्यमानः[2] पथि तप्तवालुके ।
कृच्छ्रेण पृष्ठे कशया च ताडित-
श्चलत्यशक्तोऽपि निराश्रयोदके ॥ २२ ॥

तत्र तत्र पतञ्छ्रान्तो मूर्च्छितः पुनरुत्थितः ।
तथा[3] पापीयसा नीतस्तमसा यमसादनम् ॥ २३ ॥

योजनानां सहस्राणि नवतिर्नव[4] चाध्वनः ।
त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाम् ॥ २४ ॥

आदीपनं स्वगात्राणां वेष्टयित्वोल्मुकादिभिः ।
आत्ममांसादनं क्वापि स्वकृतं परतोऽपि वा ॥ २५ ॥

जीवतश्चान्त्राभ्युद्धारः श्वगृध्रैर्यमसादने ।
सर्पवृश्चिकदंशाद्यैः स्मरद्भिश्चात्मवैशसम् ॥ २६ ॥

---

नरकदुःखभोगक्लृप्तो देहो यातनादेहः तस्मिन्नावृत्य प्रवेश्य ॥ २० ॥

नरकं प्रति गच्छतो दशामाह—**क्षुत्तृडिति** । वालुकाः सिकताः ॥ २२ ॥

यमसादनं यमगृहं, नरकमित्यर्थः ॥ २३ ॥

द्वाभ्यां वेति वा शब्देन दशदिनानि पक्षो मासश्च गृह्यते । तदुक्तम्—'त्रिभिर्मुहूर्तैर्द्वाभ्यां वा दिनैर्दशभिरेव वा । पक्षान्मासेन वा याति यमलोकमितो मृतः ' इति । यातनां नरकम् ॥ २४ ॥

स्वानुष्ठितदुष्कृतानुसारेण नरकदुःखानुभवं वक्ति — **आदीपनमित्यादिना** । स्वगात्राणां स्वावयवानाम् ॥ २५ ॥

आत्मवैशसमात्मनो हिंसाम् ॥ २६ ॥

---

[1] समनुस्मरन्–घ । [2] तातप्यमानः–घ । [3] यथा–ग घ ङ । [4] नवतिं नवेति पाठान्तरम् ।

कृन्तनं चावयवशो गजादिभ्योऽभिधावनम् ।
पातनं गिरिशृङ्गेभ्यो रोधनं बन्धगर्तयोः ॥ २७ ॥

यास्तामिस्रान्धतामिस्ररौरवाद्याश्च यातनाः ।
भुङ्क्ते नरो वा नारी वा मिथः सङ्गेन निर्मिताः ॥ २८ ॥

अत्रैव नरकः स्वर्ग इति मातः प्रचक्षते ।
या यातना वै नारक्यस्ता इहाप्युपलक्षिताः ॥ २९ ॥

एवं कुटुम्बं बिभ्राण उदरम्भर एव वा ।
विसृज्येहोभयं प्रेत्य भुङ्क्ते तत्फलमीदृशम् ॥ ३० ॥

एकः प्रपद्यतेऽध्वानं हित्वेह स्वकलेवरम् ।
कुशलेतरपाथेयो भूतद्रोहेण यद् भृतम् ॥ ३१ ॥

दैवेनासादितं तस्य शमलं निरये पुमान् ।
भुङ्क्ते कुटुम्बपोषस्य हृतवित्त इवातुरः ॥ ३२ ॥

---

रोधनं शृङ्खलाबन्धैः विष्ठागर्ते ॥ २७ ॥

बाहुल्यात् संक्षिप्य यातनां ब्रवीति—**यास्तामिस्रेति** ॥ २८ ॥

ता नातिदूरे वर्तन्ते किन्तु समीप एवेत्याह—**अत्रैवेति** । तदुपपादयति—**यातना इति** । इहास्मिन् लोके राजादिभिर्दण्डयेषूपलक्षिता दृष्टा इत्यर्थः । वैशब्देन दण्डयेषु[1] स्वर्गिष्वपीति दर्शितम् । 'सामीप्ये च प्रधाने च एव शब्दोऽवधारणे' इति च ॥ २९ ॥

कीदृशाः पापिन एवंविधनरकभोगयोग्या इति तत्राह—**एवमिति** । उभयं कुटुम्बमुदरं च विसृज्य तयोः कुटुम्बोदरपोषणयोः फलम् ॥ ३० ॥

यः पापकृत् स एक एव नारकं पन्थानमाप्नोति नान्य इत्याह—**एक इति** । कुशलादितरत् पापं तदेव पाथेयं शम्बलं यस्य स तथा । यत् कलेवरं भूतद्रोहेण भृतं पोषितम् ॥ ३१ ॥

ननु देहादिवत् पापमपि परित्यज्य गच्छति किम् ? नेत्याह—**दैवेनेति** । कुटुम्बपोषणस्य तस्य यच्छमलं दैवेन पुण्यपापयोर्नियन्त्रा हरिणा आसादितं प्रापितं, पुमान् निरये तदेव भुङ्क्ते, परित्यक्तुं

---

[1] अदण्डयेषु—प्र । इह राजभृत्यैर्दण्डयेषूपलक्षिता दृष्टाः । उपलक्षणमेतत् । ये स्वर्गलोकस्थभोगास्तेऽपि राजादिषु दृष्टा इत्यपि ग्राह्यम् । तथा च पूर्वार्धस्थनरकस्वर्गशब्दौ दुःखसुखविशेषपरावेव, न प्रसिद्धनरकस्वर्ग-लोकपरावतो न विरोध इति भाव इति यादुपत्यम् ।

केवलेन ह्यधर्मेण कुटुम्बभरणोत्सुकः ।
याति जीवोऽन्धतामिस्रं चरमं तमसः पदम् ॥ ३३ ॥
अधस्तान्नरलोकस्य यावतीर्यातनास्तु ताः ।
क्रमशः समनुक्रम्य पुनरत्रावजेच्छुचिः ॥ ३४ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे एकत्रिंशोऽध्यायः ।

॥ अथ द्वात्रिंशोऽध्यायः ॥

भगवानुवाच —
कर्मणा दैवतन्त्रेण जन्तुर्देहोपपत्तये ।
स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः ॥ १ ॥

---

न शक्नोति, दैवाधीनत्वात् । यथा हृतचित्त आतुरो वा दैवोपनीतं दुःखं भुङ्क्ते तथेति ॥ ३२ ॥

यास्तामिस्राद्या यातनाः प्रस्तुतास्तासां मध्ये तामिस्रान्धतामिस्रप्राप्तियोग्यं तत्साधनं चाह— **केवलेनेति** । योऽसुरप्रकृतिर्जीवः, [1]केवलेनैकेनाधर्मेण हरिभक्तद्वेषलक्षणेन, तमसः पदमन्धकारस्यैकस्थानं चरमं पश्चात्तनं पुनरावृत्तिरहितमन्धतामिस्रं यातीत्यन्वयः । हिशब्दः अनुत्थानवाची, दुःखानुभवे तारतम्यवाची वा, 'तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ संप्रकीर्तितौ' इति वाक्यसूचितं तामिस्रं यातीत्येतदर्थसूचको वा ॥ ३३ ॥

अन्येषां पुनरावृत्तिरस्तीत्याह—**अधस्तादिति** । अत्र मनुष्यलोके । पुनः पुनः स्वकर्मानुसृतां योनिमायाति । पापफलभोगात् शुचिः पुनः स्वर्गं याति । अशुचिश्चेन्नरकं याति । 'पुनर्दरिद्रः पुनरेव पापी' इति वचनात् ॥ ३४ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे एकत्रिंशोऽध्यायः ।

॥ अथ द्वात्रिंशोऽध्यायः ॥

अस्मिन्नध्याये संसारासारलक्षणवैराग्याय[2] गर्भवासादिदुःखानुभवः प्रतिपाद्यते । तस्माद् विरक्तो भक्तिसाध्यब्रह्मज्ञानाय प्रयतेत इति । तत्र नरके कर्मफलं भुक्त्वा वृष्टिरूपेण नरलोकं प्राप्तो व्रीह्यादीतरजीवदेहगतो दैवाधीनेन कर्मणा शरीरस्वीकाराय पुरुषभुक्तान्नपरिणतरेतोबिन्दुप्रवेशरूपेण ऋतुकाले

---

[1] एकशब्दोऽयं मुख्यार्थः । केवलेनेति । मुख्येनाधर्मेण हरिद्वेषादिरूपेणेति यादुपस्यम् ।
[2] संसारासारत्वज्ञानलक्षणवैराग्यायेत्यर्थः ।

कलिलं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् ।
दशाहेन तु कर्कन्धुः पेश्यण्डं वा ततः परम् ॥ २ ॥

मासेन तु शिरो द्वाभ्यां बाह्वङ्घ्र्याद्यङ्गविग्रहः ।
नखरोमास्थिचर्माणि लिङ्गच्छिद्रोद्भवस्त्रिभिः ॥ ३ ॥

चतुर्भिर्धातवः सप्त पञ्चभिः क्षुत्तृडुद्भवः ।
षड्भिर्जरायुणा वीतः कुक्षौ भ्रमति दक्षिणे ॥ ४ ॥

सप्तमे जन्मकर्माणि गतानि स्मरते ऋषिः ।
जगत्यां यानि देवस्य मायया बन्धमात्मनः ॥ ५ ॥

---

योनिद्वारा स्त्रिया उदरं प्रविष्टो भवतीत्यन्वयः । 'सूक्ष्मलेशलवश्लक्ष्णक्षुद्रदभ्रकणाणवः' इति हलायुधः । 'स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः' इत्यमरः । कणति निमीलतीति कणः ॥ १ ॥

स्त्रिया उदरं प्रविष्टस्य रेतसः कालक्रमेण शरीराकारतया परिणामप्रकारं वक्ति—**कलिलमिति** । तुशब्दाच्छोणितसम्पर्कमाह । कलिलं रक्तधातुरसमिश्रत्वात् निर्यासतुल्यं भवति । कर्कन्धुरीषत्काठिन्योपेतमयःपिण्डतुल्यः पेशीमांसखण्डी तद्वान् भवति[1] । मनुष्यादीनामयं विशेषः न पक्ष्यादीनाम् । अण्डं पिण्डाकारवत् । 'नानाविधा गर्भवृद्धिः कर्मभेदाद् भविष्यति । अतो नानाविधं ग्रन्थे गर्भसंस्थानमुच्यते' इति वचनात्, अण्डं वेति विकल्प्योक्तम् ॥ २ ॥

बाह्वङ्घ्र्यादिभिरङ्गैरवयवैः युक्तो विग्रहो देहो भवति । लिङ्गस्य पुल्लिङ्गादिलक्षणस्य छिद्रस्येन्द्रियद्वारस्य चोद्भवः उत्पत्तिः ॥ ३ ॥

धातवः त्वगादयः सप्त । आवीतः संवेष्टितः ॥ ४ ॥

सप्तमे मासे गर्भस्थस्य ज्ञानोत्पत्तिरित्याह—**सप्तम इति** । जगत्यां कर्मभूमौ यानि गतानि जन्मानि कर्माणि च स्वकृतानि । तथा च देवस्य हरेर्माययेच्छया कटाक्षितमात्मनः स्वस्य बन्धं च ऋषिर्ज्ञानवान् स्मरते । क्वचित् स्मरति क्वचिद् विस्मरति, वेदनया ग्रस्तत्वादिति द्योतनाय आत्मनेपदं सन्धिकार्याभावश्च ॥ ५ ॥

---

[1] बुद्बुदं वर्तुलाकारम् । कर्कन्धुरिव कर्कन्धूः, बदरीफलाकारं कठिनम् । पेशो जरायुरुद्दिष्टः सुवर्णं पेश उच्यत इति वचनात् पेशशब्दो जरायुवाची । तथाच पेशीत्यस्य जरायुणा वीतमित्यर्थः । ....पक्ष्यादिगर्भमभिप्रेत्याण्डं वेति पक्षान्तरमुक्तमिति यादुपत्यम् ।

मातुर्जग्धान्नपानाद्यैरेधत्यातुरसम्मतः ।
आस्ते विण्मूत्रयोर्गर्ते सजन्तुर्जन्तुसम्भवे　　॥ ६ ॥

कृमिभिः क्षतकण्ड्वङ्गः[3] सौकुमार्यात् प्रतिक्षणम् ।
मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यैः क्षुधितैर्मुहुः　　॥ ७ ॥

कटुतीक्ष्णोष्णलवणक्षाराम्लादिभिरुल्बणैः ।
मातृभुक्तैरुपस्पृष्टः सर्वाङ्गोत्थितवेदनः　　॥ ८ ॥

उल्बेन संवृतस्तस्मिन्नान्त्रैश्च बहिरावृतः ।
आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः　　॥ ९ ॥

---

तत्र तस्य देहयात्राप्रकारं वक्ति— **मातुरिति** । आतुरो रोगी, तस्य सम्मतः । यथासौ परतः स्वदेहयात्रामाप्नोति तथायमिति । अन्नादीनां प्रवेशस्तु, आप्यायिनी नाम नाडी नाभिमूलादुत्पन्ना जरायुमुल्बं च निर्भिद्यास्य द्वारसंबद्धोष्ठपुटचुम्बिकमलदण्डनाडीवत्[1], तद्द्वारेत्यर्थः । तस्य निवासस्थानमाह —**आस्त इति** । सजन्तुः जन्तुभिः सह वर्तमानः । अनेनैवात्रैवेति[2] विवृतम् । जन्तूनां सम्भवो यस्मिन् स तथा तस्मिन् । अनेन जन्तूनामनवसानभयपरंपरोत्पत्तिः सूचिता ॥ ६ ॥

इदानीं तस्य दुःखानुभवप्रकारमाह— **कृमिभिरित्यादिना** । क्षतं च कण्डूश्चाङ्गेषु यस्य स क्षतकण्ड्वङ्गः ॥ ७ ॥

कटुर्मरीचिसंज्ञः द्रव्याश्रितधर्मो वा, तीक्ष्णः सर्षपः, उष्णमग्निमद् द्रव्यं, क्षारं दग्धमत्स्यास्थिचूर्णम् , आम्लश्चूतादिसंज्ञः, उल्बणैरतिक्रूरैरेतैरुपस्पृष्ट उपतप्तः सर्वाङ्गेषूत्थितोत्पन्ना वेदना यस्य स तथा ॥ ८ ॥

भुग्ने कुटिले पृष्ठशिरोधरे यस्य स तथा । मार्कण्डेये पितृपुत्रसंवादे कथितमेतत्—'नाडीचाप्यायिनी नाम नाभ्यां तस्य निबध्यते । स्त्रीणां तथात्र सुषिरे स निबद्धाथ जायते । क्रमन्ते भुक्तपीतानि स्त्रीणां गर्भोदरे तथा । तैराप्यायितदेहोऽसौ जन्तुर्वृद्धिमुपैति वै । नारिकेलफलं यद्वत् सकोशं वृद्धिमृच्छति । तद्वत् प्रयात्यसौ वृद्धिं सकोशोऽधोमुखःस्थितः । एवं वृद्धिं क्रमाद् याति जन्तुः स्त्रीगर्भसंस्थितः । तले तु जानुपार्श्वाभ्यां करयोर्न्यस्य वर्तते । अङ्गुष्ठौ चोपरि न्यस्य जान्वोरग्रे तथाङ्गुली । जानुपृष्ठे तथा नेत्रे जानुमध्ये च नासिकाम् । स्फिचौ च पार्ष्णिद्वन्द्वस्थौ बाहुजङ्घाबहिःस्थितौ ' इति ॥ ९ ॥

---

[1] अस्याभिप्रायस्तु न स्पष्टः । [2] आन्त्रैश्चेति विवृतम्-प्र । [3] कृमिभिः क्षतसर्वाङ्गः—इति पाठान्तरम्

अकल्पः स्वाङ्गचेष्टायां शकुन्त इव पञ्जरे ।
तत्रलब्धस्मृतिर्दैवात् कर्म जन्मशतोद्भवम् ।
स्मरन् दीर्घमनुच्छ्वासं गर्भे किं नाम विन्दते ॥ १० ॥

आरभ्य सप्तमान्मासाल्लब्धबोधोऽपि वेपितः ।
नैकत्रास्ते सूतिवातैर्विष्ठाभूरिव सोदरः ॥ ११ ॥

नाथमानो ऋषिर्भीतः सप्तवध्रिः कृताञ्जलिः ।
स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः ॥ १२ ॥

जीव उवाच —

तस्योपसन्नमवितुर्जगदिच्छयात्त-
लीलातनोर्भुवि लसच्चरणारविन्दम् ।

---

शकुन्तोऽनुत्पन्नपक्षः पक्षी । शितस्तनूकृतः अर्धोत्पन्नः कुन्तः पक्षो यस्य स तथेति वा । एवं क्लिश्यमानस्य तस्य नाना जातिसंस्मृतिश्च[1] लभ्यत इत्याह—**तत्रेति** । तत्र गर्भे दैवात् लब्धा स्मृतिर्येन स तथा । जन्मशतोद्भवं कर्म पुण्यपापलक्षणं स्मरन्, दीर्घमनुश्वासं कुर्वन्, देही तस्मिन् गर्भे किंनाम विन्दते ? स्वकर्मवशत्वात् नानाजातिगर्भस्थत्वात् ब्राह्मणादिनानाजातिनाम लभते इत्यर्थः[2] ॥ १० ॥

लब्धस्मृत्या च गर्भवासासारतां विजानतः तस्य ततो निष्क्रमणप्रयत्नं वक्ति—**आरभ्येति** । विष्ठाभूः कृमिः । सोदरः किं मे स्यादिति संशयोपेतः । 'उदरं संशयः प्रोक्तः' इत्यभिधानात् ॥११॥

इतोऽपि निर्गमनाय स्वप्रयत्नो निष्फलः, किन्तु हरेः प्रसाद एव प्रयोजक इति भावेन तं भगवन्तं स्तौति—**नाथमान इति** । नाथृ नाधृ याच्ञायामिति धातुः । एवंविधगर्भवासो मा भूदिति नाथमानः याचमानः । विक्लवया श्रोतृमनोद्रवणहेतुभूतया । ऋषिरिति पदेन 'तत्त्वज्ञानं तु देवानां गर्भस्थानां भविष्यति । उत्तमानां ऋषीणां वाप्यन्येषां बहुजन्मगम्' इति वाक्यं सूचयति । सप्त वध्रय इन्द्रियाणि यस्य स तथोक्तः । 'वध्रयस्त्विन्द्रियाण्याहुर्हृषीकाणीति चाप्युत' इति ॥ १२ ॥

स्तुतिस्तत्र सिद्धैर्गुणैः, उत मन्त्रगतैर्वा ? द्वावपि पक्षौ नोपपन्नौ । तस्य बुद्धेर्जन्मशतोद्भवकर्मविषयत्वेन चरितार्थत्वात् । अनवगाहत्वेन गुणेष्वनारोहात् । अत इयं स्तुतिर्या काचिदित्याशङ्क्य

---

[1] नानाजातिसंज्ञा-ग थ प्र । [2] शकुन्तोऽनुत्पन्नपक्षः पक्षी । दीर्घं चिरकालमनुच्छ्वासं कुर्वन् तत्र गर्भे किं नाम सुखं विन्दते ? न किमपीत्यर्थ इति यादुपत्यम् ।

सोऽहं व्रजामि शरणं नकुतोभयं मे
येनेदृशी गतिरदर्श्यसतोऽनुरूपा ॥ १३ ॥

यस्त्वत्र बद्ध इव कर्मभिरावृतात्मा
भूतेन्द्रियाशयमयीमवलम्ब्य मायाम् ।
आस्ते विशुद्धमविकारमखण्डबोध-
मातप्यमानहृदयेऽवसितं नमामि ॥ १४ ॥

यः पञ्चभूतरचिते रहितः[3] शरीरे
छन्नो यथेन्द्रियगुणार्थविदात्मकोऽहम् ।
तेनाविकुण्ठमहिमानमृषिं तमेनं
वन्दे परं प्रकृतिपूरुषयोः पुमांसम् ॥ १५ ॥

---

हरिशक्तेरचिन्त्यमहिमत्वेन सर्वं युक्तमिति भावेन तदुचितैर्गुणैः स्तौति—**तस्योपसन्नमित्यादिना** । योऽसौ दैवाल्लब्धस्मृतिः सोऽहं येन हरिणाऽसतोऽशुभस्य ममेदृशी गर्भवासलक्षणगतिरदर्शि तस्य हरे-र्लसच्चरणारविन्दं शरणं व्रजामि । किंविशिष्टस्य ? तस्योपसन्नं शरणागतं जगदवितु·, अव रक्षण इति[1] । इच्छया भक्तानुग्रहलक्षणया भुवि आत्तलीलातनोः स्वीकृतरामकृष्णादिलीलावतारस्य । अप्राप्यस्य[2] देवदत्तवत् सभयत्वे किं शरणव्रजनेन प्रयोजनमित्यत उक्तम् — **नकुतोभयमिति** । 'अभयं प्रतिष्ठां विन्दते', 'युक्ता ह्यस्य हरयः शता दश' इत्यादिश्रुतिरत्र प्रमाणम् ॥ १३ ॥

यो भूतेन्द्रियाशयमयीमाकाशादीनि पञ्चभूतानि, श्रोत्रादीनि दशेन्द्रियाणि आशयो मनः, एत-दात्मना विकृतां मायां प्रकृतिमवलम्ब्य प्रवर्तकत्वेनाश्रित्य, पुण्यपापलक्षणैः कर्मभिः आवृतात्मा सक्तः कर्मबद्धो जीव इव, अत्रास्मिन् शरीरे आस्ते । तुशब्देनात्यन्तवैलक्षण्यमनयोरस्तीति दर्शयति । 'तुच्छेनाभ्वपिहितम्' इति श्रुतिः । वैलक्षण्यं स्पष्टमाह—**विशुद्धमिति** । अविकारमस्ति जायत इत्यादिविकाररहितम् । हेतुगर्भविशेषणमाह—**अखण्डेति** । अनवच्छिन्नज्ञानम् । मम तापत्रयेण तप्यमानहृदये निरस्ततापतया अवसितं निश्चितं हरिं शरणमेमीत्यन्वयः । 'सत्यं ज्ञानमनन्तं ब्रह्म', 'य आत्मनि तिष्ठन्' इत्यादि श्रुतिः ॥ १४ ॥

एतदेव विवृणोति— **यः पञ्चेति** । आत्मक आत्माभासः. इन्द्रियाणि चक्षुरादीन्द्रियाणि गुणान् सत्त्वादीनर्थान् शब्दादीनुपभोगतया वेत्ति मन्यत इति इन्द्रियगुणार्थवित्, अहं यथा पञ्चभूत-

---

[1] धातुरिति शेषः । [2] प्राप्यस्य प्र । [3] पञ्चभूतरचितेऽवहितः—इति पाठान्तरम् ।

यन्माययोरुगुणकर्मनिबन्धनेऽस्मिन्
सांसारिके पथि चरंस्तदतिश्रमेण ।
नष्टस्मृतिः पुनरयं प्रवृणीत लोको
युक्त्या कया महदनुग्रहमन्तरेण ॥ १६ ॥

ज्ञानं यदेतददधात् कतमः स देव-
स्त्रैकालिकं स्थिरचरेष्वनुवर्तितांशः ।
तं जीवकर्मपदवीमनुवर्तमाना-
स्तापत्रयोपशमनाय वयं भजेम ॥ १७ ॥

देह्यन्यदेहविवरे जठराग्निनासृग्-
विण्मूत्रकूपपतितो भृशतप्तदेहः ।

---

रचिते शरीरे छन्नो वसामि तथायम् इन्द्रियगुणार्थतत्त्वज्ञो विष्णुः शरीरे छन्नो रहितोऽसङ्गत्वेन स्थितः । तेन हरिणा प्रेरितोऽहं तमविकुण्ठमहिमानमृषिं सर्वज्ञं प्रकृतिपुरुषयोः श्रीब्रह्मणोः परं परममेनं पुमांसं वन्द इत्यन्वयः । स्वप्रत्यक्षविषयत्वादेनमित्युक्तम् । 'त्वमग्ने प्रथमो अङ्गिरा ऋषिः', 'अक्षरमम्बरान्त धृतेः' इत्याद्यत्र मानम् ॥ १५ ॥

तत्प्रेरणयैव तद्वन्दनमिति कटाक्षितं स्पष्टयति—**यन्माययेति** । यस्य हरेर्माययेच्छया तदधीनया प्रकृत्या चोरुभिर्महद्भिः सत्त्वादिगुणैः कर्मभिश्च नितरां बन्धनं यस्मिन् स तथा तस्मिन् संसाराभिधाने पथि चरन् अयं लोकः पुनः तदतिश्रमेण तापत्रयातपतापेन नष्टस्मृतिर्नष्टज्ञानो महतो हरेरनुग्रहं प्रेरणालक्षणमन्तरेण विना कया युक्त्या तं हरिं प्रवृणीत मम स्वामीति शरणं गच्छेदित्यन्वयः ॥ १६ ॥

अतस्तदनुग्रहेणैव तज्ज्ञानमित्याह—**ज्ञानमिति** । यः कतमः सुखतमः भूमा देवस्त्रैकालिकमतीतजन्मादिविषयमेतज्ज्ञानं मे अदधादिति यद् यस्मादतः प्रेष्ठत्वाद् वयं तं त्वां तापत्रयोपशमनाय भजेम इत्यन्वयः । न केवलं मय्येवावस्थितोऽन्यत्राप्येवमिति भावेनोक्तम्—**स्थिरचरेष्विति** । अनुवर्तिता अन्तर्यामित्वेनानुगताः अंशाः अनन्तानि रूपाणि यस्य स तथा । अनुमितजीवत्वलक्षणस्य ममानेन सहाभेदो नास्तीति भावेनोक्तम्—**जीवेति** । जीवानां कर्मपदवीं संसारमार्गमनुवर्तमानाः ॥ १७ ॥

इदानीमात्मनो गर्भादाशु निर्गमनाभिप्रायं विज्ञापयति—**देहीति** । अन्यदेहविवरे मातृदेहोदरे वर्तमानोऽसृग्विण्मूत्रपूर्णकूपे पतितो, मातुर्जठराग्निना भृशतप्तदेहः, इतो देहाद् विवसितुं निर्गन्तुमिच्छन्,

इच्छन्नितो विवसितुं गणयन् स्वमासान्
निर्वास्यते कृपणधीर्भगवन् कदा नु ॥ १८ ॥

येनेदृशीं मतिमसौ दशमास्य ईश
संग्राहितः पुरुदयेन भवादृशेन ।
स्वेनैव तुष्यतु कृतेन स दीननाथः
को नाम तत्प्रति विनाञ्जलिमस्य कुर्यात् ॥ १९ ॥

पश्यत्ययं धिषणया ननु सप्तवध्रिः
शारीरभेदमशरीरवदस्य देहे ।
यद्दत्तया स तमहं पुरुषं पुराणं
पश्ये बहिर्हृदि च चैत्त्यमिव प्रतीतम् ॥ २० ॥

---

स्वमासान् कत्यवसिताः[1] कत्यत्रशिष्टा इति स्वविषयान् मासान् गणयन्, कृपणधीः देह्ययं भवता कदा नु निर्वास्यते निष्कास्यत इत्यन्वयः ॥ १८ ॥

यतः ईदृशमप्रतिक्रियं ज्ञानं मह्यं येन दत्तमतोऽसौ सर्वस्मात् प्रेयानित्याशयेनाह—**येनेति** । हे ईश असौ दशमास्योऽहं येन भवादृशेन पुरुषेणेदृशीं भगवद्विषयां मतिं संग्राहितः स दीननाथो भगवान् स्वेनैव कृतेन तुष्यतु । 'न ऋते त्वत्क्रियते' इत्यादिमन्त्रवर्णोऽत्र मानम् । को नाम तत्प्रति तस्य हरेः कृतस्य प्रतिनिधिं प्रत्युपकारमस्य हरेरञ्जलिं विना कुर्यात्, न कोऽपि कर्तुं समर्थ इत्यर्थः । करोति चेद् भवादृश एव नत्वितर इत्यतो भवादृशेनेत्युक्तम् ॥ १९ ॥

भगवदनुगृहीतज्ञानफलमाह—**पश्यत्ययमिति** । सप्त वध्रयो ज्ञानेन्द्रियाणि यस्य स तथोक्तः अयं जीवोऽस्य हरेरधीने देहे, शारीराणां जीवानां भेदम्, उपलक्षणमेतत्, जडादीनामपि[2], यद्दत्तया येन हरिणाऽनुगृहीतया धिषणया मत्या ज्ञानेन पश्यति । 'श्रुतं मे अश्विनाहव सप्तवध्रिं च मुञ्चतम्' इति श्रुतिः । अत्राधिकदृष्टान्तमाह—**अशरीरवदिति** । अशरीरः परमात्मा, अशरीरं चेति श्रुतिः, यथा पञ्चविधं भेदं पश्यति तथेति । अनेन ज्ञानस्य नैर्मल्यं सूचितम् । नन्वित्यनेनोक्तार्थावधृतिं प्रमाणानुमतिं वा दर्शयति । सोऽहं तं पुराणं पुरुषं चैत्त्यं चित्ताभिमानिनं चतुर्मुखमिव हृदि बहिश्च प्रतीतं विज्ञातं पश्ये संपश्य इत्यन्वयः । एतादृशं ज्ञानं देवानामेव योग्यं, नत्वितरेषां, तेषां बहुजन्मसाध्यम् । तदुक्तम् 'तत्त्वज्ञानं तु देवानां गर्भस्थानां भविष्यति' इति ॥ २० ॥

---

[1] कत्यतीताः-ग । [2] भेदमिति शेषः ।

सोऽहं वसन्नपि विभो बहुदुःखवासं
गर्भान्न निर्जिगमिषे बहिरन्धकूपे ।
यत्रोपयातमुपसर्पति देवमाया
मिथ्यामतिर्यदनु संसृतिचक्रमेतत् ॥ २१ ॥

तस्मादहं विगतविक्लव उद्धरिश्य
आत्मानमाशु तमसः सुहृदात्मनैव ।
भूयो यथा व्यसनमेदतनेकरन्ध्रं
मा मे भविष्यदुपसादितविष्णुपादः ॥ २२ ॥

भगवानुवाच —
एवं कृतमतिं[2] गर्भे दशमास्यं सपद्यृषिम् ।
सद्यः क्षिपत्यवाचीनं प्रसूत्यै सूतिमारुतः ॥ २३ ॥

---

न केवलमेतज्ज्ञानं वर्तमानविषयं किंत्वेष्यविषय[1]मपीति भावेनाह—**सोऽहमिति** । भो विभो बहुदुःखवासं वसन्ननुभवन्नपि सोऽहं गर्भाद् बहिर्विषयं न निर्जिगमिषे निर्गन्तुं नेच्छामि। किं कारणम्? अत्राह–**यत्रेति** । यत्र बहिरन्धकूपे अज्ञानलक्षणगर्ते उपयातं पतितं मां देवस्य मायया प्रकृत्या निर्मिता मिथ्यामतिः देहेऽहं ममेत्यादिलक्षणा उपसर्पति व्याप्नोति । ततश्च किम्? अत्राह—**यदन्विति** । यदनु यस्याः मिथ्यामतेः उत्पत्त्यनन्तरमेतत् संसृतिचक्रं जननमरणादिलक्षणं संसारमण्डलं भवत्यत इत्यर्थः ॥ २१ ॥

तस्मात् किं निरणायीति तत्राह—**तस्मादिति** । यस्माद् गर्भान्निर्गमने संसारमण्डलं भवति तस्मादहं सुहृदात्मनैव अनिमित्तबन्धोः हरेरनुग्रहादेव विगतविक्लवो भूत्वा तमसो नरकादात्मानमाशूद्धरिष्य इत्यन्वयः । भूयः पश्चात् यथैतदनेकरन्ध्रमनेकानर्थद्वारं व्यसनं मा मे भविष्यत् मा भूदिति कृत्वा । अत्र किं बलम्? अत्राह—**उपसादितेति** । अनेन हरिचरणशरणस्य पुरुषस्य स्वात्मोद्धारे न कोऽपि प्रयास इति सूचितम् ॥ २२ ॥

भगवतो हरेर्महिमाऽगणितप्रभाव इति ध्वनयन् गर्भस्थस्य प्रसूतिप्रकारं वक्ति—**एवमिति** । ऋष्यादिकुल उत्पत्स्यमानस्य तत्क्षणे ज्ञानं भवतीति द्योतनाय सपद्यृषिमित्युक्तम् । ऋषिस्त्रिकालदर्शी स्यादिति हलायुधः । सर्वोऽपि क्षणिक इत्याशयेनोक्तम्—**सद्य इति** । अवाचीनमधःशिरसम् ॥ २३ ॥

---

[1] एष्यद्विषयम्–च । [2] कृतमतिः–क ।

तेनोपसृष्टः सहसा कृत्वाऽवाक् शिर[1] आतुरः ।।
विनिष्क्रामति कृच्छ्रेण निरुच्छ्वासो गतस्मृतिः[2] ।। २४ ।।

पतितो भुव्यसृङ्मूत्रे विष्ठाभूरिव चेष्टते ।
रोरूयति गतज्ञानो[3] विपरीतां गतिं गतः ।। २५ ।।

परच्छन्दं नविदुषा पुष्यमाणो जनेन सः ।
अनभिप्रेतमापन्नः प्रत्याख्यातुमनीश्वरः ।। २६ ।।

शायितोऽशुचिपर्यङ्के जन्तुः स्वेदजदूषिते ।
नेशः कण्डूयनेऽङ्गानामासनोत्थानचेष्टने ।। २७ ।।

तुदन्त्यामत्वचं दंशा मशका मत्कुणादयः ।
रुदन्तं विगतज्ञानं कृमयः कृमिकं यथा ।। २८ ।।

स त्वेवं शैशवं भुक्त्वा दुःखं पौगण्डमेव च ।
अलब्धाभीप्सितोऽज्ञानादिद्धमन्युः शुचार्पितः ।। २९ ।।

---

तेन वायुना । येन देहाभिमानेन पूर्वमुपसृष्टः संसारमन्वभूत् तेन देहाभिमानेन सहेति वा । शिरोऽवाक्[4] कृत्वेत्यवाचीनमित्यस्य विवरणम् । तेन पादप्राथम्येन जन्म प्रायिकम् इदमेव सर्वत्र प्रधानमिति ध्वनयति । गतस्मृतिर्नष्टजन्मान्तरज्ञानः ।। २४ ।।

विष्ठैव भूः स्थानं यस्य स तथा । विष्ठातो भवति उत्पद्यत इति वा विष्ठाभूः कृमिः । रोरूयति रोरूयते । रु शब्दे । विपरीतां गतिं मनुष्यवासनां[5] गतः ।। २५ ।।

परच्छन्दमन्यस्याभिप्रेतम् । प्रत्याख्यातुं नापेक्षितमिति निराकर्तुमनीश्वरोऽसमर्थः ।। २६ ।।

अशुचिपर्यङ्के शकृन्मूत्रमिश्रत्वादशुद्धे दोलायमाने दारुविरचिते तल्पविशेषे ।। २७ ।।

आमत्वचं मृदुनूतनत्वचं, दंशा सूचीमुखाः, मशकाः सूक्ष्ममक्षिकाः, कृमिकं मणिकीटम् ।।२८।।

पञ्चवर्षपर्यन्तं शैशवं, तत आसप्तमवर्षात्[6] कौमारं, तत आद्वादशवर्षात् पौगण्डम् । अज्ञानादिति[7] अनभीष्ट[8]कर्तु[9]रभिमानिनाम् इति शेषः ।। २९ ।।

---

[1] अर्वाक् शिरः–ग । [2] हतस्मृतिः–ग । [3] गते ज्ञाने–ग । [4] अर्वाक्–ग ।
[5] विपरीतां गतिम् अज्ञानलक्षणामिति यादुपत्यम् । [6] वर्षे–च । [7] अज्ञानाद् हरिस्वातन्त्र्याज्ञानादिति यादुपत्यम् । [8] अभीष्ट–च । [9] कर्तुम्–घ ।

सह देहेन मानेन वर्धमानेन मन्युना ।
करोति विग्रहं कामी कामिष्वन्ताय चात्मनः ॥ ३० ॥

भूतैः पञ्चभिरारब्धे देहे देह्यबुधोऽसकृत् ।
अहंममेत्यसद्ग्राहां करोति कुमतिर्मतिम् ॥ ३१ ॥

तदर्थं कुरुते कर्म यद्बद्धो याति संसृतिम् ।
तमो विशति यद्बद्धो येनासौ मर्त्यजन्मनि ॥ ३२ ॥

येन यातीदृशं क्लेशमविद्याकर्मबन्धनम् ॥ ३३ ॥

यद्यसद्भिः पथि पुनः शिश्नोदरकृतोद्यमैः ।
आस्थितो रमते जन्तुस्तमो विशति पूर्ववत् ॥ ३४ ॥

सत्यं शौचं दया मौनं बुद्धिः श्रीर्ह्रीर्यशः क्षमा ।
शमो दमो भगश्चेति यत्सङ्गाद् याति संक्षयम् ॥ ३५ ॥

---

सह देहेन मानेन देहाभिमानेन । विग्रहं वैरम् । आत्मनोऽन्ताय स्वस्य नाशाय । कामिषु विषयलालसेषु ॥ ३० ॥

सह देहेनेत्येतद् विवृणोति— **भूतैरिति** । अहंममेत्यसद्ग्राहो दुराग्रहो यस्यां[1] सा तथा ताम् ॥ ३१ ॥

तदर्थमहंममेत्यसद्ग्राहदृढीकरणाय । येन कर्मणा बद्धः ॥ ३२ ॥

एतदेव स्पष्टयति—**येनेति** । ईदृशं नरकादिलक्षणं क्लेशमविद्याकर्मबन्धनं च ॥ ३३ ॥

मनुष्ययोनेः पुरुषार्थहेतुत्वात् कथं निन्द्यत्वम् ? अत्राह—**यदीति** । पथि पुरुषार्थहेतौ मनुष्ययोनौ स्थितो जन्तुः शिश्नोदरयोः पोषणे कृत उद्यमः प्रयत्नो यैस्ते तथा तैरसद्भिः जीवपरमात्माद्यभेदविद्भिः चासुरप्रकृतिभिः सह यदि रमते तर्हि पूर्ववत् तमो विशतीत्यन्वयः ॥ ३४ ॥

मुक्तिसाधनसत्त्वादिगुणवत्त्वे कथमसत्सङ्गात् तमःप्रवेश इति तत्राह—**सत्यमित्यादिना** । बुद्धिः पुरुषार्थविषया, श्रीर्भगवद्भक्तिसंपल्लक्षणा, ह्रीरकार्यकरणे लज्जा, क्षमा सापराधेषु वैष्णवेषु सहनशीलता[2], शमो बाह्येन्द्रियनिग्रहः, दमोऽन्तःकरणनिग्रहः, भगो देशाधिपत्याद्यैश्वर्यलक्षणः ॥ ३५ ॥

---

[1] यस्याः-च । [2] तत्सहनशीलता-क ।

तेष्वशान्तेषु मूढेषु खण्डितात्मावसायिषु ।
सङ्गं न कुर्याच्छोच्येषु[1] योषित्क्रीडामृगेषु च ॥ ३६ ॥
न तथास्य भवेन्मोहो बन्धश्चान्यप्रसङ्गतः ।
योषित्सङ्गाद् यथा पुंसां[2] यथा तत्सङ्गिसङ्गतः ॥ ३७ ॥
प्रजापतिर्दुहितरं दृष्ट्वा तद्रूपधर्षितः ।
रोहिद्भूतां सोऽन्वधावद् ऋष्यरूपी हतत्रपः ॥ ३८ ॥
तत्सृष्टिसृष्टसृष्टेषु कोन्वखण्डितधीः पुमान् ।
ऋषिं नारायणमृते योषिन्मय्येह मायया ॥ ३९ ॥
बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम् ।
या करोति निजायत्तान् भ्रूविजृम्भेण केवलम् ॥ ४० ॥

---

अशान्तेषु हरिनिष्ठादिगुणरहितेषु । अविवेकिषु अखण्डितात्मा परमात्मा अपरिच्छिन्नत्वाद्, तद्विलक्षणः खण्डितात्मा जीवः, अणुर्ह्येष आत्मेति श्रुतेः, स एवास्मिन् शरीरेऽस्ति नान्य इत्यवसायो येषां ते तथा, तेषु जीवमात्रज्ञानिषु । सङ्गं स्नेहादिलक्षणम् । योषितां क्रीडामृगवद् वर्तमानेषु ॥ ३६ ॥

जीवेश्वराभेददर्शिसङ्गवत् दुष्टस्त्रीसङ्गोऽपि मोहकारणतया दुःखकर इति निरूपयति—**न तथेत्यादिना** । अन्येषां प्राकृतानां प्रसङ्गतः । तासां सङ्गिनां पुंसां सङ्गतः ॥ ३७ ॥

अत्र किंपुनर्न्यायमाह — **प्रजापतिरिति** । रोहिद्भूतां मृगीभूताम् ऋश्यरूपी मृगरूपी । दुहितरमिति वचनं स्त्रीणामतिमोहकत्वद्योतनाय, दुष्टजनमोहनार्थं चेति ज्ञातव्यम् । अन्यथा ' न कर्हिचिन्मे मनसो मृषा गतिः ' इति वचनविरोधः स्यात् ॥ ३८ ॥

[3]तस्य ब्रह्मणः सृष्टौ सृष्टाः स्वायम्भुवादयस्तैः सृष्टाः प्रियव्रतादयस्तेषु । सृष्टौ सृष्टा मरीच्यादयः तत्सृष्टाः कश्यपादयः तत्सृष्टाः उत्तमादयस्तेष्विति वा । योषिन्मय्या मायया मोहकशक्त्याऽखण्डितधीः कः पुमान् ? न कोऽपीत्यर्थः किम् ? अत्राह—**ऋषिमिति** ॥ ३९ ॥

अन्येषामपि तज्जयित्वं किं न स्यादेवम् ? अत्राह—**बलमिति** । या केवलं भ्रूविजृम्भेण दिशां जयिनो राजादीन् निजायत्तान् स्वाधीनान् करोति तस्याः मे स्त्रीमय्याः मायायाः मयस्य प्रधानस्य

---

[1] लोकेषु—च । [2] पुंसो—च । [3] तस्य ब्रह्मणः सृष्टौ सृष्टाः प्रियव्रतादयः तैः सृष्टा उत्तमादयः तेषु । सृष्टा मरीच्यादयः तत्सृष्टाः कश्यपादयस्तेष्विति वा—च ग । तस्य ब्रह्मणः सृष्टौ सृष्टाः स्वायम्भुवादयः तैः सृष्टाः प्रियव्रतादयः तेषु । सृष्टा मरीच्यादयः तत्सृष्टाः कश्यपादयस्तेष्विति वा—घ ।

सङ्गं न कुर्यात् प्रमदासु जातु योगस्य पारं परमारुरुक्षुः ।
मत्सेवया प्रतिलब्धात्मलाभो[1] वदन्ति यां निरयद्वारमस्य ॥ ४१ ॥

योपयाति शनैर्माया योषिद् देवविनिर्मिता ।
तामीक्षेतात्मनो मृत्युं तृणैः कूपमिवावृतम् ॥ ४२ ॥

यां मन्यते पतिर्मोहान्मन्मायामृषभायतीम् ।
स्त्रीत्वं स्त्रीसङ्गतः प्राप्तां वित्तापत्यगृहप्रदाम् ॥ ४३ ॥

---

मम वशाया मोहकशक्त्याः बलं पश्येत्यन्वयः । 'मयः प्रधानमुद्दिष्टो माया तद्वश उच्यते' इति वचनात् मे मायाया इति ॥ ४० ॥

फलितमाह — **सङ्गं न कुर्यादिति** । तत्त्वविस्मरणहेतुत्वात् प्रमाखंडनसाधनत्वाद् वा[2] । प्रमदाः स्त्रियस्तासु जातु कदाचित् प्रहेलिकाविषयेऽपि सङ्गं रागादिलक्षणं न कुर्यादित्यन्वयः । क इत्यत्र उक्तम्—**योगस्येति** । अयोग्यत्वे केवलयोगारोहेच्छया किं स्यादित्यत उक्तम्—**मत्सेवयेति** । वेदान्तादिशास्त्रश्रवणादिलक्षणया मत्सेवया प्रतिलब्ध आत्मलाभो विषयत्यागेन स्वरूपानन्दो येन स तथा । निर्जितेन्द्रियग्रामत्वेन स्वरूपानन्दानुभवेन सन्तुष्ट इत्यर्थः । प्रतिलब्धात्मभाव इति पाठे सम्यक् संप्राप्तपरमात्मभक्तिरित्यर्थः । अनेन स्वज्ञानदानयोग्यपुरुषेषु युक्तो नियतभार्यासु च सङ्गमन्तरेणेतरसङ्गो वर्जनीय इति प्रकाशितम् । तदुक्तम्—'सत्पुंसु च तथा स्त्रीषु न सङ्गो दोषमावहेत् । यथायोग्यगुणायैव दोषकृद् दुष्टजन्तुषु' इति । तत्सङ्गात् कोऽनर्थ इत्यत उक्तम्—**यामिति** । अस्य कामुकस्य । अनेन स्त्रियः सर्वथा वर्जनीया इत्युक्तम् । तदुक्तम्—'अङ्गारसदृशी नारी घृतकुम्भसमः पुमान् । तस्मान्नारीषु संसर्गं दूरतः परिवर्जयेत् । गौडी माध्वी तथा पैष्टी विज्ञेया त्रिविधा सुरा । चतुर्थी प्रमदा ज्ञेया ययेदं मोहितं जगत् । माद्यति प्रमदां दृष्ट्वा सुरां पीत्वैव माद्यति । यस्माद् दृष्टिमदा[3] नारी तस्मात् तां नावलोकयेत्' इति ॥ ४१ ॥

इतोऽपि सर्वप्रयत्नेन दुष्टा स्त्री वर्ज्येत्याह—**योपयातीति** । या देवनिर्मिता योषिन्माया भार्यात्वेनोपयाति मुमुक्षुः तामात्मनो मृत्युमीक्षेत । किञ्च तृणैरावृतं कूपमिव ॥ ४२ ।

पतिः यां मोहात् स्त्रीसङ्गतः, स्त्यै ष्ट्यै शब्दसङ्घात इति धातुः शब्दादिष्वासक्तितः कारणात् स्त्रीत्वं प्रमदाभावं प्राप्ताम् । ऋषभायतीं रतौ पुरुषीकरणं नामारोपः पुरुषधर्मः तमाचरन्तीं

---

[1] आत्मभावो–ङ । [2] 'प्रकृष्टमदजनकत्वाद्वा'—इत्यधिकः गपाठः । [3] दृष्टमदा–च ।

**तमात्मनो विजानीयाद् भृत्यापत्यगृहात्मकम् ।**
**दैवोपसादितं मृत्युं मृगयोर्गायनं यथा ॥ ४४ ॥**

**देहेन जीवभूतेन लोकाल्लोकमनुव्रजन् ।**
**भुञ्जान एव कर्माणि करोत्यविरतं पुमान् ॥ ४५ ॥**

**जीवो यस्यानुगो देहो भूतेन्द्रियमनोमयः ।**
**तन्निरोधोऽस्य मरणमाविर्भावस्तु सम्भवः ॥ ४६ ॥**

---

मन्मायां वित्तापत्यगृहप्रदां मन्यते, तामिति पूर्वेण संबन्धः[1] ॥ ४३ ॥

हरिभक्त्यादियुता पत्न्यपि हरिभक्तिरहितं पतिमात्मनो मृत्युमीक्षेत, नरकहेतुं पश्येत् । किंविशिष्टम् ? भृत्यापत्यगृहात्मकम् । कथमिव ? यथा मृगयोः मृगान् वधार्थं यातीति, मृगव्यादयश्चेति कुः, मृगयुस्तस्य मृगयोर्व्याधस्य, 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः' इत्यमरः, गायनं मृगस्य मृत्युहेतुः तथेत्यर्थः । 'सत्पुंसु च तथा स्त्रीषु'[2] इत्याद्युक्तमत्रापि प्रमाणम् ॥ ४४ ॥

ज्ञानं विना न कर्मक्षयः किन्तु कर्म परम्परामेव करोतीत्याह—**देहेनेति** । जीवभूतेन जीवानां कर्मजातेन लोकाल्लोकं देहाद् देहम् । स्वायोग्यभार्यादिप्राप्तौ किं कारणमित्यतो वा कर्म कारणमित्याह—**देहेनेति** ॥ ४५ ॥

जीवलक्षणमाह—**जीव इति** । भूतेन्द्रियमनोमयो देहो यस्यानुगः स जीव इति । मृतो जात इति व्यवहारात् जीवोऽनित्य एवेति न शङ्कनीयं, तस्य देहवियोगसंयोगावेव मरणजनने, न तु स्वरूपनाशः, तथा सति मोक्षादियोग्यताकथनं व्यर्थं स्यादिति भावेनाह—**तन्निरोध इति** । अस्य जीवस्य तन्निरोधस्तस्य देहस्य नाशो भूतेषु लयो मरणम्, आविर्भावो भूतसंयोगलक्षणो विशेषतया प्रकाशः सम्भवो जननं नाम । तुशब्दस्तेषां किञ्चिद्विशेषद्योतकः[3] ॥ ४६ ॥

---

[1] एवमन्यस्त्रीसङ्गोऽनर्थप्रद इत्युक्त्वा इदानीं स्वस्त्रीसङ्गोऽप्यनर्थप्रद इत्याह—यामिति । ऋषभायतीं पुरुषवदाचरन्तीम् । सर्वनिर्वाहिकामिति यावत् । अनेनैतादृशी पूर्वं पुरुष इति सूचयति । तर्हि कथं स्त्रीत्वं प्राप्तेत्यपेक्षायामाह—स्त्रीत्वमिति । स्त्रीसङ्गतः पूर्वदेहत्यागकाले स्त्रीध्यानेन । यं यं वापि स्मरन् भावमिति वचनात् । तमिति विधेयापेक्षया पुल्लिंग निर्देशः—इति यादुपत्यम् ।

[2] सत्पुंसु च तथा स्त्रीषु न सङ्गो दोषमावहेत् । यथायोग्यं गुणायैव दोषकृद् दुष्टजन्तुषु ।—तात्पर्योदाहृतवाराहवचनमेतत् । [3] तुशब्दः केषाञ्चिद् विशेषद्योतकः–प्र ।

द्रव्योपलब्धिस्थानस्य द्रव्येक्षाऽयोग्यता यदा ।
तत् पञ्चत्वमहंमानादुत्पत्तिर्द्रव्यदर्शनम् ॥ ४७ ॥
यथाक्ष्णोर्द्रव्यावयवदर्शनायोग्यता यदा ।
तदैव चक्षुषो द्रष्टुर्द्रष्टृत्वं योग्यताऽनयोः ॥ ४८ ॥

---

उक्तमर्थं स्पष्टयति—**द्रव्योपलब्धीति** । द्रव्याणां पञ्चभूतानामुपलब्धिस्थानस्य शरीरस्य पृथिव्यादिविषयज्ञानाश्रयत्वात् द्रव्येक्षाया घटादिदर्शनस्य अयोग्यता घटादिद्रव्यदर्शनयोग्यत्वं यदा नास्ति, तदा तद्दर्शनं[1] पञ्चत्वं मरणसंज्ञं भवति । अहंमानादहमिदं शरीरमित्यभिमानात् द्रव्यदर्शनमेवोत्पत्तिरित्यन्वयः[2] ॥ ४७ ॥

इदं दृष्टान्तयति — **यथेति** । यथाक्ष्णोः चक्षुषोः, द्रव्यावयवः शौक्ल्यादिरूपं, तस्य दर्शनेऽयोग्यता कामलादिदोषदुष्टतया सामर्थ्यं नास्ति, तदैव चक्षुषः सकाशात् द्रष्टुरात्मनः, द्रष्टृत्वं नेति शेषः । यदानयोश्चक्षुषोर्योग्यता, अस्तीति शेषः, तदा चक्षुषः सकाशात् द्रष्टृत्वं प्रतीयत इत्यन्वयः[3] ॥ ४८ ॥

---

[1] अदर्शनमिति स्यात् । [2] ननु तन्निरोधोऽस्य मरणमित्ययुक्तम् । भस्मीभावात् पूर्वं स्थूलदेहे शवरूपे विद्यमानेऽपि जीवो मृत इति व्यवहारप्रदर्शनादित्यतस्तदभिप्रायं मूलकृत् स्वयमेवाह—द्रव्योपलब्धीति । द्रव्योपलब्धिस्थानस्य जीवे पदार्थदर्शनेऽवच्छेदकस्य देहस्य द्रव्येक्षायां पदार्थदर्शनजनने यदा अयोग्यता भवति, तत् तदेव तस्य पञ्चत्वं मरणं विवक्षितं न स्वरूपनाशः । ईक्षाभाव इत्येवोक्ते सुप्तादावपि मृत इति व्यवहारप्रसङ्गः । अतस्तद्योग्यताभावपर्यन्तं धावनमिति ज्ञातव्यम् । घटादवुक्तायोग्यत्वस्य सत्त्वेन पञ्चत्वव्यवहारप्रसंगवारणाय द्रव्योपलब्धिस्थानस्येत्युक्तम् । नन्वेवं तद्भूर्युत्पत्तिरपि एतद्विपरीतैव देहस्य वक्तव्या । ओमित्याह—अहंमानादिति । द्रव्योपलब्धिस्थानस्य यद् अहंमानाद् अहंमानेन शरीरेण, कर्ता (त्र्रा ?) ममेदमित्यभिमानविषयत्वात् , द्रव्यदर्शनं पदार्थदर्शनयोग्यतावत्त्वं भवति तत् सैव तस्योत्पत्तिरित्यर्थः । अहंमानादित्युक्ताभिमानविषयत्वयोग्यत्वाभावः पञ्चत्वं तद्योग्यतावत्त्वमेवोत्पत्तिरित्यपि सूचयति ।—यादुपत्यम् ।

[3] अत्र 'चक्षुःसकाशाद् द्रष्टुः द्रष्टृत्वमक्ष्णोर्योग्यता' इति तात्पर्यम् । अक्ष्णोर्गोलकयोरिति यादुपत्यम् ।

ननु जन्ममरणरूपयोरुक्तयोग्यत्वायोग्यत्वयोर्देहनिष्ठयोः कथं जीवे तद्व्यवहारजनकत्वमित्यशङ्कायां दृष्टान्तमुखेन तदुपपादयति यथेति । यथा चक्षुष इन्द्रियस्य द्रव्याणि तदवयवाश्च, चक्षुर्योग्याः सर्वे पदार्था इति यावत् , तेषां दर्शनायोग्यता तज्जनना योग्यता (तद्दर्शनजनना योग्यता) यदा मरणकाले भवति, तदैव तस्मिन्नेवकाले अक्ष्णोर्गोलकयोरपि सा भवतीति व्यवहारः । यथा च यदा चक्षुषः सकाशाद् द्रष्टुर्जीवस्य द्रष्टृत्वं, चक्षुषो जीवकर्तृकपदार्थविषयकदर्शनजननयोग्यतेति यावत् । तदैवानयोरक्ष्णोर्गोलकयोरपि योग्यता भवतीति व्यवह्रियते । तथैव देहधर्मयोरुक्तरूपयोर्जननमरणयोर्जीवे व्यवहार इति ।— इति यादुपत्यम् ।

अक्ष्णोश्चक्षुर्गोलकयोः यदा दर्शनायोग्यता तदैव चक्षुषः अयोग्यता, तद्द्वारा द्रष्टुश्चायोग्यता । तद्वत् देहे

पुंसो यथैवेन्द्रियाणि विन्दन्ति स्वगतं परम् ।
सुखं दुःखं नान्यगतं तथेशांशाः पृथक्कलाः ॥ ४९ ॥
आत्मनः केवलं ज्ञानमर्थो देहाद्यसङ्गिनः ।
सुखदुःखादयो भावा न देहस्य न चात्मनः ॥ ५० ॥
तस्मान्न कार्यः सन्त्रासो न कार्पण्यं न सम्भ्रमः ॥ ५१ ॥
बुद्ध्वा जीवगतिं धीरो मुक्तसङ्गश्चरेदिह ।
सम्यग्दर्शनया बुद्ध्या योगवैराग्ययुक्तया ।

---

नन्विह संसरन् जीवो ब्रह्मैव चेतनत्वाद्, ब्रह्मैव संसरति ब्रह्मैव मुच्यत इत्याचार्योक्तेः ? तत्राह —**पुंस इति** । पुंसः पुरुषस्य चक्षुरादीन्द्रियाणि यथा परं केवलं स्वगतं स्वविषयं रूपादिकं तन्निमित्तसुखादिकं विन्दन्ति, नान्यगतं चक्षुर्ग्राह्यं श्रोत्रं न जानाति श्रोत्रग्राह्यं चक्षुरित्यादि, अतो मिथ इन्द्रियाणां भेदः प्रसिद्धः, तथेशांशाः जीवाः संसरन्तः पृथक्कलाः अन्योन्यं हरेश्च भिन्ना इत्यत आचार्योऽपि तत्त्वज्ञानी न स्यादित्यर्थः । यः सर्वज्ञ इति श्रुतेः[1] ॥ ४९ ॥

नन्वेवं तर्हि यावज्जीवमस्य संसारबन्ध एव, नास्मान्मुक्तिः ईदृग्दुःखनिवर्तकसाधनाभावादित्यत्राह —**आत्मन इति** । आत्मनो जीवस्य केवलमद्वन्द्वं हरेर्ज्ञानमेवार्थः पुरुषार्थः, ईदृग्दुःखनिवृत्तिसाधनलक्षण इत्यर्थः । एवंविधज्ञानोत्पत्तौ मुख्यसाधनं ध्वनयति—**देहादीति** । अहंममेति देहाद्यसङ्ग एव साधनमित्यर्थः । ननु देहाद्यसङ्गिनो जीवस्योत्पद्यमानं कथंकारमुत्पद्यते ज्ञानमित्यतस्तं प्रकारमाह— **सुखदुःखादय इति** । 'बलमानन्द ओजश्च' इत्यादि श्रुतेः स्वतः सुखादिरूपत्वादात्मनो जीवस्य सुखदुःखादयो भावा न सन्ति किमुत देहस्य ? अचेतनत्वादिति चशब्दार्थः ॥ ५० ॥

**तस्मादिति** । यस्माद् देहदेहिनोर्न सर्वथा सुखादयो भावाः किन्त्वाभिमानिका अज्ञानादुत्पद्यन्ते, तस्मात् त्रासादिकं न कार्यमित्यर्थः ॥ ५१ ॥

ननु जीवन्मुक्तोऽस्मिंल्लोके कथं वर्तत इति तत्राह—**बुध्द्वेति** । यस्य देहाद्यसङ्गिनो जीवस्य कलेवरं मायाविरचिते श्रीनारायणेच्छानिर्मिते लोके कर्मभूमौ चरेच्चरति वर्तते, स मुक्तसङ्गो धीरो

---

मृते जीवस्यापि तद्व्यवहारः । यदाऽक्ष्णोर्योग्यता तदैव चक्षुषोऽपि योग्यता, चक्षुषो द्वारा द्रष्टुरपि द्रष्टृत्वम् । तद्वत् देहे जाते जीवेऽपि जातत्वव्यवहारः । गोलकगते एव योग्यताऽयोग्यते जीवगते व्यवह्रियेते । तद्वत् देहगते जनिमृती अपि जीवगते इति । —इत्यपि व्याख्यान्ति ।

[1] यत ईशः सर्वज्ञः जीवाश्च नान्यगतं विन्दन्ति अतस्ते परस्परम् ईशाच्च भिन्ना इत्यर्थः ।

**मायाविरचिते लोके चरेद् यस्य कलेवरम् ॥ ५२ ॥**

इति श्रीमद्भागवते तृतीयस्कन्धे द्वात्रिंशोऽध्यायः ।

॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

**भगवानुवाच —**

**अथ यो गृहमेधीयान् धर्मानेवावसन् गृहे ।**
**धर्ममर्थं च कामं च दोग्धि भूयः पिपर्ति तान् ॥ १ ॥**

**स चापि भगवद्धर्मात् काममूढः पराङ्मुखः ।**
**यजते क्रतुभिर्देवान् पितॄंश्च श्रद्धयान्वितः ॥ २ ॥**

---

गम्भीरो ज्ञानी, सम्यक् यथार्थं दर्शनं ज्ञानं यस्याः सा तथा, तया भक्तियोगवैराग्ययुक्तया बुद्ध्या जीवानां गतिं स्वर्गनरकादिलक्षणामाश्रयं[1] श्रीनारायणं बुद्ध्वा तमेव निरन्तरं निषेवमाणश्चरेत् वर्तेत इत्यन्वयः ॥ ५२ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे द्वात्रिंशोऽध्यायः ।

॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

अर्चिरादिमार्ग एवानावृत्तिमोक्षसाधनम्, स च भक्त्यैकलभ्य इत्यर्थमस्मिन्नध्याये वक्ति । तत्रादौ धूमादिमार्गः कर्मिणां स्वर्गप्राप्तिसाधनं, सोऽपीषद्भगवद्भक्तिमत एवेत्यतः प्रधानसाधनं भक्तिरेवेति दर्शयितुमाह—**अथेति** । अथ प्रवृत्तिमार्गस्थस्य फलमुच्यते । किं तदिति ? यो गृहमेधीयान् गृहस्थयोग्यान् धर्मानेवावसन् तेष्वेव वर्तमानो धर्ममर्थं च कामं च दोग्धि । तत्फलमिति शेषः । भूयस्तानेव पिपर्ति, पॄ पालनपूरणयोरिति धातोः पुत्रादिषूपदेशेन रक्षति, स्वयं कृत्वा वर्धयतीत्यर्थः ॥१॥

तद्वर्धनप्रकारमाह—**स चापीति** । चशब्दो हेत्वर्थः । दुःखनिवृत्तिसुखप्राप्तिसाधनभगवद्धर्माद् भक्तिलक्षणात् पराङ्मुखोऽपि काममूढश्च स्रक्चन्दनवनितादिकाममूढत्वेन स गृही क्रतुभिर्देवान् यजते, श्राद्धादिना पितॄंश्चेत्यन्वयः ॥ २ ॥

---

[1] स्वर्गनरकादिलक्षणाया गतेः दातृत्वेनाश्रयं श्रीनारायणं बुद्ध्वेत्यर्थः ।

तच्छ्रद्धयाक्रान्तमतिः पितृदेवव्रतः पुमान् ।
गत्वा चान्द्रमसं लोकं सोमपाः पुनरेष्यति[1] ॥ ३ ॥

यदा चाहीन्द्रशय्यायां शेतेऽनन्तासनो हरिः ।
तदा लोका लयं यान्ति त एते गृहमेधिनाम् ॥ ४ ॥

ये स्वधर्मं[2] न दुह्यन्ति धीराः कामार्थहेतवे ।
निःसङ्गा न्यस्तकर्माणः प्रशान्ताः शुद्धचेतसः ॥ ५ ॥

निवृत्तिधर्मनिरता निर्ममा निरहङ्कृताः ।
स्वधर्माख्येन सत्त्वेन परिशुद्धेन चेतसा ॥ ६ ॥

सूर्यद्वारेण ते यान्ति पुरुषं विश्वतोमुखम् ।
परावरेशं प्रकृतिमस्योत्पत्त्यन्तभावनम् ॥ ७ ॥

---

तत्पूजाफलमाह—**तच्छ्रद्धयेति** । तेषां देवादीनां यजनकर्तव्यताश्रद्धया । पितॄणां देवानां सन्तुष्टियोग्यं व्रतं यस्य स तथा । धूमादिमार्गेण चन्द्रमसं चन्द्रेणाधिकृतं लोकं स्वर्गैकदेशं गत्वा भगवद्धर्मात् पराङ्मुखः पुमान् पुण्यफलं भुक्त्वा पुनः पापफलं भोक्तुं निरयमेष्यति । भगवतीषद्भक्तः स्वर्गकाममूढः पुमान् स्वर्गं गत्वा भुक्तपुण्यशेषेण पुनर्भूलोकमुपैष्यति । इत्येतत् तात्पर्यार्थः, 'ईशद्भक्तो भगवति सुकर्मा स्वर्गमेष्यति । अभक्तो निरयं याति सुकर्मापि न संशयः' इत्यनेनावगम्यते ॥ ३ ॥

प्रवृत्तिधर्मिणां लोकानामन्तवत्त्वेन तच्छ्रद्धा न कार्येतिभावेन तन्नाशावधिमाह–**यदेति** । चशब्देन लोकनाशस्यावश्यंभावित्वमाह ॥ ४ ॥

निवृत्तिधर्मिणां मार्गं गम्यं तत्साधनं च संक्षिप्याह—**निवृत्तीति** । पुरुषस्य स्वरूपधर्मः सत्त्वगुणस्तेन । यद्वा सत्वेनात्मभावेन[3] परमात्मभक्त्या सूर्यद्वारेणार्चिरादिमार्गेण मानवनामानं[4] पुरुषं यान्ति । किं तत्रैवावस्थानमुतान्यत्रापीति तत्राह—**विश्वतोमुखमिति** । विभक्तिविपरिणामेन पुरुषेणेत्यनुवर्तनीयम् । मानवपुरुषेणाप्रतीकालम्बना[5] अपि विश्वतोमुखं सर्वज्ञं, परावरेशं मुक्तामुक्तप्रपञ्चेश्वरं, प्रकृतिं मूलकारणम्, अस्य जगत उत्पत्त्यन्तभावनं सृष्टिसंहारकारणं, विष्णुं यान्तीत्यन्वयः । इदमुक्तं भवति । प्रतीकालम्बना अप्रतीकालम्बना उभयेऽपि ज्ञानिनो विष्णुं प्राप्यापि मानवपुरुषेण कार्यब्रह्म-

---

[1] पुनरेष्यति भूमिगान्-च । [2] स्वकर्म-च । [3] सत्त्वेन सतो भावः सत्त्वं मोक्षयोग्यत्वं, तेनाप्रतीकालम्बनत्वादिरूपेणेति यादुपत्यम् । [4] मानवो मुख्यवायुः । तत्पुरुषो मानव इति श्रुतेः । [5] प्रतीकालम्बना अपि–च प्र ।

द्विपरार्धावसाने यः प्रलयो ब्रह्मणस्तु ते ।
तावदध्यासते लोके परस्य परिचिन्तकाः ॥ ८ ॥

क्ष्माम्भोनलानिलवियन्मनइन्द्रियार्थ-
भूतादिभिः परिवृतः प्रतिसंजिहीर्षुः ।
अव्याकृतं विशति यर्हि गुणत्रयात्मा
कालं परं स्वमनुभूय[4] परः स्वयम्भूः ॥ ९ ॥

एवं परेत्य भगवन्तमनुप्रविष्टा
ये योगिनो जितमरुन्मनसो विरागाः ।
तेनैव साकममृतं पुरुषं पुराणं
ब्रह्म प्रधानमुपयान्त्यगताभिमानाः ॥ १० ॥

---

प्रापिताः तत्समीपे वसन्तीति[1] ॥ ६,७ ॥

प्रतीकालम्बनानामप्रतीकालम्बनानां च कियन्तं कालं तत्र वास इति तत्राह—**द्विपरार्धेति** । द्विपरार्धस्यावसानं समाप्तिर्यस्मिन् काले स तथोक्तः । स ब्रह्मणः प्रलयः यावता कालेन भवति तावन्तं कालं परस्य परिचिन्तकाः परमात्मोपासकास्ते उभयेऽपि कार्यब्रह्मणो लोके[2] सत्याख्ये अध्यासते मुक्तवत् तिष्ठन्तीत्यन्वयः । नात्राधिकः कर्मापेक्षी किं त्वधिकारस्येति[3] ज्ञातव्यम् ॥ ८ ॥

ब्रह्मप्रलये विमुक्तिः कीदृशीति तत्राह—**क्ष्माम्भ इति** । गुणत्रयात्मा सत्त्वादिगुणत्रयादान-कर्ता परः सर्वजीवोत्तमः स्वयम्भूः ब्रह्मा परं द्विपरार्धाख्यं स्वं कालमनुभूय प्रतिसंजिहीर्षुः स्वसृष्टं जगत् संहर्तुकामः क्ष्माम्भोनलानिलवियन्मनइन्द्रियार्थभूतादिभिः पृथिव्यादिपञ्चभूताभिमानिदेवैः मनोभिमानिभिः इन्द्रियाभिमानिभिः अर्थाः शब्दादयः तदभिमानिभिश्च । भूतादिभिरहङ्कारतदभिमानिभिश्च देवैः स्वबिम्बद्वारेण गरुडशेषमार्गद्वयेनात्मानं प्रविष्टैः[5] परिवृत अव्याकृतं लक्ष्मीतत्त्वं यर्हि यदा विशति लक्ष्मीद्वारा परब्रह्म विशतीत्यर्थः ॥ ९ ॥

तदा परेत्य देहान् योगेन विसृज्य एवमुक्तप्रकारेण देवयानेन गत्वा भगवन्तं विकुण्ठनाथं ब्रह्माणं चानुप्रविष्टा जितमरुन्मनसः प्राप्तवायुमनोजया अत एव विरागा विषयतृष्णारहिता ये योगिनो

---

[1] ब्रह्मनाड्युत्क्रान्ता अर्चिरादिना मुख्यवाय्वन्तेन मार्गेण स्वस्वयोग्यतानुसारेण कार्यं परं वा ब्रह्म यान्ति । नाड्यन्तरोत्क्रान्तास्तु महरादिलोकस्थं ब्रह्मेत्यपि ग्राह्यमिति यादुपत्यम् । [2] लोके वैकुण्ठादिषु—इति यादुपत्यम् ।

[3] नात्राधिककर्मापेक्षी किन्त्वाधिकारस्येति–च । नात्राधीः कर्मापेक्षी किन्त्वाधिकारस्येति–घ । नात्रावधीः कर्मापेक्षी किञ्चाधिकस्येति–ग । नात्राधिः कर्मापेक्षी किन्त्वाधिक्यस्येति–ङ ।

[4] पराख्यमनुभूय–ग । [5] प्रविष्टो–ग ।

आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः ।
योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः ॥ ११ ॥

भेददृष्ट्याभिमानेन निःसङ्गेनापि कर्मणा ।
कर्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ॥ १२ ॥

स सङ्गत्य पुनः काले कालेनेश्वरमूर्तिना ।
जातेऽगुणव्यतिकरे यथापूर्वं प्रजायते ॥ १३ ॥

---

ज्ञानिनस्ते स्वबिम्बद्वारेण प्रविष्टब्रह्माणस्तेन ब्रह्मणा साकममृतं नित्यमुक्तं प्रधानं सर्वोत्तमं पुरुषं पूर्णषड्गुणं ब्रह्मोपयान्ति लिङ्गशरीरत्यागलक्षणां मुक्तिं प्राप्नुवन्तीत्यर्थः । ननु शरीराभावे जीवत्व[1]मपि नष्टं स्यादित्यत उक्तम्—**अगताभिमाना इति**[2] । अत्यक्तजीवत्वाभिमानाः ॥ १० ॥

एतदेव मुक्तिस्वरूपं विविच्य दर्शयति—**आद्य इति** । यो वेदगर्भो ब्रह्मा स्थिरचराणां स्थावरजङ्गमानामाद्यः आदौ भूतः सहर्षिभिर्मनुष्योत्तममारभ्य गरुडशेषान्तैर्ज्ञानिभिः सिद्धैः साधनसामग्रीमद्भिर्योगेश्वरैः कुमाराद्यैः सनकाद्यैर्योगाचार्यैश्च सह ॥ ११ ॥

भेददृष्ट्या जीवेश्वरादिविषयपञ्चविधभेदज्ञानेन । भेदज्ञानस्य शुक्तिरजतज्ञानवद् हेयत्वेन न तेन मुक्तिनिश्चय इत्यत उक्तम्—**अभिमानेनेति** । अभिमानेन पूर्णज्ञानेन यावता मुक्तिः स्यात् तावता ज्ञानेनेत्यर्थः । निःसङ्गेन फलाभिसन्धिरहितेन ज्ञानोत्तरकालीनेन कर्मणापि । जगत्सृष्ट्यादिकर्तृत्वात् सगुणं ज्ञानैश्वर्याद्यनन्तगुणोपेतम् । नेदं शबलमित्याह—**ब्रह्मेति** । अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा इति श्रुतेः स्वत एव सर्वगुणपूर्णमित्यर्थः[3] । नाकाशवन्नीरूपमित्याह—**पुरुषमिति** । भक्तानुकम्पया गृहीतपुरुषाकारम् । अनेन गुणाश्चैश्वर्यादयः न तु सत्त्वादय इति ध्वनयति । ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रिय इत्यादेः । इतोऽपि न शबलमित्याह—**पुरुषर्षभमिति** । क्षराक्षरपुरुषातीतत्वात् पुरुषोत्तमम् । सङ्गतः प्रविष्टो भवति । सायुज्यादिलक्षणां मुक्तिमाप्नोतीत्यर्थः ॥ १२ ॥

स ब्रह्मादिजीवसङ्घः सृष्टावपि सायुज्यमेव भुङ्क्ते, किं ततो निर्गच्छतीति तत्राह—**स सङ्गत्येति** । स ब्रह्मादिजीवराशिः सङ्गत्य प्रलये प्रविश्य परमेश्वरं, पुनः कालेन कालान्तर्यामिणेश्वरमूर्तिना हरिणा काले गुणव्यतिकरे सृष्टिलक्षणे जाते प्राप्ते अगुणव्यतिकरे त्रिगुणव्यतिकररहिते

---

[1] जीवत्वज्ञानमपि—ग घ । जीवज्ञानमपि—च । [2] अगताभिमाना अत्यक्तजीवभावाः । अनेन जीवभावात्यागकथनेन लिङ्गशरीरादेस्त्यागः सूचितः इति यादुपत्यम् । [3] स एवगुणपूर्ण इत्यर्थः—च ।

ऐश्वर्यं पारमेष्ठ्यं यत् तेऽपि धर्मविनिर्मितम् ।
निषेव्य पुनरायान्ति गुणव्यतिकरेऽसति ॥ १४ ॥
अथ तं सर्वभूतानां हृत्पद्मेषु कृतालयम् ।
श्रुतानुभावं शरणं व्रज भावेन भामिनि ॥ १५ ॥

---

बहिः श्वेतद्वीपे, यथापूर्वमुच्चनीचादिभावेन यथा संसारदशायामत्यन्तान्योन्यभेदेन स्थितस्तथा प्रजायते प्रादुर्भूतानन्दो वर्तते । यो वेदगर्भः स प्रलये प्राप्ते परमेश्वरं सङ्गत्य पुनः सृष्टिकाले प्राप्ते यथापूर्वं प्रजायत इति वा । तदुक्तम्— 'ब्रह्मा देवैः परिवृतः प्रलये परमेश्वरम् । प्रविश्य सर्गे तु पुनः श्वेतद्वीपे प्रमोदते' इति ॥ १३ ॥

एषां मुक्तानां प्रतिसर्गं निर्गमः प्रतिलयं भगवत्प्रवेशश्च नित्य इति भावेनाह—**ऐश्वर्यमिति** । ते मुक्ता अपि, सम्भाविताः हरिणेति शेषः, सृष्टिकाले प्राप्ते हरेर्निर्गताः श्वेतद्वीपे यत् पारमेष्ठ्यं परमेष्ठिनः सर्वोत्तमस्य हरेः प्रासादादुत्पन्नं, धर्मविनिर्मितं ज्ञानधर्मफलम्, ऐश्वर्यमणिमादिभोगजातं तन्निषेव्य भुक्त्वा, पुनः गुणव्यतिकरे असति प्रलये प्राप्ते स्वोत्तमप्रवेशपूर्वकं परमेश्वरमायान्तीत्येवं मुक्तगणस्य सृष्टौ संहारे च संसर्गनिर्गमौ स्वरूपानन्दभोगो बहुविधविषयभोगाश्च सन्तीति । तदुक्तम्—'ज्ञानधर्मफलांस्तत्र भोगान् भुक्त्वा लये पुनः । नारायणं समाविश्य ज्ञानव्यक्तं निजं सुखम् । भुञ्जते त्वेवमेवैषां काले संसर्गनिर्गमौ । नित्यौ नित्यसुखं चैव सृष्टौ भोगास्तथोत्तमाः । गुणव्यतिकराभावेऽप्युच्चनीचादिपूर्ववत् । विष्णोश्चैव विमुक्तानां न कदाचन गच्छति' इति । 'सर्वेऽस्मै देवा बलिमावहन्ति' इति श्रुतेः सर्वजीवोत्तमस्य ब्रह्मणो नीचत्वं हरेरेव नान्यस्मात् । तदुक्तम् 'यथापूर्वं हरेः सर्वगुणैर्नीचात्मता सदा । ब्रह्मणश्च तथान्येषामन्येषां च यथापदम्' इति ॥ १४ ॥

पुंसां तेषां परमात्मप्रसादेन परमानन्दावाप्तिरस्तु, स्त्रियाः मम कथं स्यादित्याशङ्क्य सर्वेषामपि स्वस्वयोग्यतानुसारेण सेवासामग्र्यां सत्यां सा स्यादित्युपसंहारमुखेन तां सेवां विधत्ते—**अथेति** । यतो भगवदुपासकानां नित्यानन्दलक्षणमुक्तिप्राप्तिः अथ तस्मात् तत्प्राप्त्यर्थं यो ब्रह्मादिमुक्तिदस्तं नारायणं शरणं व्रजेत्यन्वयः । केन साधनेनेत्यत उक्तम्—**भावेनेति** । मम स्वामी भगवानहं तत्किङ्कर[1] इति भावेन भक्तिक्रियया । 'भावो लीला क्रिया चेष्टा इति यादवः । कं गुणमुपसंहृत्येत्यत उक्तम्—**श्रुतानुभावमिति** । कुत्र स्थितमहं शरणं यामीत्यत उक्तम्—**सर्वभूतानामिति** । अनेनाङ्गुष्ठमात्रः पुरुषो

---

[1] तत्किङ्करी–ग ।

ये त्विहासक्तमनसः कर्मसु श्रद्धयान्विताः ।
कुर्वन्त्यप्रतिषिद्धानि नित्यान्यपि च कृत्स्नशः ॥ १६ ॥
रजसा कुण्ठमनसः कामात्मानोऽजितेन्द्रियाः ।
पितॄन् यजन्त्यनुदिनं गृहेष्वभिरताशयाः ॥ १७ ॥
त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः ।
कथायां कथनीयोरुविक्रमस्य मधुद्विषः ॥ १८ ॥
नूनं दैवेन विहता ये त्वच्युतकथासुधाम् ।
हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिव विड्भुजः ॥ १९ ॥

---

मध्य आत्मनि तिष्ठति[1] इति श्रुत्युक्तभगवद्रूपं शरणं व्रजेत्युक्तं भवति । भामिनि भद्रे, भगवति भक्तिगुणत्वेनेति शेषः ॥ १५ ॥

एवं मुक्तिस्वरूपं निरूप्याधुना तदयोग्यानाह—**ये त्विति** । तुशब्दोऽत्यन्तवैलक्षण्यद्योतकः । इह मनुष्यादौ ये स्वर्गादावेवासक्तमनसो यज्ञादिकर्मस्वेव श्रद्धया युक्ताः अप्रतिषिद्धानि अग्नीषोमीयं पशुमालभेतेत्यादिविहितानि यागादिकर्माणि, नित्यानि सन्ध्यावन्दनादीनि च कृत्स्नश एकाविलोपेन कुर्वन्ति ॥ १६ ॥

किञ्च रजसा रजोगुणेन कुण्ठमनस उपरञ्जितमनसोऽत एव कामात्मानो विषयलोलस्वभावा अत एवाजितेन्द्रिया अत एव गृहेष्वभिरताशया नित्यविषक्तमनोरथा अनुदिनं पितॄन् यजन्ति ॥ १७ ॥

हरावनर्पितश्राद्धादिकर्तारस्ते पुरुषा त्रैवर्गिका धर्मार्थकामयोग्या एव नतु मोक्षयोग्याः । तत्र कारणमाह—**विमुखा इति** । कथनीयः प्रबन्धीकर्तुं योग्य उरुर्महान् विक्रमो यस्य स तथा तस्य हरिमेधसः मनोहरप्रज्ञस्य मधुद्विषो हरेः कथायां विमुखा इति यतोऽतो न मुक्तियोग्या इति ॥ १८ ॥

भगवद्भक्तिवर्जितैः पुंभिः प्राप्यफलमाह—**नूनमिति** । ये चाच्युतकथासुधां हित्वा असद्गाथाः काव्यनाटकादिविषयाः श्रुण्वन्ति, दैवेन हरिणा विहताः देहवियोगं प्रापिताः, विड्भुजः विड्वराहादय इव पुरीषममेध्यतुल्यं निरयं यान्तीति शेषः । तदुक्तम्—'ये तु तद्भक्तिवर्जिताः । अन्यसामान्यवेत्तारस्तदन्योत्तमवेदिनः । तद्भक्तनिन्दकाश्चैव यान्त्येव निरयं ध्रुवम् । अपि धर्मैकनिलया नात्र कार्या विचारणा' इति ॥ १९ ॥

---

[1] संस्थितः—क ।

दक्षिणेन पथार्यम्णः पितृलोकं व्रजन्ति ते ।
प्रजायां तु[1] प्रजायन्ते श्मशानान्तक्रियाकृतः ॥ २० ॥

ततस्ते क्षीणसुकृताः पुनर्लोकमिमं सति ।
पतन्ति विवशा देवैः सद्यो विभ्रंशितोदयाः ॥ २१ ॥

तस्मात् त्वं सर्वभावेन भजस्व[2] परमेष्ठिनम् ।
तद्गुणाश्रयया भक्त्या भजनीयपदाम्बुजम् ॥ २२ ॥

वासुदेवे भगवति भक्तियोगः प्रचोदितः[3] ।
जनयत्याशु वैराग्यं ज्ञानं यद् ब्रह्मदर्शनम् ॥ २३ ॥

---

नित्यसंसारिणां त्रैवर्गिकानां किं फलमित्याह—**दक्षिणेति** । ये त्विहाप्रतिषिद्धानि नित्यानि च कर्माणि कुर्वाणाः हरावत्यल्पभक्तास्ते दक्षिणेन पथा दक्षिणायनमार्गेणार्यम्णो यमस्य पितॄणामधिपस्य लोकं व्रजन्ति । किं तत्रैव तेषां नित्यो निवास इति तत्राह—**प्रजायामिति** । स्वर्गमनुष्यलोकावाप्तिस्तेषां सनातनेत्याशयेनाह—**श्मशानान्तक्रियाकृत इति** । त्रैवर्गिकाः स्वसन्तानेषु पुत्ररूपेण भूत्वा गर्भाधानादिश्मशानान्ताः क्रियाः कृत्वा ततो मृत्वा स्वर्गं गत्वा ॥ २० ॥

ततः स्वर्गात् क्षीणसुकृताः भुक्तपुण्यशेषाः, देवैः सद्यो विभ्रंशितोदयाः, अत एव विवशाः, इमं मनुष्यलोकं पतन्तीति । पुनःशब्दः क्रियासमभिव्याहारार्थः । तदुक्तम्—'अत्यल्पभक्ता विष्णौ च सदा श्राद्धादिकारिणः । पितृलोकं समाविश्य स्वसन्ताने पुनः पुनः । क्षिप्रमेव प्रजायन्ते' इति । देवादिमनुष्योत्तमान्तानां मुक्तियोग्यत्वं, हरावल्पभक्तानां मध्यममनुष्याणां श्राद्धादियज्ञादिकृतां स्वर्गविशेषयोग्यत्वं हरौ द्वेषयुक्तानामसुराणां तमोयोग्यत्वमित्ययं विशेषः । 'मुक्तियोग्यास्तु देवाद्या मानुषा यज्ञभागिनः । मनुष्यभेदाः श्राद्धादिकृतो विद्वेषिणो हरौ' इति वाक्येनावगन्तव्य इति ॥ २१ ॥

पूर्णगुणोपास्तिरेव मुक्तिसाधनं, न निर्गुणोपासनेतिभावेनोक्तार्थमुपसंहरति—**तस्मात् त्वमिति** । सर्वभावेन स्वयोग्यगुणपूर्णशक्त्या[4] । यस्माद् भक्तिमन्तरेणापेक्षितपुरुषार्थाभावः तस्माद् ब्रह्मणः सर्वत्र सत्ताबुद्ध्येति वा[5] । ब्रह्मादिजीवराशेर्विलक्षणो मम स्वामीति भक्त्या ॥ २२ ॥

भजने किंफलमिति तत्राह–**वासुदेव इति** । ब्रह्म दृश्यतेऽनेनेति ब्रह्मदर्शनं यज्ज्ञानं तज्जनयति । वैराग्यस्य भक्तेः पूर्वभावित्वेऽपि कार्यकारणभावो न दूषणं, भक्तेः[6] प्रागुत्पन्नं वैराग्यं प्रचिनोतीति ॥२३॥

---

[1] प्रजयानु–छ । प्रजामनु–च । [2] वजस्त्र–च । [3] प्रयोजितः–च । [4] स्वस्वयोग्यपूर्णभक्त्या–च प्र ।
[5] सत्तां बुध्द्वेति वा ङ । [6] भक्तिः–च ङ ।

यदास्य चित्तमर्थेषु समेष्विन्द्रियवृत्तिभिः ।
न विगृह्णान्ति वैषम्यं प्रियमप्रियमप्युत　　॥ २४ ॥

स तदैवात्मनात्मानं निःसङ्गं समदर्शिनम् ।
हेयोपादेयरहितमारूढपदमीक्षते　　॥ २५ ॥

ज्ञानमात्रं परंब्रह्म परमात्मेश्वरः पुमान् ।
दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते[3]　　॥ २६ ॥

---

वैराग्यादिसाधनसम्पन्नस्यास्योपासकस्यापरोक्षज्ञानोत्पत्तिसमयमाह—**यदास्येति** । यदा अस्योपासकस्य चित्तं बन्धकत्वेन समेषु शब्दाद्यर्थेषु ममेदं प्रियमप्रियमुत[1] इन्द्रियवृत्तिभिः वैषम्यं न विगृह्णाति, किन्तु शब्दाद्यर्थाः सर्वे बन्धकत्वेन ममाप्रिया एव, सर्वस्माद् भगवानेव प्रेष्ठ इति निश्चिनोति ॥२४॥

स तदा बाह्यन्तःकरणे विनष्टशक्तिके सत्यात्मना स्वरूपचिन्मनसा आत्मानं स्वबिम्बपरमात्मान[2]-मीक्षते । आत्मा संसार्येवात्रोच्यत इत्यन्यथाप्रतीतिं निवारयति— **निःसङ्गमित्यादिना** । असङ्गो ह्ययं पुरुष इति श्रुतेः । समदर्शिनं यथार्थज्ञानिनं, निर्दोषं हि समं ब्रह्मेति श्रुतेः । नित्यनिर्दोषज्ञानरूपत्वाद् हेयोपादेयरहितमत एवारूढपदं सर्वोत्कृष्टस्थानम् ॥ २५ ॥

तच्छब्दादि[4]सिद्धनामधेयोप्ययमेव न पृथगिति भावेन विशिनष्टि—**ज्ञानमात्रमिति** । तत्र ज्ञानमिति[5] सङ्गिरन्ते सौगताः । ब्रह्मेति परंब्रह्मेति वेदान्तिनः । परमात्मेति योगिनः । ईश्वर इति वैशेषिकाः पाशुपताश्च । पुमानिति सांख्याः । भगवानिति पौराणिकाः । इत्येतैः शब्दैरेक एवेयते[3] । कैर्लिङ्गैरित्यत उक्तम्— **दृश्यादिभिरिति** । ज्ञानमेव मात्रा परिमाणं यस्य तत् तथोक्तं ब्रह्मसूत्रतत्त्वेषु[6], परमुत्तमं परंब्रह्म, आत्मभ्यो जीवेभ्यः परमतत्त्वात् परमात्मा, ईशनशक्तिमत्त्वादीश्वरः । अव्याहतपुंशक्तिमत्त्वात् पुमानिति । ऐश्वर्यादि[7]गुणाकरत्वात् भगवान् । एवंविधगुणो दृश्यस्पृश्यादिभिः पृथग्भावैर्लिङ्गैर्घटादयो जडत्वेन मूर्तत्वेन दृश्याः स्पृश्याः, न[8] तथेत्यादिरूपैः[9] ॥ २६ ॥

---

[1] उतेत्यास्यानन्तरमितीत्युपस्कर्तव्यम् । [2] स्वबिम्बं पश्यन्नात्मानं-च । [3] ईर्यते-क ।

[4] तत्तद्वादि-ग प्र । [5] ज्ञानं तत्त्वमिति-ङ । [6] ब्रह्मतत्त्वेषु-च । [7] नित्यैश्वर्यादि-ग [8] न स तथा-च

[1'] ननु दृश्यस्पृश्यादिनानाविधवस्त्वन्तर्गतस्य भगवतोऽपि नानात्वादनेकेषां च परमैश्वर्यासंभवान्न तत्र निरतिशयभक्तियोगः सम्भवतीत्याशङ्कायां सर्वत्रावस्थितो भगवानेक एवेति सोपपत्तिकमाह—ज्ञानमात्रमिति । एक एव भगवान् दृश्यादिभिर्भावैरधिष्ठानभूतैः पृथगीयते पृथक्त्वेन भ्रान्त्यैव ज्ञायत इत्यर्थः । कुतः ? यतो भगवान् ज्ञानमात्रं परंब्रह्मेत्यादिवैदिकशब्दवाच्यः । ज्ञानपदमानन्दादेरप्युपलक्षकम्—इति यादुपत्यम् ।

एतावानेव योगेन समग्रेणेह योगिनः ।
युज्यतेऽभिमतो ह्यर्थो यदसङ्गस्तु कृत्स्नशः ॥ २७ ॥
ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम् ।
अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणाम् ॥ २८ ॥
यथा महानहङ्कार[2]स्त्रिवृत् पञ्चविधः स्वराट् ।
एकादशविधस्तस्य वपुरण्डं जगद् यतः ॥ २९ ॥

---

इदानीमुक्तार्थनिगमनमुखेन मुक्तेरन्तरङ्गभक्तियोगस्य मुख्यफलमाह—**एतावानिति** । इहोपासकानां मध्ये स्थितस्य भक्तियोगिनः समग्रेणाष्टाङ्गोपेतेन भक्तियोगेन साध्योऽभिमतोऽर्थः पुरुषार्थ एतावानेव युज्यते युक्तोऽनुभूयते । क इत्यत उक्तम्—**यदसङ्ग इति** । यत् कृत्स्नशः साकल्येना[1]-सङ्गः लिङ्गशरीरसम्बन्धो न भवति ॥ २७ ॥

इदानीं मत्स्याद्यवताररूपं ब्रह्माप्यप्राकृतदेहत्वेन मुमुक्षुणा ज्ञातव्यम् अन्यथादर्शने अन्धंतम एवेत्याशयेनाह—**ज्ञानमेकमिति** । एकं सर्वोत्तमं स्वगतभेदवर्जितं वा, ज्ञानं सच्चिदानन्दलक्षणं, ब्रह्म बहुत्वसंख्याविशेषविषयं पूर्णं मत्स्यादिरूपं, निर्गुणं प्रकृतिगुणनिर्मितदेहरहितं, परब्रह्म शब्दादिधर्मिणां शब्दस्पर्शादिविषयधर्मवतामज्ञानां पराचीनैः बहिर्विषयेषु प्रवृत्तैः चक्षुरादीन्द्रियैरर्थरूपेण भौतिकशरीरेण भ्रान्त्या मिथ्याज्ञानेनावभाति । पूर्णमदः पूर्णमिदमिति श्रुतेः । तस्मात् तथाप्रतिभानवानन्धंतमो यातीति शेष इत्यर्थः । तदुक्तम्—मत्स्यकूर्मादिरूपं च विष्णोर्ज्ञानैकमात्रकम् । तन्मन्यन्ते भौतिकं तु ये गच्छन्त्यधरं तमः ' इति ॥ २८ ॥

स्त्रीत्वादिममर्थं कथं जानामीत्यत उदाहरति—**यथा महानिति** । महान् महत्तत्वाभिमानी ब्रह्मा, वैकारिकाद्यात्मना त्रिवृत् त्रिविधोऽहङ्काराभिमानी रुद्रः, आकाशादिपञ्चभूताभिमानित्वेन पञ्चविधः मनआद्येकादशेन्द्रियाभिमानित्वेन एकादशविधः स्वराडिन्द्रश्चेते अज्ञानिनां भौतिकशरीरत्वेनापि यथा प्रतीयन्ते तथा मत्स्यादिरूपं परं ब्रह्मेत्यर्थः । अभिमानित्वमात्रेण अभिमन्यमानदेहत्वं कथमित्येतत् स्पष्टयति—**तस्येति** । इदमण्डं सर्वजगच्च तस्येन्द्रस्य वपुरिति यतोऽत इति । अनेन ब्रह्मरुद्रयोरपि भौतिकदेहत्वं स्पष्टमित्युक्तं भवति । अत्र यथा प्रतीतार्थो दार्ष्टान्तिकेऽनुपयुक्तः स्यादित्येवं व्याख्यातमिति ज्ञातव्यम् । एकादशेन्द्रियात्मा च पञ्चभूतात्मकस्तथा । सर्वाभिमानी भगवान् स्वराडिन्द्रः पुरन्दरः । इदमण्डं जगत् सर्वं शक्रदेहं विदुर्बुधाः । तत्पतिस्त्रिगुणो रुद्रस्तस्य ब्रह्मा ततो हरिः '

---

[1] साकल्येन संगः-च । [2] अहंरूपः-च । अर्थरूपः-ङ ।

एतद् वै श्रद्धया भक्त्या योगाभ्यासेन नित्यशः ।
समाहितात्मा निःसङ्गो विरक्तः परिपश्यति ॥ ३० ॥

इत्येतत् कथितं गुह्यं[2] ज्ञानं तद् ब्रह्मदर्शनम् ।
येनैव बुध्यते तत्त्वं प्रकृतेः पुरुषस्य च ॥ ३१ ॥

ज्ञानं योगाश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः ।
द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ॥ ३२ ॥

---

इति वचनात्[1] ॥ २९ ॥

तर्हि तद् ब्रह्म यथावज्ज्ञातुं कथं शक्यत इति तत्राह—**एतदिति** । एतैः साधनैः अधिकार्येऽतन्मत्स्याद्यवताररूपं ब्रह्म परिपश्यति प्राकृतदेहादिदोषपरित्यागेन ज्ञानानन्दाद्यनन्तगुणपूर्णत्वेनापरोक्षीकरोतीत्यन्वयः । कैरित्यत उक्तम्—**श्रद्धयेत्यादि** । नित्यशोऽनुक्षणं यमादियोगाभ्यासेन । कीदृशोऽधिकारी ? समाहितात्मा हरावेव सम्यगर्पितमनाः, निःसङ्गो दुष्टसङ्गरहितः निर्णीतसज्जनसङ्गो वा । निर्निर्णयनिषेधयोरिति यादवः । विरक्तः सर्वमसारमनित्यं चेति ज्ञानवान् वा इत्यनेनैतैरेव साधनैः नापरैरैक्यज्ञानादिभिः ब्रह्मदर्शनं स्यादिति सूचयति । ज्ञानरूपमेकं निर्गुणं ब्रह्म भ्रान्त्यार्थरूपेण पञ्चात्मनावभातीत्याद्यपव्याख्याननिरासाय च मत्स्यकूर्मादिरूपं च विष्णोर्ज्ञानैकमात्रकमित्याद्युदाहृतमाचार्यैरिति ज्ञातव्यम् ॥ ३० ॥

तत्त्वोपदेशमुपसंहरति—**इतीति** । ब्रह्म दर्शयतीति ब्रह्मदर्शनम् । तात्पर्यातिशयजननाय ज्ञानं विशिनष्टि —**येनेति** । प्रकृतिशब्दवाच्यस्य लक्ष्म्यादेः पुरुषशब्दवाच्यस्य विष्ण्वादेः तत्त्वमनारोपितरूपं येन ज्ञानेनावबुध्यत इत्यन्वयः ॥ ३१ ॥

अवश्यानुष्ठानार्थं येन विना मुक्तिमात्रं न स्यात् तत् साधनं निर्दिशति—**ज्ञानमिति** । यो नैर्गुण्यो भक्तिलक्षणो योगो यच्च ज्ञानं ज्ञानयोगस्तयोर्द्वयोरप्येक एवार्थो विषयः यस्य स[3] । स क

---

[1] यथा स्वराट् ब्रह्मा महान् महत्तत्वात्मक इति, यथा स्वराट् रुद्रः त्रिवृदहङ्कारः त्रिविधाहङ्कारात्मक इति, यथा वा स्वराट् इन्द्रः पञ्चविधः पञ्चभूतात्मकः, एकादशविधः एकादशेन्द्रियात्मकः, अण्डात्मकजगदात्मकश्चेति भ्रान्त्या शब्दादिधर्मिणमज्ञानामवभाति । कुत एतेषां ज्ञानानां भ्रान्तित्वमित्यत उक्तम्—तस्येति । तस्येन्द्रस्याण्डं तत्स्थं जगच्च यतो वपुरभिमन्यमानं तयो भिन्नमिति प्रमाणप्रसिद्धमिति यावत् । इदमुपलक्षणम् । तस्य ब्रह्मणो महान् ययोवपुः, तस्य यद्रस्याहङ्कारो यतो वपुः, तस्येन्द्रिस्येन्द्रियादिकमपि यतो वपुरित्यपि ग्राह्यम् । तथा स्वराट् मत्स्यरूपी हरिः यतः केवलज्ञानरूपं निर्गुणं ब्रह्म यत् तदात्मकत्वेन पूर्णमद इत्यादि श्रुत्यादिसिद्धिः, अतो भ्रान्त्यैवार्थरूपेण जडदेहात्मनाऽज्ञानेन च भातीति । —यादुपत्यम् ।

[2] गुर्वि-च ! [3] यस्य स इत्यधिकमिति भाति । अर्थो विषय इति यादुपत्यम् ।

यथेन्द्रियैः पृथक्द्वारैरर्थो बहुगुणाश्रयः ।
एको नानेयते तद्वद् भगवाञ्छास्त्रवर्त्मभिः ॥ ३३ ॥
क्रियया क्रतुभिर्दानैस्तपःस्वाध्यायदर्शनैः ।
आत्मेन्द्रियजयेनापि संन्यासेन च कर्मणाम् ॥ ३४ ॥
योगेन विविधांशेन भक्तियोगेन चैव हि ।
धर्मेणोभयचिह्नेन यः प्रवृत्तिनिवृत्तिमान् । ॥ ३५ ॥
आत्मतत्त्वावबोधेन वैराग्येण दृढेन च
ईयते भगवानेभिः सगुणो निर्गुणः स्वदृक् ॥ ३६ ॥

---

इति तत्राह—**भगवच्छब्देति** । भगवच्छब्दवाच्य इत्यर्थः । भक्तिज्ञानयोगयोरैश्वर्याद्यनन्तगुणपूर्ण-श्रीनारायणो विषय इति भक्तिज्ञाने मुक्तेरवश्यसाधने मयोपदिष्टे इति । 'ज्ञानभक्ती विना नैव मुक्तिः कस्यापि विद्यते । तयोरेकतरेणापि विष्णुगेनोभयं विना । एवमप्येतयोरेकभावेऽन्यनियतेर्ध्रुवम् । एकेनापि भवेन्मुक्तिस्तदर्थं त्वन्यसाधनम्' इति वाक्यार्थज्ञानाय लक्षण इत्युक्तम् । लक्ष दर्शनाङ्क-नयोरिति धातोः सूचितोऽयमर्थ इति ॥ ३२ ॥

एकस्यानेकगुणविषयत्वं कुत्र दृष्टमिति तत्राह—**यथेति** । यथा बहूनां शब्दस्पर्शरूपरसगन्ध-गुरुत्वादीनां गुणानामाश्रयो बहुगुणाश्रय एकोऽर्थः पदार्थो नानेयते । कैः ? पृथक्द्वारैः पृथक् कार-श्चरणं वर्तनं येषां तानि तथा तैर्भिन्नमार्गैरिन्द्रियैः । श्रोत्रेण शब्दवान् त्वचा स्पर्शवांश्चक्षुषा शुक्लादि-रूपवान् जिह्वया रसवान् घ्राणेन गन्धवान् पाणिना गुरुरिति ज्ञायते, एवं स भगवानेको ज्ञानानन्दादि-बहुगुणाश्रयः शास्त्रवर्त्मभिर्वेदान्तादिसच्छास्त्रमार्गैरानन्दवान् ज्ञानवानित्यादिबहुगुणविषयत्वेन ज्ञायत इत्यन्वयः ॥ ३३ ॥

भक्तिज्ञानविषयवत् साधनक्रियादीनामपि[1] भगवानेव विषय इत्याह—**क्रिययेत्यादिश्लोक-त्रयेण** । क्रियया सन्ध्यावन्दनादिलक्षणया, भगवल्लिङ्गानां दर्शनेन आत्मनो मनसश्चक्षुरादीन्द्रियाणां जयेन, कर्मणामशास्त्रविहितानां संन्यासेन त्यागेन ॥ ३४ ॥

एकस्य धर्मस्योभयचिह्नत्वं कथमिति तत्राह—**य इति** । मतुप्प्रत्येकमभिसम्बध्यते प्रवृत्तिमान् निवृत्तिमानिति । भगवदुपासनादिप्रवृत्तिर्हिंसादिनिवृत्तिस्तद्वानित्यर्थः ॥ ३५ ॥

---

[1] भक्तिज्ञानविषयत्वात् तत्साधनक्रियादीनामपि-प्र ।

प्रावोचं भक्तियोगस्य स्वरूपं ते चतुर्विधम् ।
कालस्य चाव्यक्तगतेर्योऽन्तर्धावति जन्तुषु ॥ ३७ ॥

जीवस्य संसृतीर्बह्वीरविद्याकर्मनिर्मिताः ।
याः स्वयं प्रविशन्नात्मा न वेद गतिमात्मनः ॥ ३८ ॥

नैतत् खलायोपदिशेन्नाविनीताय कर्हिचित् ।
न स्तब्धाय न भिन्नाय नैव धर्मध्वजाय च ॥ ३९ ॥

न लोलुपायोपदिशेन्न गृहारूढचेतसे ।
नाभक्ताय च मे जातु न मद्भक्तद्विषामपि ॥ ४० ॥

श्रद्दधानाय भक्ताय विनीतायानसूयवे ।
भूतेषु कृतमैत्राय शुश्रूषाभिरताय च ॥ ४१ ॥

बहिर्जातविरागाय शान्तचित्ताय दीयते ।
निर्मत्सराय शुचये यस्याहं प्रेयसां प्रियः ॥ ४२ ॥

---

इदानीमुक्तपरमप्रमेयमुपसंहरति—**प्रावोचमिति** ॥ ३७ ॥

संसृतीः गतीः यासु संसृतिषु प्रविशन्नयं जीव आत्मनः स्वस्य गतिं शरणमात्मानं न वेद ॥ ३८ ॥

उपदिष्टतत्त्वज्ञानानधिकारिण आह—**नैतदिति** । खल इन्द्रियारामो दुर्जन इत्यर्थः । स्तब्धो गुरुनियोगमकुर्वाणः । भिन्नो वैष्णवसमयेतरसमयनिष्ठः । धर्मध्वजो दम्भवान् ॥ ३९ ॥

लोलुपो विषयाभिलाषी । खलत्वादिदोषरहितोऽपि ममाभक्तश्चेन्नैवोपदेशयोग्यः प्रसंगेनापीत्याशयेनोक्तम्—**जात्विति** । नैतावता पूयत इत्याह—**न मद्भक्तद्विषामिति** ॥ ४० ॥

तर्ह्यनधिकारित्वेनैतदुत्सादनं स्यादिति तत्राह—**श्रद्दधानायेति** । अनुसूयुर्गुणेषु दोषाविष्करणबुद्धिरहितः ॥ ४१ ॥

बहिः स्वर्गादौ । प्रेयसां प्रियतमानां पुत्रादीनां सकाशात् । तदेतत् प्रेय इति श्रुतेः ॥४२॥

---

[1] सकृत्—च ङ ग । [3] अव- च ।

**य इदं श्रुणुयादम्ब श्रद्धया पुरुषः सुकृत्[1] ।**
**यो वाभिधत्ते मच्चित्तः स ह्येति पदवीं च मे ॥ ४३ ॥**

इति श्रीमद्भागवते तृतीयस्कन्धे त्रयस्त्रिंशोऽध्यायः ।

॥ अथ चतुस्त्रिंशोऽध्यायः ॥

**मैत्रेय उवाच —**

**एवं निशम्य कपिलस्य वचो जनित्री**
**सा कर्दमस्य दयिता किल देवहूतिः ।**
**विस्रस्तमोहपटला तमभिप्रणम्य**
**तुष्टाव तत्त्वविषयाखिलसिद्धभूमिम् ॥ १ ॥**

---

अधिकारिणः फलज्ञानात् क्षिप्रप्रवृत्तिः स्यादित्यतः तत्फलमाह—**य इदमिति** । अम्ब हिताहित-वेदने इति धातोस्तस्य टापि कृतेंऽबेति, तत्संबुद्धिरम्ब मातः । अभिधत्ते वक्ति । 'हि हेतावववधारणे' इत्यभिधानादुभयमपि ग्राह्यम्[2] । एत्येव मम पदवीमिति हि यस्मात् तस्मात् श्रवणादिकं कर्तव्य-मिति ॥ ४३ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे त्रयस्त्रिंशोऽध्यायः ।

॥ अथ चतुस्त्रिंशोऽध्यायः ॥

कपिलावतारेणोपदिष्टं तत्त्वज्ञानं देवहूत्याः सिद्धमभूदिति तत्स्तुतिव्याजेन विज्ञायत[3] इति तदेतत्[4] प्रतिपाद्यतेऽस्मिन्नध्याये । पूर्वं कर्दमस्य शुश्रूषया कर्शिता तत्प्रीतिकरत्वात् तस्य दयिता प्रेष्ठा-भूत्, सा देवहूतिरेवं तदुक्तं निशम्य तमभिप्रणम्य कपिलस्य विष्णुत्वं सूचयन्ती तं तुष्टावेत्यन्वयः । कीदृशी ? विस्रस्तमुन्मीलितं मोहपटलमज्ञानाख्यं तिमिरं यस्याः तथा । कीदृशम् ? तत्त्वं विष्णुस्त-द्विषयाश्च ते अखिला अनल्पाश्च सिद्धाः ब्रह्मादयस्तेषां भूमिमाश्रयम्[5] । यद्वा तत्त्वस्थितमज्ञानलक्षणं विषं यापयतीति तत्त्वविषया, भगवत्तत्त्वाज्ञानरहितेत्यर्थः ॥ १ ॥

---

[1] सकृत्–च ङ ग । [2] एति हि एत्येवेत्यवधारणार्थत्वम् । यस्मादेति तस्माच्छ्रवणादिकं कर्तव्यमिति हेत्वर्थत्वं च । [3] विज्ञापयति–च । [4] तदेव–च । [5] तत्त्वविषये येऽखिलाः सिद्धा ज्ञानिनः साङ्ख्याचार्यास्तेषां भूमि-माश्रयमिति यादुपत्यम् ।

देवहूतिरुवाच —
अथाप्ययान्ते सलिले शयानं भूतेन्द्रियार्थात्ममयं वपुस्ते ।
गुणप्रवाहं सदशेषबीजं दध्यौ स्वयं यज्जठराब्जजातः ॥ २ ॥

स एव विश्वस्य भवान् विधत्ते गुणप्रवाहेषु विभक्तवीर्यः ।
सर्गाद्यनीहोऽवितथाभिसन्धिरात्मेश्वरोऽतर्क्यसहस्रशक्तिः ॥ ३ ॥

---

तस्वाज्ञानं नास्तीति ध्वनितं स्पष्टयति—**अथेति** । अथ मङ्गलमस्तु । भगवंस्ते तव जठराब्जजातः उदरनाभिपद्मसम्भूतो ब्रह्मा स्वयं यद् वपुर्दध्यौ । किंक्रियाविशिष्टम् ? अत्राह—**अप्ययान्त इति** । अप्ययान्ते सलिले प्रलयजलमध्ये शयानम् । प्रलयावसाने दध्याविति वा । किंगुणविशिष्टम् ? अत्राह—**भूतेति** । आकाशादीनि भूतानि, श्रोत्रादीनीन्द्रियाणि, अर्थाः शब्दादयः, आत्मा मनः, एतेभ्यो मयं प्रधानम् । 'मयं प्रधानमुद्दिष्टम्' इति वचनात् । अत्र प्रधानकार्यभूतादिभ्यः प्राधान्यकथनेन प्रधानादप्युत्तममिति ज्ञातव्यम् । 'त्वं प्रधानमयो देवः प्रधानादधिको यतः' इति वचनात् । अत्र प्रधानादिशब्देन तदभिमानिनो लक्ष्म्यादयो ग्राह्याः । ततः तदुत्तमत्वगुणविशिष्टमित्यर्थः । स्वतन्त्रमपीति भावेनाह—**गुणप्रवाहमिति** । सृष्ट्यादौ सत्त्वादिगुणान् प्रवाहयति प्रवर्तयतीति । ज्ञानादिगुणा अस्य सन्तीत्यतो वाह—**गुणप्रवाहमिति** । ज्ञानादिगुणानां प्रवाहो यस्मिंस्तथा । नन्विदं सगुणं किं न स्यादित्यत उक्तम्—**सदिति** । सत् सत्यम् 'सत् सत्येऽभ्यर्हिते श्रेष्ठे साधीयसि भवत्यपि' इति यादवः । 'सदेव सोम्येदमग्र आसीत्' इति श्रुतेः न शबलं किन्तु निर्गुणम् । इदं निर्गुणं चेज्जगत्स्रष्टृ अन्यत् स्यादित्यत उक्तम्—**अशेषबीजमिति** । जगद्व्यञ्जकं निर्गुणमेव स्रष्टृ इत्यर्थः ॥ २ ॥

जगद्व्यञ्जकत्वं स्पष्टयन्ती भवानपि स एवेत्याह—**स एवेति** । स एव तादृग्वपुष्मानेवाणुमात्रभेदरहितो भवान् विश्वस्य सर्गादि विधत्त इत्यन्वयः । युगपन्नेत्याह—**गुणप्रवाहेष्विति** । गुणप्रवाहेषु गुणैः सृष्ट्यादिपरम्परासु ब्रह्मादिरूपेण विभक्तं राजससात्त्विकतामसप्रवर्तकत्वभेदेन पृथक्कृतं वीर्यं माहात्म्यं यस्य स तथा । कार्येषु प्रवर्तमानो देवदत्तवत् क्लिष्टकारी किम् ? नेत्याह—**अनीह इति** । अत्र हेतुगर्भविशेषणमाह—**अवितथाभिसन्धिरिति** । सत्यसङ्कल्पत्वादित्यर्थः । एवंविधः अन्यो नास्तीति भावेनाह—**आत्मेश्वर इति** । अविशेषेणात्मनां जीवानां ईश्वरस्त्वदन्यो नास्तीत्यर्थः । एकस्यापि [1]चित्रशक्तिस्वभावादीश्वरत्वं कथमुपपद्यत इति तत्राह—**अतर्क्येति** । 'विचित्रशक्तिः पुरुषः पुराणः' इति श्रुतेः ॥ ३ ॥

---

[1] एकस्य विचित्रशक्तेरभावात्–च । इयमवतारिका न स्पष्टा ।

स त्वं भृतो मे जठरेण नाथ कथं नु यस्योदर एतदासीत् ।
विश्वं युगान्ते वटपत्र एकः शेते स्म मायाशिशुरङ्घ्रिपानः ॥ ४ ॥

त्वं देहतन्त्रः प्रशमाय पाप्मनां निदेशभाजां च विभो विभूतये ।
यथावतारास्तव सूकरादयस्तथायमप्यात्मपथोपलब्धये ॥ ५ ॥

यन्नामधेयश्रवणानुकीर्तनाद् यत्प्रह्वणाद् यत्स्मरणादपि क्वचित् ।
श्वादोऽपि सद्यः सवनाय कल्पते कुतः पुनस्ते भगवन् नु दर्शनात् ॥

अहो बत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे वर्तते नाम तुभ्यम् ।
तेपुस्तपस्ते जुहुवुः सुराद्यान् ब्रह्मानूचुर्नाम गृणन्ति ये ते ॥ ७ ॥

---

अतर्क्यशक्तिसहस्रत्वमनुमापयति— **स त्वमिति** । नाथ यस्य तव जठरे एतद् विश्वमासीद् युगान्ते माययेच्छया शिशुः अङ्घ्रेरङ्गुष्ठस्य पानं यस्य सोऽङ्घ्रिपानो भूत्वा एक एव सन् वटपत्रे शेते, स त्वं मे जठरेण कथं नु भृतः स्म । अहो तवातर्क्यसहस्रशक्तिमनुमिनोमि यतोऽहं सर्षपमात्रभारमपि वोढुमशक्ता त्रैलोक्यधरं त्वामवहमिति ॥ ४ ॥

इदानीं कपिलस्य भगवतोऽतर्क्यसहस्रशक्तिना हरिणैकत्वं प्रकाश्य तदवतारप्रयोजनं विज्ञापयति —**त्वं देहतन्त्र इति** । विभो व्याप्त । देहेन तन्त्रं शोचिः प्रकाशो यस्य स तथा । स त्वं सच्चिदानन्दाद्यात्मकदेहेनैव प्रकाशितवानवतारवानसि[1], न तु जीववत् प्राकृतभौतिकदेहवत्त्वेन । देव ! यथा तव सूकरादयोऽवताराः हिरण्याक्षादिपाप्मनां प्रशमाय यथा निदेशभाजामाज्ञाकारिणां ब्रह्मादिदेवानां विभूतये कृताः स्युः, तथायमप्यवतारः कल्यादिना प्रलुप्तस्य सत्पथस्य ज्ञानमार्गस्योपलब्धये प्रकाशनाय, त्वया कृत इति शेषः ॥ ५ ॥

स्त्रीत्वेऽपि वयं त्वद्दर्शनादिना कृतार्था इत्यत्र कैमुत्यन्यायमाह—**यन्नामधेयेति** । श्वादः श्वभक्षकः । सवनाय सोमलतावहननाय, यज्ञकरणायेत्यर्थः । कल्पते समर्थो भवति ॥ ६ ॥

श्रीविष्णुभक्त्यभावे सोमयाजित्वमप्यप्रयोजकमिति भावेनाह— **अहो बतेति** । अनन्तरातीतग्रन्थे सोमयाजी सामान्यतः प्रस्तुतः । तत्र द्वित्वं संभाव्यते वैष्णवश्चावैष्णवश्चेति । अतोऽनयोर-

---

[1] प्रकाशितावतारवानसीति स्यात् ।

तं त्वाद्धाहं ब्रह्म परं पुमांसं प्रत्यक् स्रोतस्यात्मनि संविभाव्यम् ।
स्वतेजसा ध्वस्तगुणप्रवाहं वन्दे विष्णुं कपिलं वेदगर्भम् ॥ ८ ॥

---

वैष्णवसोमयाजिनः श्वपचो गरीयान् । अहो विष्णुभक्तेः सारस्यम् । साऽस्यास्तीत्याह—**यज्जिह्वेति** । यस्य श्वपचस्य जिह्वाग्रे तुभ्यं तव नाम वर्तते । लटा क्रियासमभिव्याहारं सूचयति । तुभ्यमिति चतुर्थ्या नारायणाय नम इत्यादिना नाम चतुर्थ्यन्तं प्रयोक्तव्यमिति ध्वनयति । नन्विदं भक्तिमत एव सम्भाव्यते, भक्तिस्तु बहुजन्मसञ्चीर्णपुण्यवत एव, 'बहूनां जन्मनामन्ते कृष्णे भक्तिः प्रजायते' इति वचनात् , अतः कथं तामसयोनेः श्वपचस्येति, तत्राह—**तेपुस्तप इति** । इदानीन्तननामसङ्कीर्तनेनानुमितपुरातनतपआदिनान्तःकरणशुद्धिरस्तीति ज्ञायते ॥ ७ ॥

अवतारमूलरूपयोर्न कश्चिद्विशेषोऽस्तीति यदुक्तं तन्मया सम्यगवबुद्धमिति विज्ञापयन्ती स्तुतिमुपसंहरति—**तं त्वेति** । अहं ज्ञानमेकमित्यादिना प्रतिपादितो यस्तं त्वा वन्द इत्यन्वयः । न केवलं वाचा किन्तु कायेनापीति भावेनोक्तम् — **अद्धेति** । अनेन मातृत्वाभिमानेन पूज्यत्वाभिमानमपहस्तयति । प्राकृताप्राकृतयोरैक्यं कथं स्यादित्यत उक्तम्— **ब्रह्मेति** । ब्रह्मशब्दस्यानेकार्थे प्रवृत्तेः कथं निर्णय इत्युक्तम्—**परं पुमांसमिति** । 'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इति गीतोक्तत्वादित्यर्थः । तत्र ज्ञानिप्रत्यक्षं प्रमाणमिति भावेनाह—**प्रत्यक् स्रोतस्यात्मनीति** । विषयसञ्चरं मुक्त्वा प्रत्यगात्मनि हरौ नदीप्रवाहवत् स्यन्दमाने आत्मनि मनसि सम्भाव्यं प्रत्यक्षीकरणयोग्यम् । चक्षुरादीन्द्रियैः सह प्रत्यगञ्चति आत्मनि हृदये इति वा । कथमपरोक्षीकुर्वन्तीति तत्राह—**स्वतेजसेति** । स्वतेजसा स्वरूपभूतसच्चिदानन्दलक्षणप्रभावेन । ध्वस्तगुणप्रवाहं नित्यनिरस्तसंसारम् । कथं निरूप्य वन्दनमिति तत्राह—**विष्णुं कपिलमिति** । सकलजगद्व्यापी नारायणः कपिलनाम्नाऽवतीर्ण इति । बलानन्दस्वरूपत्वाद् विष्णुः, कं सुखं पिबतीत्यानन्दानुभवात् लात् सर्वादानाच्च कपिल इत्येकार्थत्वाच्च । ला आदाने इति धातुः । अत्र प्रमाणं ध्वनयति—**वेदगर्भमिति**[1] । 'णकारो बलम्'[2] 'एष ह्यानन्दमादत्ते' इत्यादिवेदेन गर्भो ग्रहणं ज्ञानं यस्य स तथा तम् । गृभ्णामि ते सौभगत्वाय हस्तमिति श्रुतेः । यद्वा वेदतात्पर्यमित्यर्थः । वेदो गर्भे[3] यस्य स तथा तमिति वा । स्वगुणप्रतिपादकत्वेनातिप्रियत्वादिति वा । वेदं विस्तीर्य बिभर्तीति[4] वा । अनेन वेदस्य नित्यत्वं नित्यत्वस्य[5] ग्राहकेष्विद-

---

[1] वेदमहातात्पर्यविषयमिति यादुपत्यम् । [2] 'णकारो बलं षकारः प्राण आत्मा' ।
[3] गर्भो–च । [4] वेदं विचार्य बिभर्ति–क । वेदानास्तीर्य पिपर्ति–च । [5] नित्यस्य स्वस्य–ग ।

मैत्रेय उवाच —

ईडितो भगवानेवं कपिलाख्यः परः पुमान् ।
वाचाऽविक्लवयेत्याह मातरं मातृवत्सलः ॥ ९ ॥

भगवानुवाच —

मार्गेणानेन मातस्ते सुसेव्येनोदितेन मे ।
आस्थितेन परां काष्ठामचिरादवरोत्स्यसि ॥ १० ॥

श्रद्धत्स्वैतन्मतं मह्यं जुष्टं यद् ब्रह्मवादिभिः ।
येन मामभयं [3]यायान्मृत्युमृच्छन्त्यतद्विदः ॥ ११ ॥

---

मेव मुख्यं प्रमाणमिति ध्वनयति । अत्र हरेरन्यान्यपि यानि यानि नामानि तैस्तैः विशिष्टं त्वां वन्द इति द्योतनाय ब्रह्मादिबहुनामग्रहणमित्यवगन्तव्यम् ॥ ८ ॥

नन्वनेन स्तोत्रेण कपिलस्य कश्चित् प्रसादविशेषो जातश्चेदुक्तं सर्वं सत्यं तत्त्वं स्यादिदं चाध्येतुः प्रयोजकं स्यादतोऽत्र तादृशं लिङ्गं किमित्याशङ्क्य भगवान् तादृग्लिङ्गगर्भितां वाचं वक्तीत्याह—**ईडित इति** । अविक्लवया अदीनया । इदमेकं प्रसादलिङ्गमिति इतिशब्देन सूचितम् ॥ ९ ॥

प्रसादविशेषं स्पष्टयति[1] — **मार्गेणेति** । [2]काष्ठामानन्दोत्कर्षमवरोत्स्यसि नित्याभिव्यक्तं करिष्यसि । अचिरादित्यनेन कपिलस्य मातरि प्रसादातिशयं सूचयति ॥ १० ॥

न मयैतद् गाथावदुक्तं, किन्तु मन्त्रोपदेशवदतोऽत्र त्वयास्तिक्यबुद्धिः कर्तव्येत्याह— **श्रद्धत्स्वैतदिति** । मह्यं मम, मामुद्दिश्येति वा । नैतत् तन्त्रज्ञानमुक्तं, किन्तु वैदिकमेवेति भावेनाह— **जुष्टं यदिति** । तत्प्रासावहेतुश्चेत् वैदिकमप्यप्रयोजकमिति तत्राह—**येनेति** । अनेन त्वं साक्षात् परंब्रह्मेति देवहूत्या यदुक्तं तत्सत्यमिति द्योतितम् । विपक्षे बाधकमाह—**मृत्युमिति** । न तन्मतं विदन्तीत्यतद्विदः, मृत्युं संसारम्, तन्मतविरुद्धमैक्यमतं विदन्तीति वा, मृत्युं नित्यमरणरूपमन्धन्तमः, गच्छन्तीत्यर्थः ॥ ११ ।

---

[1] प्रसादलिङ्गम्–क । इतिशब्देन सूचितं प्रसादविशेषं स्पष्टयति–ग ।
[2] काष्ठां यावत्स्वानन्दस्याभिव्यक्तिमिति यादुपत्यम् । [3] यायाः–च ।

मैत्रेय उवाच —

इति प्रदर्श्य भगवानुशतीमात्मनो गतिम् ।
स्वमात्रा ब्रह्मवादिन्या कपिलोऽनुमतो ययौ ॥ १२ ॥

सा चापि तनयोक्तेन योगादेशेन योगयुक् ।
तस्मिन्नाश्रम आसीना सरस्वत्याः समाहिता ॥ १३ ॥

अभीक्ष्णावगाहकपिशान् जटिलान् कुटिलालकान् ।
आत्मानं चोग्रतपसा बिभ्रती चीरिणं कृशम् ॥ १४ ॥

प्रजापतेः कर्दमस्य तपोयोगविजृम्भितम् ।
स्वगार्हस्थ्यमनौपम्यं प्रार्थ्यं वैमानिकैरपि ॥ १५ ॥

---

देवानां नृषु चिरवासो न धर्म इति विदुषा स्वयमपि तज्जातित्वात् पुनर्हरिणा किमकारीति तत्राह—**इतीति** । इतिशब्देन गतेर्ज्ञानस्य समग्रानुग्रहहेतुत्वलक्षणत्वं[1] वक्ति । उपदेशेन प्रदर्श्य । मातुर्विश्वासार्थं क्वचित् प्रसङ्गात्[2] स्वात्मनो गतिं स्वरूपस्थितिं वा प्रदर्श्येत्यनेन द्योतयति । उषतीमभीष्टवर्षिणीं स्वेच्छाज्ञानोपदेष्टृत्वेन[3] गुरुत्वाद् आत्मपुत्रत्वेन सुहृत्वात् सा देवहूतिः पुत्रगमनं कथमनुजज्ञे निर्दयहृदयत्वेनेत्याशङ्क्यापरिहार्यत्वात् ब्रह्मज्ञानित्वात् स्वात्मस्थत्वाच्च[4] ॥ १२ ॥

तथापि तस्या इतोऽधिकं दुःखं नाभूदिति लक्षयति—**सा चापीति** । सा देवहूतिश्च स्वगार्हस्थ्यं तृणवत् हित्वा अक्लेशापि पुत्रविश्लेषणातुरा सती वदनं किञ्चिच्चकार, पुत्रविरहोत्पन्नदुःखानलशुष्कं कृतवतीत्यर्थः । अभिसम्भावितमेतत् लोकदृष्टत्वात्, किं ततोऽन्यत्र गतेत्यत उक्तम्—**तस्मिन्निति** । सरस्वत्यास्तटे आसीनत्वात् समाहिता । समाधानस्य फलमाह—**योगादेशेनेति** । योगादेशेन ज्ञानलक्षणोपायोपदेशेन कारणेन योगं भगवद्ध्यानं युङ्क्त इति योगयुक् ॥ १३ ॥

तथानेनान्तरशुद्धिरस्याः । एवं बाह्यशुद्धिरप्यस्तीति भावेनाह — **अभीक्ष्णेति** । अनेन नित्यस्नानेन स्त्रीणां तिथ्यादौ स्नानं व्यावर्तयति[5] । आत्मानं देहं कृशं बिभ्रतीत्यनेन फलमूलाद्यशनमपि नास्तीति लक्ष्यते ॥ १४ ॥

स्वगार्हस्थ्यत्यागे किं कारणं येन योगेन दुःखं स्यादिति तत्राह — **अनौपम्यमित्यादिना** ।

---

[1] लक्षणं वक्ति—च । [2] प्रसङ्गे—ग ङ च । [3] स्वेष्टज्ञानोपदेष्टृत्वेनेति स्यात् । [4] अनुजज्ञे इति शेषः स्यात् ।
[5] देवहूतिः नित्यस्नाता, नत्वितरललनावत् तिथिविशेष एव स्नातेत्यभिप्रायः स्यात् ।

पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः ।
आसनानि च हैमानि सुस्पर्शास्तरणानि च ॥ १६ ॥

स्वच्छस्फटिककुडयेषु महामारकतेषु च ।
रत्नदीपार्चिषो भान्ति ललनारत्नसंयुताः ॥ १७ ॥

गृहोद्यानं कुसुमितै रम्यं बह्वमरद्रुमैः ।
कूजद्विहङ्गमिथुनं गायन्मत्तमधुव्रतम् ॥ १८ ॥

यत्र प्रविष्टमात्मानं विबुधानुचरा जगुः ।
वाप्यामुत्पलगन्धिन्यां कर्दमेनोपलालितम् ॥ १९ ॥

हित्वा तदीप्सिततमप्याखण्डलयोषिताम् ।
किञ्चिच्चकार वदनं पुत्रविश्लेषणातुरा ॥ २० ॥

वनं प्रव्रजिते पत्यावपत्यविरहातुरा ।
ज्ञाततत्त्वाप्यभून्नष्टवत्सा गौरिव वत्सला ॥ २१ ॥

---

उपमाया अयोग्यं यस्य तदनौपम्यम् । वैमानिकैर्देवैः । एवंविधमाहात्म्ये निमित्तमाह— **प्रजापते-रिति** ॥ १५ ॥

प्रार्थ्यत्वेऽपि निमित्तमाह — **पयःफेननिभा इति** । यत्र गार्हस्थ्ये गोक्षीरफेनमृदुशय्यादयः सन्तीति शेषः । दान्ताः गजदन्तनिर्मिताः । रुक्मेण स्वर्णेन परिच्छदोऽलङ्कारो यासां ताः । सुस्पर्शानि स्पर्शसुखकराणि आस्तरणानि कटादयो येषु तानि तथा ॥ १६ ॥

ललनारत्नैः संयुता रत्नदीपार्चिषः । कुडयेषु न्यस्तस्त्रीरत्नहस्तन्यस्तरत्नदीपार्चिषः स्वच्छस्फटि-कादिमणिमयकुडयेषु भान्तीत्यर्थः ॥ १७ ॥

कुसुमितैर्बहुभिरमरद्रुमैः रम्यं गृहोद्यानं च भातीत्यर्थः ॥ १८ ॥

यत्र गृहोद्याने उत्पलगन्धिन्यां वाप्यां प्रविष्टं कर्दमेनोपलालितमात्मानं विबुधानुचरा जगु-रित्यन्वयः ॥ १९ ॥

पुनरपि कीदृशं स्वगार्हस्थ्यम् ? आखण्डलयोषितामिन्द्रस्त्रीणामीप्सिततममत्यर्थं कमनीयम् ॥२०॥

पतिविरहादपि पुत्रविरहो दुःसह इति भावेनोक्तमेव विवृणोति—**वनमिति** ॥ २१ ॥

तमेव ध्यायती देवमपत्यं कपिलं हरिम् ।
बभूवाविरतोत्साहा निःस्पृहा तादृशे गृहे ॥ २२ ॥

ध्यायती भगवद्रूपं यदाह ध्यानगोचरम् ।
सुतं प्रसन्नवदनं समस्तव्यस्तचिन्तया ॥ २३ ॥

भक्तिप्रवाहयोगेन वैराग्येण बलीयसा ।
युक्तानुष्ठानजातेन ज्ञानेन ब्रह्महेतुना[1] ॥ २४ ॥

विशुद्धेन तदात्मानमात्मना विश्वतोमुखम् ।
स्वानुभूत्या तिरोभूतमायागुणविशेषणम् ॥ २५ ॥

ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये ।
निवृत्तजीवभावत्वात्[3] क्षीणक्लेशाप्तनिर्वृतिः ॥ २६ ॥

---

नन्वेवं तर्हि पुत्रविरहोद्भूतदुःखार्तमना भगवदुपास्तिमप्यभाङ्क्षीत् किम् ? तत्राह—**तमेवेति** । अनेन तस्या उपास्तिप्रकारो दर्शित इति । एवकारेण सूचितां विजातीयव्यावृत्तिं स्पष्टयति—**निःस्पृहेति** ॥ २२ ॥

ननु सुतोक्तमन्यद् अन्यदुपास्ते पुत्रवियोगभ्रान्तबुद्धित्वादित्याशङ्क्याह—**ध्यायतीति** । समस्तचिन्ता सर्वावयवचिन्ता, व्यस्तचिन्ता एकैकावयवचिन्ता, तया ॥ २३ ॥

तस्या उपास्तेः फलमाह—**भक्तिप्रवाहेति** । सा देवहूतिर्विष्णुः सर्वोत्तम इति ज्ञानसहितनिरतिशयप्रेमलक्षणभक्तिनदीप्रवाहयोगेन । बलीयसा स्वर्गादिः पुरुषार्थवादिशास्त्रार्थश्रुतिमुग्धबुद्धिराहित्येन बलिष्ठेन वैराग्येण युक्तं यदनुष्ठानमखण्डध्यानं तस्माज्जातेन ब्रह्महेतुना[2] परब्रह्मप्रसादजननकारणेन । ब्रह्महेतिनेति पाठे तु ब्रह्मवशीकरणायुधेनेत्यर्थः ॥ २४ ॥

अत एव विशुद्धेनैकत्वसंशयलक्षणदोषरहितेनाविर्भूतेन ज्ञानेन आत्मना स्वस्वरूपमनसा आत्मानं स्वबिम्बभूतं विश्वतोमुखं सर्वज्ञं च । स्वतएव स्वानुभूत्या तिरोभूतं दूरतो निरस्तं मायागुणैः सत्त्वादिभिः विशेषणं देहबन्धलक्षणं कार्यं यस्य स तथा तम् । हरिं ददर्शेति शेषः ॥ २५ ॥

साऽपरोक्षज्ञानोदयानन्तरमीदृशीमवस्थां प्रापेत्याह—**ब्रह्मणीति** । सा यदा परमात्मानमद्राक्षीत्

---

[1] ब्रह्महेतिना—च । [2] ब्रह्महेतुना ब्रह्मप्रसादजनितेनेति यादुपत्यम् ।

[3] निवृत्तजीवोपाधित्वात्—इति च । [4] निवृत्तजीवोपाधित्वात् अकिञ्चित्कर-लिङ्गशरीररूपबाह्योपाधित्वात् । निवृत्तजीवभावत्वादिति पाठेऽपि जीवं भावयत्युत्पादयतीति व्युत्पत्त्या जीवभावशब्दो लिङ्गशरीराद्युपाधिपर इति ज्ञेयम्—इति यादुपत्यम् ।

नित्यरूढसमाधित्वात् परावृत्तगुणभ्रमा ।
न सस्मार तदात्मानं स्वप्नदृष्टमिवोत्थितः ॥ २७ ॥

तद्देहोऽपगतः पोषो[2]ऽप्यकृशश्चा[3]ध्यसम्भवात् ।
बभौ मलैरवच्छन्नः सधूम इव पावकः ॥ २८ ॥

स्वाङ्गं तपोयोगमयं मुक्तकेशं गताम्बरम् ।
दैवगुप्तं न बुबुधे वासुदेवप्रविष्टधीः ॥ २९ ॥

---

तदा आत्मानं स्वशरीरं न सस्मारेत्यन्वयः । कीदृशी ? आत्मसंश्रये स्वाधारे भगवति षड्गुणपूर्णे ब्रह्मणि कालतो देशतो गुणतो व्याप्ते हराववस्थितमतिरेकाग्रमनाः । निवृत्तजीवभावत्वात् मुक्तलिङ्ग-शरीराभिमानत्वाद् वीतक्लेशा निरस्तदुःखा । प्राप्तनिर्वृतिराप्तपरमानन्दा ॥ २६ ॥

नित्यारूढसमाधित्वान्नित्यं हरावेव सन्निविष्टमनस्कत्वात् परावृत्तगुणभ्रमा परावृत्तः पराभूतः गुणेषु शब्दादिविषयेषु दुःखसाधनेषु सुखसाधनत्वबुद्धिभ्रमो[1] यस्याः सा । कथमिव ? स्वप्नदृष्टमिवोत्थितः, स्वप्नादुत्थितः स्वप्ने दृष्टं यथा न स्मरति तथेति । नन्विदं निदर्शनं निवृत्तजीवभावत्वे कथमुपपद्यते, स्वप्न-दृशो जीवत्वानिवृत्तेरितीयमाशङ्का, 'जीवोपाधिप्रभृतय आ मुक्तेः सर्वदेहिनाम् । नियमात् सन्त्यभावस्तु निष्फलत्वादुदीर्यते' इत्यनेन परिहरणीया । एतत्स्मृत्यर्थद्योतनाय स्वप्नोत्थितनिदर्शनमिति तात्पर्यार्थो ज्ञातव्यः ॥ २७ ॥

इदमपरोक्षज्ञानोदयानन्तरं लक्षणमित्याह—**तद्देहेति** । यस्य पोषोऽपगतः स तस्याः देहो बभा-वित्यन्वयः । आध्यसम्भवात् शरीरकार्श्यहेतुमनोदुःखाभावादकृशत्वम् । अकृत इति पाठे विहित-स्नानादिशून्य इत्यर्थः । 'युगेऽक्षपाते पर्याप्ते कृतं क्लीबे हितेऽर्थवद्' इति यादवः । यद्वा अपर्याप्तो[4]ऽसमाप्तप्रारब्धकर्मा ॥ २८ ॥

शरीराभिमानाभावादाध्यसम्भवोऽनुमीयत इति भावेनाह—**स्वाङ्गमिति** । गोप्त्रभावात् कथं तद्देहावस्थानम् ? अत्राह— **दैवेति** । दैवेन हरिणा गुप्तं रक्षितम् । स्वरक्षणे निमित्तमाह — **वासुदेवेति** ॥ २९ ॥

---

[1] सुखसाधनत्वबुद्धिरूपो भ्रम इत्यर्थः ।

[2] तद्देहः परतः पोष्यः—प्र । परतो दासीभिरिति यादुपत्यं च । तद्देहोऽपगतो दोषः—इत्यपि पाठः विजयध्वजसम्मत इति भाति । तथाहि—'यस्य दोषोऽपगतः .... .... ' इति मुद्रितविजयध्वजीयटीका संवत् १९६० वर्षे नित्यस्वरूपब्रह्मचारिणा सम्पादिते मुम्बय्यां प्रकाशिते बहुव्याख्यासंवलिते पुस्तक उपलभ्यते । यस्य दोषोऽपगतः—प्र-टीका । तद्देहः परतः पोषो—इति च पाठान्तरम् । [3] अकृतश्च—इति च । अभ्यङ्ग-स्नानादिसंस्कारशून्य इत्यर्थ इति यादुपत्यम् । [4] अकृत इत्यस्यार्थान्तरकथनमेतत् ।

एवं सा कपिलोक्तेन मार्गेणाविरहं परम् ।
आत्मानं ब्रह्म निर्वाणं भगवन्तमवाप ह ॥ ३० ॥

तद् वीरासीत् पुण्यतमं क्षेत्रं त्रैलोक्यविश्रुतम् ।
नाम्ना सिद्धपदं यत्र सा संसिद्धिमुपेयुषी ॥ ३१ ॥

तस्यास्तद् योगविधुतमाशु मर्त्यमभूत् सरित् ।
स्रोतसां प्रवरा सौम्य सिद्धिदा सिद्धसेविता ॥ ३२ ॥

कपिलोऽपि महायोगी भगवान् पितुराश्रमात् ।
मातरं समनुज्ञाप्य प्रागुदीचीं दिशं ययौ ॥ ३३ ॥

सिद्धचारणगन्धर्वैर्मुनिभिश्चाप्सरोगणैः ।
स्तूयमानः समुद्रेण दत्तार्हणनिकेतनः ॥ ३४ ॥

आस्ते योगं समाख्याय साङ्ख्याचार्यैरभिष्टुतः ।
त्रयाणामपि लोकानामुपशान्त्यै समाहितः ॥ ३५ ॥

---

श्रवणसुखस्याप्यस्य प्रसङ्गस्य कदा नु समाप्तिरिति मन्दां शङ्कां परिहरंस्तद्देहस्य प्रारब्धकर्मनिर्वाणेन तस्याः श्रीनारायणप्राप्तिं वक्ति—**एवं सेति** । अविरहं सर्वगतम् । निर्वाणं प्रकृतिप्राकृतशरीररहितं निर्वृतं वा । हेत्यनेनेतिहाससमाप्तिं सूचयति[1] ॥ ३० ॥

पूर्वं शुक्लस्य हरेरश्रुबिन्दुनिपाताद् बिन्दुसरोनामाभूत्, इदानीमस्याः देवहूत्याः सिद्धपदहेतुत्वात् सिद्धपदमिति नामान्तरं वक्ति—**तद् वीरेति** । वीर विदुर ॥ ३१ ॥

तत्र तद्देहो दाहकाभावात् श्वसृगालगोचरश्चेत् लोकहितैषणक्षेत्रस्तुतिर्व्यर्था स्यादिति तत्राह—**तस्या इति** । तन्मर्त्यं शरीरं स्रोतसां नदीनां प्रवरा सरित् ॥ ३२ ॥

पूर्वं कपिलगमनस्य कर्म नोक्तमधुना तत्पूर्वं तद्गमनं वक्ति—**कपिलोऽपीति** । महायोगी पूर्णज्ञानी प्रागुदीचीं दिशं शङ्कररक्षिताम् ॥ ३३ ॥

दत्ते अर्हणनिकेतने पूजादिनिवासस्थाने यस्मै स तथा ॥ ३४ ॥

योगं ध्यानलक्षणं प्राणायामलक्षणं वा । सांख्याचार्यैः यथार्थज्ञानोपदेष्टृभिः सनकादिभिः । नायं योगः स्वप्रयोजनोपदेशार्थः[2] । किन्तु लोकसुखार्थं इत्याह—**त्रयाणामिति** । उपशान्त्यै मङ्गलाय ॥३५॥

---

[1] हेत्यास्वादने—इति यादुपत्यम् । [2] स्वप्रयोजनार्थं इति स्यात् ।

मैत्रेय उवाच —

एतन्निगदितं तात यत् पृष्टोऽहं त्वयाऽनघ ।
कपिलस्य च संवादो देवहूत्याश्च पावनः ॥ ३६ ॥

य इदमनुश्रुणोति योऽभिधत्ते
कपिलमुनेर्मतमात्मयोगगुह्यम् ।
भगवति कृतधीः सुपर्णकेता-
वुपलभते भगवत्पदारविन्दम् ॥ ३७ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे चतुस्त्रिंशोऽध्यायः ।

॥ इति तृतीयस्कन्धः ॥

---

मैत्रेयो विदुरं संबोधयंस्तत्प्रश्नपरिहारकथनमुपसंहरति — **एतन्निगदितमिति** । न केवलं देवहूत्या एव सिद्धिहेतुः, किन्तु लोकस्य चेति चार्थः ॥ ३६ ।

श्रोत्रादीनां क्षिप्रप्रवृत्त्यर्थं श्रवणादिफलमाह— **य इदमिति** । आत्मयोगगुह्यं परमात्मप्राप्ति-साधनोपायानां मध्ये रहस्यम् । यः सुपर्णकेतौ गरुडध्वजे भगवति कृतधीः श्रवणादिनेदं मतं अभिधत्ते अभ्यस्यति; स च भगवत्पदारविन्दमुपलभतेऽपरोक्षीकरोति ॥ ३७ ॥

सुनीलनीरदश्यामं सच्चिदानन्दविग्रहम् ।
रमारमणमीशेशं विठ्ठलं समुपास्महे ॥ १ ॥

पदरत्नावली नाम तृतीयस्कन्धकाशिनी ।
वनमालेव देवेश तव कण्ठे विराजताम् ॥ २ ॥

तृतीयस्कन्धमारुह्य गिरीन्द्रमिव गह्वरम् ।
अवरूढे मयि स्निग्धाः कृपां कुर्वन्तु साधवः ॥ ३ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे चतुस्त्रिंशोऽध्यायः ।

॥ इति तृतीयस्कन्धटीका ॥

# शुद्धिपत्रिका

| पृष्टम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | ६ | लेभेऽज्जसा | लेभेऽञ्जसा |
| १२ | ६ | ह्यपैक्षत | ह्युपैक्षता |
| १९ | १७ | साम्यातिशयो | साम्यातिशयौ |
| २३ | २ | स्वभाग जह्रे | स्वभागं जह्रे |
| ३१ | ५ | निषण्णय | निषण्णाय |
| ६७ | १६ | दुष्प्रतिवादम् | दुष्प्रतिपादम् |
| ७३ | ५ | तारणां | ताराणां |
| ७७ | ४ | सांख्यायनायाग | सांख्यायनायांग |
| ७९ | २३ | अर्थे नाभिद्यत | अर्थैनाभिद्यत |
| ८३ | १५ | अविमिश्रितेत्रेषु | अविमिश्रितेषु |
| ८५ | ४ | अव्यक्तमूल | अव्यक्तमूलं |
| ९२ | २१ | वपुर्नन्वनुमते | वपुर्नन्वमनुमतं |
| ११९ | ११ | विशेष इति | अविशेष इति |
| १३८ | ८ | पातुमहती | पातुमर्हती |
| १३७ | २२ | यद् यथा | यद् यया |
| १४१ | १८ | तीयया | तृतीयया |
| १४८ | १० | स्वस्थः | स्वस्थः |
| १५१ | १९ | रसाय उत्थिताः | रसाया उत्थितः |
| १७४ | ७ | कामदुघैर्दुमैः | कामदुघैर्द्रुमैः |
| १८० | २७ | निविविषुः | निविविशुः |
| १९२ | १० | शङ्करादापि | शङ्कराद्वापि |
| २०५ | ९ | भगणाश्चपि | भगणाश्चापि |
| २०८ | १२ | श्वभिर्वृत्तः | श्वभिर्वृतः |
| २१३ | १ | अहिवच्छवासं | अहिवच्छ्वासं |

| पृष्टम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २२९ | १ | प्रमुखतोऽसजत् | प्रमुखतोऽसृजत् |
| २३८ | ६ | खेऽवस्थित | खेऽवस्थितं |
| २४५ | ७ | यथा | यया |
| २६१ | ६ | ब्रुवाणममबला | ब्रुवाणमबला |
| २६७ | १७ | बिभ्राजे | बभ्राजे |
| २७९ | १६ | वसुदेवक्षत्रिय | वसुदेवादिक्षत्रिय |
| २९३ | १७ | नित्यनिवृतम् | नित्यनिर्वृतम् |
| २९७ | १२ | अथ | अत |
| ३०० | १७ | ज्जन्यस्थूल | तज्जन्यस्थूल |
| ३०३ | २३ | एतच्च विंशतिकं | एतच्चतुर्विंशतिकं |
| ३०६ | १७ | नाम्ना | नाम्नां |
| ३१२ | १५ | यथा | यया |
| ३१४ | १३ | भूभावेव | भूमावेव |
| ३४५ | २२ | धर्मादिभिरनुष्ठिते: | धर्मादिभिरनुष्ठितैः |
| ३४६ | ९ | गुण | गुणा |
| ३४८ | १३ | मुक्तो | मुक्तौ |
| ३६५ | ५ | उद्धिरिश्य | उद्धरिष्य |

---